मस्तके न्यस्य तद्बिम्बस्याधस्तात् प्रयायात् तावदन्तरं भूमिप्रतिमयोरासीत् । कालप्रभावात् क्रमशो ह्रासं गच्छत्तदन्तरमिदानीं किञ्चिदेवावस्थितमिति श्रीमदन्तरिक्षपार्श्वप्रभुचरणारविन्दकिञ्जल्के चञ्चरीकायमाणा जनता वदति ॥१॥ अथात्र निरूपयिष्यमाणमधिकारचतुष्कं प्रतिपिपादयिषुराह—

**अहिगारा मूलपयडिपएसबंधम्मि अत्थि चत्तारो ।**

**पढमो भूओगारो पयणिक्खेवो तहा वड्ढी ॥२॥**

(प्रे०) 'अहिगारा' इत्यादि, मूलानां ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रान्तरायलक्षणानामष्टप्रकृतीनां प्रदेशबन्धे–प्रदेशबन्धविषयकनिरूपणे चत्वारोऽधिकाराः सन्ति । तद्यथा–[1]प्रथमो दलविभाजनादिषोडशद्वारात्मकः, [2]भूयस्कारः, [3]पदनिक्षेपो [4] वृद्धिश्च, मूले 'वड्ढी' इत्यत्र 'बन्धः' इति गम्यते, चतुर्थाधिकारप्रारम्भे "णेयाणि वड्ढिबंधे" इत्यत्र चतुर्थाधिकारस्य वृद्धिबन्धाभिधानेनोक्तत्वात् ।

(१) अत्र प्रथमाधिकारस्य विशिष्टं किमपि नाम न दत्तमिति स प्रथमाधिकारशब्देनैव वक्तव्यः। तत्र प्रथमाधिकारे 'णेयाइं दल' इत्यादिना षोडशद्वाराणि यथाक्रमं स्वयं तदधिकारप्रारम्भे वक्ष्यतीति तानि नेह प्रपञ्च्यन्ते।

(२) द्वितीयो भूयस्काराधिकारोऽपि दलविभाजनं, स्थानं, साद्यादि सन्निकर्षश्चेति चत्वारि द्वाराणि विहाय शेषैः प्रथमाधिकारोक्तैर्द्वादशद्वारैः सत्पदद्वारेण चेति त्रयोदशद्वारैः चिन्तयिष्यते । तानि भूयस्काराधिकारे "दुइए भुओगारे" इत्यादिप्रारम्भिकगाथाद्विके नामग्राहं स्वयं वक्ष्यति । भूयस्काराधिकारे सत्पदादीनि त्रयोदशापि द्वाराणि ज्ञानावरणीयाद्यष्टकर्मणां भूयस्कारः, अल्पतरः, अवस्थितोऽवक्तव्यश्चेति चतुर्विधप्रदेशबन्धमाश्रित्य प्रतिपादयिष्यन्ते । द्वितीयाधिकारीयसत्पदद्वारस्य "अट्ठण्हं कम्माणं अत्थि पएसस्स चउविहो बन्धो । भूगारो अप्पयरो अवट्ठिओ तह अवत्तव्वो" इत्याद्यगाथायां भूयस्कारादिचतुष्पदेषु भूयस्कारपदस्य प्रथमत्वाद् द्वितीयोऽधिकारो भूयस्कारशब्देन गीयते ।

(३) तृतीयः पदनिक्षेपाधिकारः सत्पदस्वामित्वाल्पबहुत्वानीति त्रिद्वारैः प्ररूपयिष्यते । एतच्च पदनिक्षेपाधिकारीयप्रथमगाथायां 'तइए पयणिक्खेवे' इत्यादिना दर्शयिष्यति । तत्र सत्पदादीनि त्रीण्यपि द्वाराणि जघन्योत्कृष्टभेदभिन्नां ज्ञानावरणीयाद्यष्टकर्मणां प्रदेशबन्धस्य वृद्धिं हानिं च , तथा जघन्योत्कृष्टभेदभिन्नमवस्थितप्रदेशबन्धमाश्रित्य चिन्तयिष्यन्ते ।

(४) चतुर्थे वृद्धिसंज्ञकाधिकारे भूयस्काराधिकारोक्तानि त्रयोदशद्वाराणि ज्ञानावरणीयाद्यष्टकर्मप्रदेशबन्धस्यासंख्यातभागा,संख्यातभागा, संख्यातगुणाऽसंख्यातगुणा चेति चतुर्विधां वृद्धिं चतुर्विधां हानिमवस्थितप्रदेशबन्धमवक्तव्यप्रदेशबन्धं चेति दशपदान्यधिकृत्य प्रतिपादयिष्यन्ते । इत्येवं समासेन ग्रन्थनिरूपणविषयाः प्रदर्शिताः , व्यासतस्तु तत्तदधिकारे द्वारगाथासु व्यक्तीभविष्यन्ति ॥२॥

तदेवं प्रतिपादितं मूलप्रकृतिप्रदेशबन्धेऽधिकृताधिकारचतुष्टयम् । अथ ते चत्वारोऽधिकाराः प्रत्येकं नानाद्वारनिष्पन्ना इत्यतस्तत्तदधिकारगतद्वाराणि नामतस्तत्तदधिकारप्रारम्भ एव विवक्षुरत्र तानि सङ्ख्यामात्रेण प्राह—

**तेसुं पढमाईसुं अहिगारेसु चउसुं जहाकमसो ।**
**हुन्ते सोलस तेरस तिण्णि य तेरस दुआराणि ॥३॥**

(प्रे०) 'तेसु' इत्यादि, तेष्वनन्तरगाथोक्तेषु प्रथमादिषु वृद्धयन्तेषु चतुर्ष्वधिकारेषु यथाक्रमं 'सोलस तेरस तिण्णि य तेरस' त्ति षोडश, त्रयोदश, त्रीणि त्रयोदश च 'दुआराणि' त्ति अभिधास्यमानाभिधानान्यनुयोगद्वाराणि 'हुन्ति' त्ति भवन्तीति गतार्थम् । नामतः प्रतिद्वारव्याख्यानं तु तत्तदधिकारप्रारम्भे द्वारगाथावृत्तौ विधास्यत इति ॥३॥



॥ ॐ ह्रीं अर्हं नमः ॥

# ॥ प्रथमाधिकारः ॥

साम्प्रतं गाथाद्विकेन प्रथमाधिकारे चिन्तयिष्यमाणानि द्वाराणि नामग्राहमाह—

तह आइमअहिगारे णेयाइं दलविभाजणं[1] ठाणं[2] ।

सामित्त[3]साइआई[4] कालं[5]तर[6]-सण्णियासा[7] य ॥४॥

भंगविचयो[8] य भागो[9] परिमाणं[10] खेत्त[11]-फोसणा[12] कालो[13] ।

अंतर[14]-भाव[15]-ऽप्पबहू[16] सोलस दाराणि जहकमसो ॥५॥

(प्रे०) 'तह' इत्यादि, तत्र प्रथमाधिकारे यथाक्रमं षोडश द्वाराणि ज्ञातव्यानीति क्रियाकारकसम्पर्कः । ननु कानि षोडश द्वाराणीत्याह–'दलविभाजणं' इत्यादि, [1]दलविभाजनम्, स्थानम्, [3]स्वामित्वम्, [4]साद्यादि, [5]कालः, [6]अन्तरम्, [7]सन्निकर्षः, [8]भङ्गविचयः, [9]भागः, [10]परिमाणम् [11]क्षेत्रम् [12]स्पर्शना, [13]कालः, [14]अन्तरम्, [15]भावो-[16]ऽल्पबहुत्वं चेति षोडश द्वाराणि यथाक्रमं प्रथमाधिकारे निरूपयिष्यन्ते । अथाऽनुक्रमेण द्वारविषयाः प्रदर्श्यन्ते–

(१) दलानां विभाजनं दलविभाजनम् , कर्मप्रदेशानां विभाग इत्यर्थः । विवक्षितैकसमये बद्धेषु कर्मप्रदेशेषु ज्ञानावरणीयाद्यष्टकर्मणां स्वस्वविभागे कियन्तः कर्मप्रदेशाः परिणमन्तीति चिन्तयिष्यते ।

(२) द्वितीयं स्थानद्वारं द्विविधम् , तद्यथा–योगस्थानद्वारं प्रदेशबन्धस्थानद्वारं च । तत्र योगस्थानद्वारनिरूपणं द्विविधम् , तद्यथा–प्रथमं योगस्थानद्वारनिरूपणं श्रीशिवशर्मसूरिपादप्रणीतकर्मप्रकृत्या उद्धृतं संक्षिप्तं च, द्वितीयं मतान्तरयुक्तं विस्तृतं च । एतच्च स्वयं स्थानद्वारे "जोगपएसेहि दुहा ठाणस्स परूवणा मुणेयव्वा" इत्यादिना वक्ष्यति । कर्मप्रकृत्युद्धृतयोगस्थानद्वारनिरूपणं "अविभागवग्गफड्डगअंतरठाणं अणंतरोवणिहा । जोगे परंपरावुड्ढिसमयजीवप्पबहुगं च" ॥ इति गाथायामुक्तैर्दशद्वारैः करिष्यते । द्वितीयं योगस्थानद्वारनिरूपणमपि द्विविधम् । तत्र प्रथमं योगस्थानद्वारनिरूपणं 'वित्थरमयंतरजुअं तं तिअडपरूवणाहि उण भणिमो । तत्थ तिपरूवणाओ संतपयपमाणअप्पबहू ॥ इति गाथाप्रदर्शितैस्त्रिद्वारैः, द्वितीयं च 'जोगट्ठाणदुआरे परूवणा अट्ठ हुन्ति अविभागो । वग्गणफड्डगअंतरठाणसमयवड्ढिअप्पबहू ॥" इति गाथोक्ताष्टद्वारैर्वक्ष्यते । तत्राप्यनेकावान्तरद्वाराणि

वक्ष्यते। अने क्रमेदप्रभेदान्वितयोगस्थानद्वारनिरूपणे कृते प्रान्ते प्रदेशबन्धस्थानविरूपणं करिष्यते। इत्येवं द्वितीयं स्थानद्वारं नैकद्वारान्तद्वारालङ्कृतं गणितप्रक्रियापरिवृढं चेति सूक्ष्मधिया चिन्तनीयं स्थानद्वारचिन्तनपरधिषैः।

(३) स्वामित्वाभिधे तृतीयद्वारे ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टप्रदेशबन्धस्य जघन्यप्रदेशबन्धस्य च स्वामी को जीवो भवतीति निरूपयिष्यते,ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टप्रदेशबन्धं जघन्यप्रदेशबन्धं च को जीवो विदधातीति निरूपयिष्यते इति यावत्। तत्र यदपेक्षयाऽन्यस्मिन् कस्मिन्नपि बन्धे कर्मप्रदेशा अधिका न भवन्ति, यस्मिन् बन्धे तत्तत्कर्मणः स्वतया सर्वोत्कृष्टाः प्रदेशाः परिणमन्तीति यावत्, सः प्रदेशबन्ध उत्कृष्ट उच्यते। यस्मिन् बन्धे तत्तत्कर्मणः स्वतया सर्वस्तोकाः प्रदेशाः परिणमन्ति स प्रदेशबन्धो जघन्य उच्यते।

(४) चतुर्थे साद्यादिसंज्ञकद्वारे ज्ञानावरणीयादिप्रत्येककर्मणः प्रदेशबन्धस्योत्कृष्टोऽनुत्कृष्टः जघन्योऽजघन्यश्चेति चतुर्भेदान्तः प्रत्येकभेदस्य सादिः, अनादिः, ध्रुवोऽध्रुवश्चेति चतुर्षु भङ्गेषु कियन्तो भङ्गाः संभवन्तीति प्ररूपयिष्यते। तत्रोत्कृष्टजघन्यप्रदेशबन्धार्थ उक्तः। अनुत्कृष्टाजघन्यप्रदेशबन्धार्थ एवम्—उत्कृष्टातिरिक्तः सर्वोऽपि प्रदेशबन्धो 'नोत्कृष्टो-ऽनुत्कृष्टः' इति कृत्वाऽनुत्कृष्टो भवति। एवं जघन्यातिरिक्तः सर्वोऽपि प्रदेशबन्धो 'न जघन्यो-ऽजघन्यः' इति कृत्वाऽजघन्य उच्यते। साद्यादिभङ्गव्याख्यैवम्—य उत्कृष्टादिप्रदेशबन्धो व्यवच्छिन्नीभूतोऽपूर्वो वा प्रारब्धः सः 'आदिना सह वर्तते' इति कृत्वा सादिरुच्यते। यस्त्वनादिकालतः सततं प्रवृत्तोऽन्तराले कदाचिदपि न व्यवच्छिन्नः सः 'न विद्यते आदिर्यस्य' इति कृत्वाऽनादिर्गीयते। य उत्कृष्टादिप्रदेशबन्धोऽतीतकाले कदापि न व्यवच्छिन्नः, नाप्यनागतकाले व्यवच्छेदं प्राप्स्यति सः "ध्रुवति-स्थिरो भवति" इति कृत्वा ध्रुवोऽभिधीयते। यस्त्वायत्यामवश्यं व्यवच्छिन्नीभविष्यति सः "न ध्रुवः अध्रुवः"इति कृत्वाऽध्रुवो निगद्यते।

(५) पञ्चमे कालद्वारे ज्ञानावरणीयादिप्रत्येककर्मणोऽनन्तरोक्तोत्कृष्टादिप्रत्येकविधबन्धस्य जघन्य उत्कृष्टश्च कालः कियान् भवति, अर्थाद् ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधबन्धः सातत्येन जघन्यत उत्कृष्टतश्च कियत्कालं यावत् प्रवर्तते इति चिन्तयिष्यते।

(६)षष्ठेऽन्तरद्वारे ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधबन्धस्य जघन्यमुत्कृष्टं चान्तरं कियद् भवतीति चिन्तयिष्यते, उत्कृष्टादिप्रत्येकविधबन्धो यदि सातत्येन न प्रवर्तेत तदा जघन्यत उत्कृष्टतश्च कियत्कालं यावन्न प्रवर्तेतेति चिन्तयिष्यते इति यावद्। तत इदं समापतितम्— पञ्चमे कालद्वारे ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधबन्धः सततं जघन्यत उत्कृष्टतश्च कियन्तं कालं यावत् प्रवर्तते इति,षष्ठेऽन्तरद्वारे तु कियत्कालं यावन्न प्रवर्तते इति चिन्तयिष्यते।

(७)सप्तमे सन्निकर्षसंज्ञद्वारे ज्ञानावरणप्रमुखाष्टकर्ममध्ये विवक्षितैककर्मण उत्कृष्टप्रदेशबन्धं कुर्वन् जीवः

शेषकर्मणां प्रदेशबन्धमुत्कृष्टं विदधात्युतानुत्कृष्टमिति, जघन्यप्रदेशबन्धं कुर्वन् जीवः शेषकर्मणां प्रदेशबन्धं जघन्यं करोत्युताजघन्यमिति च व्याख्यास्यते ।

(८) अष्टमभङ्गविचयद्वारप्ररूपणैवम्—विचयः समूहः, भङ्गानां विचयः-भङ्गविचयः । अत्र हि अष्टभङ्गानाश्रित्य प्ररूपणा करिष्यते । अष्टौ भङ्गा नामत एवम् (१) स्यादेको बन्धक एव, (२) स्यादेकोऽबन्धक एव, (३) स्यात् सर्वे बन्धकाः (४) स्यात् सर्वेऽबन्धकाः, (५) स्यादेक एव बन्धक एक एवाबन्धकः, (६) स्यादेक एव बन्धकः, अनेकेऽबन्धकाः, (७) स्यादनेके बन्धका एक एवाबन्धकः, (८) स्यादनेके बन्धका अनेकेऽबन्धकाः । एतेष्वष्टभङ्गेषु ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधप्रदेशबन्धस्य कियन्तो भङ्गाः संभवन्तीत्यस्मिन् द्वारे निर्णेष्यते । अष्टभङ्गव्याख्यानं विस्तृतत्वाद् भङ्गविचयद्वारे एव करिष्यामः ।

(९) नवमे भागद्वारे ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधबन्धं कुर्वन्तो जीवा सर्वजीवानां कतिथे भागे भवन्तीति निर्धारयिष्यते ।

(१०) दशमे परिमाणद्वारे ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधप्रदेशबन्धं कुर्वन्तो जीवाः कियन्तो भवन्तीत्युत्कृष्टप्रदेशबन्धकादीनां परिमाणं वर्णयिष्यते ।

(११) एकादशे क्षेत्रद्वारे ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधप्रदेशबन्धं कुर्वतां जीवानां कियत् क्षेत्रं भवतीति निश्चेष्यते ।

(१२) द्वादशे स्पर्शनाद्वारे ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधप्रदेशबन्धं कुर्वन्तो जीवाः कियत्क्षेत्रं स्पृशन्तीति वक्ष्यते। ननु येषां जीवानां यावत्क्षेत्रं तावदेव क्षेत्रं ते स्पृशन्तीति क्षेत्रद्वारनिरूपणेन स्पर्शनाद्वारं निरूपितमेवेत्यलं स्पर्शनाद्वारेणेति चेन्न, अत्र मा त्वरिष्ठाः, क्षेत्रद्वारस्पर्शनाद्वारयोर्यो विषयभेदः स स्पर्शनाद्वारे वक्ष्यते ।

(१३) त्रयोदशकालद्वारनिरूपणं पञ्चमकालद्वारवद् । नवरं पञ्चमं कालद्वारमेकजीवमाश्रित्य त्रयोदशं कालद्वारं चानेकजीवानाश्रित्य निरूपयिष्यते ।

(१४) चतुर्दशान्तरद्वारनिरूपणं षष्ठान्तरद्वारवत् । नवरं षष्ठमन्तरद्वारमेकं जीवमाश्रित्य चतुर्दशान्तरद्वारं चानेकजीवानाश्रित्य चिन्तयिष्यते ।

(१५) पञ्चदशे भावद्वारे जीवो ज्ञानावरणीयादिप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधप्रदेशबन्धमौदयिकादिभावान्तः केन भावेन विदधातीति निर्देक्ष्यते ।

(१६) षोडशेऽल्पबहुत्वाभिधद्वारे बद्धदलिकमाश्रित्य बन्धकजीवमाश्रित्य चेति द्विधाऽल्पबहुत्वं चिन्तयिष्यते । तत्रादौ बद्धदलिकमाश्रित्य ज्ञानावरणीयप्रमुखप्रत्येककर्मण उत्कृष्टादिप्रत्येकविधप्रदेशबन्धकाले स्वस्वतया परिणतेषु दलिकेषु कस्य कर्मणः स्तोकानि, कस्य कर्मणोऽधिकानि, कस्य कर्मणोऽधिकतराणीत्येवमल्पबहुत्वं चिन्तयिष्यते । ततो बन्धकजीवमाश्रित्योत्कृष्टप्रदेशबन्धकादीनां परस्परमल्पबहुत्वं प्ररूपयिष्यते ।

अत्रेदमवगन्तव्यम्—दलविभाजनद्वारं स्थानद्वारे योगस्थानद्वारं च विहाय प्रथमाधिकारादिसर्वद्वारप्ररूपणा द्विधा । तद्यथा-ओघत आदेशतश्च । तत्रौघतः प्ररूपणा निर्विशेषं ज्ञानावरणीयादिप्रत्येककर्माश्रित्य करिष्यते । आदेशतः प्ररूपणा समकालीनोत्कृष्टतीर्थकरतुल्यासु(१७०)मार्गणासु ज्ञानावरणीयादिप्रत्येककर्माश्रित्य विधास्यते । ताः सर्वा मार्गणा नामत इमाः- गतिः, इन्द्रियम् , कायः, योगः, वेदः कषायः,ज्ञानं, संयमः, दर्शनम् , लेश्या, भव्यः, सम्यक्त्वं,संज्ञी आहारकश्चेति चतुर्दशमूलमार्गणाः । तासां सप्ततिशतमुत्तरमार्गणाः । तद्यथा- नरकौघः सप्तनरकाश्चेत्यष्टौ नरकगतिभेदाः, तिर्यगोघः, तिर्यक्पञ्चेन्द्रियः, तिर्यग्योनिमती पर्याप्तापर्याप्ततिर्यक्पञ्चेन्द्रियौ चेति पञ्च तिर्यग्गतिभेदाः, मनुष्यौघः, मानुषी पर्याप्तापर्याप्तमनुष्यौ चेति चत्वारो मनुष्यगतिभेदाः, देवौघः, भवनपतिव्यन्तरज्योतिष्कदेवाः, द्वादश वैमानिकभेदाः, नव ग्रैवेयकभेदाः, पञ्चानुत्तरदेवाश्चेति त्रिंशद् देवगतिभेदा एवं सप्तचत्वारिंशद् गतिभेदाः । एकेन्द्रियौघः, सूक्ष्मबादरैकेन्द्रियौ, पर्याप्तापर्याप्तसूक्ष्मैकेन्द्रियौ, पर्याप्तापर्याप्तबादरैकेन्द्रियौ, द्वित्रिचतुष्पञ्चेन्द्रियौघाः, पर्याप्तापर्याप्तद्वित्रिचतुष्पञ्चेन्द्रिया इति नवदशेन्द्रियभेदाः । पृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायौघाः, सूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, बादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, पर्याप्तबादरपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, वनस्पतिकायौघः,प्रत्येकवनस्पतिकायौघः पर्याप्ताऽपर्याप्तप्रत्येकवनस्पतिकायौ चेति प्रत्येकवनस्पतिकायत्रिकम् , त्रसौघः, पर्याप्तापर्याप्तत्रसौ चेति त्रसत्रिकमिति द्विचत्वारिंशत् कायभेदाः । मनोयोगौघसत्यासत्यसत्यासत्यव्यवहारलक्षणानि पञ्चमनांसि,वचनौघसत्यासत्यसत्यासत्यव्यवहारलक्षणानि पञ्चवचनानि, काययोगौघः, औदारिकतन्मिश्रकायौ, वैक्रियतन्मिश्रकायौ, आहारकाहारकमिश्रकायौ, कार्मणकायश्चेत्यष्टौ कायाः, इत्यष्टादश योगभेदाः । स्त्रीपुरुषनपुंसकवेदा अवेदश्चेति चत्वारो वेदमार्गणाभेदाः । क्रोधमानमायालोभरूपाश्चत्वारः कषायभेदाः । मतिश्रुतावधिमनःपर्यवज्ञानानि, मतिश्रुताज्ञाने विभङ्गज्ञानं चेति सप्त ज्ञानमार्गणाभेदाः । संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायदेशविरतयोऽसंयमश्चेति सप्त संयममार्गणाभेदाः । चक्षुरचक्षुरवधिरूपास्त्रयो दर्शनभेदाः । कृष्णनीलकापोततेजःपद्मशुक्लरूपाः षड्लेश्याः । भव्योऽभव्यश्चेति द्वौ भव्यमार्गणाभेदौ । सम्यक्त्वौघक्षायिकक्षायोपशमिकौपशमिकमिश्रसास्वादनमिथ्यात्वरूपाः सप्त सम्यक्त्वमार्गणाभेदाः । संज्ञी असंज्ञी चेति द्वौ संज्ञिमार्गणाभेदौ । आहारकोऽनाहारकश्चेति द्वावाहारकमार्गणाभेदौ । इति सप्ततिशतमुत्तरमार्गणाः । यद्यपि प्रकृतिबन्धनिरूपणप्रस्तावे चतुरधिकसप्ततिशतमार्गणाः प्रदर्शिताः, परमत्र सकषायप्रदेशबन्धस्यैव निरूपणीयत्वात् तदनर्हाश्चतस्रो मार्गणा वर्जिताः । प्रकृतिबन्धे प्रदर्शितासु अकषायकेवलज्ञानयथाख्यातसंयमकेवलदर्शनरूपासु चतुर्मार्गणासु सकषायप्रदेशबन्धो भवितुं नार्हति, तत्रस्थानां जीवानां कषायकालुष्याकलङ्कितत्वात् ॥ ४।५ ॥

## ॥ प्रथमं दलविभाजनद्वारम् ॥

तदेवं प्रथमाधिकारगतद्वाराण्युद्दिष्टानि । सम्प्रति 'यथोद्देशं निर्देशः' इति नियममनुसृत्य प्रथमं दलविभाजनद्वारं निरूपयितुमुपक्रमते, तत्रादौ प्रसङ्गात् शतकप्रकरणगतगाथामुद्धृत्य जीवः कथम्भूतं पुद्गलद्रव्यं कैः कारणकूटैर्बध्नातीत्याह—

**एगपएसोगाढं सव्वपएसेहि कम्मुणो जोग्गं ।**
**बंधइ जहुत्तहेउं साइयमणाइयं वावि ॥६॥**

(प्रे०) इह पुद्गलद्रव्यं जीवो बध्नातीति सम्बन्धः । कथम्भूतं पुद्गलद्रव्यमित्याह–'एगपएसोगाढं' इति, एकस्मिन् प्रदेशेऽवगाढम्–अधिष्ठितमाश्रितमिति यावत् । एतदुक्तं भवति–यत्रैव स्वात्मप्रदेशाः तत्रैवावगाढं पुद्गलद्रव्यं जीवो बध्नाति, न तु बहिःस्थितमपि । तथाहि–यथा वह्निः स्वक्षेत्राश्रितमेव दाह्यमात्मसात्करोति, न पुनर्व्यवहितमपि । एवं जीवोऽपि स्वक्षेत्राश्रितमेव पुद्गलद्रव्यं बध्नाति, न व्यवहितमपीति हृदयम् । ननु जीवः कतिपयैरात्मप्रदेशैर्बध्नातीत्याह– 'सव्वपएसेहि' इति, जीवः कार्मणपुद्गलद्रव्यं सर्वैरपि स्वात्मप्रदेशैर्बध्नाति, न त्वेकादिभिरपि । तथाहि–एकस्य जीवस्य समस्तलोकाकाशप्रदेशप्रमाणाः प्रदेशाः सन्ति । ते सर्वे निबिडशृङ्खलावत्परस्परं संलग्नत्वात्परस्परमुपकुर्वन्ति । तेनैकस्मिन् जीवप्रदेशे स्वप्रदेशावगाढकर्मप्रायोग्यद्रव्यग्रहणाय व्याप्रियमाणे सर्वे जीवप्रदेशाः तद्ग्रहणायानन्तरपरम्परतया व्याप्रियन्ते, केवलं मन्दं मन्दतरं मन्दतमं वा । यथा घटादीनामुत्पाटनाय व्याप्रियमाणे कराग्रभागे मणिबन्धकूर्परांसादयः । एवं सर्वेषु जीवप्रदेशेषु मिथ्यात्वादिबन्धकारणोदये सति स्वस्वाकाशप्रदेशावगाढकर्मपुद्गलद्रव्यग्रहणाय व्याप्रियमाणेषु सर्वेऽप्यनन्तरपरम्परतया साकल्येन व्याप्रियन्ते, ततः सर्वप्रदेशैर्बध्नातीति प्रोक्तम् । नवरं रुचकसंज्ञैर्मध्यैरष्टात्मप्रदेशैः पुद्गलद्रव्यं न बध्नातीति ध्येयम् । पुनः ते सर्वे जीवप्रदेशा युगपच्चेष्टनाद् युगपदेव पुद्गलान् बध्नन्ति, न तु पृथक् पृथगित्यपि बोध्यम् । पुनः कथम्भूतं पुद्गलद्रव्यं जीवो बध्नातीत्याह–'कम्मुणो जोग्गं' इति, कर्मणो योग्यम्, कार्मणवर्गणान्तर्गतमित्यर्थः । ननु केन हेतुना जीवः पुद्गलद्रव्यं बध्नातीत्याह–'जहुत्तहेउ' इति, क्रियाविशेषणमिदम् पूर्वं मूलप्रकृतिरसबन्धनिरूपणे प्रथमाधिकारे प्रत्ययद्वारे "बङ्गण्ड पच्चया" इत्यादिना ये मिथ्यात्वादयो हेतवः प्रोक्ताः तैर्हेतुभिर्बध्नाति । यद्वा श्रीशिवशर्मादिपूर्वसूरीश्वरादिभिः शतकप्रकरणादिषु ये सामान्यविशेषा हेतवो निगदिताः तैर्बध्नातीत्यर्थः । तथा चोक्तं शतकप्रकरणे चउपच्चइओ बन्धो' इत्यादि । तच्चूर्णिः—

"चउपच्चइओ त्ति चत्तारि पच्चया तं जहा–मिच्छत्तपच्चओ, अस्संजमपच्चओ, कसायपच्चओ, जोगपच्चओ, इति । मिच्छत्त सामन्नेण एगप्पगारं, विभागओ अभिग्गहियं, अणभिग्गहियं, संसइयमिच्छत्तं,

संसयमिच्छत्तं, मूढमिच्छत्तं, विवरीयमिच्छत्तमिति । अहवा 'किरियावाओ, अकिरियावाओ, वेणइयवाओ, अन्नाणवाओ य । असियसयं किरियाणं अकिरियवाईण जाण चुलसीई । अन्नाणि य सत्तट्ठी वेणइयाणं च बत्तीसं ॥१॥ 'अहवा' 'जावइया वयणपहा तावइया चेव होंति परसमया । जावइया परसमया तावइया चेव मिच्छत्ता' ॥१॥ एगंतवाओ मिच्छत्तं ति एए कम्मबंधस्स कारणभूआ । असंजमो अणेगपगारो हिंसाइ, अहवा चक्खुइंदिय विसयाऽभिलासाइ । कसाया पणवीसइविहा, तं जहा–सोलसकसाया, नवनोकसाया इति । जोगा पंचदसप्पगारा पुव्वं वक्खाणिया" इत्यादि ।

एवं पञ्चसंग्रहेऽपि हेतुद्वारे प्रोक्तम्—

"बंधस्स मिच्छ अविरइ कसायजोगा य हेयवो भणिया । ते पंच दुवालस पन्नवीस पन्नरस भेइल्ला" ॥१॥ इति । पुनः कथम्भूतं बध्नातीत्याह–'साईयमणाइयं वावि' इति, तत्र यो जीवो बन्धव्यवच्छेदं कृत्वा प्रतिपत्य पुनस्ता एव प्रकृतीर्बध्नाति तस्य सादिर्बन्धोऽकृतबन्धव्यवच्छेदस्य त्वनादिः । अपिशब्दात् ध्रुवाध्रुवभेदोऽपि प्रतिपादितो भवति । तथाहि–भव्योऽध्रुवमभव्यो ध्रुवं बध्नाति ★॥६॥

साम्प्रतं शतकप्रकरणगतगाथया बन्धयोग्यपुद्गलद्रव्यस्य वर्णादीनि प्रमाणं च प्रतिपादयति–

पंचरसपंचवन्नेहि संजुयं दुविहगंधचउफासं ।
दवियमणंतपएसं सिद्धेहि अणंतगुणहीणं ॥७॥

(प्रे०) अत्रापि पुद्गलद्रव्यं जीवो बध्नातीति योगः । प्रथमं तावद्वर्णादीनि दर्शयति–'पंचरस' इत्यादि,बन्धयोग्यं पुद्गलद्रव्यं प्रतिस्कन्धं कृष्णादिपञ्चवर्णोपेतम् , तिक्तादिरसपञ्चकयुक्तम्, सुरभिदुरभिलक्षणगन्धद्वैविध्योपेतं चतुःस्पर्शपरिणतं च बध्नातीत्यर्थः । तत्र मृदुलघुलक्षणं स्पर्शद्वयं तावदवस्थितं भवति,अपरौ च स्निग्धोष्णौ स्निग्धशीतौ वा रूक्षोष्णौ रूक्षशीतौ वा द्वावविरुद्धस्पर्शौ भवतः । अथ कियत्प्रमाणं बध्नातीत्याह–'अणंतपएसं' इति, अनन्ताः प्रदेशाः पुद्गलाः स्कन्धा यस्मिन् तदनन्तप्रदेशम् । तत्रानन्तस्य बहुभेदत्वाद् विशेषयति–'सिद्धेहि' इत्यादि, सिद्धेभ्योऽनन्तगुणहीनं बध्नातीत्यर्थः । ननु अनन्तकस्य बहुभेदत्वादनन्तगुणहीनस्यापि बहुविधत्वम् , ततश्च शतमप्यनन्तगुणहीनं लक्षमप्यनन्तगुणहीनमित्यनन्तगुणहीनस्य प्रमाणं नावधारयितुं शक्यत इति चेद्,उच्यते, अत्र सिद्धेभ्योऽनन्तगुणहीनस्योपलक्षणत्वादभव्येभ्योऽनन्तगुणं सिद्धेभ्योऽनन्तगुणहीनं द्रव्यं बध्नातीत्यवधेयम् । एतदुक्तं भवति– अभव्येभ्योऽनन्तगुणैः सिद्धेभ्योऽनन्तगुणहीनैः परमाणुभिर्निष्पन्नमेकैकं कर्मस्कन्धं बध्नाति । तानपि स्कन्धान् प्रतिसमयमभव्येभ्योऽनन्तगुणान् सिद्धेभ्योऽनन्तगुणहीनानेव बध्नातीति ॥७॥

तदेवं यत्रावगाढानि कर्मद्रव्याणि यथा वा गृह्णातीति प्रतिपादितम् । सम्प्रति एकाध्यवसायेन बद्धदलिकस्य प्रतिमूलप्रकृतौ प्राप्तविभागं दर्शयति—

---

★ अत्र केचित् 'साईयमणाइयं' इति पदद्वयमेवं व्याख्यानयन्ति—'साईय'-मिति प्राग् गृहीत्वा मुक्तम् , 'अणाइय' मिति प्रागनन्तेनापि कालेन कदाचिदप्यगृहीतं पुद्गलद्रव्यं गृह्णातीति ।

पइसमयं जं बद्धं योगाहीणं दलं करिअ भागा ।
से वज्झमाणितुल्ला दिज्जइ खलु मूलपयडीणं ॥८॥

(प्रे०) 'पइसमयं' इत्यादि, इह पूर्वं मङ्गलश्लोकवृत्तावेवास्माभिर्निगदितं यद् प्रदेशबन्धस्तावद् योगाधीनो वर्तते । ततो हीनाधिकयोगानुसारेण प्रतिसमयं यावत्प्रमाणं कर्मदलिकं बद्धं तदध्यवसायवशात्तदानीं बध्यमानमूलप्रकृतिसमानभागैः परिणमति, अर्थाद्यावन्तः प्रकृतयो बध्यन्ते तावद्विभागैः परिणमति । तच्चैवम्–यदा तादृगध्यवसायवशादायुषो बन्धो भवति तदाऽष्टानामपि कर्मणां बध्यमानत्वाद् गृहीतकर्मदलिकमष्टविभागतया परिणमति, आयुषो बन्धाभावे सप्तानां कर्मणां बध्यमानत्वात् सप्तविभागतया परिणमति । सूक्ष्मसम्पराये मोहनीयायुषी विना षड्विधबन्धो भवति, तेन तत्र गृहीतपुद्गलद्रव्यस्य षड्विभागतया परिणामो भवति । एकविधबन्धसद्भावेऽपि न प्रस्तुते तस्य प्रयोजनम्, सकषायप्रदेशबन्धस्यैवाधिकृतत्वात् । ननु एकेनाध्यवसायेन गृहीतं दलिकं कथमष्टविधबन्धकत्वेन परिणमति ? इति चेद्, उच्यते, स एकोऽध्यवसायश्चित्रतागर्भः, अन्यथा कर्मवैचित्र्यानुपपत्तेः । यदि चाध्यवसाये चित्रगर्भता न स्वीक्रियते तदैकरूपोऽध्यवसायः, ततस्तद्वशादुपात्तं कर्माप्येकरूपं स्यात्, कारणभेदमृते कार्यभेदायोगात् । अन्यथा प्रतिनियतकार्यकारणभावानुपपत्तेः । अस्ति च कार्यं कर्म ज्ञानावरणीयादिभेदादनेकप्रकारम् । कार्यबलात्कारणकल्पना भवतीति तद्धेतुभूतस्याध्यवसायस्य चित्रताऽङ्गीकर्तव्या । तथा च निगदितं शतकचूर्णौ–

"एगसमयग्गहियं दलियं अट्ठविधादिबंधत्ताए किह परिणमति ? इति चेत् उच्यते, तस्स अज्झवसाणमेव तारिसं जेण अट्ठविहाइं बंधत्ताए परिणमति, जहा कुंभकारो मृत्पिंडे मत्तगसरावादीणि णिव्वत्तेइ, तस्स तारिसो परिणामो,जहा एत्थ एक्करूवाइं अणेगरूवाणि वा एत्तियाइं दव्वाइं णिप्फाएमि त्ति एवं सव्वन्नुदिट्ठो परिणामो, एतेण परिणामेण संजुत्तस्स अट्ठविधादित्ताए दलियं परिणमति" इति ॥८॥

ननु सो विभागः कर्मणां समतया परिणमति विषमतया वेति जिज्ञासायामाह–

अट्ठविहबंधगेऽप्पो भागो आउस्स तो कमाऽब्भहियो ।
ठिइदीहत्तेण भवे णवरं तइअस्स सव्वुवरिं ॥९॥

(प्रे०) 'अट्ठविहबंधगे' इत्यादि, इहायुर्बन्धकालेऽष्टप्रकारं कर्म बध्नन् जीवः प्रतिसमयं यदनन्तस्कन्धात्मकं कर्मदलिकं गृह्णाति तन्मध्यात् सर्वस्तोको भाग आयुष्कतया परिणमति । अन्यासां कर्मप्रकृतीनां तु विभागो स्वस्थितिबृहत्तया परिणमति । तदेवाह–'तो कमाऽब्भहियो ठिइदीहत्तेण' इति, ततः=आयुर्भागादन्यप्रकृतीनां विभागः क्रमशः स्वस्थितिदीर्घतया विशेषाधिको भवति । इदमुक्तं भवति–यत्प्रकृत्यपेक्षया यस्याः प्रकृतेः स्थितिर्बृहत्तरा तत्प्रकृत्यपेक्षया तस्याः प्रकृतेर्भागोऽधिको भवति, सामर्थ्याच्च यत्प्रकृत्यपेक्षया यत्प्रकृतेः स्थितिर्हीनतरा

तत्प्रकृत्यपेक्षया तत्प्रकृतेर्भागो हीनतरो भवति तद्यथा— आयुषो स्थितिस्त्रयस्त्रिंशत्सागरोपमाणि । ततो नामगोत्रयोः स्थितिर्बृहत्तरा, विंशतिकोटाकोटिसागरोपमप्रमाणत्वात् । अत आयुषोऽपेक्षया नामगोत्रयोर्विभागो विशेषाधिको भवति परस्परं च स्थितितुल्यत्वात्तुल्यः । नामगोत्रापेक्षया ज्ञानावरणदर्शनावरणान्तरायानां स्थितिर्बृहत्तरा, त्रिंशत्सागरोपमकोटाकोटिप्रमाणत्वात् । अतो नामगोत्रापेक्षया ज्ञानावरणीयादित्रिघातिकर्मणां विभागो विशेषाधिको भवति, परस्परं च तुल्यः, स्थितेस्तौल्यात् । यद्यपि वेदनीयस्यापि त्रिंशत्कोटाकोटिसागरोपमप्रमाणा स्थितिरिति स्थिति-दीर्घत्वमाश्रित्य तस्यापि विभागो नामगोत्रापेक्षया विशेषाधिको भवेत्, तथापि "णवरं तइअस्स सव्वुवरिं" इत्यपवदिष्यमाणत्वात् तस्य विभागः सर्वकर्मापेक्षयाऽधिको भवति । ज्ञानावरणीयादि-त्रिघातिकर्मापेक्षया मोहनीयस्य स्थितिर्बृहत्तरा, सप्ततिकोटाकोटिसागरोपमप्रमाणत्वात् । अतो ज्ञानावरणीयादित्रिघातिकर्मापेक्षया मोहनीयस्य विभागो बृहत्तरो भवति ।

अथात्र योऽपवादस्तं दर्शयति—'णवरं' इत्यादि, तृतीयस्य वेदनीयकर्मणो विभागो बद्ध-दलिकमध्यात्सर्वाधिकतया परिणमति । ननु किमत्र कारणम् ? इति चेत्, उच्यते, वेदनीयकर्म स्वस्याल्पे भागे समागते सुखदुःखानुभवं स्फुटतरीकर्तुं नालम् । वेदनीयं हि स्वकीयं प्रभूतदलिकं भवति तदा स्वफलभूतं सुखं दुःखं वा व्यक्तमनुभावयितुमीशो नान्यथा । ननु तत्रापि को हेतुः ? इति चेद् उच्यते, तस्य तथास्वभाव एवात्र शरणम् । तथा चाभिहितं शतकप्रकरणवृत्तौ—

'सुखदुःखकारणरूपं हि वेदनीयम्, तद्भागपरिणताश्च पुद्गलाः स्वभावादेव प्रचुराः सन्तः स्वभावकार्यभूते सुख-दुःखे स्फुटतरीकर्तुमलम् । शेषकर्मपुद्गलास्स्वल्पा अपि स्वकार्यं निर्वर्त्तयन्ति । दृष्टं च पुद्गलानां स्वकार्यजनने ऽल्पबहुत्ववैचित्र्यम् । यथा हि पर्पटादिकदशनं बहुतरमुपभुक्तं तृप्तिलक्षणं स्वकार्यमातनोति, मृद्वीकादिकं स्वल्पमपि भुक्तं तृप्तिमुपकल्पयति । यथा वा विषं स्वल्पमपि मारणादिकं कार्यं साधयति, लेष्ट्वादिकं तु प्रचुरतरम्' इति । इत्येवमिहाप्युपनयः कार्यः । तस्मात् प्रभूता वेदनीयपुद्गलाः सुखदुःखे साधयन्ति, इति सुखदुःखकारणत्वाद् वेदनीयस्य महान् भाग इति स्थितम् । समुच्चयविभागाल्पबहुत्वं त्वेवम्—

आयुष्कतया सर्वस्तोको विभागः परिणमति । ततो नामगोत्रतया विशेषाधिकः, स्वस्थाने तु परस्परं तुल्यः । ततो ज्ञानावरणीयदर्शनावरणीयान्तरायतया बृहत्तरः, स्वस्थाने तु परस्परं तुल्यः । ततो मोहनीयतया महत्तरः । ततो वेदनीयतया विशेषाधिकः । तथा च प्रतिपादितं शतक-प्रकरणे—

"आउयभागो थोवो नामे गोए समो अतो अहिओ । आवरणमंतराए तुल्लो अहियो अमोहे वि ॥ १ ॥
सव्वुवरि वेयणीए भागो अहिगो य कारणं किंतु । सुहदुक्खकारणत्ता ठिईविसेसेण सेसाणं" ॥ २ ॥

एवं पञ्चसंग्रहेऽपि प्रोक्तम्—

"कमसो वुड्ढठिईणं भागो दलियस्स होइ सविसेसो । तइयस्स सव्वजेट्ठो तस्स फुडत्तं जओ णप्पे" ॥१॥
इति ॥९॥

एतर्हि सप्तविधादिबन्धे विभागं दर्शयति–

**सत्तविहबंधगे खलु आउगवज्जाण एवमेव भवे ।**
**तह छविहबंधगे खलु णेयो मोहाउवज्जाणं ॥१०॥**

( प्रे० ) **'सत्तविहबंधगे'** इत्यादि, यदा जीवः सप्तविधबन्धहेतुकाध्यवसायवशादायुर्विना सप्तप्रकारं कर्म बध्नाति तदा योगहेतुकबद्धदलिकस्य विभाग आयुरन्तरा सप्तानां कर्मणां भवति । यदा तु षड्विधबन्धहेतुकाध्यवसायेन मोहनीयायुषी विना षड्विधो बन्धस्तदा ते त्यक्त्वा षोढा परिणामो जायते,न तु सप्तविधादितयाऽपि । विभागाऽल्पबहुत्वं पूर्ववद् भावनीयम् । अत्रेदं बोध्यम्– यथा यथा स्तोकाः प्रकृतयो बध्यन्ते तथा तथा तासां बध्यमानप्रकृतीनां विभागो बृहत्तरो बृहत्तरो भवति, यथा यथाऽधिकाः तथा तथाऽल्पतरोऽल्पतरो भवति । तेन यदा केवलमेकं वेदनीयं बद्धं तदा योगानुसारमुपात्तं यत्किमपि दलिकं तत्सकलं तस्यैव समागच्छति, न शेषस्य ॥१०॥

।इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे प्रथमं दलविभाजनद्वारं समाप्तम् ।



## ॥ द्वितीयं स्थानद्वारम् ॥

तदेवं प्रथमं दलविभाजनद्वारं निरूपितम् । सम्प्रति क्रमाऽऽयातं द्वितीयं स्थानद्वारं व्याचिख्यासुरादौ स्थानद्वारप्ररूपणाया द्वैविध्यं प्रतिपादयति–

**जोगपएसेहि दुहा ठाणस्स परूवणा मुणेयव्वा ।**
**पुव्वं जोगट्ठाणं उद्धरिअं कम्मपयडीए ॥११॥**

(प्रे०) 'जोगपएसेहि' इत्यादि, योगेन प्रदेशेन चेति स्थानद्वारस्य द्विधा प्ररूपणा ज्ञातव्या । 'पुव्वं' इत्यादि, पूर्वं योगस्थानं श्रीमच्छिवशर्मसूरिप्रणीतायाः कर्मप्रकृत्या उद्धृतम् । इदमुक्तं भवति–योगेन स्थानद्वारस्य या प्ररूपणा करिष्यते साऽपि द्विविधा । तत्र प्रथमयोगस्थानप्ररूपणा श्रीशिवशर्मसूरिकृतकर्मप्रकृत्याः "विरियंतरायदेसक्खएण सव्वक्खएण वा लद्धी । अभिसंधिजमियरं वा तत्तो विरियं सलेसस्स॥"इति तृतीयगाथातः प्रारभ्य "अमणाणुत्तरगेविज्जभोगभूमिगयतइयतणुगेसु । कमसो असंखगुणिओ सेसेसु य जोग उक्कोसो ॥" इति षोडशीं गाथां यावच्चतुर्दशगाथाभिः करिष्यते । प्रथमयोगस्थानप्ररूपणाऽनन्तरं "वित्थरमयंतरजुअं" इत्यादिगाथायां प्रदर्शितरीत्या द्वितीया योगस्थानप्ररूपणा करिष्यते । तदन्ते चास्यां गाथायां 'जोगपएसेहि' इत्यनेन प्रतिज्ञाता प्रदेशबन्धस्थानप्ररूपणा करिष्यते ॥११॥

सम्प्रति कर्मप्रकृत्या उद्धृतं योगस्थानं वक्तुकाम आदौ तद्गतां वीर्यभेदप्रतिपादिकामिमां गाथामाह–

**विरियंतरायदेसक्खएण सव्वक्खएण वा लद्धी ।**
**अभिसंधिजमियरं वा तत्तो विरियं सलेसस्स ॥१२॥**

(प्रे०) 'विरियंतराय' इत्यादि, वीर्यान्तरायस्य कर्मणो देशक्षयेण सर्वक्षयेण वा लब्धिः-वीर्यलब्धिः प्राणिनामुपजायते । तत्र देशक्षयेण छद्मस्थानां सर्वक्षयेण च केवलिनाम् । तस्या वीर्यलब्धेः सकाशादुपजायमानं वीर्यं सलेश्यस्यापि भवति, अलेश्यस्यापि च । लेश्यया सह जीवः सलेश्यो जीवः, तस्य वीर्यं सलेश्यवीर्यम् , न विद्यते लेश्या यस्य जीवस्यासौ अलेश्यः, तस्य वीर्यमलेश्यवीर्यमित्येवं वीर्यं द्विविधम् । यद्वा गुणगुणिनोरभेदोपचारात् वीर्यमेव सलेश्यमलेश्यं चोच्यते। परमत्र बन्धयोग्यत्वात्सलेश्यवीर्येणैवाधिकार इति तदेव निरूपयति–'अभिसन्धिजमियरं वा' इत्यादि, ततः-तस्या वीर्यान्तरायस्य सर्वदेशक्षयेणोपजायमानायाः क्षायिकक्षायोपशमिकरूपाया वीर्यलब्धेः सकाशादुपजायमानं सलेश्यस्य जीवस्य वीर्यं द्विविधं भवति,अभिसन्धिजमनभिसन्धिजं च । तत्र धावनवल्गनादिक्रियासु बुद्धिपूर्वकं नियुज्यमानं वीर्यमभिसन्धिजम् , तद्विपरीतं पुनरनभि-

सन्धिजम् ,यद् भुक्तस्याहारस्य धातुमलत्वादिरूपपरिणामकारणमेकेन्द्रियादीनां वा तत्तत्क्रियाहेतु । इदमत्राकूतम्– आहारविहारादिक्रियासु संवेदनपूर्वकं यद्वीर्यं नियुज्यते तदभिसन्धिजम् , विना संवेदनं भुक्तस्याहारस्य यः खलरसादिरूपपरिणामो भवति तत्र प्रवर्त्तमानं वीर्यमनभिसन्धिजम् । एतदभिसन्धिजानभिसन्धिजरूपं द्विविधमपि वीर्यं यथासंभवमवश्यं सूक्ष्मबादरपरिस्पन्दनरूपक्रिया-सहितम् । एतदेव वीर्यं योगसंज्ञया कीर्त्यते । तस्यैकार्थानि चेमानि–

जोगो विरियं थामो उच्छाह परक्कमो तहा चिट्ठा ।
सत्ती सामत्थं चिय जोगस्स हवंति पज्जाया ॥१॥

अत्रायं स्फुटार्थः– वीर्यं हि तावत् द्विभेदमलेश्यं सलेश्यं च । तत्रालेश्यमयोगिनां सिद्धानां च । सलेश्यं द्विविधम् , क्षायिकं क्षायोपशमिकं च । तत्र क्षायिकं सयोगिनाम् । क्षायिकस्यापि द्वैविध्य-मभिसन्धिजानभिसन्धिजभेदेन । क्षायोपशमिकं तु छद्मस्थानाम् । तदपि द्विप्रकारकम्–अकाषायिकं सकाषायिकं च। तत्राकाषायिकमुपशान्तमोहक्षीणमोहानाम् । सकाषायिकं सूक्ष्मसम्परायपर्यन्तानाम् । पुनः तदुभयमप्यभिसन्धिजतदितरप्रकारेण द्विभेदम् । इह सकषायसलेश्यवीर्येणैवाधिकारः, अग्रेऽनु-त्कृष्टप्रदेशबन्धे सातवेदनीयप्रकृतेरुत्कृष्टकालस्याऽन्तर्मुहूर्तप्रमाणत्वेन वक्ष्यमाणत्वाद् , अन्यथा स देशोनपूर्वकोटिप्रमाणोऽभिधातव्यः स्यात् ।

तथा च वीर्यभेदस्थापना



तथा चात्र कर्मप्रकृतिचूर्णिः—

"तत्थ णिमित्तं वीरियंतरायस्स कम्मस्स खयोवसमेणं वीरियलद्धी छउमत्थाणं उप्पज्जइ,खततो केवलीणं वीरियलद्धी उप्पज्जइ । तं चउविहं– बादरसुहुमए य इहणा (एयणा) सहितं इयरं च । तत्थ पढमं जोगसण्णं लभते, मणजोग्गादिदव्वसंजोगातो । तस्स इमाणि एगट्ठिताणि–"जोगो विरिय थामो उच्छाह परक्कमो तहा चिट्ठा । सत्ती सामत्थं चिय जोगस्स भवंति पज्जाया ॥१॥"तं च दुविहं– अभिसन्धिजमियरं वत्ति । आहारातिनिमित्तं संवेयणापुव्वगं अभिसंधिजं विरियं,असंवेइया खलरसातिपरिणामणा सत्ती अणभिसंधिजं वीरितं । तत्थ कयरेण वीरिएण अहिगारो कस्स वा जीवस्स वीरिएण इति, अतो वुत्तं 'ततो वीरियं सलेसस्सत्ति' ततो दुविहातो खयोवसमितखइयातो णिवाडेन्तु सलेसस्स वीरिएण अहिगारो ।सह लेसाए सलेसो-जाव सजोगी केवली ताव एयं भवति । एतेन वीरिएण अहिगारो दुविहेण वि अभिसंधिजअणभिसंधिजेण सामण्णेणं । अहवा 'तत्तो'-त्ति लद्धीतो खयोवसमियखातियातो,दुविहं पि समुग्घायजोगणिरोधोपयोगाइसु वीरियं भवति, अभिसंधिजमणभिसंधिजं च वीरिय उप्पज्जति । तत्थ जं सलेसस्स-सकम्मबंधणस्सत्ति भणितं भवति,किं कारणं ? भण्णइ अकसातीणं संपरातिगबंधाभावातो । भणितं निमित्तं-सा य लद्धित्ति,विगप्पो अभिसंधिजं अणभिसंधिजं त्ति । सरूवं णाम–मणजोग्गादिदव्वसंजोगेण परिफंदो वीरियं जोगत्ति । अहिगारो सलेसस्सेति" इति [कर्मप्रकृतिगाथाङ्कः ३]॥१२॥ अथ वीर्यस्य कार्यभेदेन संज्ञाभेदं जीवप्रदेशेषु तारतम्येनावस्थाने हेतुं चाह–

परिणामालंबणगहणसाहणं तेण लद्धनामतिगं ।
कज्जब्भासण्णोण्णप्पवेसविसमीकयपएसं ॥ १३ ॥

[प्रे०] 'परिणामालंबण' इत्यादि,परिणमनं परिणामः,अन्तर्भूतण्यन्तात् 'भावाकर्त्रोः'[सिद्धहेम० ५।३।१८] इति 'घञ्' प्रत्ययः, परिणामापादनमित्यर्थः, आलम्ब्यत इत्यालम्बनम्, 'अनट्' [सिद्ध० ५।३।१२४] इति भावे'अनट्' प्रत्ययः, करणमित्यर्थः । गृहीतिर्ग्रहणम्, पूर्ववदनट् प्रत्ययः । तेषां साधनम्, साध्यतेऽनेनेति साधनम्, 'करणाधारे' [सि० हे० ५।३।१२९] इति करणेऽनट् प्रत्ययः, योगसंज्ञकं वीर्यम्, 'तेण' इति, तेन हेतुना 'लद्धनामतिगं' इति, लब्धनामत्रिकम्–लब्धं नामत्रिकमन्वर्थं येन तद् लब्धनामत्रिकम् । अत्रेयं भावना–तेन वीर्यविशेषेण योगसंज्ञकेनौदारिकादिशरीरयोग्यान् पुद्गलान् जीवः प्रथमतो गृह्णाति,गृहीत्वा चौदारिकादिरूपतया परिणमयति; तथा प्राणापानभाषामनोयोग्यान् प्रथमतो गृह्णाति, गृहीत्वा च प्राणापानादिरूपतया परिणमयति । ततो यथा मन्दशक्तिः परिभ्रमणाय यष्टिमवलम्बते तथा जीवः तन्निसर्गसामर्थ्यविशेषावाप्तये तानेव पुद्गलानवलम्बते । अतो ग्रहणपरिणामालम्बनानां साधनं तद्वीर्यमेकमपि कार्यभेदेन यथाक्रमं ग्रहणपरिणामालम्बनरूपं संज्ञात्रिकं लभते । अत्र प्राचीनव्याख्या त्वेवम्–तेन मनोवाक्कायावष्टम्भतो जायमानेन योगसंज्ञकेन वीर्येण नामत्रिकं लब्धम् । तथाहि–मनसा करणभूतेन योगो मनोयोगः, वाचा योगो वाग्योगः, कायेन योगः काययोगः । ननु जीवस्य सर्वप्रदेशेषु क्षायोपशमिक्यादिलब्धेः तौल्येऽपि किमिति क्वचित्प्रभूतं क्वचित्स्तोकं क्वचिच्च स्तोकतरमित्येवं विषमतया वीर्यमुपलभ्यते,इत्यत आह–'कज्जब्भास'इत्यादि,यदर्थं चेष्टते तत्कार्यम्, अभ्यसनमभ्यासः, अभिपूर्वकात् 'अशौटि व्याप्तौ' इति धातोः 'भावाकर्त्रोः' [सिद्धहेम० ५।३।१८]

इति भावे 'घञ्' प्रत्ययः, कार्यस्याभ्याशः कार्याभ्याशः, कार्यस्यासन्नता, समीपीभवनमित्यर्थः । तथा जीवप्रदेशानामन्योऽन्यं परस्परं प्रवेशः-शृङ्खलावयवानामिव परस्परं सम्बन्धविशेषः । ताभ्यां कृत्वा 'विषमीकृताः' प्रभूताल्पाल्पतरसङ्ख्यातो विसंस्थूलीकृताः 'प्रदेशाः' जीवप्रदेशा येन जीववीर्येण तत् कार्याभ्याशान्योऽन्यप्रवेशविषमीकृतप्रदेशम् । तथाहि—येषामात्मप्रदेशानां हस्तादिगतानामुत्पाद्यमानघटादिलक्षणकार्यनैकट्यं तेषां प्रभूततरा चेष्टा, दूरस्थानामंसादिगतानां स्वल्पा, दूरतरस्थानां तु पादादिगतानां स्वल्पतरा, अनुभवसिद्धं चैतत् । अपि च लोष्टादिनाऽभिघाते सति यद्यपि सर्वप्रदेशेषु युगपद्वेदनोपजायते तथापि येषामात्मप्रदेशानामभिघातकलोष्टादिद्रव्यनैकट्यं तेषां तीव्रतरा वेदना, शेषाणां तु मन्दा मन्दतरा । तथेहापि जीवप्रदेशेषु परिस्पन्दात्मकं वीर्यमुपजायमानं कार्यद्रव्याभ्यासवशतः केषुचित्प्रभूतमन्येषु मन्दमपरेषु तु मन्दतमं भवति । एतच्चैवं जीवप्रदेशानां परस्परं सम्बन्धविशेषे सति भवति, नान्यथा । यथा शृङ्खलावयवानाम् । तथाहि—तेषां शृङ्खलावयवानां परस्परं सम्बन्धविशेषे सति एकस्मिन्नवयवे परिस्पन्दमानेऽपरेऽप्यवयवाः परिस्पन्दन्ते, केवलं केचित्स्तोकमपरे स्तोकतरमिति । सम्बन्धविशेषाभावे त्वेकस्मिन् चलति नापरस्यावश्यम्भावि चलनम्, यथा गोपुरुषयोः । तस्मात् कार्याभ्यासवशतो जीवप्रदेशानां परस्परं सम्बन्धविशेषतश्च वीर्यं जीवप्रदेशेषु केषुचित्प्रभूतमन्येषु स्तोकमपरेषु स्तोकतरमित्येवं वैषम्येणोपजायमानं न विरुध्यते ।

तथा चात्र **कर्मप्रकृतिचूर्णिः**—"परिणामालंबणगहणस्स साहणं जं वीरियं तं परिणामालंबणगहणसाहणं । साहणं ति वा करणं ति वा एगट्ठं । साहेति अणेणत्ति साहणं । जेण वीरिएण पंचण्हं सरीराणं पातोग्गे पोग्गले घेत्तुण सरीरत्ताते परिणामेति तं वीरियं परिणामगहणसाहणं ति वुच्चति । जेण वीरिएण आणापाणभासमणाणं पाउग्गपोग्गले कायजोगेण घेत्तुण आणपाणभासमणत्ताए आलंबित्ता णिसिरति तं वीरियं आलंबणगहणसाहणं ति वुच्चति । एत्थ वीरियं साहणं । जस्स वा वीरियस्स परिणामा य आलंबणा य जं घेप्पते दव्वं तं परिणामालंबणगहणं तं साहणं जस्स वीरितस्स तं परिणामालंबणगहणसाहणं । दव्वणिमित्तं वीरियं उप्पज्जइ त्ति काउं घेप्पतित्ति गहणं । एत्थ दव्वं साहणं । अहवा वीरियमेव गहणं । तं दुविहं- परिणामगहणं आलंबणगहणं च । तस्स दुविहस्स वि साहणं तदंतरायक्खयक्खयोवसमलद्धी परिणामालंबणगहणाणं साहणं लद्धी । तेण लद्धिणामएण साहणेण लद्धं मणवतिकायजोगतिगं । एत्थ लद्धी साहणं । अहवा तेण वीरिएण तिविहग्गहणविभत्तेण 'लद्धणामतिगं' ति मणवतिकायजोगणामतिगं । एस मूलिल्लेण अत्थेण संबंधो । अहवा मणवइकायजोगदव्वेण उप्पण्णत्तातो लद्धं मणआदिणामतिगं, सव्वत्थ वीरियमेव विसेसियं भवति । मणसा जोगो मणजोगो, वायाए जोगो वतिजोगो, कायेण जोगो कायजोगो । जोगो वावारो । अह सव्वजीवपएसेसु तुल्लक्खतोवसमजलद्धिस्स तुल्लमणमादिउवट्ठंभदव्वस्स केण हेउणा विसरिसो वावारो उवलब्भतित्ति ? भण्णइ–'कज्जब्भासण्णोण्णप्पवेसविसमीकयपएस' त्ति, जत्थं चेट्ठते तं कज्जं, तस्सब्भासो आसण्णता, अण्णोण्णस्स पवेसो पदेसाणं, कज्जब्भासेण य अण्णोण्णपवेसेण य वीरितं पति विसमीकता पदेसा भवंति कहं ? भण्णति–जे कज्जभासत्था पदेसा तेसिं तिव्वयरी चेट्ठा भवति, ततो दूरत्थाणं मंदा, ततो दूरतरत्थाणं मंदतरा भवति । सा अण्णोण्णसंबंधत्तातो पदेसाणं लब्भइ । जहा संकला परोप्परबद्धा एक्कंमि वि पदेसे चालिज्जमाणे सव्वे चलंति, चलंता वि विसमप्फंदा दिट्ठा, एवं पदेसाण वि

मणादिगसंबंधवद्धाणं जाणियव्वं। जति अण्णोण्णपविट्ठा न होज्जा तो कज्जब्भासत्तणेण वि विसमीकतपदेसत्तणं पि ण होज्ज, जहा गोपुरिसाणं। तम्हा कज्जब्भासेण अण्णोण्णपवेसेण य विसमीकयप्पदेसविरियं पुव्वुत्तकारणेण लद्धणामतिगं चेति संवज्झति । एतेण कारणेण सव्वपदेसेसु तुल्लखयोवसमलद्धिस्स जीवस्स तुल्लमणादिविगप्पस्स वि विससो परिफंदो जीवपदेसे त्तुत्ति णत्थि दोसोत्ति। जहा लोगे लोट्ठगादिणा अभिहतस्स सव्वंगेसु जुगवं वेयणा होति तहावि अभिघातप्पदेसेसु तिव्वतरा वेदणा कज्जब्भासत्तातो सेसेसु मंदतरा। एवं सहचरिएसु वि जीवप्पदेसेसु वीरियविसमत्ता। जहा वा समाण लद्धियाणं इंदियाणं कम्हि वि उवउत्तस्स तंमि चेव तिव्वं विण्णाणं होति ण सेसेसु इंदिएसु विज्जमाणखयोवसमलद्धिएसु वि तहेहावि समाणलद्धियाणं पदेसाणं विसमपरिप्फंदत्ता दिट्ठा तेण कारणेण परोप्परसंबद्धाणं सहचलियाणं कज्जब्भासत्ताए विसमचेट्ठा पदेसाणं ति णत्थि कोवि विरोधो" इति [कर्मप्रकृतिगाथाङ्कः ४] ॥१३॥

तदेवं वीर्यं प्रतिपादितम् । अथ तस्यैव जघन्याजघन्योत्कृष्टानुत्कृष्टत्वबोधाय प्ररूपणां चिकीर्षुरर्थाधिकारप्रतिपादिकां गाथामाह—

**अविभागवग्गफड्डगअंतरठाणं अणंतरोवणिहा**
**जोगे परंपरा वुड्ढि समयजीवप्पबहुगं च ॥१४॥**

(प्रे०) 'अविभाग' इत्यादि, योगे वीर्यसंज्ञकयोगविषये प्रथमतोऽविभागप्ररूपणा कर्तव्या १। ततो वर्गणाप्ररूपणा २। ततः स्पर्धकप्ररूपणा ३। तदनन्तरमन्तरप्ररूपणा ४। ततः स्थानप्ररूपणा ५। ततोऽनन्तरोपनिधा ६। ततः परम्परोपनिधा ७। तदनन्तरं वृद्धिप्ररूपणा ८। ततः समयप्ररूपणा ९। ततो जीवानामल्पबहुत्वप्ररूपणेति १०। तत्राविभागो नाम यो वीर्यांशः प्रज्ञाछेदनकेन विभक्तुं न शक्यते सोंऽशोऽविभागसंज्ञया गीयते। इदमुक्तं भवति—जीवस्य वीर्यं केवलिप्रज्ञाछेदनकेन छिद्यमानं छिद्यमानं यदा विभागं न प्रयच्छति तदा सोऽन्तिमोंऽशोऽविभाग इत्युच्यते। वीर्याणुर्वीर्यांशोऽनंश इत्यस्यैकार्थानि।

तथा चात्र कर्मप्रकृतिचूर्णिः—

"अविभागपलिच्छेयपरूवणा, वग्गणापरूवणा, फड्डगपरूवणा, अंतरपरूवणा, जोगट्ठाणपरूवणा, अणंतरोवणिहा, परंपरोवणिहा, वुड्ढिपरूवणा समयपरूवणा. जीवसमुदाहारो (रे) दोण्ह वि अप्पाबहुगं ति। अविभागपलिच्छेओ णाम नत्थि विभागो जस्स सो अविभागपलिच्छेओ. सजोगिस्स करणवीरियं बुद्धीए छिज्जमाणं २ जाहे विभागं णो हव्वमागच्छति ताहे अविभागपलिच्छेदोत्ति वा वीरियपरमाणुत्ति वा भावपरमाणुत्ति वा एगट्ठा" इति [कर्मप्रकृतिगाथाङ्कः ५] ॥१४॥

सम्प्रति 'यथोद्देशं निर्देशः' इति न्यायमनुसृत्य प्रथममविभागप्ररूपणामाह—

**पण्णाछेयणछिन्ना लोगासंखेज्जगप्पएससमा ।**
**अविभागा एक्केक्के होंति पएसे जहन्नेणं ॥१५॥**

(प्रे०) 'पण्णाछेयणछिन्ना' इत्यादि, प्रज्ञाछेदनकेन-केवलिप्रज्ञाछेदनकेन छिन्ना ये वीर्यस्याविभागाः ते एकैकस्मिन् जीवप्रदेशे चिन्त्यमाना जघन्येनापि 'लोगासंखेज्जगपएससमा' इति, असं-

ख्येयलोकाकाशप्रदेशतुल्या भवन्ति,उत्कर्षतोऽप्यसंख्येयलोकाकाशप्रदेशप्रमाणा एव, किन्तु ते जघन्यपदभाविवीर्याविभागेभ्योऽसंख्येयगुणा द्रष्टव्याः। असंख्येयस्यासंख्येयप्रकारत्वात् न कोऽपि विरोधः। 'लोकासंख्येयकप्रदेशसमा' इत्यत्रासंख्येय एवासंख्येयकम्, 'यावादिभ्यः कः' ( सि० हे० ७।३।१५ ) इति स्वार्थे कप्रत्ययः, लोकानामसंख्येयकस्य प्रदेशा लोकासंख्येयकप्रदेशाः, तेषां समाः प्रमाणा इत्यक्षरार्थः कार्यः। तथा च निगदितं पञ्चसंग्रहे बन्धनकरणनिरूपणे—

'पन्नाए अविभागं जहन्नविरियस्स वीरियं छिन्नं। एक्केक्कस्स पएसस्सऽसंखलोगप्पएससमं॥ इति।

तथा चात्र कर्मप्रकृतिचूर्णिः—

'पण्ण' त्ति बुद्धी णाणं वा। ताए पण्णाए च्छिज्जमाणा छिण्णा वीरियअविभागा। ते किंपमाणा ते णिरूवणत्थं भण्णइ–'लोगासंखेज्जगप्पदेससम' त्ति असंखेज्जाणं लोगाणं जावतिया आगासपदेसा तेत्तिया वीरियअविभागपलिच्छेया, 'अविभागा एक्केक्के होंति पएस' त्ति एक्केक्के जीवपएसे भवंति जहण्णेणं उक्कोसेण वि णियमादेव असंखेज्जलोगागासपदेसमेत्ता भवंति। एगम्मि जीवप्पदेसे जे जहण्णगा वीरियअविभागपलिच्छेया तेहिंतो वीरियअविभागपलिच्छेएहिंतो एगंमि चेव जीवपदेसे उक्कोसगा वीरियअविभागपलिच्छेया असंखेज्जगुणा। अविभागपलिच्छेदपरूवणा भाणया" इति [कर्मप्रकृतिगाथाङ्कः ६] ॥ १५ ॥

तदेवमुक्ताऽविभागप्ररूपणा। सम्प्रति ते वीर्याविभागाः किं जीवस्य सर्वप्रदेशेषु समाना उताहु न्यूनाधिका इति प्रतिपादनार्थं वर्गणाः प्ररूपयति—

**जेसिं पएसाण समा अविभागा सव्वतो य थोवतमा।**
**ते वग्गणा जहन्ना अविभागहिया परंपरओ ॥१६॥**

(प्रे०) क्षयोपशमजन्यवीर्यस्य सर्वात्मप्रदेशेषु तुल्यत्वेऽपि कार्यसामीप्यदूरतावशात् न्यूनाधिकरूपं वैषम्यं जायते,तथाहि– जीवप्रदेशानां कार्यस्य यथा यथा सामीप्यं तथा तथाऽधिकं वीर्यम्, यथा यथा दूरता तथा तथाऽल्पं वीर्यम्। अत एव वक्ष्यमाणवर्गणादि घटामटाट्यते। इह वर्गणा नाम समसंख्याकवीर्याविभागानां जीवप्रदेशानां समुदायो वर्गणा। तथाहि-येषामात्मप्रदेशानां तुल्यसङ्ख्याका वीर्याविभागा जीवप्रदेशगतान्यसर्ववीर्याविभागेभ्यः स्तोकतमास्तेषामात्मप्रदेशानां समुदायो जघन्यवर्गणा भवति। तदनन्तरमेकैकेन वीर्याविभागेनाधिकानां तावतां तावतां जीवप्रदेशानां समुदायेन क्रमशो द्वितीयादिवर्गणा भवन्ति। तदेवाह–'जेसिं पएसाण'इत्यादि, येषां प्रदेशानां-जीवप्रदेशानां समाः समानसंख्या वीर्याविभागा भवन्ति, 'सर्वतश्च'-सर्वेभ्योऽपि चान्येभ्यो जीवप्रदेशगतवीर्याविभागेभ्यः स्तोकतमाः ते जीवप्रदेशा घनीकृतलोकासंख्येयभागवर्त्यसंख्येयप्रतरगतप्रदेशराशिप्रमाणाः समुदिता एका वर्गणा, सा च जघन्या, सर्वस्तोकवीर्याविभागयुक्तत्वात्। 'अविभागहिया परंपरओ'इति,ततः परा वर्गणा एकैकेनाविभागेनाधिका वक्तव्याः। तद्यथा–जघन्यवर्गणात एकेन वीर्याविभागेनाभ्यधिकाः परे ये घनीकृतलोकासंख्यभागवर्त्यसंख्येयप्रतरगतप्रदेशराशि-

प्रमाणा जीवप्रदेशास्तेषां समुदायो द्वितीया वर्गणा । तदनन्तरं द्वाभ्यां वीर्याविभागाभ्यामभ्यधिका-नामुक्तसंख्याकानामेवात्मप्रदेशानां समुदायस्तृतीया वर्गणा। एवं क्रमश एकैकेन वीर्याविभागेनाभ्यधि-कानां तावतां तावतां जीवप्रदेशानां समुदायरूपा वर्गणाः श्रेण्यसंख्येयभागप्रमाणा असंख्येया वक्तव्याः ।

तथा चात्र कर्मप्रकृतिचूर्णिः—

"जेसिं जीवप्पदेसाणं सरिसवीरियअविभागपलिच्छेया'सव्वतो य थोवतम'त्ति सव्वजीवपदेसेहिंतो जे अप्प-वीरियतरा जीवप्पदेसा 'ते वग्गणा जहण्णा'त्ति ते जीवप्पदेसा जहण्णिता वग्गणा वुच्चति । कम्हा ? भण्णइ-सरिसवीरियत्तातो सव्वेसिं सरिसवीरियाणं जीवप्पदेसाणं एगा वग्गणा। ते केत्तिया सरिसवीरिया जीवप्प-देसा एगा वग्गणा भवति ? भण्णइ-असंखेज्जाणं लोगपतराणं जावतिया आगासपदेसा तावतियाणं जीवपदे-साणं समुदाएणं पढमा एसा वग्गणा भवति, ते पतरा लोगस्स असंखेज्जतिभागो । 'अविभागहिया परंपरओ' त्ति पढमवग्गणाजीवप्पदेसेहिंतो जे एगेण वीरियअविभागपलिच्छेदेण अहिगा जीवप्पदेसा तेसिं समुदाएण बितिया वग्गणा भवति, ते वि जीवप्पदेसा असंखिज्जपतरमेत्ता चेव, बीयवग्गणा-जीवप्पदेसेहिंतो जे एगेण वीरियअविभागपलिच्छेदेण अहिगा जीवप्पदेसा तेसिं समुदाएण ततिया वग्गणा, एवं एएण कमेणं एगुत्तरवड्ढियाओ वग्गणाओ णेयव्वातो" इति [कर्मप्रकृतिगाथाङ्कः-७]॥१६॥

तदेवं निरूपिता वर्गणाः । सम्प्रति ताः कियत्य इति निरूपणार्थं स्पर्धकप्ररूपणामाह—

सेढिअसंखिअमित्ता फड्डगमेत्तो अणंतरा णत्थि ।
जाव असंखा लोगा तो बीयाई य पुव्वसमा ॥१७॥

(प्रे०) स्पर्धन्त इवोत्तरोत्तरतुल्यवृद्ध्या वर्गणा यत्रेति स्पर्धकम्, 'बहुलम्' [सिद्धहेम०५।१।२] इति सूत्रेणाधिकरणे 'णकः' प्रत्ययः, वर्गणानां समुदाय इत्यर्थः । 'सेढि' इत्यादि, इह घनीकृत-लोकस्य या एकैकप्रदेशपङ्क्तिरूपा श्रेणिस्तस्याः श्रेणेरसंख्येयतमे भागे यावन्त आकाशप्रदेशास्ता-वत्प्रमाणानां यथोक्तस्वरूपाणां वर्गणानां समुदाय एकं स्पर्धकम् । तदेवं कृता स्पर्धकप्ररूपणा । साम्प्रतमन्तरप्ररूपणामाह–'एत्तो अणंतरा णत्थि' इति, इतः-पूर्वोक्तस्पर्धकानन्तरम्, पूर्वोक्तस्प-र्धकगतचरमवर्गणायाः परत इत्यर्थः, आत्मप्रदेशा अनन्तरा न सन्ति, किन्तु सान्तरा एव । ननु कियत्प्रमाणमन्तरं भवतीत्याह–'जाव असंखा लोगा' इति, यावदसंख्येयलोकास्तावदन्तरं भवति। इदमुक्तं भवति–पूर्वोक्तस्पर्धकगतचरमवर्गणायाः परत एकैकेन वीर्याविभागेनाभ्यधिका जीवप्रदेशा न प्राप्यन्ते,नापि द्वाभ्यां वीर्याविभागाभ्याम्,नापि त्रिचतुष्पञ्चादिभिर्वीर्याविभागैः, यावन्नापि संख्येयैः, अपि त्वसंख्येयैरेव । असंख्येयानां लोकानां ये स्वप्रदेशास्तावत्प्रमाणैर्वीर्याविभागैरभ्यधिका जीव-प्रदेशाः प्राप्यन्ते । ततस्तेषां समुदायो द्वितीयस्य स्पर्धकस्य प्रथमा वर्गणा । 'तो बीयाई य पुव्व-समा' इति, ततः—द्वितीयस्पर्धकप्रथमवर्गणातो द्वितीयादयो वर्गणाः पूर्वसमाः-प्रथमस्पर्धकगतवर्गणा इव वक्तव्याः ।

तद्यथा—द्वितीयस्पर्धकप्रथमवर्गणात एकेन वीर्याविभागेनाभ्यधिकानामात्मप्रदेशानां घनीकृतलोकासंख्येयभागवर्त्यसंख्येयप्रतरगतप्रदेशराशिप्रमाणानां द्वितीया वर्गणा। द्वाभ्यां वीर्याविभागाभ्यामधिकानां तावतामेवात्मप्रदेशानां तृतीया वर्गणा। त्रिभिर्वीर्याविभागैरभ्यधिकानां तावतामेवात्मप्रदेशानां चतुर्थी वर्गणा। एवं क्रमश एकैकवीर्याविभागवृद्ध्या निरन्तरं वर्धमानानां तावतां तावतामात्मप्रदेशानां वर्गणास्तावद् वक्तव्या यावत् श्रेण्यसंख्येयभागप्रमाणा असंख्येया वर्गणा भवेयुः। तावत्संख्याकानां तासां समुदायो द्वितीयं स्पर्धकम्। ततः परं पूर्ववदेकेन वीर्याविभागेनाभ्यधिका आत्मप्रदेशा न प्राप्यन्ते, नापि द्वाभ्याम्, नापि त्रिभिः, यावन्नापि संख्यातैः, किन्त्वसंख्येयैर्वीर्याविभागैरभ्यधिका जीवप्रदेशा लभ्यन्ते। ततस्तेषां घनीकृतलोकासंख्येयभागगतप्रदेशराशिप्रमाणानां समुदायस्तृतीयस्पर्धकस्य प्रथमा वर्गणा। ततः पूर्ववदेकैकेन वीर्याविभागेनाभ्यधिकानां तावतां तावतां जीवप्रदेशानां द्वितीयादयो वर्गणास्तावद् वक्तव्या यावत् पूर्ववत् श्रेण्यसंख्येयभागप्रदेशप्रमाणा असंख्येया भवेयुः। तासां समुदायस्तृतीयं स्पर्धकम्। एवं क्रमेण स्पर्धकान्यपि तावद् वाच्यानि यावत् श्रेण्यसंख्येयभागप्रदेशप्रमाणान्यसंख्येयानि भवेयुः।

तथा चात्र कर्मप्रकृतिचूर्णिः—

"सरिसुत्तरवड्ढीए वड्ढियाणं वग्गणाण समुदाओ फड्डगं वुच्चति। ताओ णं वग्गणाओ 'सेढी' त्ति-सेढिअसंखेज्जतिभागमेत्तिओ होउणं एगं फड्डगं वुच्चति। किं कारणं? भण्णइ-सरिसवड्ढिसमुदायत्ताओ एयासिं वग्गणाणं सरिसि अण्णासिं वग्गणाण वड्ढी णत्थित्ति काउं। भणिया फड्डगपरूवणा। इदाणिं अतरपरूवणा भण्णति--'एत्तो अणतरा णत्थि' त्ति-तस्स फड्डगस्स चरिमवग्गणाओ अण्णस्स फड्डगस्स आदिवग्गणाए एगेणं वीरियअविभागपलिच्छेदेणं अब्भहिगा जीअप्पदेसा णत्थि, एवं दोहिं अब्भहिगा णत्थि, एवं जाव संखेज्जेहिं वीरियअविभागपलिच्छेदेहिं अब्भहिगा णत्थि, असंखेज्जेहिं वीरियअविभागपलिच्छेदेहिं अब्भहिगा अत्थि तस्स असंखेज्जस्स पमाणावधारणत्थं भण्णइ-'जाव असंखा लोग त्ति' एवं असंखिज्जा लोगा अंतरं। असंखेज्जाणं लोगाणं जत्तिया आगासपदेसा तत्तिएहिं वीरियअविभागपलिच्छेदेहिं पढमफड्डगचरिमवग्गणाओ बितियफड्डगआदिवग्गणा अब्भहिया। 'तो बीयाई पुव्वसम' त्ति-ततो बितियफड्डगस्स पढमवग्गणाओ बितियवग्गणा एगेणं वीरियाविभागपलिच्छेदेणं अब्भहिगा। एवं वग्गणाए वग्गणाए एगो वीरियअविभागपलिच्छेओ उत्तरं णेयव्वो जाव सेढिअसंखेज्जतिभागमित्ताओ वग्गणाओ सरिसुत्तराओ गंतूणं बितिय फड्डगं। एवं जा बितीयफड्डगस्स परूवणा भणिया सा ततियफड्डगस्स वि अहीणमणतिरित्ता भाणियव्वा जाव चरिमस्स उक्कोसवीरियस्स फड्डगस्स बितियफड्डगस्स सरिसा एव परूवणा भाणियव्वा। अतरपरूवणा भणिया"। इति [कर्मप्रकृतिगाथाङ्कः ८] ॥१७॥

तदेवं स्पर्धकप्ररूपणा कृता। अथ क्रमप्राप्तां स्थानप्ररूपणां वक्तुकाम आह—

**सेढिअसंखियमित्ताइं फड्डगाइं जहन्नयं ठाणं।**
**फड्डगपरिवुड्ढि अओ अंगुलभागो असंखतमो॥१८॥**

(प्रे०) स्पर्धकसमुदायो योगस्थानम्। तदेव निरूपयति—'**सेढिअसंखियमित्ताइं फड्डगाइं**' इति, घनीकृतलोकस्य यैकैकप्रदेशपङ्क्तिस्वरूपा श्रेणिस्तस्या असंख्येयतमे भागे यावन्त आकाश-

प्रदेशास्तावत्प्रमाणानि यथोक्तस्वरूपाणि स्पर्धकानि, 'जहन्नयं ठाणं' इति, जघन्यं स्थानं- योगस्थानं भवति । एतच्च सूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य भवप्रथमसमये वर्तमानस्य भवति । ततोऽन्यस्याधिकतरवीर्यस्य जीवस्य सर्वाल्पवीर्याविभागानामात्मप्रदेशानां समुदायो द्वितीययोगस्थानस्य जघन्यवर्गणा । एकेन वीर्याविभागेनाभ्यधिकानां जीवप्रदेशानां समुदायो द्वितीया वर्गणा । द्वाभ्यां वीर्याविभागाभ्यामभ्यधिकानामात्मप्रदेशानां समुदायस्तृतीया वर्गणा । त्रिभिर्वीर्याविभागैरभ्यधिकानां जीवप्रदेशानां समुदायः चतुर्थी वर्गणा । एवं क्रमश एकैकवीर्याविभागेनाभ्यधिकानां जीवप्रदेशानां समुदायस्य पञ्चम्यादयो वर्गणास्तावद् वाच्या यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा भवेयुः । तासां समुदाय एकं स्पर्धकम् । ततः एकेन वीर्याविभागेनाभ्यधिका आत्मप्रदेशा न लभ्यन्ते , नापि द्वाभ्याम् , नापि त्रिचतुरादिभिः, यावन्नापि संख्यातैः, अपि त्वसंख्येयलोकाकाशप्रमाणैर्वीर्याविभागैरभ्यधिका जीवप्रदेशाः प्राप्यन्ते । तेषां समुदायः द्वितीयस्पर्धकस्य प्रथमा वर्गणा । तदनन्तरं पूर्वोक्तवर्गणाप्रकारेण द्वितीयादयो वर्गणा अपि तावद् वाच्या यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिसमाना भवन्ति । तासां समुदायो द्वितीयं स्पर्धकम् । एवं प्राक्तनयोगस्थानप्रदर्शितप्रकारेण तृतीयादीन्यपि स्पर्धकानि तावद् वाच्यानि यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि भवेयुः । तेषां समुदायो द्वितीयं योगस्थानकम् । ततोऽन्यस्याधिकतमवीर्यस्य जीवस्य प्रदर्शितप्रकारेण तृतीयं योगस्थानं वक्तव्यम् । एवं प्रकारेणान्यान्यजीवापेक्षयाधिकाधिकवीर्याणामन्येषां जीवानामपि तावद् योगस्थानानि वाच्यानि यावत्सर्वोत्कृष्टं योगस्थानं भवेत् । इह द्वितीययोगस्थाने प्रथमस्पर्धकस्य प्रथमवर्गणायां जीवप्रदेशाः प्रथमयोगस्थानसत्कचरमस्पर्धकचरमवर्गणागतवीर्याविभागापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणैरसंख्येयैर्वीर्याविभागैरधिकाः प्राप्यन्ते । तृतीयेऽपि योगस्थाने प्रथमस्पर्धकस्य प्रथमवर्गणायां जीवप्रदेशा द्वितीययोगस्थानसत्कचरमस्पर्धकस्य चरमवर्गणागतवीर्याविभागापेक्षया तावद्भिरेव वीर्याविभागैरधिका लभ्यन्ते । एवं सर्वेष्वपि योगस्थानेषु स्वस्वप्रथमस्पर्धकस्य प्रथमवर्गणायां जीवप्रदेशाः स्वस्वानन्तरपूर्वयोगस्थानसत्कचरमस्पर्धकस्य चरमवर्गणागतवीर्याविभागापेक्षया पूर्वोक्तप्रमाणैरसंख्येयैर्वीर्याविभागैरभ्यधिका बोध्याः ।

तानि सर्वाणि योगस्थानानि कियन्ति प्राप्यन्ते ? इति चेद्, उच्यते, तानि सर्वाण्यपि योगस्थानानि घनीकृतलोकश्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणान्यसंख्येयानि प्राप्यन्ते । ननु संसारस्थजीवानामानन्त्यात् प्रतिजीवं च योगस्थानानां प्राप्यमाणत्वाद् योगस्थानान्यनन्तानि भवन्तीति कथमुक्तमसंख्येयानीति, अत्रोच्यते, एकैकस्मिन् सदृशे सदृशे योगस्थाने वर्तमानाः स्थावरजीवा अनन्ताः प्राप्यन्ते इत्यतः सर्वजीवापेक्षयाऽपि केवलिप्रज्ञया परिभाव्यमानानि सर्वाण्यपि योगस्थानानि यथोक्तप्रमाणान्येव भवन्ति, न तु न्यूनाधिकान्यपि ।

तदेवं कृता स्थानप्ररूपणा । साम्प्रतमनन्तरोपनिधाप्ररूपणावसरः । तत्रोपनिधानमुपनिधा,

योगस्थानेष्वनन्तरात् मार्गणमित्यर्थः । अनन्तरेणोपनिधा-अनन्तरोपनिधा, अनन्तरपूर्वयोगस्थानादु-त्तरयोगस्थानेषु स्पर्धकसंख्यावृद्धिमार्गणमिति सरलार्थः । तदेवाह-'फड्डगपरिवुड्ढि अओ' इति, अतः-प्रथमात् योगस्थानात् द्वितीयादिषु योगस्थानेषु प्रत्येकं स्पर्धकपरिवृद्धिः-स्पर्धकानां परिवृद्धिः, 'अंगुलभागो असंखतमो' इति, अंगुलस्यासंख्येयतमे भागे यावन्तः प्रदेशास्तावत्प्र-माणा भवति । इदमुक्तं भवति-पूर्वपूर्वयोगस्थानापेक्षयोत्तरोत्तरयोगस्थानेषु परिभाव्यमानानि स्पर्ध-कान्यङ्गुलासंख्येयभागगतप्रदेशराशिप्रमाणान्यभ्यधिकानि भवन्ति । इयमत्र भावना-प्रथम-योगस्थानवर्गणापेक्षया द्वितीययोगस्थानवर्गणायां मूलत एव हीनहीनतरा जीवप्रदेशा भवन्ति, स्वभावादेवाधिकाधिकतरवीर्याविभागानामात्मप्रदेशानां स्तोकस्तोकतरप्रमाणत्वेन हीनहीनतरवीर्या-विभागानां जीवप्रदेशानां च बहुबहुतरप्रमाणत्वेन प्राप्यमाणत्वात् । ततोऽत्रादित एवोत्तरोत्तरवर्ग-णायां स्तोकस्तोकतरजीवप्रदेशतयाऽधिका वर्गणा भवन्ति, ततश्च स्पर्धकान्यपि वर्धन्ते इति वर्गणा-बाहुल्यसंभवतो यथोक्तं स्पर्धकबाहुल्यमुपपद्यत एव । एवमन्येष्वपि योगस्थानेषु पूर्वपूर्वयोगस्था-नकगतस्पर्धकापेक्षयोत्तरोत्तरयोगस्थानेषु स्पर्धकबहुलता परिभावनीयेति ।

तथा चात्र कर्मप्रकृतिचूर्णिः-'सेढिअसंखिज्जमेत्ताणि फड्डगाणि जहण्णगं ठाणं' ति-तासिं सेढीए असंखिज्जतिभागमित्ताणि फड्डगाणि, एसा एगजीवस्स जहण्णवीरियस्स फड्डगपरूवणा भणिया। एवं जहण्णगं जोगठाणं भवति । ततो अण्णस्स जीवस्स अहिगतरवीरियस्स अप्पतरा जीवप्पदेसा होतूणं पढम-वग्गणा णिप्फज्जति । बितियवग्गणा ततो एगेणं वीरियअविभागेण अब्भहिगा, जीवप्पदेसेहिं हीणतरगा लब्भति । एवं एगुत्तरियाए वीरियअविभागपलिच्छेयवुड्ढीए जीवप्पदेसहाणीए य फड्डगं णिप्फातिज्जति । एवं जाव सेढीए असंखेज्जतिभागमेत्ताणि फड्डगाणि । एसा पढम अ(?) जहण्णवीरियठाणं पत्तस्स जीवस्स फड्डगपरूवणा भणिया । एवं बितीयं जोगठाणं । एत्थ जहा जहा वीरियं परिवड्ढति तहा तहा फड्डगेहिं परिवु-ड्ढाणि जोगठाणाणि होन्ति, ताणि सेढिअसंखिज्जतिभागमेत्ताणि । एतेसु जोगट्ठाणेसु करणवीरियसहिता सव्वजीवा वट्टंति । भणिता ठाणपरूवणा । इदाणिं ताणि जोगट्ठाणाणि काए फड्डगस्स परिवुड्ढीए वड्ढि-ताणि त्ति तं णिरूवणत्थं अणंतरोवणिहिता भण्णति-'अणंतरोवणिहि' त्ति उवणिहाणं उवणिहा, अणंत-रेण उवणिहा अणंतरोवणिहा, अणंतरं जोगट्ठाणं पडुच्च मग्गणा-ताए अणंतरोवणिहाए पढमातो जोगट्ठाणातो बितियं जोगठाणं केवतिएहिं फड्डगेहिं अब्भहिगं ? 'फड्डगपरिवुड्ढि' त्ति फड्डगाणं परिवुड्ढी फड्डगपरिवुड्ढी, 'अतो' त्ति-पढमातो जोगठाणातो बितियं जोगट्ठाणं. 'अंगुलभागो असंखतमो' त्ति अंगुलस्स असंखे-ज्जतिभागे जत्तिया आगासपएसा तत्तिएहिं फड्डगेहिं पढमजोगट्ठाणातो बितीय जोगट्ठाणं अब्भहिगं । किं कारणं ? भण्णइ-पढमे जोगट्ठाणे बहुगा जीवप्पदेसा एगं फड्डगं हवति । बितिए जोगट्ठाणे वीरियबहु-त्तणाओ थोवप्पदेसा फड्डगं लब्भति । एतेण कारणेणं पढमजोगठाणातो बितियं जोगठाणं अंगुलअसंखेज्ज-तिभागमेत्तेहिं अब्भहियं । पढमजोगठाणस्स चरिमफड्डगस्स चरिमाए वग्गणाए जे वीरियअविभागपलि-च्छेदा तेहिंतो बितियस्स जोगठाणस्स आदिफड्डगस्स आदिवग्गणाते वीरियअविभागपलिच्छेया असंखेज्जेहिं वीरियअविभागपलिच्छेदेहिं अब्भहिगा । एवं बितियातो ततियस्स, ततियातो चउत्थस्स, एवं जाव उक्कोसग-दुचरिमातो उक्कोसगचरिमजोगठाणस्स आदिफड्डगस्स आदिवग्गणाए वीरियअविभागपलिच्छेया असंखे-ज्जेहिं वीरियअविभागपलिच्छेदेहिं अब्भहिगा । भणिया अणंतरोवणिहा" इति[कर्मप्र० गाथा० ९]॥१८॥

इत्थं प्ररूपिताऽनन्तरोपनिधा । इदानीं परम्परोपनिधावसर इति तां प्ररूपयति—

सेढिअसंखियभागं गंतुं गंतुं हवंति दुगुणाइं ।
पल्लासंखियभागो णाणागुणहाणिठाणाणि ॥११॥

(प्रे०) उपनिधानमुपनिधा, परम्परयोपनिधा–मार्गणं परम्परोपनिधा । प्रथमयोगस्थानात् कियन्ति योगस्थानानि गत्वा स्पर्धकानि द्विगुणानि भवन्तीति मार्गणमित्यर्थः । तदेवाह–'सेढिअसंखियभागं' इत्यादि, प्रथमयोगस्थानात् श्रेणेरसंख्येयतमे भागे यावन्ति नभःप्रदेशानि तावन्ति योगस्थानानि गत्वा गत्वा–अतिक्रम्यातिक्रम्योत्तरोत्तरयोगस्थाने स्पर्धकानि द्विगुणानि द्विगुणानि भवन्ति । इदमत्र हृदयम्– प्रथमयोगस्थाने यावन्ति स्पर्धकानि भवन्ति तदपेक्षया श्रेण्यसंख्येयभागप्रमाणानि योगस्थानान्यतिक्रम्यानन्तरं यद्योगस्थानं तस्मिन् द्विगुणानि भवन्ति । पुनरपि द्विगुणस्पर्धकात्तद्योगस्थानादारभ्य यथोक्तप्रमाणानि योगस्थानान्यतीत्यानन्तरे योगस्थाने द्विगुणानि स्पर्धकानि भवन्ति । एवं तावद् वाच्यं यावदुत्कृष्टयोगस्थानं समागच्छेत् । तानि च द्विगुणद्विगुणस्पर्धकनिष्पन्नानि योगस्थानानि संख्यया परिभाव्यमानानि पल्योपमासंख्येयभागप्रमाणानि भवन्ति, तदेवाह–'पल्लासंखियभागो' इति, सूक्ष्मस्याद्धापल्योपमस्यासंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि द्विगुणवृद्धिस्थानानि भवन्ति । अथ द्विगुणहानिस्थानानि कियत्प्रमाणानि भवन्तीत्याह–'णाणागुणहाणिठाणाणि' इति, नानारूपाणि यानि गुणहानिस्थानानि-द्विगुणहानिस्थानानि तान्यपि यथोक्तपल्योपमासंख्येयभागगतसमयप्रमाणानि भवन्ति । यतो यानि द्विगुणवृद्धिस्थानानि तान्येव पश्चानुपूर्व्या द्विगुणहानिस्थानानि भवन्ति । तथाहि–उत्कृष्टयोगस्थानादारभ्याधोऽधः श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि योगस्थानान्यतिक्रम्यानन्तरं यद्योगस्थानं तस्मिन् द्विगुणहीनानि-अर्धानि स्पर्धकानि भवन्ति । पुनरपि द्विगुणहीनस्पर्धकात्तद्योगस्थानादधोऽवतरणे यथोक्तप्रमाणेषु योगस्थानेषु व्यतीतेषु यदनन्तरं योगस्थानं तस्मिन् द्विगुणहीनानि- अर्धानि स्पर्धकानि प्राप्यन्ते । एवं भूयो भूयो जघन्ययोगस्थानं यावद् वक्तव्यम् । ननु द्विगुणानां हानिः द्विगुणहानिरित्यर्थस्यार्धहानावनुपपत्तिरिति चेद्, सत्यम्, किन्तु तत्तद्द्विगुणवृद्ध्यर्धसमाप्त्यवच्छिन्नहानेरेवेह द्विगुणहानेर्विवक्षितत्वात् । एतत्सूचनार्थमेव सूत्रे 'नाना' इति दमुपन्यस्तम् । इदानीं द्विगुणवृद्धिद्विगुणहानिस्थानानां तदन्तरालस्थानानां चाल्पबहुत्वमुच्यते– द्विगुणवृद्धीनां द्विगुणहानीनां च स्थानानि सर्वस्तोकानि, परस्परं च तुल्यानि । तदपेक्षया द्विगुणवृद्धीनां द्विगुणहानीनां चाऽन्तराले यानि स्थानानि तान्यसंख्येयगुणानि भवन्ति ।

तथा चात्र कर्मप्रकृतिचूर्णिः—

"सेढिअसंखेज्जतिभागे जत्तिया भागासपदेसा तत्तियाणि जोगट्ठाणाणि गंतूणं पढमातो जोगट्ठाणातो दुगुणवुड्ढियं जोगट्ठाणं लब्भति, फड्डगाणि पडुच्च । ततो पुणो तत्तियाणि चेव जोगट्ठाणाणि गंतूणं बितियं दुगुणवड्ढियं जोगट्ठाणं लब्भति । एवं जाव उक्कोसगं जोगट्ठाणं । ताणि दुगुणवड्ढिताइं जोगट्ठाणाणि केवतियाणि तं णिरूवणत्थं भण्णइ–'पल्लासंखियभागो' त्ति । सुहुमस्स अद्धापलिओवमस्स जत्तिया समया तेसिं असंखेज्जतिभागमेत्ताणि दुगुणवुड्ढिट्ठाणाणि । 'णाणागुणहाणिट्ठाणाणि' त्ति उक्कोसातो जोगट्ठाणातो

आरब्भ जाव जहण्णगं जोगट्ठाणं एतितं अब्भंतरे जाणि चेव दुगुणवड्ढिठाणाणि ताणि चेव दुगुणहाणिठाणाणि वि भवति। इदाणिं एगंमि दुगुणवड्ढिहाणंतरे जाणि जोगट्ठाणाणि सव्वदुगुणवड्ढिहाणिट्ठाणाणि य कतराणि ? अप्पाणि वा बहुताणि वा भण्णइ–सव्वत्थोवाणि दुगुणवड्ढिट्ठाणाणि। एगंमि दुगुणवड्ढिअणंतरे जोग-ठाणाणि असंखेज्जगुणाणि। परंपरोवणिहा भणिता" इति [कर्मप्रकृतिगाथाङ्कः १०] ॥१९॥

तदेवं कृता परम्परोपनिधा प्ररूपणा। अथ वृद्धिप्ररूपणां चिकीर्षुराह—

वुड्ढीहाणिचउक्कं तम्हा कालोऽत्थ अंतिमल्लाणं।
अंतोमुहुत्तमावलिअसंखभागो य सेसाणं ॥२०॥

(प्रे०) अत्रेदमनुसन्धेयम्–योगप्रवृत्तिस्तावद्वीर्यान्तरायकर्मक्षयोपशमाधीना, वीर्यान्तरायक्षयोपशमश्च तत्तद्द्रव्यादिसामग्रीमवाप्य कदाचिद् वर्धते, कदाचिद् वर्धतेतराम्, कदाचिद् हीयते, कदाचिच्च हीयतेतराम्; ततो योगस्थानान्यपि योगप्रवृत्त्यनुसारं कदाचिद् वर्धन्ते, कदाचिच्च वर्धन्तेतराम्, कदाचिद्धीयन्ते कदाचिच्च हीयन्तेतरामिति योगस्थानानां कतिविधा वृद्धिः हानिश्च भवतीति प्रतिपादयति–'वुड्ढीहाणिचउक्कं' इति, योगस्थानानां वृद्धिः हानिश्च चतुर्धा भवति। तद्यथा-असंख्यातभागवृद्धिः, संख्यातभागवृद्धिः, संख्यातगुणवृद्धिः, असंख्यातगुणवृद्धिश्चेति चतुर्धा वृद्धिः। एवं हानिरपि चतुर्द्धा, तद्यथा-असंख्येयभागहानिः, संख्येयभागहानिः, संख्येयगुणहानिः, असंख्येयगुणहानिश्च।

**इयमत्र भावना**- विवक्षितसमये जीवस्य योगव्यापारानुसारेण यद् योगस्थानं वर्तते, तदपेक्षयाऽन्यस्मिन् समये यथायोगवृद्धि कदाचिदसंख्यातभागवृद्धं, कदाचित्संख्यातभागवृद्धं, कदाचित्संख्यातगुणवृद्धं, कदाचिदसंख्यातगुणवृद्धं योगस्थानं वर्तते। एवं हानावपि विवक्षितसमये यद् योगस्थानं वर्तते तदपेक्षयाऽन्यस्मिन् समये यथायोगहानि कदाचिदसंख्यातभागहीनं, कदाचित्संख्यातभागहीनं, कदाचित्संख्यातगुणहीनं, कदाचिदसंख्यगुणहीनं योगस्थानं वर्तते। यदा तु योगव्यापारस्य वृद्धिः हानिर्वा न भवति तदा योगस्थानान्यवस्थितानि भवन्तीति बोध्यं विपश्चिद्भिः।

तदेवं वृद्धिः हानिश्च चतुर्धा निरूपिताऽथ यस्मादेवं वृद्धिहान्योश्चतुष्कं वर्तते तस्मादत्र तासां प्रत्येकं नियतः कालो वक्तव्य इति वृद्धिहानिकालं निरूपयन्नाह-'**तम्हा कालोऽत्थ**' इत्यादि, तत्रान्तिमयोरसंख्येयगुणस्वरूपयोर्वृद्धिहान्योः प्रत्येकमुत्कर्षतोऽन्तर्मुहूर्त्तं कालः। शेषाणां त्वाद्यानां तिसृणां वृद्धीनां हानीनां च प्रत्येकमावलिकाऽसंख्येयभागमात्रः परः कालः। इदमत्राकूतम्– तथाविधतीव्रवीर्यान्तरायक्षयोपशमभावतो विवक्षितयोगस्थानादसंख्येयगुणवृद्धेऽन्यस्मिन्नन्यस्मिन् योगस्थाने प्रतिसमयं जीवस्य या गतिः साऽसंख्येयगुणवृद्धिः। एवं तथाविधमन्दक्षयोपशमभावतो विवक्षिताद्योगस्थानादसंख्येयगुणहीनेऽपरस्मिन्नपरस्मिन् योगस्थाने प्रतिसमयं जीवस्य यद् गमनं साऽसंख्येयगुणहानिः। एवंविधाऽसंख्येयगुणवृद्धिः हानिर्वा यदि निरन्तरं भवेत् तदोत्कर्षतोऽन्तर्मुहूर्तकालं यावद् भवेत्। शेषास्तिस्रो वृद्धयः हानयो वोत्कर्षतो निरन्तरमावलिकाऽसंख्येयभागमात्रकालं यावद् भवेयुः। जघन्यतस्तु चतस्रोऽप्येकं द्वौ वा समयौ यावद् भवन्ति। विवक्षितस्य वृद्धेः हानेर्वा यथोक्त-

कालात्परमवस्थानं भवति,विपरीतप्रकारा वृद्धिः हानिर्वा भवति,अन्यप्रकारा वृद्धिः हानिर्वा भवति ।
तथा चात्र कर्मप्रकृतिचूर्णिः—

"अत्थि असंखेज्जतिभागवड्ढी, संखेज्जतिभागवड्ढी,संखेज्जगुणवड्ढी,असंखेज्जगुणवड्ढी । हाणिठाणेसु त एवं हाणीवि । 'तम्हा कालोऽत्थ अंतिमल्लाणं'तेसु चउसु वड्ढीठाणेसु हाणिठाणेसु त'अंतिमल्लाणं' ति–असंखेज्जगुणवड्ढीअसंखिज्जगुणहाणिठाणाणं अंतोमुहुत्तकालं वड्ढी वा हाणी वा । आवलियअसंखेज्जभागो य 'सेसाणं' ति–असंखेज्जभागवड्ढीसंखेज्जभागवड्ढीसंखेज्जगुणवड्ढीअसंखेज्जभागहाणीसंखेज्जभागहाणीसंखेज्जगुणहाणिठाणाणं आवलियाए असंखेज्जतिभागमेत्तं कालं वड्ढी वा हाणी वा । एवं ताव उक्कोसेण । जहन्नेण एक्कं वा दो वा समया वड्ढी वा हाणी वा । एवं सव्वत्थ वड्ढीहाणिपरूवणा भणिता"
इति [कर्मप्रकृतिगाथाङ्कः ११] ॥२०॥

विवक्षितस्य वृद्धेः हानेर्वा यथोक्तकालमप्राप्तौ भिन्नप्रकारा वृद्धिः हानिर्वा भवति, यदा तेष्वेव योगस्थानेषु जीवा अवस्थिता भवन्त्यतो योगस्थानेषु वृद्धिहानिरहिता जीवाः कियत्कालं यावत् प्राप्यन्त इति जिज्ञासातृषात्तये समयप्ररूपणामाह–

**चउराई जावट्ठगमित्तो जावं दुगं ति समयाणं ।**
**पज्जत्तजहन्नाओ जावुक्कोसं ति उक्कोसो ॥२१॥**

(प्रे०) 'समयानाम्' अवस्थितकालनियामकानां 'चतुरादिः' इति–चत्वार आदिर्यस्याः सा चतुरादिः, वृद्धिर्भवतीति शेषः, सा च तावद्वाच्या 'यावदष्टकं' यावदष्टौ समयाः । 'इतः' इति– इत ऊर्ध्वं पुनः समयानां हानिर्वक्तव्येति योजनीयम् , सा च तावद्वाच्या 'यावद् द्विकम्' यावद् द्वौ समयौ । सा च चतुरादिका वृद्धिः'पर्याप्तजघन्यात्'–पर्याप्तनिगोदसत्कजघन्ययोगस्थानादारभ्य तावदवसेया यावदष्टकम्–अष्टौ समयाः । ततः परं हानिः । सापि तावत् 'यावदुत्कृष्टम्'–यावदुत्कृष्टयोगस्थानम् । 'उत्कृष्टः' इति–एष उत्कृष्टोऽवस्थितिकालः । तदेवमर्थवशादक्षरयोजना कृता । भावार्थः पुनरयम्–पर्याप्तसूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य जघन्ययोगस्थानादारभ्य क्रमशो यानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि योगस्थानानि तेषु चतुरः समयान् यावदुत्कर्षतो जीवा अवस्थिता भवन्ति । ततः परं यानि तावन्ति योगस्थानानि तेषु पञ्च समयान् यावत् । तस्मादपराणि यानि तावन्ति योगस्थानानि तेषु षट् समयान् यावत् । ततोऽपराणि यानि तावन्ति योगस्थानानि तेषु सप्त समयान् यावत् । ततोऽपि परं यानि तावन्ति योगस्थानानि तेष्वष्टौ समयान् यावत् । तदनन्तरं क्रमेण यानि तावन्ति योगस्थानानि तेषु सप्त समयान् यावत् । ततोऽपराणि यानि यथोक्तप्रमाणानि योगस्थानानि तेषु षट् समयान् यावत् । एवं प्रतिलोमतया तावद्वाच्यं यावदन्तिमानि पूर्वोक्तसंख्याकानि यान्युत्कृष्टयोगस्थानानि तेषु द्वौ समयौ यावत् । सर्वत्राप्युत्कर्षतो जीवा अवस्थिता भवन्तीति शेषः ।

तथा चात्र कर्मप्रकृतिचूर्णिः–"चउराती जावट्ठगमित्तो जावं दुगंति समयाणं' ति-चउरो समया आदि जेसिं ठाणाणं ते चउरादी वड्ढी'जावट्ठग'त्ति चउसमतिगाणि जोगट्ठाणाणि सेढीए असंखेज्जतिभाग-

मेत्ताणि सुहुमपज्जत्तगस्स जहण्णतो जोगट्ठाणातो आढवेत्तु । ततो पंचसमतिगाणि जोगट्ठाणाणि सेढीए असं-खेज्जतिभागमेत्ताणि । ततो छस्समयिगाणि एवं चेव । ततो सत्तसमतिगाणि एवं चेव । ततो अट्ठसमतिगाणि जोगट्ठाणाणि सेढीए असंखेज्जतिभागमेत्ताणि । 'इत्तो जाव दुगं ति समयाणं' ति-अट्ठसमतिगाणं अंतातो पुणो सत्तसमतिगाणि जोगट्ठाणाणि भवंति । सेढीए असंखेज्जतिभागमेत्ताणि । ततो पुणो छसमतिगाणि एवं चेव । ततो पुणो पंचसमतिगाणि एवं चेव । ततो पुणो चतुसमतिगाणि जोगट्ठाणाणि सेढीए असंखेज्जति-भागमेत्ताणि । एवं तिसमतिगाणि वि । एवं दु समइगाणि परिवाडीए ओप्परुप्परिं घेतव्वाणि । एते चतु-समतिगादिजोगट्ठाणा कतो आढत्ता भवंति तन्निरूवणत्थं भण्णति-'पज्जत्तजहन्नाओ' त्ति-सुहुमएगिंदियपज्ज-त्तगस्स जहण्णगं जोगट्ठाणं आदिं काऊणं जाव उक्कोसठाणं ताव एते चतुसमतिगादी दुसमइगपज्जवसाणा परि-वाडीए घेत्तव्वा । 'उक्कोसो' त्ति-एसो सव्वजोगट्ठाणाणं उक्कोसो कालो भणितो" इति [ कर्मप्रकृति-गाथाङ्कः १२] ॥२१॥

तदेवं योगस्थानेषु वृद्धिहानिरहिता जीवा उत्कृष्टतः कियत्कालं यावत् प्राप्यन्त इति निरूपितम् । अथ योगस्थानेषु वृद्धिहानिरहिता जीवा जघन्यतः कियत्कालं यावत् प्राप्यन्त इति,अष्टसामयिकादि-योगस्थानानामल्पबहुत्वं चाह—

**एगसमयं जहन्नं ठाणाणप्पाणि अट्ठसमयाणि ।**
**उभओ असंखगुणियाणि समयसो ऊण ठाणाणि ॥२२॥**

(प्रे०) 'एगसमयं जहन्न' इति, जघन्ययोगस्थानादारभ्योत्कृष्टयोगस्थानं यावत् सर्वेषु योगस्थानेषु जघन्यत एकं समयं जीवा अवस्थिता भवन्ति । यानि चापर्याप्तसूक्ष्मनिगोदस्यासंख्ये-यानि योगस्थानानि पूर्वमनुक्तकालनियमानि तेषु जघन्यत उत्कर्षतो वाऽप्येकं समयमवस्थानं भवति । ननु कोऽत्र हेतुरिति चेद्, उच्यते, सर्वेऽपर्याप्ताः प्रतिसमयं वीर्यवृद्धयाऽसंख्येयगुण-वृद्धिरूपेषु योगस्थानेषु गच्छन्तीति तेषामुत्कर्षतोऽप्येकमेव समयमवस्थानं भवति । उक्तं च—
"सव्वोवि अपज्जत्तगो पइखणमसंखगुणाए जोगवुड्ढीए वड्ढइ" इति ।

अथाष्टसामयिकादियोगस्थानानामल्पबहुत्वमाह-'ठाणाणि' इत्यादि, अष्टसामयिकानि यानि योगस्थानानि तानि शेषसप्तसामयिकादियोगस्थानापेक्षयाऽल्पानि , सर्वस्तोकानीत्यर्थः । कोऽत्र हेतुरिति चेद् ,चिरकालावस्थायिनां योगस्थानानां स्तोकत्वेन प्राप्यमाणत्वात् । तेभ्यः'समयशः' समयेन समयेन न्यूनानि यान्युभयोः पूर्वोत्तररूपयोर्द्वयोः पार्श्वयोर्योगस्थानानि तानि क्रमेणासंख्येय-गुणानि । तद्यथा-अष्टसामयिकानि योगस्थानानि सर्वस्तोकानि,तेभ्यः पूर्वोत्तरवर्तिनि सप्तसामयिकानि योगस्थानान्यसंख्येयगुणानि,स्वस्थाने च परस्परं तुल्यानि । तेभ्य उभयपार्श्ववर्तीनि षट् सामयिकानि योगस्थानान्यसंख्येयगुणानि, स्वस्थाने च परस्परं तुल्यानि । तेभ्य उभयपार्श्वस्थानि पञ्चसामयि-कानि योगस्थानान्यसंख्येयगुणानि, स्वस्थाने च परस्परं तुल्यानि । तेभ्य उभयपार्श्वगानि चतुः-सामयिकानि योगस्थानान्यसंख्येयगुणानि, स्वस्थाने च परस्परं तुल्यानि । तेभ्यः त्रिसामयिकानि योगस्थानान्यसंख्येयगुणानि । तेभ्यो द्विसामयिकानि योगस्थानान्यसंख्येयगुणानि ।

तथा चात्र कर्मप्रकृतिचूर्णिः—'एगसमयं-जहण्णं' ति-सव्वजोगट्ठाणेसु जहन्नेणं एगं समयं अवट्ठाणं। इयाणीं सुहुमणिगोयपज्जत्तगस्स जहण्णं जोगट्ठाणं आदिं काऊणं चउसमतिगादी जोगट्ठाणा वुत्ता' ततो हेट्ठतो अपज्जत्तगपाओग्गा जोगट्ठाणा ते एगसमतिगा असंखेज्जा। कहं ? भण्णइ-सव्वो अपज्जत्तगो अपज्जत्तगद्धाए वट्टमाणो असंखेज्जाए जोगवड्ढीए वड्ढतित्ति काऊणं णत्थि अवट्ठाणं,तम्हा सव्वाहिं पज्जत्तीहिं पज्जत्तस्स अवट्ठाणं भवति। समयपरूवणा भणिता। चउसमतिगादी जोगट्ठाणा सव्वे किं तुल्ला ? अतुल्ला ? तन्निरूवणत्थं भण्णति अप्पाबहुत्तं- ठाणाणप्पाणि अट्ठसमयाणि उभओ असंखगुणि-याणि'त्ति सव्वत्थोवाणि अट्ठसमतिगाणि जोगट्ठाणाणि। किं कारणं ? भण्णति-अतिचिरकालट्ठातिणि ठाणा थोवा भवंतित्ति काउं। उभयो पासिं सत्तसमतिगा जोगट्ठाणा दोवि तुल्ला, असंखेज्जगुणा। सत्तसमतिगेहिंतो उभयो पासिं छस्समतिगा जोगट्ठाणा दोवि तुल्ला, असंखेज्जगुणा। एवं उभतो पासिं पंचसमतियाणि दोवि तुल्ला, असंखेज्जगुणा। ततो उभतो पासिं चतुसमतिगाणि दोवि तुल्ला, असंखेज्जगुणाणि। ततो उवरि तिसमतिगाणि जोगट्ठाणाणि असंखिज्जगुणाणि। ततो बिसमइयाणि जोगठाणाणि असंखिज्ज-गुणाणि। 'समयसो ऊणठाणाणि' त्ति-अट्ठसमयगेहिंतो सत्तसमइयाणि समएणं ऊणाणि, एवं जाव तिसमइगेहिंतो दुसमइगाणि समएणूणाणि" इति [कर्मप्रकृतिगाथाङ्कः १३] ॥२२॥

तदेवं कृतमष्टसामयिकादीनां योगस्थानानामल्पबहुत्वम्। अथ जीवस्थानेषु जघन्योत्कृष्ट-योगविषयमल्पबहुत्वं विशेषकेण वक्तुकाम आह—

**सव्वत्थोवो जोगो साहारणसुहुमपढमसमयम्मि।**
**बायरबियतियचउरमणसन्नपज्जत्तगजहण्णो ॥२३॥**

(प्रे०) 'सव्वत्थोवो' इत्यादि, इह 'असंख्येयगुणः' इत्यग्रिमगाथातः सम्बध्यते। साधारणस्य सूक्ष्मस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगः सर्वस्तोकः। ततो बादरैकेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततो द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततः त्रीन्द्रियस्य लब्ध्य-पर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्ययोगोऽसंख्येयगुणः।

तथा चात्र कर्मप्रकृतिचूर्णिः—"साहारणस्स सुहुमस्स लद्धीए अपज्जत्तगस्स पढमसमए वट्टमाणस्स अप्पवीरियलद्धिस्स जहन्नतो जोगो सव्वत्थोवो। 'बादरबियतियचउरमणसण्णअपज्जत्तगजहण्णो' त्ति-ततो बादरएगिंदियस्स अपज्जत्तगस्स जहण्णओ जोगो असंखेज्जगुणो। बेइंदियस्स अपज्जत्तगस्स जहण्णओ जोगो असंखेज्जगुणो। एवं तेइंदियस्स चउरिंदियस्स असन्निपंचिंदियस्स सन्निपंचिंदियस्स अपज्जत्तगस्स जहण्णओ जोगो असंखेज्जगुणो" इति [कर्मप्रकृतिगाथाङ्कः १४] ॥२३॥

**आइदुगुक्कोसो सिं पज्जत्तजहन्नगेयरे य कमा।**
**उक्कोसजहन्नियरो असमत्तियरे असंखगुणो ॥२४॥**

(प्रे०) 'आइदुग' इति, आदिद्विकमपर्याप्तसूक्ष्मबादरैकेन्द्रियलक्षणम्, तस्योत्कृष्टो योगः क्रमशोऽसंख्येयगुणो वाच्यः। तथाहि–अपर्याप्तसंज्ञिपञ्चेन्द्रियजघन्ययोगतोऽपर्याप्तसूक्ष्मैकेन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः। ततोऽपर्याप्तबादरैकेन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः। 'सिं पज्जत्तजहन्नगेयरे य कमा' इति, 'सिं' इत्यत्र द्विवचनस्य बहुवचनं प्राकृतत्वात्। ततः तयोः सूक्ष्मबादरैकेन्द्रिययोरेव पर्याप्तयोर्जघन्ययोग इतरश्चोत्कृष्टयोगः क्रमेणाऽसंख्येयगुणो वक्तव्यः। तद्यथा–अपर्याप्तबादरैकेन्द्रियस्योत्कृष्टयोगापेक्षयाऽपर्याप्तसूक्ष्मैकेन्द्रियस्य जघन्यो योगोऽसंख्येयगुणः। ततो बादरैकेन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः। ततः पर्याप्तसूक्ष्मैकेन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः। ततः पर्याप्तबादरैकेन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः। 'उक्कोसजहन्नियरो असमत्तियरे असंखगुणो' इति, असमाप्तः-अपर्याप्तः, 'द्वीन्द्रियादि' रिति परिशेषाल्लभ्यते, ततोऽपर्याप्ते द्वीन्द्रियादावुत्कृष्टयोगः, इतरस्मिंश्च पर्याप्ते द्वीन्द्रियादौ जघन्ययोगः, इतरश्चोत्कृष्टयोगः क्रमेणासंख्येयगुणो वक्तव्यः। तद्यथा–पर्याप्तबादरैकेन्द्रियोत्कृष्टयोगाद् द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टयोगोऽसंख्येयगुणः। ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टयोगोऽसंख्येयगुणः। ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टयोगोऽसंख्येयगुणः। ततोऽसंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टयोगोऽसंख्येयगुणः। ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टयोगोऽसंख्येयगुणः। ततो द्वीन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः। ततः त्रीन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः। ततः चतुरिन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः। ततोऽसंज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः। ततः संज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः। ततो द्वीन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः। ततः त्रीन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः। ततः चतुरिन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः।

तथा चात्र कर्मप्रकृतिचूर्णिः—

''आदिदुगुक्कोसो' त्ति–आदिदुगं–सुहुमबादरएगिंदिया अपज्जत्तगा, सिं उक्कोसो ततो परिवाडीए असंखेज्जगुणो। सुहुमस्स अपज्जत्तगस्स उक्कोसो जोगो असंखेज्जगुणो। बादरस्स अपज्जत्तगस्स उक्कस्सगो जोगो असंखेज्जगुणो। 'सिं पज्जत्तजहन्नगेयरे य कमा' इति—तेसिं चेव सुहुमबादराणं पज्जत्तगाणं करणं पडुच जहण्णुक्कस्सगा जोगा कमेण असंखेज्जगुणा। ततो सुहुमस्स पज्जत्तगस्स जहन्नओ जोगो असंखेज्जगुणो। ततो बादरस्स पज्जत्तगस्स जहन्नो जोगो असंखेज्जगुणो। ततो सुहुमस्स पज्जत्तगस्स उक्कस्सगो जोगो असंखेज्जगुणो। बादरपज्जत्तग(स्स) उक्कस्सगो जोगो असंखेज्जगुणो। 'उक्कोसजहन्नियरो असमत्तियरे असंखगुणो' त्ति। 'उक्कोस्सगं' ति—बेइंदियाईणं अपज्जत्तगाणं उक्कोसो। 'जहन्नितरो' त्ति–तेसिं चेव पज्जत्तगाणं जहन्नगो, 'इयरो' त्ति उक्कोसो। 'असमत्तियरेसु' त्ति–अपज्जत्तपज्जत्तगेसु असंखेज्जगुणो णेयव्वो। बादरएगिंदियपज्जत्तगउक्कसगातो बेइंदियस्स अपज्जत्तगस्स उक्कस्सगो जोगो असंखेज्जगुणो। तेइंदियस्स अपज्जत्तगस्स उक्कसगो जोगो असंखेज्जगुणो। चउरिंदियस्स अपज्जत्तगस्स उक्कसगो जोगो असंखेज्जगुणो। असन्निपंचिंदियस्स अपज्जत्तगस्स उक्कस्सजोगो असंखेज्जगुणो। सन्निपंचेंदियअपज्जत्तगस्स उक्कस्सजोगो असंखेज्जगुणो। एते सव्वे लद्धीए अपज्जत्तगा गहिता। बेइंदियस्स पज्जत्तजहन्नजोगो

असंखगुणो करणपज्जत्तगस्स । ततो हिट्ठिल्ला ठाणा लद्धिपज्जत्तगस्स करणेण अपज्जत्तगस्स भवन्ति। ततो बेइंदियपज्जत्तगस्स जहन्नओ जोगो असंखगुणो। तेइंदियपज्जत्तगस्स जहन्नओ जोगो असंखगुणो। चउरिंदियपज्जत्तगस्स जहन्नओ जोगो असंखगुणो । असन्निपंचिंदियस्स पज्जत्तगस्स जहन्नओ जोगो असंखेज्जगुणो। सन्निपंचिंदियस्स पज्जत्तगस्स जहन्नओ जोगो असंखगुणो। सव्वे करणपज्जत्तीए पज्जत्तगा। ततो बेइंदियपज्जत्तगस्स उक्कस्सजोगो असंखगुणो। तेइंदियपज्जत्तगस्स उक्कस्सजोगो असंखगुणो। चउरिंदियपज्जत्तगस्स उक्कस्सजोगो असंखगुणो। असन्निपंचिंदियपज्जत्तगस्स उक्कस्सजोगो असंखगुणो" इति [कर्मप्रकृतिगाथाङ्कः १५] ॥२४॥

**अमणाणुत्तरगेविज्जभोगभूमिगयतइयतणुगेसु ।**
**कमसो असंखगुणिओ सेसेसु य जोग उक्कोसो ॥२५॥**

(प्रे०) 'अमना' असंज्ञी । पर्याप्तचतुरिन्द्रियोत्कृष्टयोगाद् असंज्ञिपञ्चेन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः। ततोऽनुत्तरोपपातिनां देवानामुत्कृष्टो योगोऽसंख्येयगुणः। ततो ग्रैवेयकाणां देवानामुत्कृष्टो योगोऽसंख्येयगुणः। ततो भोगभूमिजानां तिर्यग्मनुष्याणामुत्कृष्टो योगोऽसंख्येयगुणः। ततः आहारकशरीरिणामुत्कृष्टो योगोऽसंख्येयगुणः। ततः शेषाणां देवनारकतिर्यङ्मनुष्याणामुत्कृष्टो योगोऽसंख्येयगुणः।

'तृतीयतनुकेषु' इत्यत्र तृतीया तनुराहारकं शरीरं येषां ते तृतीयतनुका इति बहुव्रीहिसमासादाहारकशरीरिण इत्यर्थो लभ्यते। पर्याप्ताः सर्वत्रापि करणपर्याप्ता विज्ञेयाः। असंख्येयगुणाकारश्च सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगतप्रदेशराशिप्रमाणो द्रष्टव्यः। प्रदेशाल्पबहुत्वमपि एवमेव ज्ञातव्यम्, प्रदेशबन्धस्य योगाधीनत्वात्। इदमुक्तं भवति—"सव्वथोवो जोगो साहारणसुहुमपढमसमयम्मि' इत्यत आरभ्य "सेसेसु य जोग उक्कोसो" इति यावद् येन क्रमेण योगस्याल्पबहुत्वमुक्तं तेनैव क्रमेण बद्धकर्मदलिकानामल्पबहुत्वमपि वक्तव्यम्, प्रदेशबन्धो योगानुसारेण भवति, अतो येषां जीवानां स्तोको योगस्तेषां कर्मदलिकान्यपि स्तोकानि बध्यन्ते,येषामधिको योगस्तेषां कर्मदलिकान्यप्यधिकानि बध्यन्ते,अतो यथा योगो भवति तथैव कर्मदलिकानि बध्यन्ते इति प्रदेशाल्पबहुत्वमपि योगाल्पबहुत्ववद् ज्ञातव्यम्। अत्रासंख्यगुणाकारः पल्योपमासंख्यातभागगतप्रदेशराशिप्रमाणो ज्ञातव्यः।

तथा चात्र कर्मप्रकृतिचूर्णिः—

"अमणाणुत्तरगेवेज्जभोगभूमिगततइयतणुगेसु कमसो असंखगुणो' त्ति ततो असन्निपंचिंदियस्स उक्कस्सगातो जोगाओ अणुत्तरोववाइयाणं देवाणं उक्कस्सजोगो असंखगुणो। ततो गेवेज्जयाणं देवाणं उक्कस्सजोगो असंखगुणो। ततो भोगभूमिगाणं तिरियमणुयाणं उक्कस्सजोगो असंखगुणो। 'ततियतणु' त्ति आहारसरीरं, ततो आहारगसरीरीणं उक्कस्सजोगो असंखगुणो 'सेसेसु य जोग उक्कोसो' त्ति सेसाणं देवणेरतियतिरियमणुयाणं उक्कस्सजोगो असंखेज्जगुणो। एवं एक्केक्कस्स जीवस्स जोगगुणागारो सुहुमखेत्तपलिओवमस्स असंखेज्जतिभागो। पदेसअप्पाबहुयंपि सव्वथोवं सुहुमस्स अपज्जत्तगस्स जहण्णगं पदेसग्गं। एवं जहा जोगे अप्पाबहुगं भणियं तहा पदेसअप्पबहुयमपि भाणियव्वं। एक्केक्कस्स जीवस्स पदेसगुणगारो पलितोवमस्स असंखेज्जतिभागो। जोगा परूविता" इति [कर्मप्रकृतिगाथाङ्कः १६] ॥२५॥

## ॥ विस्तरतो योगस्थानप्ररूपणा ॥

इत्येवं कर्मप्रकृत्युद्धृतयोगस्थानप्ररूपणा गता। सम्प्रति विस्तरतः मतान्तरं च योगस्थानं निरूपयितुकामः प्रतिजानीते—

> वित्थरमयंतरजुअं तं तिअडपरूवणाहि उण वोच्छं।
> तत्थ तिपरूवणाओ संतपयपमाणअप्पबहू ॥ २६ ॥

(प्रे०) "वित्थर" इत्यादि, प्रपञ्चयुक्तं मतान्तरयुक्तं च तद् योगस्थानं त्र्यष्टप्ररूपणाभिः वक्ष्यामि। अत्रायं भावः— अत्र पर्यन्तं 'पुव्वं जोगट्ठाणं' इत्यादिना कृता कर्मप्रकृत्युद्धृतयोगस्थान-निरूपणप्रतिज्ञा निर्वाहिता। कर्मप्रकृत्युद्धृतयोगस्थाननिरूपणमतिसंक्षिप्तमिति सम्प्रति यथास्थाने मतान्तरनिर्देशपूर्वकं प्रपञ्चेन योगस्थाननिरूपणं चिकीर्षुः 'वित्थर' इत्यादिना तत् प्रतिजानीते। सविस्तरं तद् योगस्थानं द्विधा वक्ष्यते, तद्यथा–त्रिप्ररूपणाभिरष्टप्ररूपणाभिश्च। अथ त्रिप्ररूपणा नामत आह–'तत्थ' इत्यादि, तत्र-सविस्तरयोगस्थाने सत्पदं प्रमाणमल्पबहुत्वं चेति तिस्रः प्ररूपणाः, सन्तीत्यध्याहारः। आदौ सत्पदप्रमाणाल्पबहुत्वद्वारैर्योगस्थानप्ररूपणा करिष्यते इत्यर्थः। अष्टप्ररूपणाया नामानि त्रिप्ररूपणानन्तरं 'जोगट्ठाणदुवारे' इत्यादिना वक्ष्यति। साम्प्रतं यथोद्देशं निर्देष्टुकामः सत्पदप्ररूपणामाह—

> तिविहो जोगो णेयो उववाएगंतवड्ढिपरिणामा।
> भवपढमखणे पढमो बीओ उण भवदुइअसमया ॥२७॥
> लद्धिअपज्जत्तेसु होज्जाउगबंधजोग्गकालं जा।
> करणअपज्जत्तेसु णेयो जाव तणुपज्जत्ति ॥२८॥
> लद्धिअपज्जत्तेसु पुव्वुत्ता सेसकालम्मि।
> विण्णेयो परिणामो जोगो तह करणपज्जेसु ॥२९॥ (उपगीतिः)

(प्रे०) "तिविहो" इत्यादि, योगस्त्रिविधो ज्ञातव्यः। अथ योगस्य त्रिभेदानाह–'उववा' इत्यादि, 'उववा' इत्यत्र 'लुक्' (सिद्धहेम. ।८।१।१०) इति प्राकृतसूत्रेणान्त्याकारलुक्, उपपातयोगः, एकान्तवृद्धियोगः परिणामयोगश्चेति त्रिविधो योगो भवतीत्यर्थः। तत्र भवान्तराद् विवक्षितभवे आगमनरूपे उपपाते प्रवर्तमानो योग उपपातयोगः। एकान्तेनासंख्यगुणा वृद्धिर्यस्यासौ एकान्तवृद्धियोगः। असंख्यगुणः, संख्यातगुणः, संख्यातभागोऽसंख्यातभागश्चेति चतुर्विधपरिणामयुक्तो योगः परिणामयोगः। ननु कस्मिन् जीवे को योगः कदा भवति ? इत्याह–'भवपढमखणे' इत्यादि, त्रियोगेषु प्रथम उपपातयोगः भवप्रथमसमये भवति, 'सर्वेषु जीवेषु' इति गम्यते, जीवविशेषस्यानभिधानात्। 'बीओ' इत्यादि, द्वितीय एकान्तवृद्धिलक्षणो योगो भवद्वितीयसमयाद् भवति। ननु भवद्वितीयसमयात् कियत्कालं यावद् भवति ? इत्याह–'लद्धिअपज्जत्तेसु' इत्यादि, लब्ध्य-

पर्याप्तजीवेषु आयुर्बन्धप्रायोग्यकालं यावद् भवति। करणापर्याप्तजीवेषु पुनः शरीरपर्याप्तिं यावज्ज्ञातव्यः। लब्ध्यपर्याप्तजीवेषु भवद्वितीयसमयादारभ्यायुर्बन्धप्रायोग्यकालं यावद्, करणापर्याप्तजीवेषु भवद्वितीयसमयादारभ्य शरीरपर्याप्तिं यावदेकान्तवृद्धियोगो भवतीत्यर्थः।

अत्रेदमवगन्तव्यम्—कियत्कालं यावज्जीवः करणापर्याप्तो भवतीति विषये मतान्तरं विद्यते। तद्यथा-केचित् शरीरपर्याप्तिं यावत् करणाऽपर्याप्तावस्थेत्याहुः। कर्मप्रकृतिचूर्ण्यादिषु मनःपर्याप्तिं यावत् करणापर्याप्तावस्था प्रदर्शिता। ततोऽत्र करणापर्याप्तेषु द्वितीयसमयादारभ्य शरीरपर्याप्तिं यावदेकान्तवृद्धियोगो भवतीति यन्निरूपितं तद् ये केचित् शरीरपर्याप्तिं यावत् करणापर्याप्तावस्थेत्याहुः तेषामभिप्रायेण ज्ञेयम्। कर्मप्रकृतिचूर्ण्याद्यभिप्रायेण तु मनःपर्याप्तिं यावदेकान्तवृद्धिरवगन्तव्या। तथा चोक्तं **कर्मप्रकृतिचूर्णौ**—"ततो हेट्ठतो अपज्जत्तपातोग्गा जोगट्ठाणा ते एगसमतिगा असंखेज्जा। कहं? भण्णइ-सव्वो अपज्जत्तगो अपज्जत्तगद्धाए वट्टमाणो असंखेज्जाए जोगवड्ढीए वड्ढतित्ति काऊणं णत्थि अवट्ठाणं, तम्हा सव्वाहिं पज्जत्तीहिं पज्जत्तस्स अवट्ठाणं भवति। न चात्र तु मनःपर्याप्त्याऽपर्याप्तानामवस्थानं न भवतीत्युक्तम्, मनःपर्याप्तिं यावत् करणापर्याप्तो भवतीति तु नोक्तमिति वाच्यम्, यतोऽत्र 'सव्वो अपज्जत्तगो' इत्यादिनाऽपर्याप्तावस्थायामसंख्यगुणा योगवृद्धिर्भवत्यतोऽवस्थानं नास्तीत्युक्तम्, अतो यावत्कालमवस्थानं न भवति तावत्कालं करणापर्याप्ताऽवस्था भवतीति सिद्धम्। अथ 'तम्हा' इत्यादिना मनःपर्याप्त्या पर्याप्तस्यैवावस्थानं भवतीत्युक्तम्, अतो मनःपर्याप्तिं यावत् करणापर्याप्तो भवतीति सिद्धम्। न चात्र 'सव्वो अपज्जत्तगो' इत्यादिप्रतिपादनं लब्ध्यपर्याप्तमाश्रित्य कृतमिति वाच्यम्, 'तम्हा सव्वाहिं' इत्यादिना विरोधापातात्, लब्ध्यपर्याप्तस्य सर्वपर्याप्तीनामसम्भवाच्च, इत्यलं प्रपञ्चेन।

**'लद्धिअपज्जत्तेसु'** इत्यादि, लब्ध्यपर्याप्तजीवेषु पूर्वोक्तादुपपातैकान्तवृद्धियोगकालादतिरिक्तकाले परिणामयोगो ज्ञातव्यः। **'तह करणपज्जेसु'** इति, 'परिणामो जोगो' इत्यत्रानुषज्यते, तथा करणपर्याप्तजीवेषु परिणामयोगो भवति। अत्रेदं ध्येयम्-केशाञ्चिन्मते शरीरपर्याप्त्या पर्याप्तः करणपर्याप्तो भवति। कर्मप्रकृतिचूर्ण्याद्यभिप्रायेण सर्वपर्याप्तिपर्याप्त एव करणपर्याप्तो भवति। इत्थमत्रायं निष्कर्षः-उपपातयोगो निर्दिष्टकाले लब्ध्यपर्याप्तेषु करणापर्याप्तेषु च भवति। एवमेकान्तवृद्धियोगोऽपि निर्दिष्टकाले लब्ध्यपर्याप्तेषु करणापर्याप्तेषु च भवति। परिणामयोगो निर्दिष्टकाले लब्ध्यपर्याप्तेषु करणपर्याप्तेषु च भवति। २७।२८।२९॥

एतावताऽत्रेदं समायातम्—लब्ध्यपर्याप्तजीवेषूपपातादयस्त्रयोऽपि योगा भवन्ति। करणापर्याप्तेषु एकं परिणामयोगं विना द्वौ योगौ भवतः। करणपर्याप्तेषु एकः परिणामयोग एव भवति। अमुमेवार्थं व्यक्तावबोधाय ग्रन्थकारः स्वयं निरूपयन्नाह—

**लद्धिअपज्जेसु तिहा उप्पाएगंतवड्ढिपरिणामा।**
**करणअपज्जेसु दुहा परिणामो करणपज्जेसु ॥३०॥**

(प्रे०) 'लद्धि'इत्यादि,लब्ध्यपर्याप्तजीवेषु 'उप्पाएगंतवड्ढिपरिणामा'इति, 'उप्पाएगंत' इत्यत्र प्राकृतत्वादेकारपूर्वस्याकारस्य लुग्, उत्पादयोगः, 'उत्पाद उपपातः' इत्यनर्थान्तरम्, उपपातयोगः, एकान्तवृद्धियोगः, परणामयोगश्चेति त्रिधा योगो भवति। 'करण' इत्यादि, करणापर्याप्तेषु उपपातयोग एकान्तवृद्धियोगश्चेति द्विधा योगो भवति। 'परिणामो' इत्यादि, करणपर्याप्तेषु परिणामयोगो भवति ॥३०॥ इदानीमुपपातादित्रिविधयोगस्थानानां स्थितिकालं निरूपयति-

तिण्हं पि लहू समयो कालो उप्पाइगंतवड्ढीणं।
जेट्ठो वि भवे समयो परिणामस्स समया अट्ठ ॥३१॥

(प्रे०) 'तिण्हं' इत्यादि,त्रयाणामपि योगानाम्, 'स्थानानाम्' इति गम्यते,योगस्थानानां जघन्यकाल एकसमयः, 'उप्पाइगंतवड्ढीणं' इत्यादि, उत्पादैकान्तवृद्धियोगस्थानानामुत्कृष्टकालोऽपि एकसमयः, द्वितीयसमये उपपातयोगाभावात्, एकान्तवृद्धियोगस्य सत्त्वेऽपि अन्यैकान्तवृद्धियोगस्थाने गमनात्। 'परिणामस्स' इत्यादि, परिणामयोगस्थानस्योत्कृष्टकालोऽष्टौ समया भवति। नन्वत्र 'स्थानानाम्' इति कथं गम्यते? प्रतिविधीयते, यद्यत्र 'स्थानानाम्' इति न गम्यते तदा 'तिण्हं' इति पदेन त्रयो योगा गृह्यन्ते; ततश्चेदं कालनिरूपणं योगानां भवति। तथा सति 'उप्पाइगंतवड्ढीणं जेट्ठो वि भवे समयो' इत्यस्योपपातयोगस्यैकान्तवृद्धियोगस्य चोत्कृष्टकाल एकसमयो भवतीत्यर्थो भवति। परं सोऽर्थोऽनुपपन्नो भवति, एकान्तवृद्धियोगस्योत्कृष्टकालस्यैकसमयत्वाऽभावाद्, द्वितीयसमयादारभ्य लब्ध्यपर्याप्तेषु आयुर्बन्धप्रायोग्यकालं यावत् करणापर्याप्तेषु च शरीरपर्याप्तिं यावदेकान्तवृद्धियोगस्यैव सत्त्वात्। एवं परिमाणयोगस्याष्टौ समया अपि नोपपद्यन्ते, करणपर्याप्तावस्थायां परिणामयोगस्यैव सद्भावात्। अतोऽत्र 'स्थानानाम्' इति गम्यते। अत इदं कालनिरूपणं त्रियोगानां न, अपि तु त्रियोगानां ये स्थानानि तेषां प्रत्येकयोगस्थानस्य भवति। अर्थादेकजीवमाश्रित्य त्रियोगानां विवक्षितं यदेकं स्थानं तस्य कालनिरूपणं भवति। ततः 'उप्पाइगंत' इत्यादेः "तत्तज्जीवस्य यदेकमुपपातयोगस्थानं यच्चैकान्तवृद्धियोगस्थानं तदेकसमयमेवावतिष्ठते" इत्यर्थो भवति। स चार्थः सूपपद्यते, विवक्षितसमये जीवस्य यद् विवक्षितमेकं योगस्थानं विद्यते तस्य द्वितीयसमयेऽभावात्। एवं तत्तज्जीवस्य विवक्षितं यदेकं परिणामयोगस्थानं तदुत्कृष्टतोऽष्टौ समयान् यावदेवावतिष्ठते। यद्यपि नवमसमये परिणामयोगो विद्यते, तथापि परिणामयोगस्थानं तु अन्यदेव भवति ॥३१॥

तदेवं सत्पदप्ररूपणा कृता। इदानीमुपपातयोगादीनां स्थानानि कियन्ति भवन्तीति बोधार्थं प्रमाणप्ररूपणां विदधाति—

सेढीअ असंखयमो भागो सव्वेसु जीवभेएसुं।
ठाणाइं पेयाइं पत्तेअविहाण जोगाणं ॥३२॥

(प्रे०) 'सेढीअ' इत्यादि, सर्वेषु–अनन्तरोक्तलब्ध्यपर्याप्तादित्रिषु जीवभेदेषु, प्रत्येकविधानां योगानां–लब्ध्यपर्याप्तादित्रिजीवभेदेषु यस्मिन् जीवभेदे यावन्तो योगाः सम्भवन्ति तस्मिन् तावतां प्रत्येकविधानां योगानां श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि भवन्ति, यद्वा सर्वेषु–अपर्याप्तसूक्ष्मैकेन्द्रियादिषु चतुर्दशजीवभेदेषु, प्रत्येकविधानां योगानाम्-अपर्याप्तसूक्ष्मैकेन्द्रियादिचतुर्दशजीवभेदेषु यस्मिन् जीवभेदे यावन्तो योगाः सम्भवन्ति तस्मिन् तावतां प्रत्येकविधानां योगानां श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि भवन्ति । चतुर्दशजीवभेदेषु सप्त लब्ध्यपर्याप्तानां भेदाः, सप्त च लब्धिपर्याप्तानां भेदाः सन्ति । तत्र सप्तलब्ध्यपर्याप्तेषूपपातादयस्त्रयोऽपि योगाः सम्भवन्ति । सप्तलब्धिपर्याप्तेषु करणापर्याप्तानां करणपर्याप्तानां च समावेशः । तत्र करणापर्याप्तेषूपपात एकान्तवृद्धिश्चेति द्वौ योगौ । करणपर्याप्तेषु जीवेषु एकः परिणाम एव योगः । उपपातादियोगानां श्रेण्यसंख्यातभागप्रमाणानीमानि योगस्थानानि चतुःस्थानपतितानि भवन्ति । तद्यथा–विवक्षितयोगस्थानापेक्षया कानिचिद् योगस्थानानि असंख्यातभागवृद्धानि, कानिचित् संख्यातभागवृद्धानि, कानिचित् संख्यातगुणवृद्धानि कानिचिच्चासंख्यातगुणवृद्धानि भवन्ति। एवमसंख्यातभागहीनानि भवन्तीत्याद्यपि वक्तव्यम् । अत्र वृद्धिर्हानिश्च स्पर्धकानां बोध्या । अर्थाद् विवक्षितयोगस्थानापेक्षया कानिचिद् योगस्थानानि असंख्यातभागवृद्धानिभवन्तीत्यादिपदानां विवक्षितयोगस्थानगतस्पर्धकापेक्षया कानिचिद् योगस्थानानि असंख्यातभागस्पर्धकैर्वृद्धानि भवन्तीत्याद्यर्थः कार्यः । स्पर्धकवृद्धिहान्यनुसारेण वीर्याविभागानामपि वृद्धिहानी भवत इत्यपि ध्येयम् ,स्पर्धकेषु पारम्पर्येण वीर्याविभागानां कारणत्वात् । तत्रोपपातैकान्तवृद्धियोगस्थानानि नानाजीवानाश्रित्यैव चतुःस्थानपतितानि भवन्ति । यतो विवक्षितैकजीवस्योपपातयोगस्तु एकसमयमेवावतिष्ठते, अतो द्वितीयसमये तज्जीवस्योपपातयोगस्थानस्यैवाभावः । यद्यपि विवक्षितैकजीवे एकान्तवृद्धियोगस्य द्वितीयादिसमयेषु सद्भावादेकान्तवृद्धियोगस्थानानि द्वितीयादिसमयेषु भवन्ति, तथापि असंख्यातगुणान्येव भवन्तीति एकान्तवृद्धिस्थानानि एकस्थानपतितान्येव भवन्ति । अत एकस्य जीवस्य भवद्वितीयादिसमयस्थैकान्तवृद्धियोगस्थानापेक्षया भवतृतीयादिसमयेषु प्राप्यमाणानि एकान्तवृद्धियोगस्थानानि असंख्यगुणान्येव भवन्ति । इत्येवमुपपातैकान्तवृद्धियोगस्थानानि नानाजीवानाश्रित्यैव चतुःस्थानपतितानि भवन्ति । अर्थादेकजीवस्य विवक्षितयोगस्थानापेक्षयाऽन्येषां केषाञ्चिज्जीवानां योगस्थानानि असंख्यातभागवृद्धानि, केषाञ्चित् संख्यातभागवृद्धानि, केषाञ्चित् संख्यातगुणवृद्धानि केषाञ्चिच्चासंख्यातगुणवृद्धानि भवन्ति । परिणामयोगस्थानानि तु नानाजीवानाश्रित्यैकजीवमाश्रित्य चेत्युभयथाऽपि चतुःस्थानपतितानि भवन्ति । तत्र नानाजीवानाश्रित्य चतुःस्थानपतितत्वे भावना उपपातैकान्तवृद्धियोगस्थानानां चतुःस्थानपतितत्वे प्रदर्शितरीत्यैकजीवमाश्रित्यानन्तरवक्ष्यमाणरीत्या च विधेया । एकजीवमाश्रित्यैवम्–कश्चिदेको जीवो विवक्षितसमये यस्मिन् योगस्थाने वर्तते, स एव जीव द्वितीयसमये तद्योगस्थानापेक्षया कदाचिदसंख्यातभागवृद्धे, कदाचित् संख्याततम-

भागवृद्धे, कदाचित् संख्यातगुणवृद्धे कदाचिच्चासंख्यातगुणवृद्धेऽन्यस्मिन् योगस्थाने गच्छति। असंख्यातभागहीने योगस्थाने गच्छतीत्यादि वक्तव्यम्। इत्येवं परिणामयोगस्थानानि एक-जीवमाश्रित्याऽपि चतुःस्थानपतितानि भवन्ति।

अथ श्रेण्यसंख्यातभागेषूपपादयोगस्थानेषु नानाजीवानाश्रित्य योगस्थानानि चतुःस्थान-पतितानि कथं भवन्तीति गणितप्रक्रियया प्रदर्श्यते—सर्वजघन्ययोगस्थानादारभ्य प्रथमद्विगुणयोग-स्थानं यावद्यावन्ति योगस्थानानि भवन्ति, तावन्ति जघन्यपरित्तासंख्यातेन भाज्यानि; जघन्य-परित्तासंख्यातेन भाजितेषु तावद्योगस्थानेषु यावन्ति योगस्थानानि लब्धित्वेन समागच्छन्ति, ताव-त्तमं योगस्थानं यावत् सर्वाणि योगस्थानानि असंख्यातभागवृद्धानि भवन्ति। सर्वजघन्ययोगस्था-नापेक्षया सर्वजघन्ययोगस्थानाऽनन्तरयोगस्थानादारभ्य तावन्ति योगस्थानान्यसंख्यातभागवृद्धानि भवन्तीत्यर्थः। अत्रासंख्यातभागा वृद्धिः कर्तव्येति जघन्यपरित्तासंख्यातेन भागाकारः कर्तव्यो भवतीति ध्येयम्। अथासंख्यातभागवृद्धान्तिमयोगस्थानाऽनन्तरयोगस्थानादारभ्य प्रथमद्विगुण-वृद्धयोगस्थानं यावत् यावन्ति योगस्थानानि तावन्ति सर्वाणि संख्यातभागवृद्धानि भवन्ति। अथ प्रथमद्विगुणवृद्धियोगस्थानात् द्वितीयद्विगुणवृद्धियोगस्थानं यावत्, तृतीयद्विगुणवृद्धियोगस्थानं यावत्, चतुर्थद्विगुणवृद्धियोगस्थानं यावत्, एवं संख्याततमं द्विगुणवृद्धियोगस्थानं यावत् यानि योगस्था-नानि तानि सर्वाणि संख्यातगुणवृद्धानि भवन्ति। संख्याततममित्यत्र संख्याततत्वं जघन्यपरित्ता-संख्यातस्य यावन्ति छेदनकानि तावत्प्रमाणं बोध्यम्। संख्यातगुणवृद्धान्तिमयोगस्थानाऽनन्तरयोग-स्थानादारभ्य सर्वान्तिमयोगस्थानं यावत् सर्वाणि योगस्थानानि सर्वजघन्ययोगस्थानापेक्षया असं-ख्यातगुणवृद्धानि ज्ञेयानि। उक्तविपरीतक्रमेणासंख्यातभागहीनादीनि योगस्थानान्यपि ज्ञातव्यानि। अर्थात् वृद्धौ सर्वजघन्ययोगस्थानात् प्रारब्धं, परं हानौ सर्वोत्कृष्टयोगस्थानात् प्रारब्धव्यम्।

अथैतत्सर्वमसत्कल्पनया चिन्त्यते-प्रथमद्विगुणवृद्धयोगस्थानं यावत् विंशत्यधिकत्रिश-तोत्तरचत्वारिंशत्सहस्राणि (४०३२०) योगस्थानानि भवन्ति। जघन्यपरित्तासंख्याततत्वं चात्रासत्तया चतुःषष्टिः (६४) कल्प्यते। अतो विंशत्यधिकत्रिशतोत्तरचत्वारिंशत्सहस्राणि चतुःषष्ट्या भाजनी-यानि, चतुःषष्ट्या विंशत्यधिकत्रिशतोत्तरचत्वारिंशत्सहस्रेषु भाजितेषु लब्धिः त्रिंशदधिकषट्शतानि (६३०) समागच्छति। अतः प्रथमात् सर्वजघन्ययोगस्थानाद् यदनन्तरं द्वितीयं योगस्थानं तस्मा-दारभ्य त्रिंशदधिकषट्शततमं यावत् सर्वाणि योगस्थानानि असंख्यातभागवृद्धानि भवन्ति। एक-त्रिंशदधिकषट्शततमयोगस्थानादारभ्य नवदशाधिकत्रिशतोत्तरचत्वारिंशत्सहस्र (४०३१९) तमं योगस्थानं यावत् सर्वाणि योगस्थानानि संख्यातभागवृद्धानि भवन्ति। विंशत्यधिकत्रिशतोत्तर-चत्वारिंशत्सहस्रतमयोगस्थानादारभ्य षट्छेदनकप्रमाणसंख्याततमं षष्ठं द्विगुणवृद्धियोगस्थानं यावत् सर्वाणि योगस्थानानि संख्यातगुणवृद्धानि भवन्ति। संख्यातभागवृद्धयोगस्थानेभ्यः संख्यात-गुणवृद्धयोगस्थानानि साधिकपञ्चगुणानि भवन्तीति ध्येयम्। षष्ठद्विगुणवृद्धयोगस्थानाऽनन्तरयोग-

स्थानादन्तिमयोगस्थानं यावत् सर्वाणि योगस्थानानि असंख्यातगुणवृद्धानि भवन्ति । एवं विपरीतक्रमेण हानावपि वक्तव्यम् । ॥३२॥

ननु लब्ध्यपर्याप्तादिसर्वविधजीवेषु योगस्थानानामयं श्रेण्यसंख्यातभागः समानः उत न्यूनाधिकः ? इत्याशङ्कायामिदानीं लब्ध्यपर्याप्तेषु उपपातादियोगस्थानानां विशेषपरिज्ञानार्थं तेषामल्पबहुत्वं निरूपयति—

लद्धिअपजत्तेसुं उप्पाअस्सऽप्पगाणि ठाणाणि ।
ताउ असंखगुणाइं कमसो एगंतवड्ढिइयराणं ॥३३॥ (गीतिः)

(प्रे०) "लद्धिअपजत्तेसु" इत्यादि, लब्ध्यपर्याप्तेषूपपातयोगस्य स्थानानि सर्वस्तोकानि, तत एकान्तवृद्धियोगस्थानानि असंख्यगुणानि, ततः परिणामयोगस्थानानि असंख्यगुणानि ॥३३॥

इदानीं करणापर्याप्तेषूपपातादियोगस्थानानामल्पबहुत्वमाह—

करणअपज्जत्तेसुं उप्पाआओ इगंतवड्ढीए ।
ठाणाणि खलु असंखियगुणाणि णो करणपज्जेसुं ॥३४॥

(प्रे०) "करणअपज्जत्तेसु" इत्यादि, करणापर्याप्तजीवेषु उपपातात्, उपपातयोगस्थानेभ्य इत्यर्थः, एकान्तवृद्धियोगस्थानानि असंख्यगुणानि भवन्ति, अर्थात्करणापर्याप्तेषूपपातयोगस्थानानि स्तोकानि, तेभ्य एकान्तवृद्धियोगस्थानानि असंख्यगुणानि । "णो करणपज्जेसु" इति, करणपर्याप्तेषु योगस्थानानामल्पबहुत्वं न भवति, तेषु परिणामयोगस्यैव सत्त्वात् ॥३४॥

तदेवं द्वितीया परिमाणप्ररूपणा कृता । सम्प्रति क्रमागतां तृतीयामल्पबहुत्वप्ररूपणां चिकीर्षुरादौ गाथाद्विकेन स्वस्थानाल्पबहुत्वमाह—

लद्धिअपज्जत्ताणं लहुस्स अत्थि उववाअजोगस्स ।
अविभागाऽप्पा तत्तो गुरुस्स णेया असंखगुणा ॥३५॥
ताउ लहुगुरूण कमा इगंतवड्ढिपरिणामिगाण कमा ।
एमेव सगपयाणं करणअपज्जत्तपज्जाणं ॥३६॥

(प्रे०) अत्रेदं बोध्यम्—अस्मिन्नल्पबहुत्वद्वारे जघन्योत्कृष्टभेदभिन्नानामुपपातादित्रियोगानां ये वीर्याऽविभागास्तेषामल्पबहुत्वं निरूपयिष्यते । तदल्पबहुत्वं त्रिविधं वक्ष्यते । तद्यथा-स्वस्थानम्, परस्थानं सर्वपरस्थानं च । तत्र स्वस्थानाल्पबहुत्वं त्रिधा निरूपयिष्यते । तद्यथा—सूक्ष्मैकेन्द्रियादिसप्तलब्ध्यपर्याप्तभेदेषु प्रत्येकभेदे, सूक्ष्मैकेन्द्रियादिसप्तकरणापर्याप्तभेदेषु प्रत्येकभेदे सूक्ष्मैकेन्द्रियादिसप्तकरण-

पर्याप्तभेदेषु प्रत्येकभेदे च। जघन्योत्कृष्टभेदभिन्नोपपातादित्रियोगवीर्याऽविभागानामल्पबहुत्वमिति सर्वत्र योजनीयम्। परस्थानरूपद्वितीयाऽल्पबहुत्वे सूक्ष्मैकेन्द्रियादिसप्तभेदेषु प्रत्येकभेदस्य ये लब्ध्यपर्याप्तः, करणापर्याप्तः करणपर्याप्तश्चेति त्रयो भेदास्तेषु युगपद् जघन्योत्कृष्टभेदभिन्नानामुपपातादित्रियोगानां वीर्याविभागानामल्पबहुत्वं चिन्तयिष्यते, अर्थात् स्वस्थाने येषां पृथक्पृथगल्पबहुत्वं चिन्तितं तेषामेवात्र युगपत् चिन्तयिष्यते। तृतीयं सर्वपरस्थानरूपमल्पबहुत्वं त्रिविधम्, तद्यथा–जघन्यम्, उत्कृष्टं जघन्योत्कृष्टं च। तत्र जघन्ये सर्वपरस्थानाल्पबहुत्वे सूक्ष्मैकेन्द्रियादिसप्तलब्ध्यपर्याप्तेषु, सूक्ष्मैकेन्द्रियादिसप्तकरणापर्याप्तेषु सूक्ष्मैकेन्द्रियादिसप्तकरणपर्याप्तेषु चेति एकविंशतिभेदेषु समुदितं जघन्यानामुपपातादित्रियोगानां वीर्याविभागानामल्पबहुत्वं चिन्तयिष्यते। उत्कृष्टे सर्वपरस्थानाल्पबहुत्वेऽनन्तरोक्तैकविंशतिभेदेषु समुदितमुत्कृष्टानामुपपातादित्रियोगानां वीर्याविभागानामल्पबहुत्वं निरूपयिष्यते। जघन्योत्कृष्टे सर्वपरस्थानाल्पबहुत्वे उपर्युक्तैकविंशतिभेदेषु समुदितं जघन्योत्कृष्टानामुपपातादित्रियोगानां वीर्याविभागानामल्पबहुत्वं वक्ष्यते। अथ गाथार्थः प्रस्तूयते। आदौ स्वस्थानाल्पबहुत्वं वक्तुकामः सूक्ष्मैकेन्द्रियादिसप्तलब्ध्यपर्याप्तभेदानां प्रत्येकभेदे जघन्योत्कृष्टानामुपपातादित्रियोगानां वीर्याविभागानामल्पबहुत्वमाह–'**लद्धि अपज्जत्ताणं**' इत्यादि,

(१) लब्ध्यपर्याप्तानां जीवानां जघन्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः। (२) ततस्तेषामुत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः। (३) ततस्तेषां जघन्यैकान्तवृद्धियोगस्य वीर्याविभागा असंख्यगुणाः। (४) ततस्तेषामुत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागा असंख्यगुणाः। (५) ततस्तेषां जघन्यपरिणामयोगस्य वीर्याविभागा असंख्यगुणाः। (६) ततस्तेषामुत्कृष्टपरिणामयोगस्य वीर्याविभागा असंख्यगुणाः।

इदमल्पबहुत्वं सूक्ष्मैकेन्द्रियादिसप्तलब्ध्यपर्याप्तभेदानां प्रत्येकभेदे वक्तव्यमस्तीत्यत्र '**लद्धि अपज्जत्ताणं**' इत्यनेन युगपत्सप्तलब्ध्यपर्याप्तभेदानाश्रित्य निरूपितमल्पबहुत्वमस्माभिरादौ सूक्ष्मैकेन्द्रियमाश्रित्य प्रदर्श्यते–

(१) सूक्ष्मैकेन्द्रियलब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः। (२) ततस्तस्योत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः। (३) ततस्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः। (४) ततस्तस्योत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः। (५) ततस्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः। (६) ततस्तस्योत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः। एवमेव बादरैकेन्द्रिये, द्वीन्द्रिये, त्रीन्द्रिये, चतुरिन्द्रिये, असंज्ञिपञ्चेन्द्रिये संज्ञिपञ्चेन्द्रिये चेति षड्लब्ध्यपर्याप्तेष्वपि वक्तव्यम्।

'**एमेव**' इत्यादि, एवमेव सूक्ष्मैकेन्द्रियादिसप्तलब्ध्यपर्याप्तानां प्रत्येकभेदस्य जघन्योत्कृष्टत्रियोगानां वीर्याविभागानामल्पबहुत्वं यथोक्तं तथैव, सूक्ष्मैकेन्द्रियादिसप्तकरणापर्याप्तानां सूक्ष्मै-

केन्द्रियादिसप्तकरणपर्याप्तानां च प्रत्येकभेदस्य 'करणपज्जाणं' इति, स्वस्य नाम प्रत्येकभेदस्योपपात-योगादित्रिपदेषु यावन्ति पदानि सम्भवन्ति तेषां वीर्याविभागानामल्पबहुत्वं वक्तव्यम् ।

तत्र करणापर्याप्तेषूपपातैकान्तवृद्धिलक्षणे द्वे पदे सम्भवतः; करणपर्याप्तेषु परिणामलक्षणमेकं पदं सम्भवति । अथ करणापर्याप्तानां प्रत्येकभेदस्य सम्भाव्यमानपदानां वीर्याविभागानामल्पबहुत्वमेवम् –

(१) सूक्ष्मैकेन्द्रियकरणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः । (२) ततस्तस्योत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः । (३) ततस्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः । (४) ततस्तस्योत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।

एवं बादरैकेन्द्रियकरणापर्याप्तादिषु षड्भेदेष्वपि वक्तव्यम् । अथ करणपर्याप्तानां प्रत्येकभेदस्य परिणामयोगस्य वीर्याविभागानामल्पबहुत्वमेवम्–सूक्ष्मैकेन्द्रियकरणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः सर्वस्तोकाः । ततस्तस्योत्कृष्टपरिणामयोगस्य वीर्याविभागा असंख्यगुणाः । एवं बादरैकेन्द्रियकरणपर्याप्तादिषु षड्भेदेष्वपि वक्तव्यम् ॥३५।३६॥

तदेवं स्वस्थानाल्पबहुत्वं निरूपितम् । सम्प्रति परस्थानाल्पबहुत्वं निरूपयितुराह—

सुहुमियरेगक्खाणं उववाअस्स लहुगस्स अविभागा ।
लद्धिअपज्जस्सऽप्पा करणअपज्जस्स तो असंखगुणा ॥३७॥ (गीतिः)
ताउ गुरुस्स कमा सिं तओ जहन्नस्सिगंतवड्ढिस्स ।
अत्थि कमा लद्धिकरणअपज्जगाणं तओ गुरुस्स कमा ॥३८॥ (गीतिः)
तत्तो परिणामाणं लद्धिअपज्जस्स लहुगुरूण कमा ।
ताउ लहुगुरूणकमा विण्णेयो करणपज्जस्स ॥३९॥

(प्रे०) अत्रेदमवगन्तव्यम्–इदमल्पबहुत्वं सूक्ष्मैकेन्द्रियादिसप्तभेदेषु न समानम्, अपि तु सूक्ष्मबादरैकेन्द्रिययोः समानम्, तथा द्वीन्द्रियादिपञ्चभेदेषु समानमिति तदत्र द्वैविध्यं समाश्रयति, अत आदौ गाथात्रिकेन सूक्ष्मबादरैकेन्द्रिययोः प्रत्येकभेदस्याल्पबहुत्वं वक्तुकाम आह–"सुहुमियरेगक्खाणं" इत्यादि, सूक्ष्मबादरैकेन्द्रिययोः प्रत्येकभेदस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः । 'करणअपज्जस्स तो असंखगुणा' इति, 'सुहुमियरेगक्खाणं' इत्यादिपूर्वार्धपदानि अत्र सम्बध्यन्ते, सुहुमियरेगक्खाणं इति अविभागा इति च पदमग्रेऽपि सर्वत्र सम्बध्यते, ततः सूक्ष्मबादरैकेन्द्रिययोः प्रत्येकं लब्ध्यपर्याप्तस्य जघन्योपपातयोगवीर्याविभागेभ्यः, सूक्ष्मबादरैकेन्द्रिययोः प्रत्येकं करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः । इति प्रथमगाथार्थः ।

'ताउ गुरुस्स कमा सिं' इति, असंखगुणा इत्यत्रापि सम्बध्यते, एवमग्रेऽपि सर्वत्र बोध्यम्, ततः सिं-सूक्ष्मबादरैकेन्द्रिययोः, गुरुस्स-उत्कृष्टस्य, उपपातयोगस्येत्यनुवर्तते, वीर्याविभागाः कमा-प्रथमं लब्ध्यपर्याप्तस्य ततः करणापर्याप्तस्येत्यनुक्रमेणाऽसंख्यगुणा वक्तव्याः। 'तओ जहन्नस्सिगंतवड्ढिस्स' इत्यादि, तत एकान्तवृद्धियोगस्य जघन्यवीर्याविभागा अनुक्रमेण लब्ध्यपर्याप्तानां करणापर्याप्तानामसंख्यगुणाः। 'तओ गुरुस्स कमा' ततः उत्कृष्टस्यैकान्तवृद्धियोगस्य वीर्याविभागाः प्रथमं लब्ध्यपर्याप्तानां ततः करणापर्याप्तानामित्यनुक्रमेणासंख्यगुणा वक्तव्याः। इति द्वितीयगाथार्थः।

'तत्तो' इत्यादि, ततः लब्ध्यपर्याप्तस्य प्रथमं जघन्यपरिणामयोगस्य तत उत्कृष्टपरिणामयोगस्येत्यनुक्रमेण वीर्याविभागा असंख्यगुणा वक्तव्याः। 'ताउ' इत्यादि, ततः करणपर्याप्तस्य प्रथमं जघन्यपरिणामयोगस्य तत उत्कृष्टपरिणामयोगस्येत्यनुक्रमेण वीर्याविभागा असंख्यगुणा वक्तव्याः। इति तृतीयगाथार्थः। गाथात्रिकार्थानुसारेणाल्पबहुत्वमेवम्—

(१) सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः। (२) ततस्तस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः। (३) ततस्तस्य लब्ध्यपर्याप्तस्योत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः। (४) ततस्तस्य करणापर्याप्तस्योत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः। (५) ततस्तस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः। (६) ततस्तस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः। (७) ततस्तस्य लब्ध्यपर्याप्तस्योत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः। (८) ततस्तस्य करणापर्याप्तस्योत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः। (९) ततस्तस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः। (१०) ततस्तस्य लब्ध्यपर्याप्तस्योत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः। (११) ततस्तस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः। (१२) ततस्तस्य करणपर्याप्तस्योत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः। एवमेव बादरैकेन्द्रियमाश्रित्यापि वक्तव्यम् ॥ ३७।३८।३९॥

सम्प्रति द्वीन्द्रियादिपञ्चभेदेषु प्रत्येकभेदमाश्रित्य परस्थानाल्पबहुत्वं गाथात्रिकेन प्रतिपादयति-

बेइंदियाइगाणं उववाअस्स लहुगस्स अविभागा।
लद्धिअपज्जस्सऽप्पा करणअपज्जस्स तो असंखगुणा ॥४०॥ (गीतिः)
ताउ गुरुस्स कमा सिं तओ लहुगुरूणिगंतवड्ढीणं।
लद्धिअपज्जस्स तओ लहुजेट्ठाण परिणामाणं ॥४१॥
ताउ लहुगुरूण कमा करणअपज्जस्सिगंतवड्ढीणं।
ताउ कमा लहुगुरुपरिणामाणं करणपज्जस्स ॥४२॥

(प्रे०) 'बेइंदियाइगाणं' इत्यादि, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियसंज्ञिपञ्चेन्द्रियाणां प्रत्येकं लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः। 'करणअपज्जत्तस्स तो असंखगुणा' इति, 'बेइंदियाइगाणं' इत्यादीनि पूर्वार्धपदानि अत्रापि सम्बध्यन्ते, 'बेइंदियाइगाणं' इति 'अविभागा' इति चाग्रेऽपि सर्वत्र सम्बध्यते, द्वीन्द्रियादीनां प्रत्येकं लब्ध्यपर्याप्तस्य जघन्योपपातयोगवीर्याविभागेभ्यो द्वीन्द्रियादीनां प्रत्येकं करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः। इति प्रथमगाथार्थः। 'ताउ गुरुस्स कमा सिं' इति, 'असंखगुणा' इति पदमत्रापि सम्बध्यते, एवमग्रेऽपि सर्वत्र ज्ञेयम्, ततः सिं-तेषां द्वीन्द्रियादीनाम्, 'गुरुस्स-उत्कृष्टस्य, उपपातयोगस्येत्यनुवर्तते, वीर्याविभागाः कमा-प्रथमं लब्ध्यपर्याप्तस्य ततः करणापर्याप्तस्येत्यनुक्रमेणासंख्यगुणा वक्तव्याः। 'तओ लहुगुरुएगिगंतवड्ढीणं लद्धिअपज्जत्तस्स' इति, 'कमा' इति पदमत्रापि सम्बध्यते, ततो द्वीन्द्रियादीनां लब्ध्यपर्याप्तस्यानुक्रमेण जघन्यैकान्तवृद्धियोगस्योत्कृष्टैकान्तवृद्धियोगस्य च वीर्याविभागा असंख्यगुणा वक्तव्याः। 'तओ लहुजेट्ठाण परिणामाणं' इति, 'लद्धिअपज्जत्तस्स' इत्यत्र सम्बध्यते, ततो द्वीन्द्रियादीनां लब्ध्यपर्याप्तस्यानुक्रमेण जघन्यपरिणामयोगस्योत्कृष्टपरिणामयोगस्य च वीर्याविभागा असंख्यगुणा वक्तव्याः। इति द्वितीयगाथार्थः।

'ताउ लहुगुरूण कमा करणअपज्जत्तस्सिगंतवड्ढीणं' इति, ततो द्वीन्द्रियादीनां करणापर्याप्तस्यानुक्रमेण जघन्यैकान्तवृद्धियोगस्योत्कृष्टैकान्तवृद्धियोगस्य च वीर्याविभागा असंख्यगुणा वक्तव्याः। 'ताउ कमा' इत्यादि, ततो द्वीन्द्रियादीनां करणपर्याप्तस्यानुक्रमेण जघन्यपरिणामयोगस्योत्कृष्टपरिणामयोगस्य च वीर्याविभागा असंख्यगुणा वक्तव्याः। इति तृतीयगाथार्थः।

गाथानुसारेणाल्पबहुत्वमेवम्–

(१) द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः।
(२) ततस्तस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः।
(३) ततस्तस्य लब्ध्यपर्याप्तस्योत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४) ततस्तस्य करणापर्याप्तस्योत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः।
(५) ततस्तस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(६) ततस्तस्य लब्ध्यपर्याप्तस्योत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(७) ततस्तस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(८) ततस्तस्य लब्ध्यपर्याप्तस्योत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(९) ततस्तस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(१०) ततस्तस्य करणापर्याप्तस्योत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(११) ततस्तस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।

-(१२) ततस्तस्य करणपर्याप्तस्योत्कृष्टपरिणामयोगस्य वीर्यविभागाः असंख्येयगुणाः ।

एवं त्रीन्द्रियादीनामित्यापि वक्तव्यम् ।

तदेवं परस्थानाल्पबहुत्वं निवेदितम् । साम्प्रतं सर्वपरस्थानाल्पबहुत्वं प्रतिपिपादयिषुरादौ -तावद् गाथाषट्केन जघन्यमुत्कृष्टञ्च सर्वपरस्थानाल्पबहुत्वमाह—

जोगोऽत्थि जहण्णपये लद्धिअपज्जस्स सुहमस्स ।
उप्पाओ सव्वप्पो करणअपज्जस्स तो असंखगुणो ॥४३॥ [उद्गीतिः]
ताहिन्तो लद्धिकरणअपज्जगाणं कमा मुणेयव्वो ।
बायरबितिचउइंदियअसण्णिसण्णीण जहकमसो ॥४४॥
ताउ कमा लद्धिकरणअपज्जगाणं इगंतवड्ढी उ ।
सुहमाणं विण्णेयो ताहिन्तो बायराण कमा ॥४५॥
तत्तो सुहमियराणं लद्धिअपज्जत्तगाण होइ कमा ।
परिणामो ताहिन्तो विण्णेयो करणपज्जाणं ॥४६॥
तो लद्धिअपज्जाणं बितिचउइंदियअसण्णिसण्णीणं ।
कमसो इगंतवड्ढी ताउ कमा ताण परिणामो ॥४७॥
तो करणअपज्जाणं तेसिं कमसो इगंतवड्ढी तो ।
पज्जाणं परिणामो कमाऽत्थि एमेव जेट्ठपयं॥४८॥

(प्रे०) 'जोगोऽत्थि' इत्यादि, जघन्यपदे सूक्ष्मलब्ध्यपर्याप्तस्योपपातयोगः सर्वस्तोकः, सूक्ष्मलब्ध्यपर्याप्तस्य जघन्यस्योपपातयोगस्य वीर्यविभागाः सर्वस्तोका इत्यर्थः, एवमग्रेऽपि सर्वत्र बोध्यम् । 'करणअपज्जस्स तो असंखगुणो' इति, 'लद्धिअपज्जस्स' इति पदं विहायोपरितनानि सर्वपदान्यत्रापि सम्बध्यन्ते, 'जहण्णपये' इति पदं तु षष्ठगाथां यावदनुवर्तनीयम् , सूक्ष्मलब्ध्यपर्याप्तस्य जघन्योपपातयोगवीर्यविभागेभ्यः सूक्ष्मकरणपर्याप्तस्य जघन्योपपातयोगवीर्यविभागा असंख्यगुणाः । इति प्रथमगाथार्थः ।

'ताहिन्तो लद्धिकरणअपज्जगाणं कमा मुणेयव्वो' इति, 'उप्पाओ' 'असंखगुणो' इति पदद्विकमत्रापि संबध्यते, 'असंखगुणो' इति तु षष्ठगाथां यावदनुवर्तनीयम् , तेभ्यः—सूक्ष्मकरणापर्याप्तस्य जघन्योपपातयोगवीर्यविभागेभ्यः, प्रथमं लब्ध्यपर्याप्तानां ततः करणापर्याप्तानामिति क्रमेणोपपातयोगस्य वीर्यविभागा असंख्यगुणा ज्ञातव्याः, केषां लब्धिकरणापर्याप्तानाम् ? इत्याह- 'बायर' इत्यादि, अयं भावः—प्रथमं बादरैकेन्द्रियलब्ध्यपर्याप्तस्यानुक्रमेण लब्ध्यपर्याप्तकरणापर्याप्तयोर्ज-

जघन्योपपातयोगस्य वीर्यविभागा असंख्यगुणा ज्ञातव्याः, ततो द्वीन्द्रियमाश्रित्य, ततस्त्रीन्द्रियमाश्रित्य, ततश्चतुरिन्द्रियमाश्रित्य, ततोऽसंज्ञिपञ्चेन्द्रियमाश्रित्य, ततः संज्ञिपञ्चेन्द्रियमाश्रित्यानुक्रमेण लब्ध्यपर्याप्तकरणापर्याप्तयोर्जघन्योपपातयोगस्य वीर्यविभागा असंख्यगुणा ज्ञातव्याः। इति द्वितीयगाथार्थः ।

'ताउ कमा लद्धिकरणअपज्जगाणं इगंतवड्ढी उ सुहुमाणं विण्णेया' इति, ततः सूक्ष्माणां लब्ध्यपर्याप्तकरणापर्याप्तानां जघन्यैकान्तवृद्धियोगस्य वीर्यविभागा अनुक्रमेणासंख्यगुणा ज्ञातव्याः। 'ताहिन्तो बायराण कमा' इति, 'लद्धिकरणअपज्जगाणं' इति पदमत्र सम्बध्यते, तेभ्यो बादरैकेन्द्रियाणां लब्ध्यपर्याप्तकरणापर्याप्तानां जघन्यैकान्तवृद्धियोगस्य वीर्यविभागा अनुक्रमेणाऽसंख्यगुणा ज्ञातव्याः। इति तृतीयगाथार्थः ।

'तत्तो सुहुमियराणं लद्धिअपज्जत्तगाण होइ कमा परिणामो' इति, ततः सूक्ष्माणामितरेषां च बादराणाम्, एकेन्द्रियाणामिति गम्यते, द्वीन्द्रियादीनां सूक्ष्मत्वाभावात्, लब्ध्यपर्याप्तानां जघन्यपरिणामयोगस्य वीर्यविभागा अनुक्रमेणाऽसंख्यगुणा भवन्ति। 'लद्धिअपज्जत्तगाण' इत्यत्र स्वार्थे कप्रत्ययः। 'ताहिन्तो विण्णेओ करणपज्जाणं' इति, 'लद्धिअपज्जत्तगाण' इति पदं विना 'सुहुमियराणं' इत्याद्युपरितनसर्वपदान्यत्र सम्बध्यन्ते, तेभ्यः सूक्ष्मबादरैकेन्द्रियाणां करणपर्याप्तानां जघन्यपरिणामयोगस्य वीर्यविभागा अनुक्रमेणासंख्यगुणा भवन्ति। इति चतुर्थगाथार्थः ।

"तो लद्धिअपज्जाणं बितिचउइंदियअसण्णिसण्णीणं कमसो इगंतवड्ढी" इति, ततो लब्ध्यपर्याप्तानां द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियसंज्ञिपञ्चेन्द्रियाणां जघन्यैकान्तवृद्धियोगस्य वीर्यविभागा अनुक्रमेणासंख्यगुणा ज्ञेयाः। 'ताउ कमा ताण परिणामो' इति, ततस्तेषां लब्ध्यपर्याप्तानां द्वीन्द्रियादिपञ्चभेदानां जघन्यपरिणामयोगस्य वीर्यविभागा अनुक्रमेणासंख्यगुणा ज्ञातव्याः। इति पञ्चमगाथार्थः।

'तो करणअपज्जाणं तेसिं कमसो इगंतवड्ढी' इति, ततः करणापर्याप्तानां तेषां द्वीन्द्रियादिपञ्चभेदानां जघन्यैकान्तवृद्धियोगस्य वीर्यविभागा अनुक्रमेणाऽसंख्येयगुणा भवन्ति। 'तो पज्जाणं परिणामो कमाऽत्थि' इति, 'तेसिं' इति पदमत्र संबध्यते, ततः करणपर्याप्तानां तेषां द्वीन्द्रियादिपञ्चभेदानां जघन्यपरिणामयोगस्य वीर्यविभागा अनुक्रमेणासंख्यगुणा भवन्ति। 'एमेव जेट्ठपए' इति, जघन्यपदे यत्क्रमेणोक्तं तत्क्रमेणैवोत्कृष्टपदेऽपि ज्ञेयम्। इति षष्ठगाथार्थः ।

गाथानुसारेणाल्पबहुत्वमेवम्—

(१) सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्यविभागाः सर्वस्तोकाः।

(२) ततः सूक्ष्मैकेन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्यविभागाः असंख्येयगुणाः।

(३) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः ।
(४) ततः बादरैकेन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(५) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(६) ततः द्वीन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८) ततः त्रीन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(९) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१०) ततः चतुरिन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(११) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१२) ततः असंज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१३) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१४) ततः संज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१५) ततः सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१६) ततः सूक्ष्मैकेन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१७) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१८) ततः बादरैकेन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१९) ततः सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२०) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२१) ततः सूक्ष्मैकेन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२२) ततः बादरैकेन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२३) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२४) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२५) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२६) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागा असंख्यगुणाः
(२७) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२८) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२९) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३०) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३१) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३२) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।

(३३) ततः द्वीन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(३४) ततः त्रीन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(३५) ततः चतुरिन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(३६) ततः असंज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(३७) ततः संज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(३८) ततः द्वीन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(३९) ततः त्रीन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४०) ततः चतुरिन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४१) ततः असंज्ञिपञ्चेन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४२) ततः संज्ञिपञ्चेन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
इति जघन्यं सर्वपरस्थानाल्पबहुत्वम्। एवमेवोत्कृष्टपदेऽपि ज्ञेयम्, नवरं जघन्यपदस्थाने उत्कृष्टपदं वक्तव्यम्। ४३ तः ४८॥ सम्प्रति जघन्योत्कृष्टपदद्वयसमुदितसर्वपरस्थानाल्पबहुत्वं निरूपयितुमारभते—

हस्सो उप्पाओऽप्पो लद्धिअपज्जस्स अत्थि सुहमस्स।
ताउ असंखेज्जगुणो करणअपज्जस्स विण्णेयो ॥४९॥
ताओ जेट्ठो लद्धिअपज्जस्स तओऽत्थि बायरस्स लहू।
तत्तो हवेज्ज जेट्ठो करणअपज्जस्स सुहमस्स ॥५०॥
तो बायरस्स हस्सो तो लद्धिअपज्जगस्स उक्कोसो।
तो बिंदियस्सऽणू तो करणअपज्जस्स बायरस्स गुरू॥५१॥ (गीतिः)
तो बिंदियस्स हस्सो तो लद्धिअपज्जस्स जेट्ठो तो।
तेइंदियस्सऽणू तो करणअपज्जस्स बिंदियस्स गुरू ॥५२॥ (गीतिः)
तो तिंदियस्स हस्सो तो लद्धिअपज्जगस्स जेट्ठो तो।
चउरिंदियस्सऽणू तो करणअपज्जस्स तिंदियस्स गुरू ॥५३॥ (गीतिः)
तो चउरक्खस्स लहू तो लद्धिअपज्जगस्स जेट्ठो तो।
अमणस्स लहू तो चउरक्खस्स करणअपज्जगस्स गुरू ॥५४॥ (गीतिः)
ताउ असण्णिस्स लहू तो लद्धिअपज्जगस्स जेट्ठो तो।
सण्णिस्स लहू तत्तो अमणस्स करणअपज्जगस्स गुरू ॥५५॥ (गीतिः)

तत्तो सण्णिस्स लहू तो लद्धिअपज्जगस्स उक्कोसो ।
ताओ सुहमस्स लहू णेयो एगंतवड्ढी उ ॥५६॥
ताउ गुरू उप्पाओ करणअपज्जस्स अत्थि सण्णिस्स ।
ताओ सुहमस्स लहू णेयो एगंतवड्ढी उ ॥५७॥
ताहिन्तो लद्धिकरणअपज्जगाणत्थि बायराण कमा ।
ताउ गुरू सुहमस्स य कमा तओ बायराण कमा ॥५८॥
तो अंतरं कमा तो लद्धिअपज्जाण सुहमइयराणं ।
परिणामो अत्थि लहू तओ कमा ताण अत्थि गुरू ॥५९॥
तो अंतरं कमा तो सुहमियराणऽत्थि करणपज्जाणं ।
हस्सो ताउ गुरू सिं कमा तओ अंतरं णेयं ॥६०॥
तो लद्धिअपज्जाणं हस्सो बेइंदियाइगाण कमा ।
णेयो इगंतवड्ढी तओ गुरू सिं कमंतरं तत्तो ॥६१॥
ताउ कमा परिणामोऽणू ताउ गुरू कमांतरं तत्तो ।
ताओ कमा लहू सिं करणअपज्जाणिगंतवड्ढी उ ॥६२॥(गीतिः)
ताउ गुरू सिं कमसो तओंतरं ताउ करणपज्जाणं ।
ताण लहू परिणामो कमा तओ सिं कमा जेट्ठो ॥६३॥

(प्रे०) '**हस्सो**' इत्यादि, लब्ध्यपर्याप्तस्य सूक्ष्मैकेन्द्रियस्य जघन्य उपपातयोगः सर्वस्तोकः, जघन्यस्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः इत्यर्थः, एवमग्रेऽपि सर्वत्र बोध्यम् । '**ताउ असंखेज्जगुणो करणअपज्जस्स विण्णेयो**' इति, 'हस्सो उप्पाओ सुहमस्स' इत्यत्रापि सम्बध्यते, 'उप्पाओ' इति पदं 'एगंतवड्ढी' पदं यावदनुवर्तनीयम्, ततः करणापर्याप्तस्य सूक्ष्मैकेन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः, 'असंखेज्जगुणो' इति पदं जघन्योत्कृष्टसर्वपरस्थानाल्पबहुत्वनिरूपणं यावदनुवर्तनीयम् । इति प्रथमगाथार्थः ।

'**ताओ जेट्ठो लद्धिअपज्जस्स**' इति, अत्र 'सुहमस्स' पदमनुवर्तते, ततो लब्ध्यपर्याप्तस्य सूक्ष्मैकेन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः । "**तओऽत्थि बायरस्स लहू**" इति, 'लद्धिअपज्जस्स' इति पदमत्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तस्य बादरैकेन्द्रियस्य जघन्यस्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः । '**तत्तो हवेज्ज**' इत्यादि, ततः करणा-

पर्याप्तस्य सूक्ष्मैकेन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । इति द्वितीयगाथार्थः ।

'तो बायरस्स हस्सो' इति, 'करणअपज्जस्स' इति पदमत्रापि सम्बध्यते, ततः करणापर्याप्तस्य बादरैकेन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः । 'तो लद्धिअपज्जगस्स उक्कोसो' इति, 'बायरस्स' इति पदमत्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तस्य बादरैकेन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । 'तो बिंदियस्सऽणू' इति, पूर्वार्धस्थं 'लद्धिअपज्जगस्स' इति पदमत्रापि सम्बध्यते, ततो द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः । 'तो करणअपज्जगस्स' इत्यादि, ततः करणापर्याप्तस्य बादरैकेन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । इति तृतीयगाथार्थः ।

'तो बिंदियस्स हस्सो' इति, उत्तरार्धस्थं 'करणअपज्जस्स' इति पदमत्रापि संबध्यते, ततो द्वीन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः। 'तो लद्धिअपज्जगस्स जेट्ठो' इति, 'बिंदियस्स' इति पदमत्रापि सम्बध्यते, ततो द्वीन्द्रियस्य लब्ध्यपर्याप्तस्योत्कृष्टस्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः । 'तो तेइंदियस्सऽणू' इति, पूर्वार्धस्थं 'लद्धिअपज्जगस्स' इति पदमत्रापि संबध्यते, ततो लब्ध्यपर्याप्तस्य त्रीन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः । "तो करणअपज्जस्स बिंदियस्स गुरू" इति, ततः करणापर्याप्तस्य द्वीन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । इति चतुर्थगाथार्थः ।

'तो तिंदियस्स हस्सो' इति, उत्तरार्धस्थं 'करणअपज्जस्स' इति पदमत्रापि सम्बध्यते, ततः करणापर्याप्तस्य त्रीन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः । 'तो लद्धिअपज्जस्स जेट्ठो' इति, 'तिंदियस्स' इति पदमत्र सम्बध्यते, ततो लब्ध्यपर्याप्तस्य त्रीन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः। 'तो चउरिंदियस्सऽणू' इति, पूर्वार्धस्थं 'लद्धिअपज्जस्स' इति पदमत्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तस्य चतुरिन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः। 'तो करणअपज्जस्स तिंदियस्स गुरू' इति, ततः करणापर्याप्तस्य त्रीन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । इति पञ्चमगाथार्थः ।

'तो चउरक्खस्स लहू' इति, उत्तरार्धस्थं 'करणअपज्जस्स' इति पदमत्रापि सम्बध्यते, ततः करणापर्याप्तस्य चतुरिन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः । 'तो लद्धिअपज्जगस्स जेट्ठो' इति, 'चउरक्खस्स' इति पदमत्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तस्य चतुरिन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । "तो अमणस्स लहू" इति, पूर्वार्धस्थं 'लद्धिअपज्जगस्स' इति पदमत्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तस्यासंज्ञिपञ्चेन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः। "तो चउरक्खस्स करणअपज्जगस्स गुरू" इति, ततः करणापर्याप्तस्य चतुरिन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । इति षष्ठगाथार्थः ।

'ताउ असण्णिस्स लहू' इति, उत्तरार्धस्थं 'करणअपज्जगस्स' इति पदमत्रापि सम्बध्यते, ततः करणपर्याप्तस्यासंज्ञिपञ्चेन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः। 'तो लद्धिअपज्जगस्स जेट्ठो' इति, 'असण्णिस्स' इति पदमत्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तस्यासंज्ञिपञ्चेन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । 'तो सण्णिस्स लहू'' इति, पूर्वार्धस्थं 'लद्धिअपज्जगस्स' इति पदमत्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तस्य संज्ञिपञ्चेन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः । 'तत्तो अमणस्स करणअपज्जगस्स गुरू' इति, ततः करणापर्याप्तस्यासंज्ञिपञ्चेन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः । इति सप्तमगाथार्थः ।

'तत्तो सण्णिस्स लहू' इति, पूर्वगाथास्थं 'करणअपज्जगस्स' इति पदमत्रापि सम्बध्यते, ततः करणापर्याप्तस्य संज्ञिपञ्चेन्द्रियस्य जघन्योपपातयोगस्य वीर्याविभागा असंख्यगुणाः। 'तो लद्धिअपज्जगस्स उक्कोसो' इति, 'सण्णिस्स' इति पदमत्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तस्य संज्ञिपञ्चेन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः। 'ताओ सुहुमस्स' इत्यादि, 'उप्पाओ' इति पदानुवृत्तिर्निवृत्ता, पूर्वार्धस्थं 'लद्धिअपज्जगस्स' इति पदमत्रापि सम्बध्यते, ततः सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगोऽसंख्यगुणो ज्ञातव्यः, जघन्यैकान्तवृद्धियोगस्य वीर्याविभागा असंख्यगुणा भवन्तीत्यर्थः। इति अष्टमगाथार्थः ।

'ताउ गुरू' इत्यादि, ततः करणापर्याप्तस्य संज्ञिपञ्चेन्द्रियस्योत्कृष्टोपपातयोगस्य वीर्याविभागा असंख्यगुणाः। 'ताओ सुहुमस्स' इत्यादि, पूर्वार्धस्थं 'करणअपज्जगस्स' इति पदमत्रापि सम्बध्यते, ततः करणापर्याप्तस्य सूक्ष्मैकेन्द्रियस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागा असंख्यगुणाः। इति नवमगाथार्थः।

'ताहिन्तो' इत्यादि, 'लहू एगंतवड्ढी' इति पूर्वगाथातोऽत्रापि संबध्यते, ततो लब्ध्यपर्याप्तबादरैकेन्द्रियाणां करणापर्याप्तबादरैकेन्द्रियाणां च जघन्यैकान्तवृद्धियोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणाः। 'ताउ गुरू सुहुमाणं कमा' इति, 'एगंतवड्ढी' इति 'लद्धिकरणअपज्जगाण' इति चात्रापि सम्बध्यते, ततो लब्ध्यपर्याप्तसूक्ष्मैकेन्द्रियाणां करणापर्याप्तसूक्ष्मैकेन्द्रियाणां चोत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणाः । तओ बायराण कमा' इति, 'एगंतवड्ढी, लद्धिकरणअपज्जगाण, गुरू' इति पदत्रिकमत्रापि संबध्यते, ततो लब्ध्यपर्याप्तबादरैकेन्द्रियाणां करणापर्याप्तबादरैकेन्द्रियाणां चोत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणाः । इति दशमगाथार्थः ।

'तो अंतरं' इति, ततोऽन्तरम् , ततः श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि केषामपि जीवानां कदाऽपि न भवन्तीत्यर्थः। 'कमा तो' इत्यादि, ततो लब्ध्यपर्याप्तानां सूक्ष्मैकेन्द्रियाणामितरेषां च बादरैकेन्द्रियाणां जघन्यपरिणामयोगस्य वीर्याविभागा अनुक्रमेणाऽसंख्यगुणा भवन्ति । "तओ

कमा ताओ असंखगुणा' इति, 'परिणामा' इति पदमत्रापि सम्बध्यते, ततस्तेषां लब्ध्यपर्याप्तानां सूक्ष्मैकेन्द्रियाणां बादरैकेन्द्रियाणां चोत्कृष्टपरिणामयोगस्य वीर्यविभागा अनुक्रमेणासंख्येयगुणा भवन्ति । इति एकादशगाथार्थः ।

'तो अंतरं' इति, ततः पूर्वोक्तवदन्तरम् । 'कमा तो' इत्यादि, 'परिणामा' इति पदमत्रापि सम्बध्यते, ततः करणपर्याप्तानां सूक्ष्मैकेन्द्रियाणां बादरैकेन्द्रियाणां च जघन्यपरिणामयोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणा भवन्ति । 'ताउ गुरू सिं कमा' इति, परिणामा इति पदमत्रापि सम्बध्यते, ततस्तेषां करणपर्याप्तानां सूक्ष्मैकेन्द्रियाणां बादरैकेन्द्रियाणां चोत्कृष्टपरिणामयोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणाः । 'तओ अंतरं णेयं' इति, ततोऽन्तरं ज्ञातव्यम् । इति द्वादशगाथार्थः ।

'तो लद्धिअपज्जत्ता' इत्यादि, ततो लब्ध्यपर्याप्तानां द्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाणां जघन्यैकान्तवृद्धियोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणा ज्ञातव्याः । 'तओ गुरू सिं कमतरं तत्तो' इति, 'एगंतवुड्ढी' इति पदमत्रापि सम्बध्यते, ततस्तेषां लब्ध्यपर्याप्तानां द्वीन्द्रियादीनामुत्कृष्टैकान्तवृद्धियोगस्य वीर्याऽविभागा अनुक्रमेणासंख्यगुणाः । ततोऽन्तरम् । 'कमतरं' इत्यत्र प्राकृतवशादाकारलुक् सन्धिश्च । इति त्रयोदशगाथार्थः ।

'ताउ कमा परिणामीऽणू' इति, 'सिं' इति पदमत्रापि सम्बध्यते, ततस्तेषां लब्ध्यपर्याप्तानां द्वीन्द्रियादीनां जघन्यपरिणामयोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणाः । 'ताउ गुरु कमांतरं तत्तो' इति, 'सिं' इति 'परिणामो' इति चात्रापि सम्बध्यते; ततस्तेषां लब्ध्यपर्याप्तानां द्वीन्द्रियादीनामुत्कृष्टपरिणामयोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणाः । ततोऽन्तरम् । 'ताओ कमा' इत्यादि, ततः करणपर्याप्तानां तेषां द्वीन्द्रियादीनां जघन्यैकान्तवृद्धियोगस्य वीर्याविभागा असंख्यगुणाः । इति चतुर्दशगाथार्थः ।

'ताउ गुरू सिं कमसो' इति, 'इगंतवुड्ढी' इत्यत्रापि सम्बध्यते, ततः तेषां करणपर्याप्तानां द्वीन्द्रियादीनामुत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणा भवन्ति । 'तओंतर' इति, ततोऽन्तरम् । 'ताउ करणपज्जाणं' इत्यादि, ततः करणपर्याप्तानां तेषां द्वीन्द्रियादीनां जघन्य परिणामयोगस्य वीर्याविभागा अनुक्रमेणासंख्यगुणाः । 'तओ सिं कमा जेट्ठो' इति, 'परिणामो' इति पदमत्रापि सम्बध्यते, ततस्तेषां करणपर्याप्तानां द्वीन्द्रियादीनामुत्कृष्टपरिणामयोगस्य वीर्याविभागा अनुक्रमेणाऽसंख्यगुणा भवन्ति । इति पञ्चदशगाथार्थः । गाथार्थानुसारेणाल्पबहुत्वमेवम्—

(१) सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः सर्वस्तोकाः ।

(२) ततः सूक्ष्मैकेन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।

(३) ततः सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।

(४) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।

(५) ततः सूक्ष्मैकेन्द्रियस्य करणापर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।

(६) ततः बादरैकेन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(९) ततः बादरैकेन्द्रियस्य करणापर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१०) ततः द्वीन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(११) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१२) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१३) ततः द्वीन्द्रियस्य करणापर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१४) ततः त्रीन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१५) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१६) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१७) ततः त्रीन्द्रियस्य करणापर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१८) ततः चतुरिन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(१९) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२०) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२१) ततः चतुरिन्द्रियस्य करणापर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२२) ततः असंज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२३) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२४) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२५) ततः असंज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२६) ततः संज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य जघन्योपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२७) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२८) ततः सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(२९) ततः संज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य उत्कृष्टोपपातयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३०) ततः सूक्ष्मैकेन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३१) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३२) ततः बादरैकेन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३३) ततः सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३४) ततः सूक्ष्मैकेन्द्रियस्य करणापर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(३५) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।

(३६) ततः बादरैकेन्द्रियस्य करणापर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(३७) ततः अन्तरम्
(३८) ततः सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(३९) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४०) ततः सूक्ष्मैकेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४१) ततः बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४२) ततः अन्तरम्
(४३) ततः सूक्ष्मैकेन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४४) ततः बादरैकेन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४५) ततः सूक्ष्मैकेन्द्रियस्य करणपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४६) ततः बादरैकेन्द्रियस्य करणपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(४७) ततः अन्तरम्
(४८) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(४९) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(५०) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(५१) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(५२) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(५३) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(५४) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(५५) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(५६) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः।
(५७) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाःअसंख्यगुणाः।
(५८) ततः अन्तरम्
(५९) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(६०) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(६१) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(६२) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(६३) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(६४) ततः द्वीन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।
(६५) ततः त्रीन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः।

(६६) ततः चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(६७) ततः असंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(६८) ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(६९) ततः अन्तरम्
(७०) ततः द्वीन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७१) ततः त्रीन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७२) ततः चतुरिन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७३) ततः असंज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७४) ततः संज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य जघन्यैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७५) ततः द्वीन्द्रियस्य करणापर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७६) ततः त्रीन्द्रियस्य करणापर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७७) ततः चतुरिन्द्रियस्य करणापर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७८) ततः असंज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(७९) ततः संज्ञिपञ्चेन्द्रियस्य करणापर्याप्तस्य उत्कृष्टैकान्तवृद्धियोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८०) ततः अन्तरम्
(८१) ततः द्वीन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८२) ततः त्रीन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८३) ततः चतुरिन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८४) ततः असंज्ञिपञ्चेन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः
(८५) ततः संज्ञिपञ्चेन्द्रियस्य करणपर्याप्तस्य जघन्यपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८६) ततः द्वीन्द्रियस्य करणपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८७) ततः त्रीन्द्रियस्य करणपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८८) ततः चतुरिन्द्रियस्य करणपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(८९) ततः असंज्ञिपञ्चेन्द्रियस्य करणपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।
(९०) ततः संज्ञिपञ्चेन्द्रियस्य करणपर्याप्तस्य उत्कृष्टपरिणामयोगस्य वीर्याविभागाः असंख्यगुणाः ।

॥इति त्रिविधं सर्वपरस्थानाल्पबहुत्वं समाप्तम् ॥

नन्वसंख्यातस्यासंख्यभेदादत्र गुणकारः कियत्प्रमाणेनासंख्यातेन विधेय इत्याशङ्कामपनेतुमिदानीं गुणकारप्रमाणं तथाऽल्पबहुत्वगतं योगस्थानानामन्तरं कियत्प्रमाणं ग्राह्यमिति निरूपयति—

पलिओवमस्स भागो असंखियचयमोऽत्थि जोगगुणगारे ।
सव्वह असंखभागो सेढीए अंतरं णेयं ॥६४॥

(प्रे०) 'पलिओवमस्स' इत्यादि, पल्योपमासंख्यातभागो योगगुणकारोऽस्ति, पूर्वपूर्वनिर्दिष्टजीवानां यावन्तो वीर्याविभागास्तेषु पल्योपमासंख्यातभागप्रमाणेनासंख्यातेन गुणितेषु यावद् गुणनफलं भवति तावत्प्रमाणा वीर्याविभागा उत्तरोत्तरनिर्दिष्टजीवानां भवन्ति । 'सव्वह' इत्यादि, अस्मिन्नल्पबहुत्वे यत्र यत्रान्तरं निर्दिष्टं तत्र सर्वत्र तदन्तरं श्रेण्यसंख्यातभागप्रमाणयोगस्थानरूपं ज्ञातव्यम् । निर्दिष्टप्रत्येकान्तरे श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि केषामपि जीवानां कदापि न प्राप्यन्ते । इत्येवं स्थानद्वारान्तर्गते योगस्थानद्वारे त्रिप्ररूपणाः कृताः ॥६४॥ साम्प्रतं योगस्थानद्वारेऽष्टप्ररूपणा आविर्भिकीर्षुरष्टप्ररूपणानामानि निर्दिशति—

जोगट्ठाणदुआरे परूवणा अट्ठ हुन्ति अविभागे ।
वग्गणाफड्डगअंतरठाणा समयवड्ढिअप्पबहू ॥६५॥

(प्रे०) 'जोगट्ठाणदुआरे' इत्यादि, स्थानद्वारान्तर्गते योगस्थानद्वारेऽष्टौ प्ररूपणा भवन्ति । ता अनुक्रमेणैवम्-प्रथमाऽविभागप्ररूपणा । द्वितीया वर्गणाप्ररूपणा । तृतीया स्पर्धकप्ररूपणा । चतुर्थ्यन्तरप्ररूपणा । पञ्चमी स्थानप्ररूपणा । षष्ठी समयप्ररूपणा । सप्तमी वृद्धिप्ररूपणा । अष्टम्यल्पबहुत्वप्ररूपणा । इतो योगस्थानद्वारेऽविभागवर्गणास्पर्धकान्तरस्थानसमयवृद्ध्यल्पबहुत्वानीत्यष्ट द्वाराणि यथाक्रमं निरूपयिष्यन्ते इत्यर्थः । अत्रेदं ध्येयम्-वर्गणादिद्वारेष्ववान्तरद्वाराण्यपि वक्ष्यन्ते । एवं कुत्रचिद् वर्गणादिद्वाराणामन्तर्द्वारेष्वपि पुनरन्तर्द्वाराणि वक्ष्यन्ते । इत्येवमनेकान्तर्द्वारविभूषितेयं योगस्थानप्ररूपणा सूक्ष्ममत्या विभावनीया स्थानद्वारचिन्तनपरायणैः ॥६५॥

सम्प्रति यथाक्रममष्टप्ररूपणाश्चिकीर्षुरविभागप्ररूपणां वर्गणाप्ररूपणां च विदधाति—

जीवस्स पइपएसे वीरियअणवो असंखलोगसमा ।
सरिसऽप्पपएसाणं असंखपयराण वग्गणा एगा ॥६६॥

(प्रे०) 'जीवस्स' इत्यादि, जीवस्य लोकाकाशप्रदेशप्रमाणेष्वसंख्यप्रदेशेषु प्रतिप्रदेशमसंख्यलोकसमाः-असंख्यलोकानां यावन्तः प्रदेशास्तावन्तो वीर्याणवो भवन्ति । अत्रेदं ध्येयम्-प्रतिप्रदेशं जघन्यत उत्कृष्टतोऽपि चासंख्येयलोकाकाशप्रदेशतुल्या एव वीर्याणवो भवन्ति, तथापि जघन्यपदीयवीर्याविभागेभ्य उत्कृष्टपदीयवीर्याणवोऽसंख्येयगुणा ज्ञेयाः । केवलिप्रज्ञाच्छेदनकेन छिन्ना लघुतमा ये वीर्याविभागाः, वीर्याणव इति यावद् , ते वीर्याणवोऽभिधीयन्ते । एतत्सर्वं प्राग्योगस्थानप्ररूपणायां निरूपितमेव । कृताऽविभागप्ररूपणा ।

इदानीं ते वीर्याणवः किं सर्वजीवप्रदेशेषु तुल्या उताहु न्यूनाधिका इत्यवबोधाय वर्गणास्वरूपमाह–'सरिस' इत्यादि, वीर्याणवो जीवस्य केषुचित्प्रदेशेषु स्तोकाः, केषुचित्प्रदेशेषु अधिकाः केषुचित्प्रदेशेषु च समाना भवन्ति। तत्र येषु जीवप्रदेशेषु वीर्याणवः समसङ्ख्याकास्ते आत्मप्रदेशा अत्र समाना उच्यन्ते। समसंख्याकवीर्याणुभिः समानानामात्मप्रदेशानां समुदाय एका वर्गणा भवति। यद्यपि वर्गणा असंख्याता भवन्ति, तथापि प्रत्येकवर्गणा, अर्थात् विवक्षिता काऽप्येकवर्गणा तुल्यसंख्याकवीर्याविभागैः समानानामेवात्मप्रदेशानां भवति। ननु समानवीर्याणुभिः समाना आत्मप्रदेशाः कियन्तो भवन्तीत्याह–'असंखपयराण' इति, असंख्यातानां प्रतराणां यावन्तः प्रदेशास्तावतां वीर्याणुभिः समानानां जीवप्रदेशानामेका वर्गणा भवति। प्रत्येकवर्गणायामसंख्यातप्रतरप्रदेशतुल्याः आत्मप्रदेशा भवन्तीत्यर्थः। तदेवं वर्गणास्वरूपं निरूपितम् ॥६६॥

सम्प्रति वर्गणाविषयकं विशेषनिरूपणं चिकीर्षुर्वर्गणाप्ररूपणायां द्वारप्रतिपादिकां गाथामाह—

दाराणि वग्गणाए णेयाणि छ सप्पयप्पमाणाणि।
सेढिअवहारकाला भागप्पबहू जहाकमसो ॥६७॥

(प्रे०) 'दाराणि' इत्यादि, वर्गणाविषयकनिरूपणे षड् द्वाराणि ज्ञेयानि। ननु तानि षड् द्वाराणि कानि? कश्च तेषां निरूपणक्रमः? इत्याह–'सप्पयप्पमाणाणि' इत्यादि, प्रथमं सत्पदद्वारं, ततः प्रमाणद्वारं, ततः श्रेणिद्वारं, ततोऽपहारकालद्वारं, ततो भागद्वारं, ततोऽल्पबहुत्वद्वारमित्यनुक्रमेण तानि निरूपयिष्यन्ते। (१) तत्र सत्पदद्वारे वर्गणासत्ता निरूपयिष्यते। (२) प्रमाणद्वारे वर्गणाप्रमाणं वक्ष्यते। (३) श्रेणिद्वारं त्रिधा निरूपयिष्यते, तद्यथा-अनन्तरोपनिधया, परम्परोपनिधयाऽल्पबहुत्वेन च। (1) तत्रानन्तरोपनिधायां पूर्वपूर्ववर्गणातः स्वाऽव्यवहितोत्तरवर्गणायां कियन्त आत्मप्रदेशा भवन्तीति चिन्तयिष्यते। (2) परम्परोपनिधायां कियत्यो वर्गणा गत्वा आत्मप्रदेशा द्विगुणहीना भवन्तीति प्रतिपादयिष्यते। (3) अल्पबहुत्वे सर्वद्विगुणहानिस्थानानां विवक्षितैकद्विगुणहानिस्थानगतवर्गणानां चाल्पबहुत्वं चिन्तयिष्यते। (४) अपहारकालद्वारे प्रतिसमयं प्रथमवर्गणागतात्मप्रदेशप्रमितानामात्मप्रदेशानामपहारे क्रियमाणे कियता कालेन सर्वे जीवप्रदेशा अपह्रियन्ते इत्यादि चिन्तयिष्यते। (५) भागद्वारे प्रत्येकवर्गणायां वर्तमाना आत्मप्रदेशा सर्ववर्गणागतजीवप्रदेशानां कतिथे भागे सन्तीति वक्ष्यते। (६) अल्पबहुत्वद्वारे वर्गणामाश्रित्य जीवप्रदेशानां न्यूनाधिकत्वं प्रतिपादयिष्यते ॥६७॥

तदेवं वर्गणानिरूपणे द्वाराण्युद्दिष्टानि। सम्प्रति यथोद्देशं निर्देष्टुकाम एकगाथया सत्पदप्रमाणद्वारे निरूपयति—

सव्वप्पवीरियाणं जीवपएसाण वग्गणा पढमा।
दुइआइवग्गणा उण हवन्ति एगेगवड्ढीए ॥६८॥

(प्रे०) 'सव्वप्प'इत्यादि, सर्वाल्पवीर्याविभागानां-येषु समानसंख्याकवीर्याणवोऽन्यसर्वजीवप्रदेश-गतवीर्याविभागेभ्यः स्तोकतमास्तेषामसंख्यातप्रतरप्रदेशराशितुल्यानां जीवप्रदेशानां समुदायः प्रथमा वर्गणा भवति । 'दुइआइ' इत्यादि, क्रमश एकैकवीर्याविभागवृद्धौ सत्यां द्वितीयादयो वर्गणा भवन्ति । तथाहि-प्रथमाया जघन्यवर्गणातो ये एकेन वीर्याविभागेनाधिका असंख्यातप्रतरप्रदेशराशिप्रमाणा जीवप्रदेशास्तेषां समुदायो द्वितीया वर्गणा । जघन्यवर्गणातो द्वाभ्यां वीर्याविभागाभ्यामधिकानामसंख्यातप्रतरप्रदेशराशितुल्यानां जीवप्रदेशानां समुदायस्तृतीया वर्गणा । जघन्यवर्गणातस्त्रिभिर्वीर्याऽविभागैरधिकानां तावतां जीवप्रदेशानां समुदायश्चतुर्थी वर्गणा । एवं रीत्या क्रमश एकैकेन वीर्याणुनाऽधिकानां तावतां तावतां जीवप्रदेशानां समुदायरूपा वर्गणाः श्रेण्यसंख्यातभागप्रमाणा असंख्येया ज्ञातव्याः ॥६८॥ सम्प्रति श्रेणिद्वारेऽनन्तरोपनिधां निरूपयन्नाह—

पढमाअ वग्गणाए जीवपएसाऽहिया तओ हुन्ते ।
कमसो विसेसहीणा जा णेया वग्गणा चरमा ॥६९॥

(प्रे०) द्वितीयादिप्रत्येकवर्गणायां स्वानन्तरपूर्ववर्गणापेक्षया कियन्त आत्मप्रदेशा भवन्तीति मार्गणमनन्तरोपनिधा । तामेवात्राह—'पढमाअ' इत्यादि, प्रथमायां वर्गणायां जीवप्रदेशा अधिका भवन्ति, द्वितीयवर्गणागतात्मप्रदेशेभ्य इति लभ्यते । 'तओ हुन्ते' इत्यादि, ततो द्वितीयादि-वर्गणासु क्रमशो विशेषहीना आत्मप्रदेशा ज्ञेयाः । इदमुक्तं भवति—प्रथमवर्गणागतात्मप्रदेशेभ्यो द्वितीयवर्गणायामात्मप्रदेशा विशेषहीनाः, द्वितीयवर्गणागतात्मप्रदेशेभ्यस्तृतीयवर्गणायामात्मप्रदेशा विशेषहीनाः, तृतीयवर्गणागतात्मप्रदेशेभ्यश्चतुर्थवर्गणायामात्मप्रदेशा विशेषहीनाः, चतुर्थवर्गणागतात्मप्रदेशेभ्यः पञ्चमवर्गणायामात्मप्रदेशा विशेषहीना भवन्तीत्येवं पूर्वपूर्ववर्गणातः स्वाव्यवहितोत्तरोत्तरवर्गणायामात्मप्रदेशा विशेषहीना भवन्ति । क्व यावत् ? इत्याह—'जा णेया' इत्यादि, चरमवर्गणां यावत् , द्वितीयवर्गणायाः प्रारभ्य चरमवर्गणां यावत् प्रत्येकवर्गणायां स्वानन्तरपूर्ववर्गणाऽपेक्षया विशेषहीना जीवप्रदेशा भवन्तीत्यर्थः ।

अत्रेयं भावना—तथास्वाभाव्यादेवाधिकाधिकतरवीर्याविभागा जीवप्रदेशाः स्तोकस्तोकतर-प्रमाणाः प्राप्यन्ते । एवं हीनहीनतरवीर्याविभागा आत्मप्रदेशा बहुबहुतरप्रमाणाः प्राप्यन्ते । अत्र च यथा यथोपरि गम्यते तथा तथाऽधिकाधिकतरवीर्याविभागानां जीवप्रदेशानां वर्गणा भवति, ततो यथा यथोपरि गम्यते तथा तथा हीनहीनतरात्मप्रदेशानां वर्गणा भवति । अतः क्रमशः प्रथमादिवर्गणातो द्वितीयादिवर्गणायां जीवप्रदेशानां विशेषहीनत्वं सूपपद्यते ॥६९॥

सम्प्रति पूर्वपूर्ववर्गणातः स्वाव्यवहितोत्तरोत्तरवर्गणायां विशेषहीना जायमाना आत्म-प्रदेशाः कियतीर्वर्गणा गत्वा द्विगुणहीना भवन्तीति प्रतिपादनार्थं परम्परोपनिधामाह—

सेढिअसंखियभागं गमिउं गमिउं भवे दुगुणहाणी।
ता य दुगुणहाणीयो पल्लाऽसंखंसमेत्ताओ ॥७०॥

(प्रे०) 'सेढीअ' इत्यादि, प्रथमवर्गणातो द्वितीयवर्गणायां जीवप्रदेशा विशेषहीनाः, द्वितीयवर्गणातस्तृतीयवर्गणायां विशेषहीनाः, तृतीयवर्गणातश्चतुर्थवर्गणायां विशेषहीना इत्येवं श्रेण्यसंख्यातभागप्रमाणा वर्गणा गत्वाऽनन्तरा या वर्गणा तस्यां प्रथमवर्गणागतात्मप्रदेशेभ्यो द्विगुणहीना आत्मप्रदेशा भवन्ति। पुनरपि द्विगुणहीनात्मप्रदेशायास्तद्वर्गणाया अनन्तरोत्तरवर्गणायां जीवप्रदेशा विशेषहीनाः, ततस्तदनन्तरोत्तरवर्गणायां विशेषहीनाः, इत्येवं श्रेण्यसंख्यातभागप्रमाणा वर्गणा अतिक्रम्याऽनन्तरायां वर्गणायां जीवप्रदेशाः, द्विगुणहीनात्मप्रदेशायां पूर्ववर्गणायां यावन्तो जीवप्रदेशास्तेभ्यो द्विगुणहीना भवन्ति, अर्धा भवन्तीत्यर्थः। ततः पुनः यथोक्तप्रमाणा वर्गणा गत्वाऽनन्तरवर्गणायां जीवप्रदेशाः, द्विगुणहीनात्मप्रदेशायां पूर्ववर्गणायां यावन्तो जीवप्रदेशास्तेभ्यो द्विगुणहीना भवन्ति। इत्येवं श्रेण्यसंख्यातभागप्रमाणा वर्गणा गत्वा गत्वाऽनन्तरवर्गणायां द्विगुणहीना आत्मप्रदेशा भवन्ति। ननु ता द्विगुणहानयः सर्वा मीलित्वा कियत्यो भवन्तीत्याशङ्कायामुत्तरार्धेन द्विगुणहानीनां प्रमाणं निरूपयन्नाह–'ता य' इत्यादि, ताश्च द्विगुणहानयः सर्वा मीलित्वा पल्योपमासंख्यातभागप्रमाणा भवन्ति ॥७०॥

सम्प्रति द्विगुणहानिस्थानानां तदन्तरालस्थानानां चाल्पबहुत्वं निरूपयति—

सिं हुन्ते ठाणाइं थोवाणि तओ असंखियगुणाणि।
एगंतरे हवन्ते जं सेढीए असंखंसो ॥७१॥

(प्रे०) 'सिं' इत्यादि, तासां द्विगुणहानीनां स्थानानि स्तोकानि, 'तओ' इत्यादि, ततः-द्विगुणहानिस्थानेभ्यः एकान्तरे–द्विगुणहानिस्थानयोर्यदेकमन्तरं तस्मिन् स्थितानि स्थानानि असंख्यगुणानि भवन्ति। कुतः? इत्याह–'जं' इत्यादि, यतो द्विगुणहानिस्थानान्तरे स्थितानि स्थानानि श्रेण्यसंख्यातभागप्रमाणानि भवन्ति। इदमुक्तं भवति–सर्वाण्यपि द्विगुणहानिस्थानानि पल्योपमासंख्यातभागमात्राण्येव, द्विगुणहानिस्थानैकान्तरे स्थितानि स्थानानि श्रेण्यसंख्यातभागप्रमाणानि, पल्योपमासंख्यातभागापेक्षया श्रेण्यसंख्यभागोऽसंख्यगुण इति यथोक्तमल्पबहुत्वं घटां याति। तदेवं श्रेणिद्वारं निरूपितम् ॥७१॥ साम्प्रतमपहारद्वारं निरूपयितुं प्रक्रमते—

आइमवग्गणजीवपएसपमाणेण अवहरिज्जंति।
सव्वा जीवपएसा दिवड्ढगुणहाणिकालम्मि ॥७२॥

(प्रे०) ननु यदि प्रथमवर्गणागतजीवप्रदेशैः प्रतिसमयमात्मप्रदेशा अपह्रियन्ते तदा सर्वे आत्मप्रदेशाः कियति कालेऽपह्रियेरन्निति पर्यनुयोगे भवति निगदाह–'आइमवग्गण' इत्यादि, प्रथमवर्गणागतजीवप्रदेशप्रमाणेन प्रतिसमयमात्मप्रदेशेषु अपह्रियमाणेषु सर्वे जीवप्रदेशाः सार्धद्वि-

गुणहानिकाले–सार्धद्विगुणहानिगतवर्गणाप्रमाणसमयेषु अपह्रियन्ते । कथम् ? इति चेद्, उच्यते-प्रथमवर्गणागतात्मप्रदेशैः प्रतिसमयमात्मप्रदेशेष्वपह्रियमाणेषु प्रथमद्विगुणहानिगताः सर्वे आत्मप्रदेशाः साधिकपादोनद्विगुणहानिकाले–साधिकपादोनद्विगुणहानिगतवर्गणाप्रमाणसमयेष्वपह्रियन्ते। शेषसर्वद्विगुणहानिगताः सर्वे आत्मप्रदेशाः किञ्चिन्न्यूनपादोनद्विगुणहानिकालेऽपह्रियन्ते । अतः प्रथमवर्गणागतात्मप्रदेशप्रमाणेन प्रतिसमयमपह्रियमाणेष्वात्मप्रदेशेषु सार्धद्विगुणहानिकाले सर्वे जीवप्रदेशा अपह्रियन्ते ।

अथ प्रतिसमयं प्रथमवर्गणागतात्मप्रदेशप्रमाणेष्वात्मप्रदेशेष्वपह्रियमाणेषु प्रथमद्विगुणहानिगताः सर्वे आत्मप्रदेशाः साधिकपादोनद्विगुणहानिकाले कथमपह्रियन्ते इति गणितप्रक्रियया प्रदर्श्यते–

[१] आदौ तावत् प्रथमद्विगुणहानिस्थानानि स्थापयितव्यानि ।

[२] ततो यावन्ति प्रथमद्विगुणहानिस्थानानि तावद्वारं प्रथमवर्गणागतात्मप्रदेशसंख्या स्थापयितव्या ।

[३] अतः क्रमशो द्वितीयवर्गणायामेकचयो वृद्धः, तृतीयवर्गणायां द्विचयौ वृद्धौ, चतुर्थवर्गणायां त्रिचया वृद्धा इति क्रमशः एकैकचयवृद्ध्या प्रथमद्विगुणहानिचरमवर्गणायामेकन्यूनद्विगुणहानिगतवर्गणाप्रमाणाश्चया वृद्धिं गताः ।

[४] अथ प्रथमवर्गणागतात्मप्रदेशानां प्रथमद्विगुणहानिस्थानप्रमाणस्थापनायां कृतायां द्विगुणहानिगतसर्ववर्गणासु कियन्त आत्मप्रदेशा वृद्धिं गता इति संशोधनार्थं सङ्कलनां कृत्वा वृद्धिं गता आत्मप्रदेशाः प्रथमवर्गणाप्रमाणेन कियतीं वृद्धिं प्राप्ता इति प्रदर्श्यते—

[५] प्रथमान्तिमचयसंख्याया योगो विधेयः ।

[६] प्राप्तं योगफलमेकस्मिन् चये यावन्त आत्मप्रदेशा अधिकारस्तावत्संख्यया गुणनीयम् ।

[७] एवं गुणने कृते गुणनफलत्वेन प्राप्ता आत्मप्रदेशाः प्रथमवर्गणागतात्मप्रदेशेभ्योऽर्धा भविष्यन्ति ।

[८] अतोऽर्धा प्रथमवर्गणा एकन्यूनद्विगुणहानिस्थानानामर्धभागेन गुणनीया । तद्यथा–
$\frac{\text{प्रथमवर्गणा}}{२} \times \frac{\text{द्विगुणहानिस्थानानि}-१}{२}$ = $\frac{१}{४}$ द्विगुणहानिप्रमाणवर्गणाः–$\frac{१}{४}$ प्रथमवर्गणा। अत्र गणितानुसारेण सङ्कलनकरणरीतिरेवम्–प्रथमान्तिमचयसंख्याया योगं विधाय गच्छार्धेन गुणनीयम् । अत्रैकवर्गणान्यूनद्विगुणहानिप्रमाणो गच्छोऽस्तीति ध्येयम् ।

[९] अथैकद्विगुणहानिप्रमाणवर्गणाभ्यः $\frac{१}{४}$वर्गणान्यून$\frac{१}{४}$द्विगुणहानिवर्गणानामन्तरे कृते वर्गणाचतुर्थभागाधिकपादोनद्विगुणहानिवर्गणा अन्तरफलं प्राप्तम् ।

[१०] अतः प्रतिसमयं प्रथमवर्गणागतात्मप्रदेशेष्वपह्रियमाणेषु प्रथमद्विगुणहानिसर्ववर्गणागताः सर्वे आत्मप्रदेशा वर्गणाचतुर्थभागाधिकपादोनद्विगुणहानिकालेऽपह्रियन्ते, अर्थाद् गोपुच्छाकारेण

यदि प्रतिसमयं जीवप्रदेशानामपहारः क्रियते तदा प्रथमद्विगुणहानिगतानां सर्वेषामात्मप्रदेशानामपहारो एकद्विगुणहानिकाले-एकद्विगुणहानिगतवर्गणातुल्यसमयेषु भवति। यदि च प्रथमवर्गणागतात्मप्रदेशप्रमाणेनापहारः क्रियते तदा वर्गणाचतुर्थभागाधिके पादोनद्विगुणहानिकाले-पादोनद्विगुणहानिगतवर्गणातुल्यसमयेषु भवति ।

[११] अथ तथैव प्रथमवर्गणागतात्मप्रदेशैरेव प्रतिसमयमपहारे कृते द्वितीयद्विगुणहानिगतसर्वात्मप्रदेशानामपहारः पूर्वोक्तकालादर्धकालेन, अर्थात् द्विगुणहानित्र्यष्टभागकालेन, तृतीयद्विगुणहानिगतसर्वप्रदेशानां पूर्वोक्तात् कालादर्धेन द्विगुणहानित्रिषोडशभागकालेन, इत्येवं चरमद्विगुणहानिं यावत् प्रत्येकद्विगुणहानेः सर्वात्मप्रदेशाः क्रमश उत्तरोत्तरमर्धार्धकालेनापह्रियन्ते, यतः उत्तरोत्तरं द्विगुणहानिवर्गणासु आत्मप्रदेशाः क्रमशः अर्धा भवन्ति ।

[१२] अथ द्वितीयगुणहान्यपहारकालः, तृतीयद्विगुणहान्यपहारकालः, चतुर्थद्विगुणहान्यपहारकालः, इत्येवं चरमद्विगुणहान्यपहारकालं यावत् सर्वोऽप्यपहारकालः किञ्चिन्न्यूनपादोनद्विगुणहानितुल्यः, अर्थात् किञ्चिन्न्यूनपादोनद्विगुणहानिगतवर्गणाप्रमाणसमया भवति । यत उत्तरोत्तरमर्धसंख्यायाः सर्वस्या योगफलं पूर्वसंख्यातः किञ्चिन्न्यूनं भवति ।

[१३] साधिकपादोनद्विगुणहानिकालस्य किञ्चिन्न्यूनपादोनद्विगुणहानिकालस्य च योगे कृते सार्धद्विगुणहानिकालो योगफलं भवति । इत्येवं प्रतिसमयं प्रथमवर्गणागतात्मप्रदेशेषु अपह्रियमाणेषु समस्तद्विगुणहानिगतसमवर्गणानामर्थात् सकलात्मप्रदेशानामपहारः सार्धद्विगुणहानिकालेन भवति ।

अत्रेदं बोध्यम्—प्रथमद्विगुणहान्यपहारकाले यत् किञ्चिदधिकत्वं वर्तते, तदपेक्षया शेषसर्वद्विगुणहान्यपहारकाले यत् किञ्चिन्न्यूनत्वं वर्तते तदधिकमस्ति, अतोऽत्र समस्तात्मप्रदेशानामपहारकालः सम्पूर्णसार्धद्विगुणहानिप्रमाणो न भवति, अपि तु किञ्चिन्न्यूनो भवति; तथापि तन्न्यूनत्वस्यातिस्तोकत्वात् तदविवक्षित्वा सार्धद्विगुणहानिकाल उक्तः ।

अथानन्तरोक्ता सर्वा गणितप्रक्रियाऽसत्कल्पनया प्रदर्श्यते। आत्मप्रदेशानामसंख्यातत्वेऽप्यसत्कल्पनया द्वासप्तत्यधिकत्रिसहस्राः (३०७२) सर्वे आत्मप्रदेशाः कल्प्यन्ते । अत्रेदं ध्येयम्—यद्यपि वक्ष्यमाणस्थापनायां सर्वे आत्मप्रदेशा एकशताधिकत्रिसहस्रा भवन्ति, अतस्तदपेक्षया सर्वात्मप्रदेशापहारकालः साधिकसार्धद्विगुणहानिप्रमाणो भवति, तथापि अत्र गणितसौकर्यार्थमेव सर्वे आत्मप्रदेशा द्वासप्तत्यधिकत्रिसहस्राः कल्पिताः । यत एकद्विगुणहानौ सर्वे आत्मप्रदेशा अष्टचत्वारिंशदधिकद्विसहस्रप्रमाणाः कल्पिताः, अतस्तदपेक्षयार्धद्विगुणहान्यां चतुर्विंशत्यधिकैकसहस्रप्रमाणा आत्मप्रदेशा भवन्ति, अतः सार्धद्विगुणहानौ द्वासप्तत्यधिकत्रिसहस्रा आत्मप्रदेशा भवन्ति । परमार्थतोऽनन्तरोक्तरीत्या सर्वात्मप्रदेशापहारकालः किञ्चिन्न्यूनसार्धद्विगुणहानिप्रमाणो भवतीत्यपि न

विस्मर्तव्यम् । एवं सर्वा द्विगुणहानयः पञ्च कल्प्यन्ते । प्रतिद्विगुणहानौ चत्वारि स्पर्धकानि वर्गणाश्चाष्टौ कल्प्यन्ते । अत्र प्रतिद्विगुणहानौ यावत्यो वर्गणास्तावत्संख्याको गच्छो भवतीति ध्येयम् । प्रथमद्विगुणहानौ षोडशात्मप्रदेशानां, द्वितीयद्विगुणहानावष्टात्मप्रदेशानां, तृतीयद्विगुणहानौ चतुरात्मप्रदेशानां, चतुर्थद्विगुणहानौ द्वयोरात्मप्रदेशयोः, पञ्चमद्विगुणहानावेकात्मप्रदेशस्य चयः कल्प्यते ।

(१) इत्येवमत्रासत्कल्पनया स्थापनैवं भवति–

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| २५६ | २४० | २२४ | २०८ | १९२ | १७६ | १६० | १४४ |
| १२८ | १२० | ११२ | १०४ | ९६ | ८८ | ८० | ७२ |
| ६४ | ६० | ५६ | ५२ | ४८ | ४४ | ४० | ३६ |
| ३२ | ३० | २८ | २६ | २४ | २२ | २० | १८ |
| १६ | १५ | १४ | १३ | १२ | ११ | १० | ९ |

(२) अत्र प्रतिद्विगुणहानावष्टौ वर्गणाः कल्पिता इत्यत्राष्टकृत्वः प्रथमवर्गणागतात्मप्रदेशसंख्या स्थाप्यते—

२५६ २५६ २५६ २५६ २५६ २५६ २५६ २५६

(३) द्वितीयवर्गणायामेकचयः, तृतीयवर्गणायां द्वौ चयौ, चतुर्थवर्गणायां त्रिचयाः, इत्येवमन्तिमाष्टमवर्गणायां सप्त चया वृद्धिं गताः ।

(४) अथ प्रथमवर्गणागतात्मप्रदेशानामष्टकृत्वः स्थापनायां कृतायां प्रथमद्विगुणहानिगतसर्ववर्गणासु कियन्त आत्मप्रदेशा वृद्धा इति संशोधनार्थं संकलनां विधाय वृद्धिं गतास्ते आत्मप्रदेशाः प्रथमवर्गणागतात्मप्रदेशप्रमाणेन कियतीं वृद्धिं गता इति प्रदर्श्यते—

(५) प्रथमान्तिमचयसंख्याया योगे कृते १+७=८ इत्येवमष्टौ योगफलं भवति ।

(६) अत्रैकस्मिन् चये षोडशात्मप्रदेशाः कल्पिता इत्यष्टौ षोडशभिर्गुण्यन्ते ८×१६=१२८ ।

(७) अष्टाविंशत्यधिकशत (१२८) जीवप्रदेशाः प्रथमवर्गणागतषट्पञ्चाशदधिकद्विशत (२५६) जीवप्रदेशेभ्योऽर्धाः सन्ति, अर्थादर्धा प्रथमवर्गणा सन्ति ।

(८) अत्राष्टसंख्याको गच्छोऽस्तीति अर्धप्रथमवर्गणा एकन्यूनगच्छार्धेन सप्तद्विभागप्रमाणेन गुण्यते । $\frac{\text{प्रथमवर्गणा}}{२}$ × $\frac{७}{२}$ = १$\frac{३}{४}$ गुणफलम् ।

(९) अथ प्रथमद्विगुणहानावष्टौ वर्गणाः कल्पिता इत्यष्टभ्यः १$\frac{३}{४}$ इत्यस्यान्तरे कृते $\frac{८}{१}$-१$\frac{३}{४}$=६$\frac{१}{४}$ इति सपादषड्वर्गणा अन्तरफलं भवति, ताश्च वर्गणाचतुर्थभागेनाधिकाः पादोनद्विगुणहानिप्रमाणाः सन्ति ।

(१०) इत्येवं प्रतिसमयं षट्पञ्चाशदधिकद्विशतात्मप्रदेशेषु अपह्रियमाणेषु प्रथमद्विगुणहानि-

सर्ववर्गणागताः सर्वे षोडशशतप्रमाणा आत्मप्रदेशा वर्गणाचतुर्थभागेनाधिके पादोनद्विगुणहानिकालेऽपह्रियन्ते ।

(११) अथ द्वितीयद्विगुणहान्यपहारः प्रथमद्विगुणहान्यपहारकालादर्धे द्विगुणहानिश्चष्टभागकाले, तृतीयद्विगुणहान्यपहारः स्वपूर्वद्विगुणहान्यपहारकालादर्धे द्विगुणहानित्रिषोडशभागकाले, चतुर्थद्विगुणहान्यपहारः द्विगुणहानित्रिद्वात्रिंशद्भागकाले, पञ्चमद्विगुणहान्यपहारः द्विगुणहानित्रिचतुःषष्टिभागकाले भविष्यति ।

(१२) एतेषां सर्वेषां कालानां योगे कृते $\frac{३}{८}+\frac{३}{१६}+\frac{३}{३२}+\frac{३}{६४}=\frac{४५}{६४}$ इति योगफलम् । एतच्च योगफलं पूर्वोक्तहेतुना किञ्चिन्न्यूनपादोनद्विगुणहानिकालप्रमाणमस्ति ।

(१३) प्रथमद्विगुणहान्यपहारकालस्य शेषचतुर्द्विगुणहान्यपहारकालस्य च योगफलं सार्धद्विगुणहानिकालो भवति । इत्येवमसत्कल्पनया प्रतिसमयं षट्पञ्चाशदधिकद्विशतात्मप्रदेशेषु अपह्रियमाणेषु सार्धद्विगुणहानिकालेन द्विसप्तत्यधिकत्रिसहस्रात्मप्रदेशा अपह्रियन्ते ॥७२॥ अथ द्वितीयाद्विगुणहानेः प्रारभ्यान्तिमद्विगुणहानिं यावत् सर्वद्विगुणहानिमध्ये विवक्षितायाः कस्या अप्येकद्विगुणहानेः प्रथमवर्गणागतात्मप्रदेशैः प्रतिसमयमपहारे कृते सर्वात्मप्रदेशापहारः कियत्कालेन भवतीति ज्ञापनाय करणगाथामाह—

मुणह अवहारकालो एगूणिच्छिअदुगुणिअहाणिसमा ।
ठविअ दुसंखाऽण्णोण्णं गुणिअ दिवड्ढेण गुणिअव्वं ॥७३॥

(प्रे०)'मुणह' इत्यादि, प्रतिसमयं यावतिथद्विगुणहान्याः प्रथमवर्गणागतजीवप्रदेशैः सर्वात्मप्रदेशानामपहारः कर्तुमिष्यते एकन्यूनानां तावतीनां द्विगुणहानीनां तुल्यां द्विसंख्यां स्थापयित्वाऽन्योन्यं गुणयित्वा पुनः सार्धया द्विगुणहान्या गुणयितव्यम् । गुणिते यावद् गुणनफलं प्राप्यते तावद्द्विगुणहानिकालेन सर्वात्मप्रदेशानामपहारो भवति ।

अत्रासत्कल्पनया प्रदर्श्यते-प्रतिसमयं द्वादशद्विगुणहानेः प्रथमवर्गणागतात्मप्रदेशैः सर्वात्मप्रदेशानामपहारः कर्तुमिष्यते,अत एकादशकृत्वो द्विसंख्यां स्थापयित्वा साऽन्योन्यं गुणनीया भवति । तद्यथा–२×२×२×२×२×२×२×२×२×२×२=२०४८ गुणनफलम् । एतद्गुणनफलं सार्धेन द्विगुणहान्या गुणनीयं भवत्यतः २०४८×१॥=३०७२ गुणनफलं प्राप्तम् । अतः प्रतिसमयं द्वादशद्विगुणहानिप्रथमवर्गणागताऽऽत्मप्रदेशेष्वपह्रियमाणेषु द्वासप्तत्यधिकत्रिसहस्र(३०७२)द्विगुणहानिकालेन सर्वात्मप्रदेशानामपहारो भवति । द्वासप्तत्यधिकत्रिसहस्रद्विगुणहानिगतवर्गणाप्रमाणसमयेषु सर्वात्मप्रदेशानामपहारो भवतीति यावत् । यदि प्रतिसमयं पञ्चमद्विगुणहानिप्रथमवर्गणागतात्मप्रदेशैः सर्वात्मप्रदेशानामपहारः कर्तुमिष्यते,तर्हि चतुर्द्विसंख्यां स्थापयित्वा साऽन्योऽन्यं गुणनीया भवति । तद्यथा-२×२×२×२=१६ गुणनफलम् । ततः १६×१॥=२४ गुणनफलं प्राप्तम् । अतः प्रतिसमयं पञ्चमद्विगुणहानिप्रथमवर्गणागतात्मप्रदेशेष्वपह्रियमाणेषु चतुर्विंशतिद्विगुणहानिकालेन सर्वात्मप्रदेशा-

नामपहारो भवति । चतुर्विंशतिद्विगुणहानिगतवर्गणातुल्यसमयैः सर्वात्मप्रदेशानामपहारो भवतीत्यर्थः ॥७३॥

अथ प्रतिसमयं विवक्षितद्विगुणहान्याः प्रथमवर्गणागतात्मप्रदेशेष्वपह्रियमाणेषु यावता कालेन सर्वात्मप्रदेशा अपह्रियन्ते तदपेक्षया तस्या एव द्विगुणहान्या द्वितीयादिवर्गणागतात्मप्रदेशैः प्रतिसमयमपहारे क्रियमाणे कियता कालेन सर्वात्मप्रदेशा अपह्रियन्ते इति प्रतिपादयन्नाह–

होइ अवहारकालो सव्वत्थ वि पढमवग्गणाहिन्तो ।
बीआइवग्गणाणं विण्णेयो अहियअहिययरो ॥७४॥

(प्रे०) सर्वत्रापि-सर्वद्विगुणहानिमध्ये विवक्षितायाः कस्या अप्येकद्विगुणहानेः प्रथमवर्गणागतात्मप्रदेशैः प्रतिसमयमपहारे कृते यावता कालेन सर्वात्मप्रदेशानामपहारो भवति, तावत्कालात् तस्या एव द्विगुणहानेः द्वितीयादिवर्गणागतात्मप्रदेशैः प्रतिसमयमपहारे क्रियमाणे क्रमशोऽधिकाधिकतरादिकालेन सर्वात्मप्रदेशानामपहारो भवति । अर्थात् प्रथमद्विगुणहानेः प्रथमवर्गणागतात्मप्रदेशैः प्रतिसमयमपहारे कृते यावता कालेन सर्वात्मप्रदेशानामपहारो भवति तावत्कालात् प्रथमाया एव द्विगुणहान्या द्वितीयवर्गणागतात्मप्रदेशैरपहारे क्रियमाणेऽधिककालेन सर्वात्मप्रदेशानामपहारो भवति, तृतीयवर्गणागतात्मप्रदेशैरपहारे क्रियमाणेऽधिकतरकालेन भवति । एवं चतुर्थ दिवर्गणागतात्मप्रदेशप्रमाणापहारमाश्रित्यापि वक्तव्यम् । एवं द्वितीयादिद्विगुणहानिष्वपि ज्ञेयम् ।

अथासत्कल्पनया प्रदर्श्यते–प्रथमद्विगुणहानेः प्रथमवर्गणागतात्मप्रदेशैरपहारे क्रियमाणे सार्धद्विगुणहानिकालेन सर्वात्मप्रदेशानामपहारो भवतीति पूर्वं चिन्तितमिति ध्येयम् । अथ प्रथमाया एव द्विगुणहानेः द्वितीयवर्गणागतात्मप्रदेशैरपहारे क्रियमाणे प्रथमवर्गणापेक्षया प्रतिसमयं षोडशात्मप्रदेशा वर्धन्ते । यतः पूर्वमसत्कल्पनया प्रथमवर्गणायां षट्पञ्चाशदधिकद्विशतात्मप्रदेशा द्वितीयवर्गणायां च चत्वारिंशदधिकद्विशतात्मप्रदेशाः कल्पिताः । अतः प्रथमवर्गणापेक्षया द्वितीयवर्गणाप्रमाणेन प्रतिसमयं षोडशात्मप्रदेशा न्यूना अपह्रियन्ते । ततः प्रतिसमयं षोडशात्मप्रदेशा वर्धन्ते । एवं प्रतिसमयं षोडशात्मप्रदेशेषु वर्धमानेषु पञ्चदशसमयैः एका वर्गणा वर्धते । पूर्वमेकद्विगुणहानावष्टवर्गणाः कल्पिता इत्येकद्विगुणहानिरष्टसमयप्रमाणा भवति । ततश्च सार्धद्विगुणहानिः द्वादशसमयप्रमाणा भवति ।

अतो यदि पञ्चदशसमयैः एकवर्गणा वर्धते तर्हि द्वादशसमयैः कियत्यो वर्गणा वर्धन्ते इति संशोधनार्थं त्रिराशिर्विधेयः, अर्थात् द्वादशसंख्या पञ्चदशसंख्यया भाजनीया । $१२ — १५ = \frac{१२}{१५} = \frac{४}{५}$ लब्धिः । अतो द्वितीयवर्गणागतात्मप्रदेशैः प्रतिसमयमपहारे क्रियमाणे द्वादशसमयेषु अर्थात् सार्धद्विगुणहानिकाले चतुःपञ्चभाग($\frac{४}{५}$)वर्गणां विहाय सर्वात्मप्रदेशा अपहृताः, चतुःपञ्चभाग($\frac{४}{५}$)-वर्गणैवावशिष्टा । ततः सार्धद्विगुणहानिकाले चतुःपञ्चभाग($\frac{४}{५}$)वर्गणापहारकालस्य योगो विधेयः ।

अतो द्वितीयवर्गणागतात्मप्रदेशैरपहारे क्रियमाणे चतुःपञ्चभागाधिकद्वादशसमयैः सर्वात्मप्रदेशा अपह्रियन्ते । अतः प्रथमवर्गणागतात्मप्रदेशापहारकालापेक्षया द्वितीयवर्गणागतात्मप्रदेशापहारकालोऽधिकः । अथ प्रथमाया एव द्विगुणहानेस्तृतीयवर्गणाऽऽत्मप्रदेशैरपहारे क्रियमाणे प्रथमवर्गणाऽपेक्षया प्रतिसमयं द्वात्रिंशदात्मप्रदेशा वर्धन्ते, तृतीयवर्गणायां चतुर्विंशत्यधिकद्विशतात्मप्रदेशानां कल्पितत्वात् । एवं प्रतिसमय द्वात्रिंशदात्मप्रदेशेषु वर्धमानेषु सप्तसमयैरेका वर्गणा वर्धते । अतो यदि सप्तसमयैरेका वर्गणा वर्धते तर्हि द्वादशसमयैः कियत्यो वर्गणा वर्धन्ते इति संशोधनार्थं द्वादशसंख्या सप्तसंख्यया भाजनीया । तद्यथा–१२÷७= $\frac{१२}{७}$=१$\frac{५}{७}$ । अतस्तृतीयवर्गणागतात्मप्रदेशैरपहारे क्रियमाणे पञ्चसप्तभागाधिकत्रयीदशसमयैः सर्वात्मप्रदेशा अपह्रियन्ते । अतः प्रथमवर्गणागतात्मप्रदेशापहारकालापेक्षया तृतीयवर्गणागतात्मप्रदेशापहारकालोऽधिकतरः । एवं चतुर्थादिवर्गणागतात्मप्रदेशप्रमाणापहारकालमाश्रित्यापि ज्ञेयम् । एवं द्वितीयवर्गणाद्यपेक्षया तृतीयादिवर्गणानामधिकाधिकतरादिकालो वक्तव्यः । एवं तृतीयवर्गणापेक्षया चतुर्थादिवर्गणानामधिकाधिकतरादिकालो वक्तव्यः । एवं यावदुपान्त्यवर्गणातोऽन्तिमवर्गणायाः कालोऽधिको वक्तव्यः । एवं द्वितीयादिद्विगुणहानिष्वपि वक्तव्यम् ॥७४॥

तदेवमपहारद्वारं निरूपितम् । सम्प्रति प्रथमादिप्रत्येकवर्गणायां स्थिता आत्मप्रदेशाः समस्तवर्गणागतजीवप्रदेशानां कतिथे भागे भवन्तीति प्रतिपादनार्थमेकसूत्रेण भागद्वारं निरूपयन्नाह–

णेया असंखभागे समत्थवग्गणजिअप्पएसाणं ।
पढमाअ वग्गणाए जीवपएसा तहेव इयरासुं ॥७५॥ (गीतिः)

(प्रे०) 'णेया' इत्यादि, प्रथमवर्गणायां यावन्त आत्मप्रदेशाः सन्ति ते सर्वे समस्तवर्गणागतात्मप्रदेशानामसंख्याततमभागे सन्ति । 'तहेव इयरासु' इति, यथा प्रथमवगणार्गतात्मप्रदेशाः सर्ववर्गणागतात्मप्रदेशानामसंख्याततमे भागे सन्ति, तथैव द्वितीयवर्गणायाः प्रारभ्यान्तिमवर्गणां यावत् प्रत्येकवर्गणायां वर्तमाना आत्मप्रदेशाः सर्ववर्गणागतजीवप्रदेशानामसंख्याततमे भागे भवन्ति ॥७५॥

तदेवं भागद्वारं निरूपितम् । इदानीं गाथाद्विकेनाल्पबहुत्वद्वारमाह—

चरमाअ वग्गणाए जीवपएसा हवेज्ज सव्वप्पा ।
ताउ असंखेज्जगुणा पढमाए तो अपढमचरमाणं ॥७६॥ (गीतिः)
एत्तो विसेसअहिया विण्णेया वग्गणाणऽणज्जाणं ।
तत्तो अणंतिमाणं ताओ सव्वाण बोद्धव्वा ॥७७॥

(प्रे०) 'चरमाअ' इत्यादि, चरमवर्गणायां वर्तमाना जीवप्रदेशाः सर्वस्तोका भवन्ति । अत्रेयं भावना-तथास्वाभाव्यादधिकाधिकतरादिवीर्याविभागा आत्मप्रदेशाः स्तोकस्तोकतरादिप्रमाणा भवन्ति ।

चरमवर्गणायां प्रत्येकात्मप्रदेशेऽन्यसर्ववर्गणागतप्रत्येकात्मप्रदेशगतवीर्याविभागेभ्योऽधिका वीर्याविभागा भवन्ति । अतः चरमवर्गणायामात्मप्रदेशा अन्यसर्ववर्गणागतात्मप्रदेशेभ्यः स्तोका भवन्ति। 'ताउ' इत्यादि, ततः चरमवर्गणागतात्मप्रदेशेभ्यः प्रथमवर्गणायां वर्तमाना आत्मप्रदेशा असंख्यगुणा भवन्ति । प्रथमवर्गणायाः प्रारम्य चरमवर्गणां यावदात्मप्रदेशानामसंख्याता द्विगुणहानयो भवन्ति । ततः प्रथमवर्गणागतजीवप्रदेशेभ्यश्चरमवर्गणायामसंख्यगुणहीना आत्मप्रदेशा भवन्ति । ततश्चरमवर्गणागतजीवप्रदेशेभ्यः प्रथमवर्गणागतात्मप्रदेशानामसंख्यगुणत्वं समापतितम् । 'तो'इत्यादि, ततः प्रथमवर्गणागतात्मप्रदेशेभ्यः प्रथमचरमवर्गणाभ्यां विनाऽन्यसर्ववर्गणागतात्मप्रदेशा असंख्यगुणा भवन्ति । अत्रेयं भावना—प्रतिसमयं प्रथमवर्गणागतात्मप्रदेशैरपहारे क्रियमाणे सार्धद्विगुणहान्या सर्वे आत्मप्रदेशा अपह्रियन्त इति पूर्वं प्रदर्शितम् । ततः सर्ववर्गणागतात्मप्रदेशाः प्रथमवर्गणाप्रमाणेन सार्धद्विगुणहानिप्रमाणा भवन्तीति सिद्धम् । प्रथमवर्गणाप्रमाणेन सार्धद्विगुणहानिप्रमाणेभ्यो जीवप्रदेशेभ्यः प्रथमान्तिमवर्गणागतात्मप्रदेशानामन्तरे कृतेऽप्रथमान्तिमवर्गणासु प्रथमवर्गणाप्रमाणेन साधिकरूपन्यूनसार्धद्विगुणहानिप्रमाणा आत्मप्रदेशा अवस्थिताः । ततः प्रथमवर्गणागतजीवप्रदेशेभ्योऽप्रथमान्तिमवर्गणागता आत्मप्रदेशाः साधिकरूपन्यूनसार्धद्विगुणहानिगुणा भवन्ति ।

अत्रेदं बोध्यम्-प्रथमवर्गणागतात्मप्रदेशानामसंख्यगुणत्वतोऽप्रथमचरमवर्गणागतात्मप्रदेशानामसंख्यगुणत्वमसंख्यगुणं बोध्यम् । यतः प्रथमवर्गणागतात्मप्रदेशानामसंख्यगुणत्वं यावत्यो द्विगुणहानयस्तावत्प्रमाणान् द्व्यङ्कान् स्थापयित्वा परस्परं च गुणयित्वा यावद् गुणनफलं भवेत् तावत्प्रमाणतः किञ्चिन्न्यूनमस्ति, तच्चाद्धापल्योपमासंख्यातभागप्रमाणम् । अथाऽप्रथमचरमवर्गणागतात्मप्रदेशानामसंख्यातगुणत्वं किञ्चिन्न्यूनसार्धद्विगुणहानिवर्गणागुणमस्ति । किञ्चिन्न्यूनसार्धद्विगुणहानिवर्गणाः श्रेण्यसंख्यातभागप्रमाणाः सन्ति । पल्योपमासंख्यातभागापेक्षया श्रेण्यसंख्यातभागोऽसंख्यगुणो भवति । अतः प्रथमवर्गणागतात्मप्रदेशानामसंख्यगुणत्वापेक्षयाऽप्रथमचरमवर्गणागतात्मप्रदेशानामसंख्यातगुणत्वमसंख्यगुणं भवति । इति प्रथमगाथार्थः ।

अथ द्वितीया गाथा व्याख्यायते—'एत्तो' इत्यादि, अप्रथमचरमवर्गणागतात्मप्रदेशेभ्यः अनाद्यन्तां-प्रथमवर्गणामन्तराऽन्यसर्ववर्गणानामात्मप्रदेशा विशेषाधिकाः । अत्र चरमवर्गणायाः समावेशात् चरमवर्गणायां यावन्तो जीवप्रदेशास्तावन्तोऽधिका भवन्ति । 'तत्तो' इत्यादि, अप्रथमवर्गणागतजीवप्रदेशेभ्यः अचरमाणां-चरमवर्गणां विहायान्यसर्ववर्गणानामात्मप्रदेशा विशेषाधिका भवन्ति । अत्र प्रथमवर्गणायाः समावेशादन्तिमवर्गणायाश्च निर्गमनाच्चरमवर्गणागतात्मप्रदेशन्यूनप्रथमवर्गणागतात्मप्रदेशा वृद्धाः । 'ताओ' इत्यादि, अचरमवर्गणागतात्मप्रदेशेभ्यः सर्ववर्गणागतात्मप्रदेशा विशेषाधिकाः, चरमवर्गणायाः प्रवेशात् ॥७६।७७॥ तदेवं वर्गणाप्ररूपणायां सत्पदादिपदद्वारं प्रतिपादितानि । साम्प्रति वर्गणाप्ररूपणायामेव वीर्याविभागविषयकनिरूपणं चिकीर्षुः स्थानकल्पकं वर्गवर्गणास्वरूपं प्रदर्शयन्नाह—

वग्गो भवे समूहो एगप्पपएसवीरियाणूणं ।
सरिमाविभागजीवपएसोहो वग्गणा णेया ॥७८॥

(प्रे०) 'वग्गो' इत्यादि, एकस्मिन्नात्मप्रदेशे स्थितानां वीर्याविभागानां समुदायो वर्गः भवति । 'सरिसा' इत्यादि, सदृशाः-समानसंख्याका अविभागा येषु ते सदृशाविभागा जीवप्रदेशाः, तेषामोघः-समुदायः वर्गणा ज्ञेया ॥७८॥

सम्प्रति विवक्षितैकस्पर्धकगतवर्गणासु वीर्याविभागानामल्पबहुत्वं निरूपयति—

पढमाअ वग्गणाए अविभागा वीरियस्स सव्वहिया ।
तत्तो विसेसहीणा कमसो जा वग्गणा चरमा ॥७९॥

(प्रे०) 'पढमाअ' इत्यादि, विवक्षितस्पर्द्धकस्य यावत्यो वर्गणास्तासु प्रथमायां वर्गणायां वीर्याविभागाः सर्वाधिकाः । ततो द्वितीयवर्गणायाः प्रारभ्यान्तिमवर्गणां यावत् प्रत्येकवर्गणायां वीर्याविभागा अनुक्रमेण स्वानन्तरपूर्वपूर्ववर्गणागतवीर्याविभागेभ्यो विशेषहीना भवन्ति । प्रथमवर्गणागतवीर्याविभागेभ्यो द्वितीयवर्गणागतवीर्याविभागा विशेषहीनाः, द्वितीयवर्गणागतवीर्याविभागेभ्यस्तृतीयवर्गणागतवीर्याविभागा विशेषहीना इत्येवं क्रमशश्चरमवर्गणां यावत् प्रत्येकवर्गणायां सर्ववीर्याविभागाः स्वपूर्ववर्तिवर्गणागतवीर्याविभागेभ्यो विशेषहीना भवन्ति ।

अत्रेयं भावना—पूर्ववर्गणापेक्षयोत्तरवर्गणायामात्मप्रदेशा एकचयेन हीना भवन्ति, ततः पूर्ववर्गः एकचयगतात्मप्रदेशैर्गुणनीयः, गुणिते यावद् गुणनफलं तावत्प्रमाणा वीर्याविभागा न्यूना भवन्ति; तथा प्रतिप्रदेशमेको वीर्याविभागो वर्धते । अत उत्तरवर्गणागतात्मप्रदेशन्यूनपूर्वोक्तप्रमाणैर्हीना वीर्याविभागा उत्तरवर्गणायां भवन्ति । चयो नाम पूर्वपूर्वस्थानत उत्तरोत्तरस्थाने समसङ्ख्याका हानिर्वृद्धिर्वा । अत्र तु आत्मप्रदेशानां हानिरूपचयोऽस्ति । पूर्ववर्गणापेक्षयोत्तरवर्गणायां न्यूनत्वे स्थापनैवम्-(पूर्ववर्गः×चयः)-उत्तरवर्गणागतात्मप्रदेशराशिः ।

अत्र गणितप्रक्रियैवम्-[चयः×प्रथमवर्गाविभागाः]-[द्वितीयवर्गणाजीवप्रदेशाः×१] इत्येवं चयं प्रथमवर्गाविभागैर्गुणयित्वा समागतगुणनफलाद् द्वितीयवर्गणागतजीवप्रदेशानां विश्लेषे कृते यावन्तो वीर्याविभागा अवतिष्ठन्ते तावन्तो वीर्याविभागा द्वितीयवर्गणायां प्रथमवर्गणागतवीर्याविभागेभ्यो न्यूना भवन्ति । तथा [चयः×द्वितीयवर्गवीर्याविभागाः]-[तृतीयवर्गणाजीवप्रदेशाः×१] इत्येवं चयं द्वितीयवर्गाविभागैर्गुणयित्वा प्राप्तगुणनफलात् तृतीयवर्गणागतजीवप्रदेशानां विश्लेषे कृते यावन्तो वीर्याविभागा अवशिष्यन्ते तावन्तो वीर्याविभागास्तृतीयवर्गणायां द्वितीयवर्गणागतवीर्याविभागेभ्यो न्यूना भवन्ति इत्येवं विवक्षितस्पर्द्धकचरमवर्गणां यावद् वक्तव्यम् ।

अत्रासत्कल्पनयैवम्-पूर्वम् 'आइमवग्गणजीवपएस' इति गाथायामेकद्विगुणहानिस्थाने चत्वारि स्पर्धकानि अष्टौ च वर्गणाः कल्पिता इत्यत्र द्विवर्गणयोरेकं स्पर्द्धकं कल्प्यते । प्रथम-

वर्गणायां षट्पञ्चाशदधिकद्विशतात्मप्रदेशा द्वितीयवर्गणायां च चत्वारिंशदधिकद्विशतात्मप्रदेशाः कल्प्यन्ते। प्रत्यात्मप्रदेशे प्रथमवर्गणायां लक्षवीर्याविभागा द्वितीयवर्गणायां चैकाधिकलक्षवीर्याविभागाः कल्प्यन्ते। अतः [षोडशप्रमाणश्रय:×प्रथमवर्गगतलक्षवीर्याविभागाः)-द्वितीयवर्गणागतचत्वारिंशदधिकद्विशतजीवप्रदेशाः×१] इत्येवं षोडशलक्षेण गुणिताः षोडशलक्षवीर्याविभागा जाताः,तेभ्यश्चत्वारिंशदधिकद्विशतवीर्याविभागानां विश्लेषे कृते चत्वारिंशदधिकद्विशतन्यूनषोडशलक्षवीर्याविभागा अवशिष्टाः। अतः प्रथमवर्गणागतवीर्यविभागेभ्यो द्वितीयवर्गणायां चत्वारिंशदधिकद्विशतन्यूनषोडशलक्षवीर्याविभागा न्यूना भवन्ति। यद्यप्यत्रासत्कल्पनायामेकस्मिन् स्पर्धके द्वे एव वर्गणे कल्पिते इति द्वितीयवर्गणातस्तृतीयवर्गणायां कियन्तो वीर्याविभागा न्यूना भवन्तीति वक्तुं न शक्यते, तथापि सत्प्ररूपणायामेकस्मिन् स्पर्धकेऽसंख्यातवर्गणानां सत्त्वात् तत्रोपयुक्तरीत्या विशेषहीनत्वं परिभावनीयम्।

अत्रायं विवेको विधेयः—पूर्वं "प्रथमाया जघन्यवर्गणातो ये एकेन वीर्याविभागेनाधिका असंख्यातप्रतरप्रदेशराशिप्रमाणा जीवप्रदेशास्तेषां समुदायो द्वितीयवर्गणा" इत्यादिना प्रथमादिवर्गणातो द्वितीयादिवर्गणायामनुक्रमेणैकैकवीर्याणोरधिकत्वं यन्निरूपितम् तत्, प्रत्येकप्रदेशमाश्रित्य निरूपितम्। अत्र तु विशेषहीनत्वं सर्वप्रदेशानाश्रित्य निरूपितम्। यदि वर्गणागतं प्रत्येकजीवप्रदेशमाश्रित्य वीर्याविभागाश्चिन्त्यन्ते तदा पूर्ववर्गणायां प्रत्येकजीवप्रदेशे यावन्तो वीर्याविभागा भवन्ति तेभ्योऽव्यवहितोत्तरवर्गणायां प्रत्येकजीवप्रदेशे एको वीर्याणुरधिको भवति। यदि वर्गणागतान् सर्वप्रदेशानाश्रित्य वीर्याविभागाश्चिन्त्यन्ते तदा पूर्ववर्गणायां सर्वात्मप्रदेशानां समुदिता यावन्तो वीर्याविभागा भवन्ति तेभ्योऽव्यवहितोत्तरवर्गणायां सर्वात्मप्रदेशानां समुदिता वीर्याविभागाः पूर्वोक्तरीत्या विशेषहीना भवन्ति ॥७९॥

इदानीं प्रथमादिस्पर्धकस्य चरमवर्गणागतवीर्याविभागेभ्यो द्वितीयादिस्पर्धकस्य प्रथमवर्गणायां वीर्याविभागाः कियन्तो भवन्तीति प्रतिपादयति—

**पढमाइफड्डगचरमवग्गणओऽज्जा जहुत्तरस्स भवे।**
**कमसो किंचूणा खलु दुगुणिअदुतिआइभागहिया ॥८०॥**

(प्रे०) 'पढमाइ' इत्यादि, प्रथमादिस्पर्धकस्य चरमवर्गणातः—चरमवर्गणागतवीर्याविभागेभ्यो यथोत्तरं द्वितीयादेः स्पर्धकस्य प्रथमा वर्गणा, प्रथमवर्गणागतवीर्याविभागा इत्यर्थः, क्रमशः किञ्चिन्न्यूनद्विगुण-द्वि-त्रि-चतुर्थादिभागेनाधिका भवन्ति। अत्रेदं तात्पर्यम्—प्रथमस्पर्धकचरमवर्गणागतवीर्याविभागेभ्यो द्वितीयस्पर्धकप्रथमवर्गणायां वीर्याविभागाः किञ्चिन्न्यूनद्विगुणा भवन्ति। द्वितीयस्पर्धकचरमवर्गणागतवीर्याविभागेभ्यस्तृतीयस्पर्धकप्रथमवर्गणायां वीर्याविभागाः किञ्चिन्न्यूनद्विभागेनाधिका भवन्ति। तृतीयस्पर्धकचरमवर्गणागतवीर्याविभागेभ्यश्चतुर्थस्पर्धकप्रथमवर्गणायां वीर्याविभागाः किञ्चिन्न्यूनत्रिभागेनाधिका भवन्ति। चतुर्थस्पर्धकचरमवर्गणागतवीर्याविभागेभ्यः

पञ्चमस्पर्धकप्रथमवर्गणागतवीर्याविभागाः किञ्चिन्न्यूनचतुर्थभागेनाधिका भवन्ति । इत्येवमेकैकभाग-वृद्ध्या चरमस्पर्धकाद्यवर्गणां यावद् वक्तव्यम् ।

एतदेवासत्कल्पनया प्रदर्श्यते अत्र द्विवर्गणयोरेकं स्पर्धकं कल्पितम् । प्रथमस्पर्धकचरम-वर्गणायां चत्वारिंशदधिकद्विशतात्मप्रदेशाः, प्रत्यात्मप्रदेशे एकाधिकलक्षवीर्याविभागाश्च कल्प्यन्ते । द्वितीयस्पर्धकप्रथमवर्गणायां चतुर्विंशत्यधिकद्विशतात्मप्रदेशाः, प्रत्यात्मप्रदेशे द्विलक्षवीर्याविभागाश्च कल्प्यन्ते । अतः [२४०×१००००१=२४०००२४०] प्रथमस्पर्धकचरमवर्गणायां चत्वारिंशद-धिकद्विशतोत्तरचत्वारिंशदधिकद्विशतलक्षवीर्याविभागाः प्राप्ताः । एवम् [२२४×२०००००= ४४८०००००] द्वितीयस्पर्धकप्रथमवर्गणायामष्टचत्वारिंशदधिकचतुःशतलक्षवीर्याविभागाः प्राप्ताः । चत्वारिंशदधिकद्विशतोत्तरचत्वारिंशदधिकद्विशतलक्षवीर्याविभागेभ्योऽष्टचत्वारिंशदधिकचतुःशतल-क्षवीर्याविभागाः किञ्चिन्न्यूना द्विगुणा भवन्ति । अथ द्वितीयस्पर्धकचरमवर्गणायामष्टोत्तरद्विशतात्म-प्रदेशाः, प्रत्यात्मप्रदेशे एकाधिकद्विलक्षवीर्याविभागाः कल्प्यन्ते । अतः [२०८×२००००१= ४१६००२०८] द्वितीयस्पर्धकचरमवर्गणायामष्टोत्तरद्विशताधिकषोडशोत्तरचतुःशतलक्षवीर्याविभागाः प्राप्ताः । तृतीयस्पर्धकप्रथमवर्गणायां द्विनवत्यधिकैकशतात्मप्रदेशाः, प्रत्यात्मप्रदेशे त्रिलक्षवीर्या-विभागाः कल्प्यन्ते । अतः (१९२×३००००००=५७६००००००) तृतीयस्पर्धकप्रथमवर्गणायां षट्सप्तत्यधिकपञ्चशतलक्षवीर्याविभागा लब्धाः । अष्टोत्तरद्विशताधिकषोडशोत्तरचतुःशतलक्षवीर्या-विभागेभ्यः षट्सप्तत्यधिकपञ्चशतलक्षवीर्याविभागाः किञ्चिन्न्यूनद्विभागेनाधिका भवन्ति । इत्येवं तृतीयादिस्पर्धकचरमवर्गणागतवीर्याविभागेभ्यश्चतुर्थादिस्पर्धकप्रथमवर्गणागतवीर्याविभागानां त्रिभागा-दिनाऽधिकत्वमपि परिभावनीयम् ।

अत्र कश्चिदाह-ननु कस्य स्पर्धकस्य चरमवर्गणागतवीर्याविभागेभ्यः कस्य स्पर्धकस्य प्रथमवर्गणायां वीर्याविभागा जघन्यपरित्तासंख्यातभागेनाधिका भवन्ति ? अत्र प्रतिविधीयते, जघन्यपरित्तासंख्याततमस्पर्धकस्य चरमवर्गणागतवीर्याविभागेभ्यस्तदव्यवहितोत्तरस्पर्धकप्रथमवर्ग-णायां वीर्याविभागा जघन्यपरित्तासंख्याततमभागेनाधिका भवन्ति । यतो द्वितीयस्पर्धकचरम-वर्गणागतवीर्याविभागेभ्यस्तृतीयस्पर्धकप्रथमवर्गणायां द्विभागेनाधिकाः, तृतीयस्पर्धकचरमवर्गणा-गतवीर्याविभागेभ्यश्चतुर्थस्पर्धकप्रथमवर्गणायां त्रिभागेनाधिकाः, चतुर्थस्पर्धकचरमवर्गणागतवीर्या-विभागेभ्यः पञ्चमस्पर्धकप्रथमवर्गणायां चतुर्भागेनाधिका वीर्याविभागा भवन्ति ।

इत्येवं यावतिथस्पर्धकस्य चरमवर्गणागतवीर्याविभागेभ्योऽव्यवहितोत्तरस्पर्धकप्रथमवर्गणायां वीर्याविभागाः कियन्तोऽधिका भवन्तीति ज्ञातुमिष्यते तावतिथस्पर्धकस्य चरमवर्गणागतवीर्याविभागे-भ्योऽव्यवहितोत्तरस्पर्धकप्रथमवर्गणायां वीर्याविभागास्तावतिथभागेनाधिका भवन्ति । अतो जघन्य-

परित्तासंख्याततमस्पर्धकस्य चरमवर्गणागतवीर्याविभागेभ्यो जघन्यपरित्तासंख्याततमस्पर्धकादव्यवहितोत्तरस्य स्पर्धकस्य प्रथमवर्गणायां वीर्याविभागाः किञ्चिन्न्यूनजघन्यपरित्तासंख्याततमभागेनाधिका भवन्ति । अत्र सर्वत्र किञ्चिन्न्यूनत्वं बोध्यम् ।

ननु 'पढमाअ वग्गणाए' इत्याद्यनन्तरगाथायां पूर्वपूर्ववर्गणातोऽव्यवहितोत्तरवर्गणायां वीर्याविभागा विशेषहीना भवन्तीति प्रतिपादितम्, अतः प्रथमादिस्पर्धकचरमवर्गणागतवीर्याविभागेभ्यो द्वितीयादिस्पर्धकप्रथमवर्गणागतवीर्याविभागानां विशेषहीनत्वं समुपपद्यते, तत्कथं किञ्चिन्न्यूनद्विगुणद्वित्रिभागादिनाधिका निरूप्यन्ते ? इति चेद्, प्रतिविधीयते, अनन्तरगाथायां पूर्वपूर्ववर्गणातोऽव्यवहितोत्तरवर्गणायां वीर्याविभागानां विशेषहीनत्वं यन्निरूपितं तद् विवक्षितं किमप्येकं स्पर्धकमाश्रित्य निरूपितम्, न तु भिन्नस्पर्धकमाश्रित्य । अत्र तु भिन्नस्पर्धकमाश्रित्य निरूप्यते । भिन्नस्पर्धकमाश्रित्योक्तनिरूपणं सुखेनोपपद्यते, यतो विवक्षितस्पर्धकचरमवर्गणातस्तदव्यवहितोत्तरस्पर्धकप्रथमवर्गणायां प्रत्यात्मप्रदेशेऽसंख्यलोकाकाशप्रदेशप्रमाणा वीर्याविभागा अधिका भवन्ति, यतो विवक्षितस्पर्धकचरमवर्गणातस्तदव्यवहितोत्तरस्पर्धकप्रथमवर्गणायामात्मप्रदेशा एकेन वीर्याविभागेनाधिका न प्राप्यन्ते, द्विवीर्याविभागाभ्यामधिका न प्राप्यन्ते, त्रिवीर्याविभागैरधिका न प्राप्यन्ते, यावत् संख्येयैर्वीर्याविभागैरधिका अपि न प्राप्यन्ते, अपि तु असंख्यलोकाकाशप्रदेशप्रमाणैरसंख्यातैर्वीर्याविभागैरभ्यधिका आत्मप्रदेशाः प्राप्यन्ते । यदि एकमेव स्पर्धकमाश्रित्य चिन्त्यते तदा पूर्वपूर्ववर्गणातोऽव्यवहितोत्तरोत्तरवर्गणायां प्रत्यात्मप्रदेशे एक एव वीर्याविभागो वर्धते । अत एवात्रासत्कल्पनायां प्रथमस्पर्धकचरमवर्गणायां प्रत्यात्मप्रदेशे एकाधिकलक्षवीर्याविभागाः कल्पिताः, तथा द्वितीयस्पर्धकप्रथमवर्गणायां प्रत्यात्मप्रदेशे द्विलक्षवीर्याविभागाः कल्पिताः । यदि सर्ववर्गणास्वनन्तरपूर्ववर्गणात एकेनैव वीर्याविभागेनाधिका आत्मप्रदेशाः प्राप्येरन् तदा स्पर्धकनिष्पत्त्यभावः स्यात् ॥८०॥ तदेवं वर्गणाद्वारं निरूपितम् । सम्प्रति क्रमप्राप्तं स्पर्धकद्वारं तथा स्पर्धकनिरूपणेऽन्तरनिरूपणस्याप्यावश्यकत्वादन्तरद्वारमपि निरूपयितुकामो गाथाद्विकमाह—

**सेढिअसंखियभागो एगुत्तरवड्ढिवग्गणाणं भवे ।**
**फड्डगमज्जं तत्तो ण हवेज्ज असंखिया लोगा ॥८१॥**
**तो फड्डगं तु बीअं एगुत्तरवड्ढिवग्गणाहि भवे ।**
**तो अतरं तओ उण तइआई फड्डगेमेव ॥८२॥**

(प्रे०) '**सेढिअसंखियभागो**' इत्यादि, एकोत्तरा वृद्धिर्यासु ता एकोत्तरवृद्धयः, अत्रैकोत्तरा वृद्धिः प्रत्यात्मप्रदेशे वीर्याविभागानां भवतीति न विस्मर्तव्यम्, एकोत्तरवृद्धयश्च ता वर्गणाश्चेति एकोत्तरवृद्धिवर्गणाः, एकोत्तरवृद्धिवर्गणानां श्रेण्यसंख्याततमभाग आद्यं स्पर्धकं भवेत् ।

क्रमश एकैकवीर्याविभागाधिकात्मप्रदेशानां श्रेण्यसंख्यभागप्रमाणानां वर्गणानामाद्यं स्पर्धकमिति भवति। अत्रेदं तात्पर्यम्—पूर्वं वर्गणानिरूपणे 'सव्वप्पवीरियाणं' इत्यादिगाथायां सर्वाल्पवीर्याविभागानां जीवप्रदेशानां प्रथमा वर्गणा, तत एकेन वीर्याविभागेनाधिकानामात्मप्रदेशानां द्वितीया वर्गणा, तत एकेन वीर्याविभागेनाधिकानामात्मप्रदेशानां तृतीया वर्गणा, इत्येवं द्वितीयादिवर्गणासु प्रत्यात्मप्रदेशे स्वानन्तरपूर्ववर्गणापेक्षया क्रमश एकैकवीर्याविभागोऽधिको भवति, ततो वर्गणा अपि एकोत्तरवृद्धय उत्पन्ते। एकोत्तरवृद्धय एता वर्गणा यदा श्रेण्यसंख्यातभागप्रमाणा भवन्ति तदा प्रथमं स्पर्धकं भवति।

इदानीमन्तरं निरूपयति-'तत्तो' इत्यादि, ततः-प्रथमस्पर्धकात्, प्रथमस्पर्धकचरमवर्गणाया इत्यर्थः, एकेन वीर्याविभागेनाभ्यधिका आत्मप्रदेशा न प्राप्यन्ते, नापि द्वाभ्यां वीर्याविभागाभ्यां, नापि त्रिभिर्वीर्याविभागैः, नापि चतुर्भिर्वीर्याविभागैः, यावन्नापि संख्यातैर्वीर्याविभागैः, किन्त्वसंख्यातानां लोकानां यावन्त आकाशप्रदेशास्तावत्प्रमाणैरसंख्यातैर्वीर्याविभागैरधिका आत्मप्रदेशाः प्राप्यन्ते। अतः स्पर्धकद्वयमध्येऽसंख्यलोकाकाशप्रदेशप्रमाणवीर्याविभागानामन्तरं भवति।

अथ द्वितीयादिस्पर्धकं निरूपयन्नाह—'तो फड्डगं' इत्यादि, ततः, स्पर्धकद्वयान्तरस्य पश्चादित्यर्थः, एकोत्तरवृद्धिवर्गणाभिः श्रेण्यसंख्यातभागप्रमाणाभिर्द्वितीय स्पर्धकं भवेत्। अत्रायं स्पष्टार्थः-अनन्तरं स्पर्धकद्वयमध्येऽसंख्यलोकाकाशप्रदेशप्रमाणवीर्याविभागानामन्तरं निरूपितम्। अतः प्रथमस्पर्धकचरमवर्गणातोऽसंख्येयलोकाकाशप्रदेशप्रमाणैरेव वीर्याविभागैरधिका आत्मप्रदेशाः प्राप्यन्ते। अतः प्रथमस्पर्धकचरमवर्गणातोऽसंख्येयलोकाकाशप्रदेशप्रमाणवीर्याविभागैरभ्यधिकानामात्मप्रदेशानां समुदायः द्वितीयस्पर्धकस्य प्रथमा वर्गणा। तत एकेन वीर्याविभागेनाधिकानामात्मप्रदेशानां समुदायो द्वितीया वर्गणा। द्वाभ्यां वीर्याविभागाभ्यामधिकानामात्मप्रदेशानां समुदायस्तृतीया वर्गणा। त्रिभिर्वीर्याविभागैरधिकानामात्मप्रदेशानां समुदायश्चतुर्थी वर्गणा। एवं क्रमश एकैकवीर्याविभागवृद्धया निरन्तरं वर्धमानानामात्मप्रदेशानां श्रेण्यसंख्येयभागप्रमाणा असंख्येया वर्गणा वक्तव्याः। श्रेण्यसंख्यातभागप्रमाणानां तासां वर्गणानां द्वितीयं स्पर्धकं भवेत्। 'तत्तो अंतरं' इति, ततः द्वितीयस्पर्धकचरमवर्गणायाः पूर्वोक्तवदसंख्येयलोकाकाशप्रदेशप्रमाणानां वीर्याविभागानामन्तरं भवति। 'तओ' इत्यादि, द्वितीयस्पर्धकचरमवर्गणाया असंख्यलोकाकाशप्रदेशप्रमाणवीर्याविभागैरभ्यधिकानामात्मप्रदेशानां तृतीयस्पर्धकस्य प्रथमवर्गणा। ततः पूर्वोक्तवत् क्रमश एकैकवीर्याविभागवृद्धया निरन्तरं वर्धमानानामात्मप्रदेशानां श्रेण्यसंख्यातभागप्रमाणा वर्गणा भवन्ति। तासां समुदायस्तृतीयं स्पर्धकम्। ततः पुनः पूर्वोक्तप्रमाणमन्तरम्। ततः पुनः पूर्वोक्तवत् चतुर्थं स्पर्धकं भवति। ततः पुनरन्तरम्। ततः पुनः पञ्चमं स्पर्धकम्। इत्येवं श्रेण्यसंख्यातभागप्रमाणानि असंख्येयानि स्पर्धकानि भवन्ति ॥८१-८२॥

तदेवं स्पर्धकद्वारमन्तरद्वारं च निरूपितम् । इदानीं स्थानद्वारं व्याचिख्यासुरादौ तावत् स्थानप्ररूपणा कया रीत्या क्रियते इति निरूपयति—

अहिकिच्च फड्डगाई जीवा ठाणे परूवणा दुविहा ।
दोण्हं पि वग्गणव्व छ दारा जीवासिआ ठप्पा ॥८३॥

(प्रे०) 'अहिकिच्च' इत्यादि, स्थानद्वारे स्पर्धकादीन्यधिकृत्य जीवानधिकृत्य चेति द्विविधा प्ररूपणा करिष्यते । 'दोण्हं पि' इत्यादि, द्विविधाया अपि प्ररूपणाया वर्गणानिरूपणावत् षड् द्वाराणि सन्ति । तद्यथा—सत्पदप्रमाणश्रेण्यपहारभागाल्पबहुत्वानि । 'जीवासिआ ठप्पा' इति, जीवाश्रिता प्ररूपणा स्थाप्या, सर्वपश्चात् करिष्यते इत्यर्थः । इदमुक्तं भवति—स्थानद्वारे आदौ स्पर्धकादीन्यधिकृत्य सत्पदादिषड्द्वाराणि चिन्तयिष्यन्ते । ततः 'जोगट्ठाणदुगारे' इत्यादिगाथाप्रदर्शितानि वृद्धिसमयाल्पबहुत्वद्वाराण्यनुक्रमेण निरूपयिष्यन्ते । ततो जीवानधिकृत्य सत्पदादिषड्द्वाराणि प्ररूपयिष्यन्ते । क्रमेण निरूपणे क्रियमाणे तु स्पर्धकादीन्यधिकृत्य षड्द्वारनिरूपणाऽनन्तरं जीवानधिकृत्य सत्पदादिषड्द्वारनिरूपणं कर्तव्यं भवेदतोऽत्रोक्तं 'छ दारा जीवासिआ ठप्पा' इति ॥८३॥ इदानीं सत्पदद्वारं निरूपयन्नाह—

ते सेढिअसंखंसो लहुठाणं होइ विग्गहऽजखणे ।
सव्वप्पवीरियाणं लद्धिअपज्जत्तसुहुमाणं ॥८४॥

(प्रे०) 'ते' इत्यादि, श्रेण्यसंख्यातभागप्रमाणानि स्पर्धकानि जघन्यं योगस्थानं भवति, अर्थात् श्रेण्यसंख्यातभागप्रमाणैः स्पर्धकैर्जघन्यं योगस्थानं भवति । इदं जघन्ययोगस्थानं केषां जीवानां कदा भवतीत्याशङ्कायामाह—'विग्गहऽजखणे' इत्यादि, सर्वाल्पवीर्याणां लब्ध्यपर्याप्तसूक्ष्मजीवानां विग्रहगतौ प्रथमसमये भवति । अनेन योगस्थानसत्ता दर्शिता ॥८४॥ सम्प्रति क्रमप्राप्तं प्रमाणद्वारं निरूपयति—

तत्तो अहियअहिययरविरियाण बिआइजोगठाणाणि ।
भागो असंखिययमो सेढीए ताणि सव्वाणि ॥८५॥

(प्रे०) 'तत्तो' इत्यादि, सर्वाल्पवीर्यात् सूक्ष्मलब्ध्यपर्याप्तादधिकाधिकतरवीर्याणां जीवानां क्रमशो द्वितीयादियोगस्थानानि भवन्ति । अयमत्र भावः—सर्वाल्पवीर्यजीवादधिकवीर्यस्य जीवस्य सर्वाल्पवीर्यविभागयुक्तात्मप्रदेशानां समुदायो जघन्यवर्गणा । एकेन वीर्यविभागेनाभ्यधिकानां जीवप्रदेशानां समुदायो द्वितीया वर्गणा । द्वाभ्यां वीर्यविभागाभ्यामभ्यधिकानामात्मप्रदेशानां समुदायस्तृतीया वर्गणा । त्रिभिर्वीर्यविभागैरभ्यधिकानामात्मप्रदेशानां समुदायश्चतुर्थी वर्गणा । एवं क्रमश एकैकवीर्यविभागेनाभ्यधिकानां जीवप्रदेशानां समुदायस्य पञ्चम्यादयो वर्गणास्तावद् वाच्याः याव-

श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा भवेयुः । तासां समुदाय एकं स्पर्धकम् । ततः एकेन वीर्याविभागेनाभ्यधिका आत्मप्रदेशा न प्राप्यन्ते, नापि द्वाभ्याम्, नापि त्रिचतुःपञ्चादिभिः, यावन्नापि संख्यातैः, अपि त्वसंख्येयलोकाकाशप्रदेशप्रमाणवीर्याविभागैरभ्यधिका जीवप्रदेशाः प्राप्यन्ते । तेषां समुदायो द्वितीयस्पर्धकस्य प्रथमा वर्गणा । तदनन्तरं पूर्वोक्तवर्गणाप्रकारेण द्वितीयाद्यो वर्गणा अपि श्रेण्यसंख्यातभागप्रमाणा वक्तव्याः । तासां समुदायो द्वितीयं स्पर्धकम् । एवं जघन्ययोगस्थानप्रदर्शितप्रकारेण तृतीयादीनि स्पर्धकान्यपि श्रेण्यसंख्यातभागप्रमाणानि वक्तव्यानि । तेषां समुदायो द्वितीयं योगस्थानकम् ।

ततोऽन्यस्याधिकतरवीर्यस्य जीवस्य प्रदर्शितप्रकारेण तृतीयं योगस्थानं वक्तव्यम् । एवं प्रकारेणान्यान्यजीवापेक्षयाऽधिकाधिकवीर्याणामन्येषां जीवानामपि तावद् योगस्थानानि वाच्यानि यावत्सर्वोत्कृष्टं योगस्थानं भवेत् । नन्वेवमुत्कृष्टयोगस्थानं यावत् कियन्ति योगस्थानानि भवन्तीति जिज्ञासायामाह–'भागो असंखियथमो' इत्यादि , जघन्ययोगस्थानादारभ्योत्कृष्टयोगस्थानं यावत् सर्वाणि योगस्थानानि श्रेण्यसंख्यातभागप्रमाणानि भवन्ति ॥८५॥ इदानीं प्रसङ्गाद् गाथाद्विकेन जघन्ययोगस्थानगतवर्गणासु वीर्याविभागमाश्रित्याल्पबहुत्वमाह—

पढमाअ वग्गणाए सव्वप्पा हुन्ति वीरियविभागा ।
ताउ असंखेज्जगुणा चरमाए तो अपढमचरमाणं ॥८६॥ (गोनिः)
एत्तो विसेसअहिया अणंतिमाणऽत्थि वग्गणाण तओ ।
होअन्ति अपढमाणं तत्तो सव्वाण बोद्धव्वा ॥८७॥

(प्रे०) 'पढमाअ' इत्यादि, अस्मिन् गाथाद्विके वक्ष्यमाणचरमादिवर्गणागतवीर्याविभागेभ्यः प्रथमवर्गणायां समुदिता वीर्याविभागाः सर्वस्तोकाः । 'ताउ' इत्यादि,ततः प्रथमवर्गणागतवीर्याविभागेभ्यश्चरमवर्गणायां वीर्याविभागा असंख्यगुणा भवन्ति । अत्र गुणकारः श्रेण्यसंख्यातभागो ज्ञातव्यः । ननु श्रेण्यसंख्यातभागस्यानेकभेदभिन्नत्वात् श्रेण्यसंख्यातभागः कियत्प्रमाणो ग्राह्यः ? उच्यते, स्पर्धकसंख्याऽसंख्यातभागप्रमाण इति । ननु प्रथमवर्गणायां प्रत्यात्मप्रदेशं यावन्तो वीर्याविभागास्तेभ्यश्चरमवर्गणायां प्रत्यात्मप्रदेशं वीर्याविभागाः स्पर्धकसंख्याप्रमाणाऽसंख्यगुणा भवन्ति, प्रतिस्पर्धकं प्रत्येकात्मप्रदेशेऽसंख्यवीर्याविभागानां वर्धमानत्वात् , अतोऽत्र श्रेण्यसंख्यातभागः स्पर्धकसंख्याप्रमाणो वक्तव्यः, तत्कथं स्पर्धकसंख्याऽसंख्यातभागप्रमाण उक्तः ? इति चेद् , न, अत्र प्रथमवर्गणायां प्रत्यात्मप्रदेशगतवीर्याविभागेभ्यश्चरमवर्गणायां प्रत्यात्मप्रदेशं वीर्याविभागाः कियन्तो भवन्तीति न चिन्त्यते, अपि तु प्रथमवर्गणायां समस्तात्मप्रदेशगतवीर्याविभागेभ्यश्चरमवर्गणायां सकलात्मप्रदेशानां समुदिता वीर्याविभागाः कियन्तो भवन्तीति चिन्त्यते । अतः प्रथमवर्गणाऽपेक्षया चरमवर्गणायां जीवप्रदेशाः कियन्तो भवन्तीत्यपि चिन्तनीयं भवति ।प्रथमवर्गणापेक्षया चरम-

वर्गणायां जीवप्रदेशा असंख्यगुणहीना भवन्ति । अत्रासंख्येयत्वं पल्योपमासंख्यातभागप्रमाणं बोध्यम् । अत्र पल्योपमासंख्यातभागो जघन्ययोगस्थाने यावन्ति द्विगुणहानिस्थानानि तावद्वारं द्व्यङ्कं विन्यस्य परस्परं गुणने कृते यावद् गुणनफलं किञ्चिदून्यूनतावत्प्रमाणो बोध्यः । प्राप्तगुणनफलेन स्पर्धकसंख्यायां भाजितायां यावल्लब्धिस्तावद्गुणा वीर्याविभागाः प्रथमवर्गणागतसमुदितवीर्याविभागेभ्यश्चरमवर्गणायां समुदिता भवन्ति,इत्यत्र गुणकारः स्पर्धकसंख्याऽसंख्यातभागप्रमाणो भवति, न तु स्पर्धकसंख्याप्रमाणः ।

तदसत्कल्पनामाश्रित्य प्रदर्श्यते-जघन्ययोगस्थाने सर्वाणि स्पर्धकानि चतुर्विंशत्यधिकसहस्रम्(१०२४) । प्रथमवर्गणायामात्मप्रदेशाः षट्त्रिंशदधिकपञ्चशतोत्तरपञ्चषष्टिसहस्राणि(६५५३६) । द्विगुणहानिस्थानानि चत्वारि । अतश्चरमवर्गणायां षण्णवत्यधिकचतुःसहस्राणि(४०९६)जीवप्रदेशा भवन्ति । प्रथमवर्गणायां प्रत्यात्मप्रदेशे लक्षं वीर्याविभागाः । प्रतिस्पर्धके प्रत्येकात्मप्रदेशे लक्षं वीर्याविभागा वर्धन्ते । ततश्चरमवर्गणायां प्रत्यात्मप्रदेशे चतुर्विंशत्यधिकसहस्र (१०२४) लक्षवीर्याविभागा भवन्ति । प्रथमवर्गणागतैः समुदितैर्वीर्याविभागैश्चरमवर्गणागतसमुदितवीर्याविभागेषु भाजितेषु यावल्लब्धिस्तावद्गुणा वीर्याविभागाः प्रथमवर्गणापेक्षया चरमवर्गणायां भवन्ति । तद्यथा—

$$\frac{४०९६}{१} \times \frac{१०२४\ \text{लक्षाः}}{१} \div ६५५३६\ \text{लक्षाः} = \frac{\overset{६४}{४०९६}}{१} \times \frac{\overset{१}{१०२४\ \text{लक्षाः}}}{१} \times \frac{१}{\underset{\underset{१}{६४}}{६५५३६\ \text{लक्षाः}}} = ६४$$

इत्येवं प्रथमवर्गणागतसमुदितवीर्याविभागेभ्यश्चरमवर्गणायां समुदिता वीर्याविभागाः चतुःषष्टिगुणा भवन्ति । यद्यत्र गुणकारः स्पर्धकसंख्याप्रमाणः स्यात् तदा प्रथमवर्गणागतसमुदितवीर्याविभागेभ्यश्चरमवर्गणायां समुदितवीर्याविभागाश्चतुर्विंशत्यधिकसहस्रगुणा भवितव्याः, परं तावद्गुणा न भवन्ति । एवं जघन्ययोगस्थाने चत्वारि द्विगुणहानिस्थानानि कल्पितानीति चतुर्द्व्यङ्कानां गुणकारे कृते गुणनफलं षोडश भवति । षोडशराशिना चतुर्विंशत्यधिकसहस्रराशौ भाजिते भागफलं चतुःषष्टिर्भवति ।

'तो' इत्यादि, ततः-चरमवर्गणागतवीर्याविभागेभ्योऽप्रथमचरमाणां-प्रथमचरमवर्गणे विहाय शेषासु योगस्थानगतसर्वस्पर्धकानां वर्गणासु स्थिता वीर्याविभागा असंख्यगुणा भवन्ति । अत्रेयं भावना-चरमस्पर्धके चरमवर्गणायामन्यसर्ववर्गणापेक्षया स्तोकतमा वीर्याविभागाः सन्ति । चरमस्पर्धके चरमवर्गणापेक्षयाऽन्यप्रत्येकवर्गणायां वीर्याविभागा विशेषाधिका भवन्ति । चरमस्पर्धके सर्वा वर्गणा असंख्याताः सन्ति । अतश्चरमवर्गणापेक्षया चरमस्पर्धकवर्गणागतवीर्याविभागा अप्यसंख्यगुणा भवन्तीति जघन्ययोगस्थानस्याप्रथमचरमवर्गणासु सुतरामसंख्यातगुणा वीर्याविभागा सिद्ध्यन्ति । एष गुणकारोऽसंख्यगुणहानिवर्गणाप्रमाणो बोध्यः । 'एत्तो' इत्यादि, अप्रथमचरमवर्गणागतवीर्याविभागेभ्योऽचरमवर्गणासु वीर्याविभागा विशेषाधिका भवन्ति,प्रथमवर्गणागतवीर्याविभागानां प्रवेशाद् ।

'तओ' इत्यादि, अचरमवर्गणागतवीर्याविभागेभ्योऽप्रथमवर्गणासु वीर्याविभागा विशेषा-

धिकाः, प्रथमवर्गणागतवीर्याविभागन्यूनचरमवर्गणागतवीर्याविभागानां समावेशात् । 'तत्तो' इत्यादि, अप्रथमवर्गणागतवीर्याविभागेभ्यो जघन्ययोगस्थानप्रथमस्पर्धकप्रथमवर्गणाया आरभ्य तस्यैव योगस्थानस्य सर्वोत्कृष्टचरमस्पर्धकचरमवर्गणां यावत् सर्ववर्गणानां वीर्याविभागा विशेषाधिकाः,प्रथमवर्गणावीर्याविभागानां प्रविष्टत्वात् ॥८६।८७॥

इदानीं स्थानप्ररूपणायां श्रेणिद्वारे स्पर्धकमाश्रित्यानन्तरोपनिधामाह—

हस्सा जोगट्ठाणा जहुत्तरे फड्डगा विसेसहिया ।
जा जेट्ठं सा वड्ढी अंगुलभागो असंखयमो ॥८८॥

(प्रे०) 'हस्सा' इत्यादि, जघन्याद् योगस्थानादारभ्य सर्वोत्कृष्टयोगस्थानं यावद् यथोत्तरे योगस्थाने स्पर्धकानि विशेषाधिकानि भवन्ति,विवक्षितयोगस्थानगतस्पर्धकेभ्यस्तदव्यवहितोत्तरयोगस्थाने स्पर्धकानि विशेषाधिकानि भवन्तीत्यर्थः । अत्र कश्चिदाह—नन्वत्र पूर्वपूर्वयोगस्थानादव्यवहितोत्तरोत्तरयोगस्थाने स्पर्धकानां विशेषाधिकत्वं जघन्ययोगस्थानगतजघन्यस्पर्धकापेक्षयाऽर्थात् जघन्ययोगस्थानगतजघन्यस्पर्धकगतवीर्याविभागापेक्षया भवति उत यथास्वरूपस्पर्धकापेक्षयाऽर्थात् स्पर्धकसंख्याऽपेक्षया भवति ? अत्रोच्यते, कर्मप्रकृत्याद्यभिप्रायेण यथास्वरूपस्पर्धकापेक्षया विशेषाधिकत्वं भवति । असत्कल्पनया यदि प्रथमयोगस्थाने पञ्चदशस्पर्धकानि भवन्ति, तर्हि द्वितीययोगस्थाने विंशतिः, तृतीययोगस्थाने पञ्चविंशतिः, चतुर्थयोगस्थाने त्रिंशत् स्पर्धकानि भवन्ति, इत्येवं चरमयोगस्थानं यावद् वक्तव्यम् । सत्कल्पनया तूत्तरोत्तरयोगस्थानेषु अङ्गुलासंख्यातभागप्रमाणानि स्पर्धकानि वर्धन्ते । तन्त्रान्तरमाश्रित्येदं विशेषाधिकत्वं यथास्वरूपस्पर्धकापेक्षया नोपपद्यते,द्वितीयादियोगस्थानेषु स्पर्धकसंख्यायाः समानत्वात् । असत्कल्पनया प्रथमयोगस्थाने यदि चत्वारि स्पर्धकानि सन्ति तर्हि द्वितीये योगस्थानेऽपि चत्वार्येव, तृतीययोगस्थानेऽपि तावन्त्येव ; अतो यथास्वरूपस्पर्धकापेक्षया यथोत्तरयोगस्थाने विशेषाधिकत्वं नोपपद्यते । अत इदं विशेषाधिकत्वं वीर्याविभागवृद्ध्या जघन्यस्पर्धकापेक्षया परिभावनीयम् । इदमुक्तं भवति-प्रतियोगस्थाने यावन्तो वीर्याविभागास्तेषां जघन्यस्पर्धकतुल्यानि स्पर्धकानि विधेयानि । उत्तरोत्तरं प्रतियोगस्थाने वीर्याविभागा वर्धन्ते । अत उत्तरोत्तरं प्रतियोगस्थाने यथास्वरूपेण स्पर्धकानां तुल्यत्वेऽपि जघन्यस्पर्धकतुल्येषु स्पर्धकेषु कृतेषु स्पर्धकानि विशेषाधिकानि भवन्ति ।

असत्कल्पनया विशेषाधिकत्वं प्रदर्श्यते-चतुर्णां स्पर्धकानामेकं योगस्थानं कल्प्यते । प्रथमयोगस्थानस्य प्रथमस्पर्धके एकलक्षम्, द्वितीयस्पर्धके द्विलक्षे, तृतीयस्पर्धके त्रिलक्षाणि, चतुर्थस्पर्धके चतुर्लक्षाणि वीर्याविभागाः कल्प्यन्ते । द्वितीयादियोगस्थानेषूत्तरोत्तरं प्रथमस्पर्धके विंशतिसहस्राणि,द्वितीयस्पर्धके चत्वारिंशत्सहस्राणि,तृतीयस्पर्धके षष्टिसहस्राणि, चतुर्थस्पर्धकेऽशीतिसहस्राणि वीर्याविभागा वर्धन्ते । तथाहि—द्वितीययोगस्थानस्य प्रथमस्पर्धके विंशतिसहस्राधिकैकलक्षम् , द्वितीय-

यस्पर्धके चत्वारिंशत्सहस्राधिकद्विलक्षे, तृतीयस्पर्धके षष्टिसहस्राधिकत्रिलक्षाणि, चतुर्थस्पर्धकेऽशीतिसहस्राधिकचतुर्लक्षाणि वीर्याविभागा भवन्ति। तृतीययोगस्थानस्य प्रथमस्पर्धके चत्वारिंशत्सहस्राधिकैकलक्षं, द्वितीयस्पर्धकेऽशीतिसहस्राधिकद्विलक्षे, तृतीयस्पर्धके विंशतिसहस्राधिकचतुर्लक्षाणि, चतुर्थस्पर्धके षष्टिसहस्राधिकपञ्चलक्षाणि वीर्याविभागा भवन्ति। चतुर्थयोगस्थानस्य प्रथमस्पर्धके षष्टिसहस्राधिकैकलक्षं, द्वितीयस्पर्धके विंशतिसहस्राधिकत्रिलक्षाणि, तृतीयस्पर्धकेऽशीतिसहस्राधिकचतुर्लक्षाणि, चतुर्थस्पर्धके चत्वारिंशत्सहस्राधिकषड्लक्षाणि वीर्याविभागा भवन्ति। इत्येवं पञ्चमादियोगस्थानेष्वपि वक्तव्यम्। अत्र समुदिता वीर्याविभागा प्रथमयोगस्थाने दश लक्षाणि, द्वितीययोगस्थाने द्वादश लक्षाणि, तृतीययोगस्थाने चतुर्दश लक्षाणि, चतुर्थयोगस्थाने षोडश लक्षाणि भवन्ति। इत्येवं पञ्चमादियोगस्थानेष्वपि वक्तव्यम्। इत्येवं द्वितीयादियोगस्थानेषु स्वाऽव्यवहितपूर्वयोगस्थानापेक्षया द्विलक्षवीर्याविभागा वर्धन्ते। प्रथमयोगस्थाने यद्यपि चत्वारि स्पर्धकानि सन्ति तथापि सर्वजघन्यस्पर्धकापेक्षयाऽर्थात् सर्वजघन्यस्पर्धकगतवीर्याविभागानुसारेण स्पर्धकानि कल्प्यन्ते तदा प्रथमयोगस्थाने दश स्पर्धकानि भवन्ति। यतः प्रथमयोगस्थानस्य प्रथमं स्पर्धकं सर्वजघन्यमस्ति, तत्रैकलक्षवीर्याविभागाः कल्पिताः। सर्वजघन्यस्पर्धकानुसारेण द्वितीययोगस्थाने द्वादश, तृतीययोगस्थाने चतुर्दश, चतुर्थयोगस्थाने षोडश स्पर्धकानि भवन्ति। एवं पञ्चमादियोगस्थानेष्वपि ज्ञेयम्। इत्येवं द्वितीयादियोगस्थानेषु सर्वजघन्यस्पर्धकानुसारेण द्वे द्वे स्पर्धके वर्धेते। दशादिस्पर्धकेभ्यो द्वादशादिस्पर्धकानि विशेषाधिकान्येव। असत्कल्पनानुसारेण स्थापनैवम्—

| | वीर्याविभागाः | | | | | |
|---|---|---|---|---|---|---|
| योगस्थानानि | प्रथमस्पर्धके | द्वितीयस्पर्धके | तृतीयस्पर्धके | चतुर्थस्पर्धके | योगस्थानगत-सर्ववीर्याविभागाः | प्रथमस्पर्धकवीर्याविभागप्रमाणेन योगस्थानगतसर्वस्पर्धकसंख्या |
| प्रथमयोग० | १००००० | २००००० | ३००००० | ४००००० | १०००००० | १० |
| द्वितीययोग० | १२०००० | २४०००० | ३६०००० | ४८०००० | १२००००० | १२ |
| तृतीययोग० | १४०००० | २८०००० | ४२०००० | ५६०००० | १४००००० | १४ |
| चतुर्थयोग० | १६०००० | ३२०००० | ४८०००० | ६४०००० | १६००००० | १६ |

तदेवं स्थानद्वारान्तर्गते श्रेणिद्वारेऽनन्तरोपनिधा कृता ॥८८॥

सम्प्रति तस्मिन्नेव स्पर्धकान्याश्रित्य परम्परोपनिधां विवक्षुराह—

सेढिअसंखियभागं गमिअ गमिअ फड्डगाणि दुगुणाणि ।
पल्लासंखियभागो हुन्ति दुगुणवड्ढिहाणीणं ॥८९॥

(प्रे०) '**सेढिअसंखियभागं**' इत्यादि, यथोत्तरयोगस्थाने विशेषाधिकानि जायमानानि स्पर्धकानि श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि गत्वा गत्वा द्विगुणानि भवन्ति। अत्रायं भावः- सर्वजघन्ययोगस्थाने यावन्ति स्पर्धकानि भवन्ति तदपेक्षया श्रेण्यसंख्यातभागप्रमाणानि योगस्थानान्यतिक्रम्य तदनन्तरे योगस्थाने द्विगुणानि भवन्ति । पुनरपि द्विगुणस्पर्धकात् तद्योगस्थानादारभ्य यथोक्तप्रमाणानि योगस्थानान्यतिक्रम्यानन्तरं यद् योगस्थानं तस्मिन् द्विगुणस्पर्धकयोगस्थानापेक्षया द्विगुणानि स्पर्धकानि भवन्ति । एवमुत्कृष्टयोगस्थानं यावद् वक्तव्यम् ।

अत्रेदं बोध्यम्-यद्यप्यत्र श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि गत्वा स्पर्धकानि द्विगुणानि भवन्तीत्युक्तं तथापि उत्तरोत्तरद्विगुणवृद्धिस्थाने श्रेण्यसंख्यातभागो द्विगुणो ज्ञेयः । असत्कल्पनया चिन्त्यते–अनन्तरगाथायां द्वितीयादियोगस्थानेषु क्रमशो द्वे द्वे स्पर्धके वर्धेते इति प्रदर्शितम्। अतो जघन्ययोगस्थानं विहाय पञ्चमे, जघन्ययोगस्थानात्तु षष्ठे योगस्थाने विंशतिः, अर्थाद् जघन्ययोगस्थानसत्कस्पर्धकापेक्षया द्विगुणानि स्पर्धकानि भवन्ति । ततः पञ्चमयोगस्थानं विहाय दशमे, जघन्ययोगस्थानात्तु षोडशे योगस्थाने द्विगुणानि स्पर्धकानि भवन्ति । ततो विंशतितमे, जघन्ययोगस्थानात्तु षट्त्रिंशत्तमे योगस्थाने स्पर्धकानि द्विगुणानि भवन्ति । इत्येवमग्रेऽपि विभावनीयम् ।

अत्रेदं बोध्यम्–उपर्युक्तरीत्या यावन्ति द्विगुणवृद्धिस्थानानि भवन्ति तावन्त्येव द्विगुणहानिस्थानानि भवन्ति । यतो यानि द्विगुणवृद्धिस्थानानि तान्येव पश्चानुपूर्व्या द्विगुणहानिस्थानानि भवन्ति । तद्यथा-उत्कृष्टयोगस्थानादारभ्याधोऽधः श्रेण्यसंख्येयभागप्रमाणानि योगस्थानानि गत्वाऽनन्तरं यद्योगस्थानं तस्मिन् स्पर्धकानि द्विगुणहीनानि अर्थादर्धानि भवन्ति । पुनरपि द्विगुणहीनस्पर्धकात् तद्योगस्थानादधोऽवतरणे यथोक्तप्रमाणेषु योगस्थानेषु व्यतीतेषु अनन्तरे योगस्थाने स्पर्धकानि द्विगुणहीनानि भवन्ति । एवमेव पुनः पुनर्जघन्ययोगस्थानं यावद् वक्तव्यम् । उत्तरोत्तरद्विगुणहानिस्थाने श्रेण्यसंख्यातभागोऽर्धो भवतीति ध्येयम् ।

ननु तानि द्विगुणवृद्धिस्थानानि द्विगुणहानिस्थानानि च प्रत्येकं कियत्प्रमाणानि भवन्तीत्याह–'**पल्लासंखियभागो**' इत्यादि, द्विगुणवृद्धिहानीनां पल्योपमासंख्यातभागो भवति, द्विगुणवृद्धिस्थानानि द्विगुणहानिस्थानानि च प्रत्येकं पल्योपमासंख्यातभागप्रमाणानि भवन्तीत्यर्थः॥८९॥

इदानीं श्रेणिद्वारे द्विगुणवृद्धिद्विगुणहानिस्थानानां तदन्तरालस्थानानां चाल्पबहुत्वमाह—

सिं हुन्ते ठाणाइं थोवाणि तओ असंखियगुणाणि ।
एगंतरे हवन्ते जं सेढीए असंखंसो ॥९०॥

(प्रे०) 'सिं' इत्यादि, तासां द्विगुणवृद्धीनां द्विगुणहानीनां च स्थानानि स्तोकानि । ततो द्विगुणवृद्धिस्थानयोर्द्विगुणहानिस्थानयोर्वाऽन्तराले स्थितानि स्थानानि असंख्यातगुणानि । अत्र हेतुमाह–'जं सेढीए असंखंसो' इति, यतो द्विगुणवृद्धिस्थानयोरन्तरे द्विगुणहानिस्थानयोरन्तरे वा स्थितानि स्थानानि श्रेण्यसंख्यातभागप्रमाणानि भवन्ति । द्विगुणवृद्धिस्थानानि द्विगुणहानिस्थानानि च प्रत्येकं पल्योपमासंख्यातभागमात्राणि भवन्ति । पल्योपमासंख्यातभागापेक्षया श्रेण्यसंख्यातभागोऽसंख्यगुणो भवति । अतो यथोक्तमल्पबहुत्वमुपपद्यते ॥९०॥

सम्प्रति प्रसङ्गाद् वीर्याविभागानां बाहुल्यप्रदर्शनाय गाथाष्टकेनाल्पबहुत्वमाह—

सव्वप्पा अण्णोण्णऽब्भत्थसलागाऽत्थि तेउकायाणं ।
ताउ असंखगुणा सिं वग्गसलागा मुणेयव्वा ॥९१॥
तो छेअणगा सिं तो पवेसगा णिग्गमा व विण्णेया ।
तेसुं जहण्णगेणं ताओ जेट्ठेण संखगुणा ॥९२॥
ताउ असंखेज्जगुणा णेया तेसिं जहण्णगा रासी ।
तत्तो विसेसअहिया जेट्ठा रासी मुणेयव्वा ॥९३॥
ताउ असंखेज्जगुणा कायठिई ताण ताउ विण्णेया ।
गुणगारसलागाओ ओहिणिबद्धस्स खेत्तस्स ॥९४॥
तत्तो वग्गसलागा तस्स तओ अद्धछेअणगा ।
तस्स हवन्ते तत्तो भेआ तस्स च्चिय हवन्ते ॥९५॥ (उपगीतिः)
तो गुणगारसलागा ठिइबंधस्सऽत्थि अज्झवमणाणं ।
तत्तो वग्गसलागा अत्थि तओ अद्धछेअणगा ॥९६॥
ताओ से ठाणाइं हवन्ति ताउ अणुभागबंधस्स ।
अज्झवसायाणं खलु ठाणाइं ताउ विरियाणू ॥९७॥

(प्रे०) 'सव्वप्पा' इत्यादि, तेजःकायिकानामन्योन्याभ्यासशलाकाः सर्वस्तोकाः । ततस्तेषामेव वर्गशलाका असंख्यगुणाः । इति प्रथमगाथार्थः । 'तो छेअणगा सिं' इति, ततस्तेषामेवार्धच्छेदनकशलाका असंख्यगुणाः ।

अथात्रान्योन्याभ्यासशलाकादीनां कोऽर्थः ताः कथं च भवन्तीति प्रदर्श्यते । अत्रास्माभिरिदानीमेव प्रणीता अन्योन्याभ्यासशलाकादीनां करणगाथा एवम्—

इष्टाङ्कं तावद्वारं न्यस्य परस्परं कृते गुणने । अन्योन्यगुणनराशिर्भवतीति वदन्ति गणितज्ञाः ॥१॥

इयांयक्कैर्यावद्वेलामन्योन्यं गुणे कृते सति यः । राशिः प्राप्तस्तस्य शलाकास्तावन्मिता भवेद् गणिते ॥२॥गीतिः
येषामङ्कानां यावद्वारं वर्गमूलं स्यात् । वर्गशलाका तावन्मिताऽवसेया तदङ्कानाम् ॥३॥ (उपगीतिः)
येऽङ्का यावद्वारं द्विगुणन्यूना भवन्ति तावन्त्यः । अर्धच्छेदनकशलाका ज्ञातव्यास्तदङ्कानाम् ॥४॥

(१) प्रथमकरणगाथार्थस्त्वेवम्-इष्टाङ्क-यस्याङ्कस्यान्योन्यम्यासराशिः कर्तुमिष्यते तं तावद्वारं स्थापयित्वाऽन्योन्यं च गुणकारं विधाय यद् गुणनफलं भवति तदन्योन्यगुणराशिरभिधीयते । दृष्टान्ततो यथा-चतुरङ्कस्याभ्यासराशिः कर्तुमिष्यते, अतश्चतुश्चतुरङ्कं स्थापयित्वा गुणकारः कर्तव्यः । तद्यथा-४×४×४×४=२५६, यद्वा $(४)^{४}$=२५६, इत्येवं चतुरङ्कस्यान्योन्याभ्यासराशिः षट्पञ्चाशदधिकद्विशते (२५६) भवति । यदि षट्पञ्चाशदधिकद्विशतराशेरन्योन्याभ्यासः कर्तुमिष्यते तदा तु गुणनफलत्वेनातिमहती संख्या भवति । सा संख्या द्वादशाधिकपञ्चशताङ्कतोऽधिकाऽष्टषष्ट्यधिकसप्तशताङ्कतो न्यूना भवति । एतावन्महत्या अपि संख्यया अन्योन्याभ्यासराशिशलाकास्तिस्र एव भवन्ति । अन्योन्याभ्यासराशिः, अन्योन्यगुणकारराशिः, अन्योन्यगुणराशिः इत्येकार्थकानि ।

(२) द्वितीया गाथा गतार्था । दृष्टान्ततो यथा-द्वयङ्केन सकृदन्योन्याभ्यासे कृते चत्वारि प्राप्तानि, अतश्चतुर्णामन्योन्यराशिशलाका एकं भवति । एवं षट्पञ्चाशदधिकद्विशत (२५६) राशेरन्योन्याभ्यासराशिशलाके द्वे भवतः । यतः सकृद् द्वयङ्केनान्योन्याभ्यासः कृतः, द्वितीयवारं च चतुरङ्केन कृत इति द्विरन्योन्याभ्यासः कृतः ।

(३) तृतीया गाथा गतार्था । दृष्टान्त एवम्-चतुर्णामङ्कानां वर्गमूलमेकवारं भवतीति तेषां वर्गशलाका एका भवति । एवं २५६राशेः वर्गमूलं त्रिर्भवत्यतस्तस्य वर्गशलाकाः तिस्रो भवन्ति । षट्पञ्चाशदधिकद्विशतराशेराद्यं वर्गमूलं षोडश, द्वितीयं चत्वारि, तृतीयं द्वे । एवं षट्पञ्चाशदधिकद्विशतान्योन्याभ्यासराशेर्वर्गशलाका एकादश भवन्ति ।

(४) चतुर्थगाथा गतार्था । दृष्टान्ततो यथा-चत्वारो द्विर्द्विगुणहीना भवन्ति । प्रथमं द्विगुणहीनेषु कृतेषु द्वौ लभ्येते, द्वितीयवारं चैकं लभ्यते । तदनन्तरं द्विगुणहानिं कर्तुं न शक्यते । अतश्चतुर्णामर्धच्छेदनकशलाके द्वे । एवं षट्पञ्चाशदधिकद्विशतराशेरर्धहानिरष्टकृत्वो भवति । तद्यथा-१२८-६४-३२-१६-८-४-२-१ । अतस्तस्यार्धच्छेदनकशलाका अष्टौ भवन्ति । एवं षट्पञ्चाशदधिकद्विशतान्योन्याभ्यासराशेरर्धच्छेदनकशलाका अष्टचत्वारिंशदधिकद्विसहस्रप्रमाणा भवन्ति ।

नन्वत्रोक्तकरणगाथाभिः चतुरादीनामन्योन्याभ्यासराशिशलाकादयः कियत्यो भवन्तीति ज्ञातम्, तथापि $(२५६)^{२५६}$ इत्येवमतिमहत्प्रमाणस्य षट्पञ्चाशदधिकद्विशतराश्यादेर्योऽन्योन्याभ्यासराशिः सोऽतिमहत्प्रमाणः, अतस्तस्यातिमहत्प्रमाणराशेरर्धच्छेदनकशलाकास्तथा वर्गशलाकाः कथं ज्ञातुं शक्यते इति चेद्, अत्रोच्यते, यस्य विवक्षितराशेरन्योन्याभ्यासराशेरर्धच्छेदनकशलाका ज्ञातुमिष्यन्ते तद्राशिः स्वस्यैवार्धच्छेदनकैर्गुणनीयः, गुणकारे कृते यावद् गुणनफलं भवेत् तावत्प्रमाणा

विवक्षितराशेरन्योन्याभ्यासराशेरर्धच्छेदनकशलाका भवन्ति । दृष्टान्ततो यथा-षट्पञ्चाशदधिकद्विशत-राश्यन्योन्याभ्यासराशेरर्धच्छेदनकशलाका ज्ञातुमिष्यन्ते, अतः षट्पञ्चाशदधिकद्विशतराशिः स्वस्याष्टावर्धच्छेदनकानि भवन्तीत्यष्टभिर्गुणनीयः । ततः २५६×८=२०४८ । इत्येवं षट्पञ्चाशद-धिकद्विशतराशेरन्योन्याभ्यासराशेरर्धच्छेदनकशलाका अष्टचत्वारिंशदधिकद्विसहस्रप्रमाणा भवन्ति । तथा यस्य विवक्षितराशेरन्योन्याभ्यासराशेर्वर्गशलाका ज्ञातुमिष्यन्ते तस्य वर्गशलाकानां तस्यैव अर्धच्छेदनकशलाकानां च योगो विधेयः, कृते योगे यावद् योगफलं भवेत् तावत्प्रमाणा विव-क्षितराशेरन्योन्याभ्यासराशेर्वर्गशलाका भवन्ति । तद्यथा–षट्पञ्चाशदधिकद्विशतराशेरन्योन्याभ्यास-राशेर्वर्गशलाका ज्ञातुमिष्यन्ते, अतस्तस्य वर्गशलाकानामर्धच्छेदनकशलाकानां च योगो विधेयः । तस्य वर्गशलाकास्तिस्रः, अर्धच्छेदनकशलाका अष्टौ सन्ति । अतः ३+८=११ । इत्येवं षट्पञ्चा-शदधिकद्विशतराशेरन्योन्याभ्यासराशेर्वर्गशलाका एकादश भवन्ति । अत्र स्थापनेयम्–

| अन्योन्याभ्यासराशिः | अन्योन्याभ्यास–राशिशलाका | वर्गमूल–शलाका | अर्धच्छेदनक–शलाका |
|---|---|---|---|
| २×२=यद्वा (२) =४ | १ | १ | २ |
| ४×४×४×४=यद्वा $(४)^{४}$=२५६ | २ | ३ | ८ |
| $(२५६)^{२५६}$ =द्वादशाधिकपञ्चशतेभ्योऽधिका अष्टषष्ट्यधिकसप्तशतेभ्यश्च न्यूना अङ्काः | ३ | ११ | २०४८ |

अथ मूलगाथार्थः प्रस्तूयते–'तो पवेसणा' इत्यादि, ततः–तेजःकायानामर्धच्छेदनक-शलाकाभ्यस्तेजःकायेषु प्रवेशकाः–तेजःकायत्वेनोत्पद्यमाना अथवा निर्गमकाः-तेजःकायत्वं त्यजन्तो जीवाः समुदिता जघन्यतोऽसंख्येयगुणाः । तेभ्यस्तेजःकाये प्रवेशकास्तेजःकायान्निर्गमका वोत्कृष्टतः संख्येयगुणाः । इति द्वितीयगाथार्थः ।

'ताउ असंखेज्जगुणा' इत्यादि, तेभ्यस्तेजःकायानां जघन्यो राशिरसंख्येयगुणः । तेभ्यस्तेषामेवोत्कृष्टो राशिर्विशेषाधिकः । इति तृतीयगाथार्थः ।

'ताउ असंखेज्जगुणा' इत्यादि, तेभ्यस्तेजःकायानां कायस्थितिरसंख्यातगुणा । तेभ्यो-ऽवधिनिबद्धस्य क्षेत्रस्य, अवधिज्ञानेनोत्कृष्टतो यावत्प्रमाणं क्षेत्रं ज्ञातुं शक्यते तत्क्षेत्रस्येत्यर्थः, अन्योऽन्यगुणकारशलाका असंख्यगुणाः । इति चतुर्थगाथार्थः ।

'तत्तो वग्गसलागा' इत्यादि, ततस्तस्यैव वर्गशलाका असंख्यगुणाः । ततस्तस्यैवार्धच्छे-दनकशलाका असंख्येयगुणाः । ततोऽवधिज्ञानस्य भेदा असंख्यगुणाः । इति पञ्चमगाथार्थः ।

'तो गुणगारसलागा' इत्यादि, ततः स्थितिबन्धस्याध्यवसायानामन्योन्यगुणकार-शलाका असंख्यगुणाः । ततस्तेषामेव वर्गशलाका असंख्यगुणाः । ततस्तेषामेवार्धच्छेदनकशलाका असंख्यगुणाः । इति षष्ठगाथार्थः ।

'ताओ से ठाणाइं' इत्यादि, ततस्तस्य स्थितिबन्धाध्यवसायस्य स्थानानि असंख्यातगुणानि । ततोऽनुभागबन्धस्याध्यवसायानां स्थानानि असंख्यगुणानि । ततो वीर्याणवोऽसंख्यगुणाः । इति सप्तमगाथार्थः ।

अत्र कश्चिदाह-ननु वीर्याविभागानां बहुलताप्रदर्शनाय तेजःकायादीनामेवाल्पबहुत्वं वक्तव्यम्, किमन्योन्याभ्यासराशिशलाकादीनामल्पबहुत्वेनेति चेद्, न, अन्योन्याभ्यासराशिशलाकादीनामल्पबहुत्वे निरूपिते एव वीर्याणूनां यथार्थरीत्या बाहुल्यं प्रतीयते । यतः कस्यापि राशेरन्योन्याभ्यासराशिशलाकादयोऽतीव स्तोका भवन्ति । यथाऽसत्कल्पनायां द्वादशाधिकपञ्चशतेभ्योऽधिकानामष्टषष्ट्यधिकसप्तशतेभ्यश्च न्यूनानामङ्कानां योऽतिमहत्प्रमाणराशिस्तस्यान्योन्याभ्यासराशिशलाकास्तित्र एव, वर्गमूलशलाका एकादश एव, अर्धच्छेदनकशलाका अष्टचत्वारिंशदधिकद्विसहस्रं एव भवन्ति । अत्र हि तेजःकायराशितस्तेजःकायकायस्थितिराशिरसंख्यगुणः, ततोऽप्यवधिनिबद्धक्षेत्रस्य स्वतोऽतिस्तोका अप्यन्योन्याभ्यासराशिशलाका असंख्यगुणा भवन्तीत्यवधिनिबद्धक्षेत्रस्यातिप्रचुरत्वं प्रतीयते । एवमतिप्रचुरप्रमाणावधिनिबद्धक्षेत्रतः स्थितिबन्धाध्यवसायानां स्वतोऽतिस्तोका अप्यन्योन्याभ्यासराशिशलाका असंख्यगुणा भवन्तीति स्थितिबन्धाध्यवसायानामतिप्रचुरतरत्वं ज्ञायते । स्थितिबन्धाध्यवसायेभ्यो रसबन्धाध्यवसाया असंख्यगुणाः । रसबन्धाध्यवसायेभ्यो वीर्याविभागा असंख्यगुणाः । अतोऽतिप्रचुरप्रमाणावधिनिबद्धक्षेत्रतोऽतिप्रचुरतरस्थितिरसबन्धाध्यवसायेभ्योऽपि वीर्याविभागा अतिप्रचुरतमा इति वीर्याविभागानामतिशयबाहुल्यं प्रतीयते । इत्येवमत्रान्योन्याभ्यासराशिशलाकादीनामल्पबहुत्वस्य निरूपणं वीर्याणूनामतिबाहुल्यप्रदर्शने परम्परया कारणम् ।

सम्प्रति योगस्थानहेतूनां स्पर्धकादीनामल्पबहुत्वं प्रतिपादयति—

जोगट्ठाणेहिन्तो इगफड्डगवग्गणा असंखगुणा ।
तो अंतरठाणाइं हुन्ति तओ फड्डगाणि अहियाणि ॥९८॥(गीतिः)
तो सव्वफड्डगाणं विण्णेया वग्गणा असंखगुणा ।
तत्तो जीवपएसा ताओ विरियाणवो णेया ॥९९॥

(प्रे०) 'जोगट्ठाणेहिन्तो' इत्यादि, सर्वयोगस्थानेभ्य एकस्पर्धकस्य वर्गणा असंख्यगुणाः । 'तो' इत्यादि, 'असंखगुणा' इति पदं लिङ्गविपर्यासेनात्रापि सम्बध्यते, एकस्पर्धकगतवर्गणाभ्यो द्विस्पर्धकमध्यवर्तीनि क्रमशो वीर्याविभागवृद्धेरन्तरस्थानानि असंख्येयगुणानि । यद्यपि एकस्पर्धकगतवर्गणावद् द्विस्पर्धकमध्यवर्तीनि क्रमशो वीर्याविभागवृद्धेरन्तरस्थानानि श्रेण्यसंख्यातभागप्रमाणान्येव, तथापि तेषां श्रेण्यसंख्यातभाग एकस्पर्धकगतवर्गणासत्कश्रेण्यसंख्यातभागतोऽसंख्यगुणो बोध्यः, यतोऽन्तरस्थानानि एकहीनस्पर्धकतुल्यानि, सर्वाणि स्पर्धकानि चैकस्पर्धकगतवर्गणाभ्योऽसंख्येयगुणानि । 'तओ' इत्यादि, द्विस्पर्धकमध्यवर्तिभ्यः क्रमशो वीर्याविभागवृद्धेरन्तरस्थानेभ्यः

स्पर्धकानि विशेषाधिकानि । केषामपि वस्तूनामन्तराणि वस्तुसंख्यात एकेन न्यूनानि भवन्तीति वस्तूनि स्वान्तरसंख्यापेक्षया एकेनाधिकानि भवन्तीति सिद्धम् । अतोऽत्र स्पर्धकानि स्वान्तर-संख्यात एकेनाधिकानि भवन्ति । 'तो' इत्यादि, सर्वस्पर्धकेभ्यः सर्वस्पर्धकगतवर्गणा असंख्यगुणा भवन्ति । अत्रापि स्पर्धकानां श्रेण्यसंख्यातभागतः सर्वस्पर्धकगतवर्गणानां श्रेण्यसंख्यातभागोऽसंख्य-गुणो ज्ञेयः, प्रतिस्पर्धकेऽसंख्येयानां वर्गणानां सद्भावात् । 'तत्तो जीवपएसा' इति, 'असंख-गुणा' इति पदमत्राप्यनुषज्यते, सर्वस्पर्धकगतवर्गणाभ्यो जीवप्रदेशाः—यावदात्मप्रदेशैरेका वर्गणा निष्पन्ना तावदात्मप्रदेशा असंख्यगुणाः । सर्वस्पर्द्धकगतवर्गणानां श्रेण्यसंख्यातभागप्रमाणत्वाद्, यावदात्मप्रदेशैरेका वर्गणा निष्पद्यते तावतामात्मप्रदेशानामसंख्येयप्रतरप्रमाणत्वाद् । यद्यपि मूल-ग्रन्थे 'जीवपएसा' इत्येवमेव पदमस्ति, तथापि ग्रन्थकृतोऽत्रैकवर्गणावर्तिन एव जीवप्रदेशा इष्टाः । सकलजीवप्रदेशास्तु लोकाकाशप्रदेशप्रमाणाः सन्तीति तेषामसंख्यगुणत्वं सुतरां सिद्धमेव । 'ताओ विरियाणवो णेया' इति, 'असखगुणा' इति पदमत्रापि सम्बध्यते, एकवर्गणावर्तिजीवप्रदेशेभ्यः सर्ववीर्याणवोऽसंख्येगुणाः,असंख्येयलोकाकाशप्रदेशप्रमाणत्वाद् ,असंख्येयानां लोकानां यावन्तः प्रदे-शास्तावत्प्रमाणत्वादित्यर्थः ॥९८।९९॥ सम्प्रति प्रतिसमयं जघन्ययोगस्थानप्रमाणवीर्याणूनामपहारे क्रियमाणे सकलयोगस्थानगतवीर्याणवः कियता कालेनापह्रियन्ते इति प्रतिपादनायापहारद्वारमाह—

**संजोइअ अविभागा जहण्णउक्कोसजोगठाणाणं ।**
**ताणाऽद्धी काऊणं जोगट्ठाणेहि गुणिअव्वं ॥१००॥**
**जं लद्धमवहये लहुजोगट्ठाणस्स वीरियाणूहिं ।**
**तत्तिअकालेण सयलजोगट्ठाणाणि अवहरिज्जंति ॥१०१॥(गीतिः)**

(प्रे०) 'संजोइअ' इत्यादि, जघन्ययोगस्थानस्योत्कृष्टयोगस्थानस्य च वीर्याविभागान् संयोजयित्वा तेषामर्धभागो विधेयः, ततः सोऽर्धभागः सर्वयोगस्थानसंख्यया गुणनीयः, ततो यद् गुणनफलं लब्धं तद् जघन्ययोगस्थानवीर्याणुभिरपहर्तव्यम् अपहृते च यावद् भागफलं प्राप्तं तावता कालेन प्रतिसमयं जघन्ययोगस्थानप्रमाणवीर्याणूनामपहारे क्रियमाणे सकलयोगस्थानानि अपह्रियन्ते, सकलयोगस्थानानां वीर्याविभागा अपह्रियन्ते इत्यर्थः । अत्र स्थापनवम्—

$$\frac{\text{जघन्ययोगस्थानवीर्याविभागा} + \text{उत्कृष्टयोगस्थानवीर्याविभागा} \times \text{योगस्थानराशि}}{२} - \text{जघन्ययोगस्थानवीर्याणुराशि}$$

तदत्रासत्कल्पनामाश्रित्य प्रदर्श्यते-सर्वाणि योगस्थानानि षष्टिः कल्प्यन्ते । जघन्ययोग-स्थाने, अर्थात् प्रथमयोगस्थाने एकलक्षवीर्याविभागाः कल्प्यन्ते । उत्कृष्टयोगस्थाने, अर्थादन्तिम-योगस्थाने षोडशलक्षवीर्याविभागाः कल्प्यन्ते । चत्वारि द्विगुणवृद्धिस्थानानि कल्प्यन्ते । प्रथम-द्विगुणवृद्धिस्थाने चत्वारि, द्वितीयद्विगुणवृद्धिस्थानेऽष्टौ, तृतीयद्विगुणवृद्धिस्थाने षोडश, अन्तिमद्विगुण-

वृद्धिस्थाने च द्वात्रिंशद् योगस्थानानीत्येवं सर्वाणि योगस्थानानि षष्टिः कल्प्यन्ते ।

अतः १००००० + १६००००० = १७०००००, $\frac{१७०००००}{१} \div \frac{१}{२} = \frac{१७०००००}{२}$, $\frac{१७०००००}{२_{१}} \times \frac{६०^{३०}}{१}$

= ५१००००००, ५१०००००० ÷ १००००० = ५१० ।

इत्येवं सर्वयोगस्थानानां वीर्यविभागा दशाधिकपञ्चशत(५१०) समयैरपह्रियन्ते ॥१००।१०१॥

इदानीं द्वितीयादियोगस्थानप्रमाणवीर्याणूनां प्रतिसमयमपहारे क्रियमाणे कियता कालेन सर्वयोगस्थानवीर्यविभागा अपह्रियन्ते इति निरूपयति—

**ताउ विसेसूणेणं कालेणं पढमदुगुणवड्ढिं जा ।**
**तो अद्धमेत्तगेणं एमेव हवेज्ज चरमं जा ॥१०२॥**

(प्रे०) 'ताउ' इत्यादि, ततो द्वितीयादियोगस्थानप्रमाणवीर्याणुभिः प्रतिसमयमपहारे क्रियमाणे जघन्ययोगस्थानवीर्याणुप्रमाणाऽपहारकालतो विशेषहीनेन कालेन सर्वयोगस्थानवीर्याणूनामपहारो भवति । क्व यावदित्याह-'पढमदुगुणवड्ढिं जा' इति, प्रथमद्विगुणवृद्धिं यावत्, प्रथमद्विगुणवृद्धियोगस्थानं यावदित्यर्थः । अत्र यावच्छब्दो मर्यादाऽर्थे ज्ञेयः । तेन प्रथमद्विगुणवृद्धिस्थानं विहाय प्रथमद्विगुणवृद्धिस्थानं यावद् विशेषहीनकालो बोध्यः । 'तो अद्धमेत्तगेणं' इति, ततः प्रथमद्विगुणवृद्धिस्थानवीर्याणुभिः प्रतिसमयमपहारे क्रियमाणे इत्यर्थः, जघन्ययोगस्थानवीर्याणुप्रमाणापहारकालतोऽर्धकालेन सर्वयोगस्थानवीर्यविभागानामपहारो भवति ।

अत्रायं भावः—द्वितीययोगस्थानगतवीर्याणुभिः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानवीर्यविभागानामपहारो जघन्ययोगस्थानगतवीर्याणुप्रमाणापहारकालतो विशेषहीनेन कालेन भवति । तृतीययोगस्थानगतवीर्यविभागैः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानवीर्याणूनामपहारो जघन्ययोगस्थानवीर्यविभागापहारकालतो विशेषतरहीनेन कालेन भवति । चतुर्थयोगस्थानगतवीर्याणुभिः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानगतवीर्यविभागानामपहारो जघन्ययोगस्थानगतवीर्यविभागापहारकालतो विशेषतमहीनकालेन भवति । इत्येवं प्रथमद्विगुणवृद्धिस्थानं यावद् वक्तव्यम् । प्रथमद्विगुणवृद्धिस्थानगतवीर्यविभागैः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानवीर्याणूनामपहारो जघन्ययोगस्थानगतवीर्यविभागापहारकालतोऽर्धेन कालेन भवति । अनन्तरगाथाप्रदर्शिताऽसत्कल्पनया पञ्चपञ्चाशदधिकद्विशत(२५५) समयैः सर्वयोगस्थानवीर्यविभागा अपह्रियन्ते । 'एमेव हवेज्ज चरमं जा' इति, यथा जघन्ययोगस्थानवीर्यविभागापहारकालतो द्वितीयादियोगस्थानात् प्रथमद्विगुणवृद्धिस्थानं यावद् विशेषतरतमादिहीनः प्रथमद्विगुणवृद्धिस्थाने चार्धोऽपहारकालः प्रतिपादितस्तथैव प्रथमद्विगुणवृद्धिस्थानानन्तरस्थानात् प्रारभ्य चरमयोगस्थानं यावद् भवति ।

इदमुक्तं भवति—प्रथमद्विगुणवृद्धिस्थानानन्तरप्रथमस्थानगतवीर्याणुभिः प्रतिसमयमपहारे

क्रियमाणे सर्वयोगस्थानानामपहारो जघन्ययोगस्थानवीर्याविभागापहारकालतो विशेषहीनार्धकालेन भवति । प्रथमद्विगुणवृद्धिस्थानतो द्वितीययोगस्थाने स्थितैर्वीर्याणुभिः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानवीर्याणूनामपहारो जघन्ययोगस्थानवीर्याविभागापहारकालतो विशेषतरहीनार्धकालेन भवति । इत्येवं द्वितीयद्विगुणवृद्धिस्थानं यावद् वक्तव्यम् । द्वितीयद्विगुणवृद्धिस्थाने स्थितैर्वीर्याणुभिः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानवीर्याणूनामपहारो जघन्ययोगस्थानवीर्याविभागापहारकालतः चतुर्थभागकालेन भवति । द्वितीयद्विगुणवृद्धिस्थानानन्तरस्थाने स्थितैर्वीर्याविभागैः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानवीर्याविभागानामपहारो जघन्ययोगस्थानवीर्याविभागापहारकालतो विशेषहीनचतुर्थभागेन भवति । एवं तृतीयद्विगुणवृद्धिस्थानं यावद् वक्तव्यम् । तृतीयद्विगुणवृद्धिस्थाने स्थितैः वीर्याणुभिः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानवीर्याणूनामपहारो जघन्ययोगस्थानवीर्याविभागापहारकालतोऽष्टमभागकालेन भवति । इत्येवं चरमद्विगुणवृद्धियोगस्थानं यावद् वक्तव्यम् ॥१०२॥

तदेवमपहारद्वारं निरूपितम् । सम्प्रति विवक्षितैकयोगस्थानगतस्पर्धकानि सर्वयोगस्थानगतस्पर्धकानां कतिथे भागे भवन्तीति निरूपणार्थं स्थानप्ररूपणायां क्रमप्राप्तं भागद्वारमाह—

**हुन्ते असंखभागे फड्डाणं सव्वजोगठाणाणं ।**
**पढमस्स फड्डगाइं एमेव हवेज्ज चरमं जा ॥१०३॥**

(प्रे०) '**हुन्ते**' इत्यादि, प्रथमयोगस्थानस्य स्पर्धकानि सर्वयोगस्थानगतस्पर्धकानामसंख्याततमे भागे भवन्ति, सर्वयोगस्थानस्पर्धकापेक्षया प्रथमयोगस्थानस्पर्धकानि असंख्यातभागमात्राणि भवन्तीत्यर्थः । '**एमेव हवेज्ज चरमं जा**' इति, एवमेव द्वितीययोगस्थानादारभ्य चरमयोगस्थानं यावत् प्रत्येकयोगस्थाने स्थितानि स्पर्धकानि सर्वयोगस्थानस्पर्धकानामसंख्याततमे भागे भवन्ति । अयं भावः–द्वितीययोगस्थानस्पर्धकानि सर्वयोगस्थानस्पर्धकानामसंख्याततमे भागे भवन्ति । तृतीययोगस्थानस्पर्धकानि सर्वयोगस्थानस्पर्धकानामसंख्याततमे भागे भवन्ति । चतुर्थयोगस्थानस्पर्धकानि सर्वयोगस्थानस्पर्धकानामसंख्याततमे भागे भवन्ति । इत्येवं चरमयोगस्थानं यावद् वक्तव्यम् ॥१०३॥

तदेवं भागद्वारं निरूपितम् । इदानीं गाथाद्विकेनाल्पबहुत्वद्वारमाह—

**थोवाणि फड्डगाइं जोगट्ठाणस्स अत्थि हस्सस्स ।**
**ताउ असंखगुणाइं हवन्ति गुरुजोगठाणस्स ॥१०४॥**
**ताओ अलहुगुरूणं हवन्ति ताओ विसेसअहियाइं ।**
**अगुरूणं ताहिन्तो अलहूणं ताउ सव्वेसिं ॥१०५॥**

(प्रे०) '**थोवाणि**' इत्यादि, जघन्ययोगस्थानस्य स्पर्धकानि सर्वस्तोकानि । '**ताउ**'

इत्यादि, जघन्ययोगस्थानस्पर्धकेभ्यः सर्वोत्कृष्टयोगस्थानस्य स्पर्धकानि असंख्यगुणानि भवन्ति। अत्रेयं भावना–प्रथमयोगस्थानादारभ्य चरमयोगस्थानं यावत् स्पर्धकानां द्विगुणवृद्धीनां स्थानानि श्रेण्यसंख्यातभागप्रमाणान्यसंख्यातानि भवन्ति। अतो द्विगुणवृद्धिस्थानप्रमाणान् द्व्यङ्कान् स्थापयित्वा परस्परं च गुणयित्वा यावद् गुणनफलं भवेत् तावत्प्रमाणगुणानि स्पर्धकानि जघन्ययोगस्थानस्पेक्षयोत्कृष्टयोगस्थाने भवन्ति। 'ताओ अजहुगुरूणं हवन्ति' इति, ततः-उत्कृष्टयोगस्थानगतस्पर्धकेभ्योऽजघन्यगुरूणां-अघन्योत्कृष्टयोगस्थाने विहाय शेषसर्वयोगस्थानानां स्पर्धकानि असंख्यगुणानि भवन्ति। अत्रेयं भावना-चरमद्विगुणवृद्धिगतयोगस्थानानामेव स्पर्धकानि चरमयोगस्थानगतस्पर्धकेभ्योऽसंख्येयगुणानि भवन्तीत्यजघन्योत्कृष्टयोगस्थानानां स्पर्धकानि सुतरामसंख्येयगुणानि भवन्ति। 'ताओ विसेसअहियाइं अगुरूणं' इति, ततः-अजघन्योत्कृष्टयोगस्थानस्पर्धकेभ्योऽनुत्कृष्टयोगस्थानगतानि स्पर्धकानि विशेषाधिकानि, अनुत्कृष्टयोगस्थानेषु जघन्ययोगस्थानस्य समावेशात् तद्गतस्पर्धकान्यधिकानि। 'ताहिन्तो अलहूणं' इति, अनुत्कृष्टयोगस्थानगतस्पर्धकेभ्योऽजघन्ययोगस्थानानां स्पर्धकानि विशेषाधिकानि, अजघन्ययोगस्थानेषूत्कृष्टयोगस्थानस्य समावेशाज्जघन्ययोगस्थानस्य च निर्गमनाद् जघन्ययोगस्थानस्पर्धकन्यूनोत्कृष्टयोगस्थानस्पर्धकानि अधिकानि। 'ताउ सव्वेसिं' इति, अजघन्ययोगस्थानगतस्पर्धकेभ्यः सर्वयोगस्थानानां स्पर्धकानि विशेषाधिकानि, सर्वयोगस्थानेषु जघन्ययोगस्थानस्य समावेशात् तद्गतस्पर्धकानि अधिकानि ॥१०४।१०५॥

तदेवं योगस्थानप्ररूपणायां स्पर्धकादीन्याश्रित्य षड्द्वाराणि निरूपितानि। पूर्वमपहारद्वारे सर्वजघन्ययोगस्थानगतवीर्याविभागैः प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानगतवीर्याणूनामपहारः कियता कालेन भवतीति निरूपणे 'संजोइअ अविभागा' इति गाथायां जघन्योत्कृष्टयोगस्थानवीर्याणूनां संयोगो विधेय इत्युक्तम्, अत इदानीं जघन्ययोगस्थानगतवीर्याविभागानयनार्थमादावेकस्मिन् स्पर्धके वीर्याविभागाः कथं ज्ञातव्या इति बोधार्थं करणं प्रतिपादयति—

> पढमंतवग्गणाणं इच्छिअफड्डस्स जिअपएसा य।
> संजोइअ संगुणिउं फड्डगआयामअद्धेणं ॥१०६॥
> गुणिए आइमवग्गणविरियाणूहिं हवेज्ज लद्धं जं।
> तत्तो किंचहिया इगफड्डे विरियाणओ णेया ॥१०७॥

(प्रे०) 'पढमंतवग्गणाणं' इत्यादि, इष्टस्पर्धकस्य–यस्य स्पर्धकस्य वीर्याणुसंख्या ज्ञातुमिष्टा तस्य स्पर्धकस्य प्रथमाया अन्त्यायाश्च वर्गणाया जीवप्रदेशान् संयोज्य, 'संगुणिउ फड्डगआयामअद्धेणं' इति, संयोजितान् प्रथमचरमवर्गणाजीवप्रदेशान् स्पर्धकायामार्धेन–स्पर्धकगतवर्गणार्धभागेन गुणयित्वा, 'गुणिए' इत्यादि, स्पर्धकगतवर्गणार्धभागेन गुणितानां संयोजित-

प्रथमचरमवर्गणाजीवप्रदेशानां प्रथमवर्गणावीर्याणुभिः, प्रथमवर्गणायामेकात्मप्रदेशस्थितवीर्याविभागैरित्यर्थः, गुणकारे कृते यद् गुणनफलं लब्धं ततः किञ्चिदधिका वीर्याणव इष्टस्पर्धके ज्ञातव्याः । इदमुक्तं भवति–आदौ वीर्याणुसंख्यां ज्ञातुमिष्टस्य स्पर्धकस्य प्रथमाया अन्त्यायाश्च वर्गणाया जीवप्रदेशानां संयोजनं कर्तव्यम् । ततः संयोजिता जीवप्रदेशाः स्पर्धकगतवर्गणाऽर्धभागेन गुणनीयाः । ततः प्रथमवर्गणैकात्मप्रदेशस्थितवीर्याणुभिर्गुणकारो विधेयः । गुणकारे कृते यद् गुणनफलं प्राप्तं ततः किञ्चिदधिका वीर्याणव इष्टस्पर्धके भवन्ति । अत्र स्थापनैवम्–( इष्टस्पर्धकप्रथमवर्गणात्मप्रदेशाः+इष्टस्पर्धकचरमवर्गणात्मप्रदेशाः ) ×स्पर्धकवर्गणार्धभागः×प्रथमवर्गणावीर्याविभागराशिः । अत्रासत्कल्पनामाश्रित्य स्थापनैवम्–

| स्पर्धक-क्रमः | वर्गणा-क्रमः | वर्गणागत-जीवप्रदेशाः | प्रत्यात्मप्रदेशे वीर्याविभागाः | स्पर्धक-क्रमः | वर्गणा-क्रमः | वर्गणागत-जीवप्रदेशाः | प्रत्यात्मप्रदेशे वीर्याविभागाः |
|---|---|---|---|---|---|---|---|
| १. | १ | २५६ | एकलक्षम् | ५. | १ | १९२ | पञ्चलक्षाणि |
| | २ | २५२ | एकोत्तरैकलक्षम् | | २ | १८८ | एकाधिकपञ्चलक्षाणि |
| | ३ | २४८ | द्व्यधिकैकलक्षम् | | ३ | १८४ | द्व्यधिकपञ्चलक्षाणि |
| | ४ | २४४ | त्र्यधिकैकलक्षम् | | ४ | १८० | त्र्यधिकपञ्चलक्षाणि |
| २. | १ | २४० | द्विलक्षे | ६. | १ | १७६ | षड्लक्षाणि |
| | २ | २३६ | एकाधिकद्विलक्षे | | २ | १७२ | एकाधिकषड्लक्षाणि |
| | ३ | २३२ | द्व्यधिकद्विलक्षे | | ३ | १६८ | द्व्यधिकषड्लक्षाणि |
| | ४ | २२८ | त्र्यधिकद्विलक्षे | | ४ | १६४ | त्र्यधिकषड्लक्षाणि |
| ३. | १ | २२४ | त्रिलक्षाणि | ७. | १ | १६० | सप्तलक्षाणि |
| | २ | २२० | एकाधिकत्रिलक्षाणि | | २ | १५६ | एकाधिकसप्तलक्षाणि |
| | ३ | २१६ | द्व्यधिकत्रिलक्षाणि | | ३ | १५२ | द्व्यधिकसप्तलक्षाणि |
| | ४ | २१२ | त्र्यधिकत्रिलक्षाणि | | ४ | १४८ | त्र्यधिकसप्तलक्षाणि |
| ४. | १ | २०८ | चतुर्लक्षाणि | ८. | १ | १४४ | अष्टलक्षाणि |
| | २ | २०४ | एकाधिकचतुर्लक्षाणि | | २ | १४० | एकाधिकाष्टलक्षाणि |
| | ३ | २०० | द्व्यधिकचतुर्लक्षाणि | | ३ | १३६ | द्व्यधिकाष्टलक्षाणि |
| | ४ | १९६ | त्र्यधिकचतुर्लक्षाणि | | ४ | १३२ | त्र्यधिकाष्टलक्षाणि |

अत्र गणितप्रक्रियैवम्-प्रथमस्पर्धकस्य सर्ववीर्याविभागा ज्ञातुमिष्यन्ते,अतः प्रथमवर्गणागतात्मप्रदेशाः२५६+चरमवर्गणागतात्मप्रदेशाः २४४=५०० । एकस्मिन् स्पर्धके चत्वारो वर्गणाः कल्पिता इति वर्गणार्धः२अतः५००×२=१०००। प्रथमवर्गणायां प्रत्यात्मप्रदेशे एकलक्षं वीर्याविभागाः कल्पिताः

इति एकसहस्रम्×एकलक्षम्=एकसहस्रलक्षाणि[१०००×१०००००=१०००००००००] । इत्येवं प्रथमस्पर्धके सर्ववीर्याविभागाः किञ्चिदधिकैकसहस्रलक्षाणि भवन्ति । अथ यदि द्वितीयस्पर्धकस्य सर्ववीर्याविभागा ज्ञातुमिष्यन्ते तदा २४०+२२८=४६८,४६८×२=९३६,९३६×द्विलक्षे=१८७२ लक्षाणि । इत्येवं द्वितीयस्पर्धके किञ्चिदधिकानि १८७२लक्षाणि वीर्याविभागा भवन्ति । इत्येवं तृतीयादिस्पर्धकेष्वपि परिभावनीयम् ॥१०६॥१०७॥

अनन्तरगाथायां 'तत्तो किंचहिया' इत्यनेनेष्टस्पर्धके प्रदर्शितकरणप्राप्तवीर्याणुभ्यः किञ्चिदधिका वीर्याणवो भवन्तीति निरूपितमित्यत इदानीं किञ्चिदधिकत्वं कियत्प्रमाणं ग्राह्यमिति जिज्ञासायां तत्प्रमाणं निर्दिधारयिषुर्गाथाद्विकमाह–

किंचहिया तावइआ अत्थि दुइअवग्गणप्पएसेहिं ।
एगूणवग्गणाणं संकलणं गुणिअ ताहिन्तो ॥१०८॥
संकलणासंकलणा गुणिआ दुगहीणवग्गणाणं उ ।
दोहि चयेहि विसुद्धा जावइआ अत्थि अवसेसा ॥१०९॥

(प्रे०) **'किंचहिया'** इत्यादि, किञ्चिदधिका वीर्याविभागास्तावन्तो भवन्तीति क्रियासंपर्कः । कियन्त इत्याह–**'दुइअ'** इत्यादि, एकन्यूनवर्गणानाम्–एकन्यूनानामेकस्पर्धकवर्गणानां संकलनं 卐 द्वितीयवर्गणागतात्मप्रदेशैर्गुणयित्वा, **'ताहिन्तो'** इति, तेभ्यः–गुणफलत्वेन समागतेभ्य आत्मप्रदेशेभ्यः, **'विशुद्धा'** इति परेणान्वयः, कर्तव्येत्यध्याहारः,का विशुद्धा कर्तव्येत्याह–**'संकलणासंकलणा'** इति, संकलनाया या संकलना सा संकलनासंकलना 卐 उच्यते, केषां संकलनासङ्कलनेत्याह-**'दुगहीणवग्गणाणं'** इति, द्विन्यूनवर्गणानां, द्विन्यूनानामेकस्पर्धकगतवर्गणानामित्यर्थः, कथम्भूता संकलनासंकलनेत्याह-**'गुणिआ'** इति, गुणिता, केन गुणिता ? इत्याह-**'दोहि चयेहि'** इति, द्वाभ्यामात्मप्रदेशहानिरूपचयाभ्यां गुणिता, **जावइआ'** इत्यादि, एवं रीत्या यावन्तो वीर्याविभागा अवशिष्टास्तावन्तो वीर्याविभागा अधिका भवन्ति ।

**अत्रायं भावः**–द्वितीयवर्गणात्मप्रदेशैः एकन्यूनानामेकस्पर्धकवर्गणानां संकलनं गुणयित्वा गुणफलत्वेन प्राप्तेभ्य आत्मप्रदेशेभ्यो द्विचयाभ्यां गुणितायां द्विन्यूनानामेकस्पर्धकवर्गणानां संकलनासंकलनायां विशुद्धायां यावन्तो वीर्याविभागा अवशिष्टास्तावन्तो वीर्याविभागा अनन्तरगाथानिर्दिष्टकरणेन प्राप्तेषु वीर्याविभागेषु अधिका ज्ञातव्याः ।

अत्रासत्कल्पनयैवम्–अनन्तरगाथायामेकस्मिन् स्पर्धके चत्वारो वर्गणाः कल्पिताः, अतोऽत्र त्रिवर्गणानां संकलनं [१+२+३=६] षड् भवति । अतः ६×२५२=१५१२ । एकस्पर्धकानां द्विन्यूनवर्गणानां संकलनसंकलनं $\left[\begin{matrix}१ = १ \\ १+२ = \frac{३}{४}\end{matrix}\right]$ चत्वारि भवति । अत्र चतुर्णामेकचयोऽस्तीति द्विन्यून-

卐 संकलनविधिः संकलनासंकलनाविधिश्चानन्तरगाथायामेव वक्ष्यते ।

वर्गणासंकलनसंकलने द्विचयाभ्यां गुणिते [ ४×८=३२ ] द्वात्रिंशद् गुणनफलं भवति । अतः १५१२-३२=१४८० । इत्येवं प्रथमस्पर्धकेऽशीत्यधिकचतुःशतोत्तरैकसहस्राधिकैकसहस्रलक्षाणि सर्वे वीर्याविभागा भवन्ति । अनन्तरगाथाद्विकेऽन्तिमगुणकारः प्रथमवर्गणैकात्मप्रदेशगतवीर्याविभागैः कृतः, अतो यद् गुणनफलं भवति तावत्प्रमाणा वीर्याविभागाः प्रथमस्पर्धके प्रथमवर्गणाप्रमाणेन भवन्ति । अत तेषु द्वितीयादित्रिवर्गणासु प्रथमवर्गणाप्रमाणतोऽधिकानां वीर्याविभागानां योगे कृते प्रथमस्पर्धके सर्ववीर्याविभागा लभ्यन्ते । द्वितीयादित्रिवर्गणासु प्रथमवर्गणावीर्याविभागतो यथोक्तप्रमाणा वीर्याणवोऽधिका भवन्ति ।

तद्यथा—द्वितीयवर्गणायां प्रत्यात्मप्रदेशे एको वीर्याविभागोऽधिकः, सर्वे आत्मप्रदेशाश्च द्विपञ्चाशदधिकद्विशते सन्ति । अतः [२५२×१=२५२] द्वितीयवर्गणायां प्रथमवर्गणावीर्याविभागतो द्विपञ्चाशदधिकद्विशते (२५२) वीर्याणवोऽधिकाः । तृतीयवर्गणायां प्रत्यात्मप्रदेशे द्विवीर्याविभागावधिकौ, सर्वात्मप्रदेशाश्चाष्टचत्वारिंशदधिकद्विशते (२४८) सन्ति । अतः [२४८×२=४९६] तृतीयवर्गणायां प्रथमवर्गणावीर्याविभागतः षण्णवत्यधिकचतुःशतानि(४९६)वीर्याविभागा अधिकाः, चतुर्थवर्गणायां प्रत्यात्मप्रदेशे त्रिवीर्याविभागा अधिकाः, सर्वात्मप्रदेशाश्च चतुश्चत्वारिंशदधिकद्विशते (२४४) सन्ति । अतः (२४४×३=७३२) चतुर्थवर्गणायां प्रथमवर्गणावीर्याविभागतो द्वात्रिंशदधिकसप्तशतानि (७३२) वीर्याविभागा अधिकाः । तेषां सर्वेषां योगे कृते (२५२+४९६+७३२ =१४८०) योगफलमशीत्यधिकचतुःशतोत्तरैकसहस्रवीर्याणवो भवति ।

अथ प्रथमादिप्रत्येकवर्गणागतवीर्याविभागानां योगे कृते विंशतिन्यूनसार्धसहस्राधिकानि एकसहस्रलक्षाणि (१००००१४८०)योगफलं भवति । तद्यथा—प्रथमवर्गणायां प्रत्यात्मप्रदेशे एकलक्षवीर्याविभागाः,सर्वात्मप्रदेशाः षट्पञ्चाशदधिकद्विशते,अतः[२५६×एकलक्षम्=]२५६ लक्षाणि वीर्याविभागाः प्रथमवर्गणायां भवन्ति । द्वितीयवर्गणायां प्रत्यात्मप्रदेशे एकाधिकैकलक्षवीर्याविभागाः,सर्वात्मप्रदेशा द्विपञ्चाशदधिकद्विशते, अतः [२५२×एकाधिकैकलक्षम्=] २५२ अधिकानि २५२ लक्षाणि वीर्याविभागा द्वितीयवर्गणायां भवन्ति । तृतीयवर्गणायां प्रत्यात्मप्रदेशे द्व्यधिकैकलक्षवीर्याविभागाः, सर्वात्मप्रदेशाः २४८, अतः [२४८×द्व्यधिकैकलक्षम्=] ४९६ अधिकानि २४८ लक्षाणि वीर्याविभागास्तृतीयवर्गणायां भवन्ति । चतुर्थवर्गणायां प्रत्यात्मप्रदेशे त्र्यधिकैकलक्षवीर्याविभागाः, सर्वात्मप्रदेशाः २४४,अतः (२४४×त्र्यधिकैकलक्षम्=)७३२ अधिकानि २४४ लक्षाणि वीर्याविभागाश्चतुर्थवर्गणायां भवन्ति । एतेषां सर्वेषां योगे कृते(१००००१४८०)विंशतिन्यूनसार्धसहस्राधिकानि एकसहस्रलक्षाणि योगफलं भवति । अतोऽसत्कल्पनया प्रथमस्पर्धके सर्ववीर्याविभागा विंशतिन्यूनसार्धसहस्राधिकानि एकसहस्रलक्षाणि भवन्ति ॥१०८।१०९॥

अनन्तरगाथाद्विके 'संकलणं गुणिअ' इति संकलणासंकलणा गुणिअ'इति चोक्तम् , अत इदानीं गणितरीत्या संकलनविधिं संकलनासंकलनाविधिं च प्रचिकटयिषुस्तत्करणगाथामाह—

गच्छज्जंतधणजुई गच्छद्धेण गुणिआऽत्थि संकलणं ।
तं दुजुअगच्छगुणिअं तिहयं संकलणसंकलणं ॥११०॥

(प्रे०) आदौ तावत् पूर्वार्धेन संकलनविधिमाह-'गच्छज्जंतधणजुई' इत्यादि, गच्छस्याद्यधनेनान्त्यधनेन च युतिः संख्या गच्छार्धेन गुणिता सती संकलनं भवति। यावतां राशीनां सकलनं कर्तुमिष्यते ते सर्वे राशयो गच्छशब्देनाभिधीयन्ते। यदि एकसंख्यातः प्रारम्य दशसंख्यां यावत् संकलनं कर्तुमिष्यते तदा एकं, द्वे, त्रीणीत्येवं दश यावद् ये दशराशयस्तेषां समुदायो गच्छः, अर्थाद् दशराशीनामेको गच्छो भवति। यदि पञ्चतः प्रारम्य दश यावत् संकलनं कर्तुमिष्यते तदा पञ्च, षट्, सप्तेत्येवं दश यावत् षड्राशयो भवन्ति। षण्णां राशीनां गच्छो भवति। धनं नाम राशिः।

अथात्र दृष्टान्तेन संकलनविधिः प्रदर्श्यते-एकराशेः प्रारम्य दशराशिं यावत् संकलनं कर्तुमिष्यतेऽतो गच्छस्यादिराशेरेकस्यान्त्यराशेश्च दशानां योगो विधेयः, अतः (१+१०=११) गच्छस्यादिधनेनान्त्यधनेन च युक्ता संख्या ११, सा गच्छार्धेन पञ्चभिः गुणनीया, अतः ११×५=५५, इत्येवमेकसंख्यातो दशसंख्यां यावत् संकलनं ५५ भवति।

अथ द्वितीयमुदाहरणम्-पञ्चतः प्रारम्य दश यावत् संकलनं कर्तुमिष्यते, अतो गच्छस्यादिराशेः पञ्चानामन्त्यराशेश्च दशानां योगो विधेयः, ५+१०=१५, इति गच्छस्यादिचरमधनयुक्ता संख्या १५, सा गच्छार्धेन त्रिभिर्गुणनीया, अतः १५×३=४५, इत्येवं पञ्चतः दश यावत् संकलनं ४५ भवति।

तृतीयमुदाहरणम्,—एकसंख्यातः षोडशसंख्यां यावत् संकलनमेवम्-१+१६=१७, १७×८=१३६ संकलनम्।

अथात्रोक्तदृष्टान्तत्रिके प्राप्तं संकलनं क्रमशः स्थापनया प्रदर्श्यते-

(१) १+२+३+४+५+६+७+८+९+१०=५५

(२) ५+६+७+८+९+१०=४५

(३) १+२+३+४+५+६+७+८+९+१०+११+१२+१३+१४+१५+१६=१३६

अथोत्तरार्धेन संकलनसंकलनविधिमाह-'तं' इत्यादि 'तं' इति पदं नपुंसकलिङ्गे प्रथमैकवचनं संकलनशब्दपरामर्शकं, तत् संकलनमेव संकलनसंकलनं भवति। कथम्भूतं संकलनमित्याह-'दुजुअगच्छगुणिअं' इति, द्वाभ्यां युक्तेन गच्छेन गुणितम्, पुनः कथम्भूतमित्याह-'तिहयं' इति त्रिभिर्हतम्। पूर्वं द्वियुक्तगच्छेन गुणितं ततस्त्रिभिर्हतं संकलनमेव संकलनसंकलनं भवतीति भावः।

अत्रोदाहरणम्-एकतः प्रारम्य दश यावत् संकलनसंकलनं कर्तुमिष्यते, तेषां संकलनं ५५ भवतीत्यनन्तरं प्रदर्शितम्, अत्र दशराशीनां गच्छोऽस्तीति (१०+२=१२) द्वियुक्तो गच्छः १२, ततः ५५×१२=६६०, ६६०÷३=२२०, इत्येवमेकतः प्रारम्य दशसंख्यानां संकलनसकलनं २२० भवति।

अत्र स्थापनैवम्—

| | |
|---|---|
| १ | =१ |
| १+२ | =३ |
| १+२+३ | =६ |
| १+२+३+४ | =१० |
| १+२+३+४+५ | =१५ |
| १+२+३+४+५+६ | =२१ |
| १+२+३+४+५+६+७ | =२८ |
| १+२+३+४+५+६+७+८ | =३६ |
| १+२+३+४+५+६+७+८+९ | =४५ |
| १+२+३+४+५+६+७+८+९+१० | =५५ |
| | २२० |

द्वितीयमुदाहरणम्—एकतः प्रारभ्य षोडश यावत् संकलनसंकलनं कर्तुमिष्यते, तेषां संकलनं १३६ भवतीति पूर्वं प्रदर्शितम्, अत्र षोडशराशीनां गच्छोऽस्तीति (१६+२=१८) द्वियुक्तो गच्छः १८, अतः १३६×१८=२४४८, २४४८÷३=८१६, इत्येवमेकतः प्रारभ्य षोडशसंख्यानां संकलनसंकलनं ८१६ भवति। एकतः प्रारभ्य दश यावत् संकलनसंकलने स्थापना पूर्वं प्रदर्शिता, अत्र एकादशतः प्रारभ्य षोडश यावत् संकलनसंकलनस्य स्थापना प्रदर्श्यते—

| | |
|---|---|
| १+२+३+४+५+६+७+८+९+१०+११ | =६६ |
| १+२+३+४+५+६+७+८+९+१०+११+१२ | =७८ |
| १+२+३+४+५+६+७+८+९+१०+११+१२+१३ | =९१ |
| १+२+३+४+५+६+७+८+९+१०+११+१२+१३+१४ | =१०५ |
| १+२+३+४+५+६+७+८+९+१०+११+१२+१३+१४+१५ | =१२० |
| १+२+३+४+५+६+७+८+९+१०+११+१२+१३+१४+१५+१६ | =१३६ |
| | ५९६ |

[एकतः प्रारभ्य दश यावत् संकलनसंकलनं] २२०+५९६ (एकादशतः प्रारभ्य षोडश यावत् संकलनसंकलनं)=८१६ ।

अत्रेदं ध्येयम्—अत्र संकलनसंकलनस्य यो विधिः प्रदर्शितः स एकतः प्रारभ्य एकोत्तरवृद्धीनामङ्कानां संकलनसंकलनमाश्रित्य ज्ञेयः, न तु एकतः प्रारभ्य द्व्याद्युत्तरवृद्धीनामङ्कानां, नवा द्वित्रिचतुरादितः प्रारभ्य एकोत्तरवृद्धीनां द्व्याद्युत्तरवृद्धीनां वाऽङ्कानां संकलनसंकलनमाश्रित्येति ॥११०॥

इदानीमनन्तरोक्तमर्थं तथैकतः प्रारभ्य द्वयाद्युत्तरवृद्धीनामङ्कानां, द्वित्रिचतुराद्यङ्कतश्च प्रारभ्यैकोत्तरवृद्धीनां द्वयाद्युत्तरवृद्धीनां वाऽङ्कानां संकलनासंकलनाविधिं निजिगदिषुरिदं गाथाद्विकमाह—

एस उ एगाईणं हवेज्ज एगुत्तराण अंकाणं ।
संकलणासंकलणा अहत्थकरणेण अण्णेसिं ॥१११॥
णेया सा संकलणं गच्छस्स पढमधणेण गुणिअ जुआ ।
संकलणासंकलणा चयगुणिएगूणगच्छस्स ॥११२॥

(प्रे०) 'एस उ' इति, एषः-अनन्तरगाथोक्तः संकलनसंकलनविधिस्तु, 'एगाईणं' इत्यादि, एकादीनामेकोत्तरवृद्धीनामङ्कानां भवति । अनन्तरगाथायां प्रदर्शितकरणेन यः संकलनासंकलनाविधिः प्रदर्शितः स एकतः प्रारभ्यैकोत्तरवृद्धयङ्कानाश्रित्योक्त इत्यर्थः । 'संकलणासंकलणा' इत्यादि, अन्येषाम्-एकतः प्रारभ्य द्वयाद्युत्तरवृद्धीनामङ्कानां तथा द्वित्रिचतुराद्यङ्कतः प्रारभ्यैकोत्तरवृद्धीनां द्वयाद्युत्तरवृद्धीनां वाऽङ्कानां संकलनासंकलना अधस्तनकरणेन-निम्नोक्तकरणेन भवति ।

तदेवाह-'णेया सा' इति, सा ज्ञातव्या, एकतः प्रारभ्य द्वयाद्युत्तरवृद्धीनामङ्कानां तथा द्वित्रिचतुराद्यङ्कतः प्रारभ्यैकोत्तरवृद्धीनां द्वयाद्युत्तरवृद्धीनां वाऽङ्कानां संकलनासंकलना इति गम्यते, सा का ? इत्याह-'संकलणं' इत्यादि, गच्छस्य संकलनं प्रथमधनेन-आदिधनेन गुणयित्वा, 'जुआ संकलणासंकलणा' इत्यादि, आदिधनेन गच्छस्य संकलने गुणिते यद् गुणनफलं भवति तेन युक्ता चयेन गुणिता एकन्यूनस्य गच्छस्य संकलनासंकलना । इति गाथाक्षरार्थयोजना ।

भावार्थस्तु पुनरेवम्-आदौ तावद् गच्छस्य संकलनमाद्यधनेन गुणनीयम् , तत एकन्यून गच्छस्य संकलनासंकलना चयेन गुणनीया, ततः प्रथमधनेन गुणितस्य गच्छसंकलनस्य चयेन गुणिताया एकन्यूनगच्छसंकलनासंकलनायाश्च योगो विधेयः, योगे कृते यद् योगफलं प्राप्तं तदेकतः प्रारभ्य द्वयाद्युत्तरवृद्धीनामङ्कानां तथा द्वित्रिचतुरादितः प्रारभ्यैकोत्तरवृद्धीनां द्वयाद्युत्तरवृद्धीनां वाऽङ्कानां संकलनासंकलना भवति । अत्र स्थापनैवम्—

[गच्छसंकलनम्×आदिधनम् ]+[एकन्यूनगच्छसंकलनासंकलना×चयः]=इष्टाङ्कानां संकलनासंकलना ।

अथैतत्सर्वं दृष्टान्तैः प्रदर्श्यते । तत्राद्यमुदाहरणमेवम्-एकतः प्रारभ्य त्र्युत्तरवृद्धीनां दशान्तानामङ्कानां संकलनसंकलनं कर्तुमिष्यते, अतो गच्छः ४, तस्य संकलनं [१ + २ + ३ + ४=]१०, तदाद्यधनेनैकेन गुणनीयम् , अतः १०×१=१०, एकन्यूनस्य गच्छस्य संकलनासंकलनाऽनन्तरगाथाप्रदर्शितरीत्या [१ +(१ + २)+(१ + २ + ३)=] १० (दश) भवति, सा त्रिसंख्याकेन चयेन गुणनीया, अतः १०×३=३०, अथ प्रथमधनेन गुणितस्य गच्छसंकलनस्य चयेन

गुणितायाः एकन्यूनगच्छसंकलनासंकलनायाश्च योगो विधेयः, अतः ३० + १०=४०, इत्येवमेकतः प्रारभ्य त्र्युत्तरवृद्धीनां दशान्तानामङ्कानां संकलनासंकलना चत्वारिंशद् (४०) भवति। अत्र

स्थापनैवम्—

| | |
|---|---|
| १ | =१ |
| १+४ | =५ |
| १+४+७ | =१२ |
| १+४+७+१० | =२२ |
| | ४० |

द्वितीयमुदाहरणमेवम्–षट्संख्यातः प्रारभ्यैकोत्तरवृद्धीनां दशपर्यन्तानामङ्कानां संकलनसंकलनं कर्तुमिष्यते, अतः गच्छः पञ्च (५), तस्य संकलनं (१+२+३+४+५=) पञ्चदश (१५), तदादिधनेन षडात्मकेन गुणनीयम्, अतः १५×६=९०, एकन्यूनगच्छस्य संकलनसंकलनं [१+(१+२)+(१+२+३)+(१+२+३+४)=] विंशतिः (२०) भवति, तदेकात्मकेन चयेन गुणनीयम्, अतः २०×१=२०, अथ प्रथमधनेन गुणितस्य गच्छसंकलनस्य चयेन गुणितायाः एकन्यूनगच्छसंकलनासंकलनायाश्च योगो विधेयः, अतः ९०+२०=११०, इत्येवं षट्संख्यातः प्रारभ्यैकोत्तरवृद्धीनां दशान्तानामङ्कानां संकलनासंकलना ११० भवति। अत्र स्थापनैवम्—

| | |
|---|---|
| ६ | =६ |
| ६+७ | =१३ |
| ६+७+८ | =२१ |
| ६+७+८+९ | =३० |
| ६+७+८+९+१० | =४० |
| | ११० |

तृतीयमुदाहरणमेवम्–पञ्चत आरभ्य पञ्चोत्तरवृद्धीनां पञ्चविंशतिपर्यन्तानामङ्कानां संकलनसंकलनं कर्तुमिष्यते, अतः गच्छः पञ्च (५), तस्य संकलनं पञ्चदश (१५), तत् प्रथमधनेन गुणनीयम्, अतः १५×५=७५, एकन्यूनगच्छस्य संकलनसंकलनं विंशतिः (२०), तत् पञ्चस्वरूपेण चयेन गुणयितव्यम्, अतः २०×५=१००, अथ प्रथमधनेन गुणितस्य गच्छसंकलनस्य चयेन गुणितस्यैकन्यूनगच्छसंकलनसंकलनस्य च योगो विधेयः, अतः ७५+१००=१७५, इत्थं पञ्चतः प्रभृति पञ्चोत्तरवृद्धीनां पञ्चविंशतिपर्यन्तानामङ्कानां संकलनसंकलनं १७५ भवति। अत्र स्थापनैवम्–

| | |
|---|---|
| ५ | =५ |
| ५+१० | =१५ |
| ५+१०+१५ | =३० |
| ५+१०+१५+२० | =५० |
| ५+१०+१५+२०+२५ | =७५ |
| | १७५ |

चतुर्थो दृष्टान्त इत्थम्—सप्तदशतः प्रारभ्य सप्तोत्तरवृद्धीनां षट्षष्टिं यावदङ्कानां संकलनसंकलनं कर्तुमिष्यते, अतः गच्छोऽष्टौ (८), तस्य संकलनं [१+२+३+४+५+६+७+८=] ३६, 卐 तदादिमधनेन सप्तदशमङ्ख्याकेन गुणनीयम्, ३६×१७=६१२, एकन्यूनगच्छस्य संकलनसकलनं(१+(१+२)+(१+२+३)+(१+२+३+४)+(१+२+३+४+५)+(१+२+३+४+५+६)+(१+२+३+४+५+६+७)+(१+२+३+४+५+६+७+८)=८४, ★तद् सप्तारकेन चयेन गुणनीयम्, अतः ८४×७=५८८, अथाद्यधनेन गुणितस्य गच्छसंकलनस्य चयेन गुणितस्यैकन्यूनगच्छसंकलनसंकलनस्य च योगो विधेयः, अतः ६१२+५८८=१२००, इत्येवं सप्तदशतः प्रारभ्य सप्तोत्तरवृद्धीनां षट्षष्टिपर्यन्तानामङ्कानां संकलनसंकलनं १२०० भवति।

अत्र स्थापनेत्थम्—

| | |
|---|---|
| १७ | = १७ |
| १७+२४ | = ४१ |
| १७+२४+३१ | = ७२ |
| १७+२४+३१+३८ | =११० |
| १७+२४+३१+३८+४५ | =१५५ |
| १७+२४+३१+३८+४५+५२ | =२०७ |
| १७+२४+३१+३८+४५+५२+५९ | =२६६ |
| १७+२४+३१+३८+४५+५२+५९+६६ | =३३२ |
| | १२०० |

---

卐 गच्छसंकलनविधिरित्थम्—

(आदिधन+अन्तिमधन) ×गच्छार्धं=सकलनम्।

१ + ८ =९× ४ =३६।

★ एकन्यूनगच्छसंकलनसंकलनविधिरयम्—

संकलनम्×(एकन्यूनगच्छ ७+२)÷३=संकलनसंकलनम्।

२८ × ९ ÷३= ८४

इदानीं प्रथमद्विगुणहानौ सर्ववीर्याविभागाः कियन्तो भवन्तीति प्रतिपादनार्थं करणगाथात्रिकमाह—

पढमदुगुणहाणीए तावइआ वीरियाणवो णेया ।
फड्डगसंकलणेणं गुण्णाइमफड्डविरियाणू ॥११३॥
एगूणफड्डगाणं किच्चा संकलणसंकलणं ।
संगुणिऊण चयेहिं जीवपएसेहि एगफड्डस्स ॥११४॥(उद्गीतिः)
गुणिउं विरियाणूहिं आइमवग्गस्स बीअफड्डस्स ।
पुव्वुत्ता य विसुद्धा ते किंचहियाऽत्थि जावइआ ॥११५॥

(प्र०) 'पढमदुगुणहाणीए' इत्यादि, प्रथमद्विगुणहानौ तावन्तो वीर्याविभागा ज्ञातव्याः, कियन्तः ? इत्याह—'फड्डगसंकलणेणं' इत्यादि, स्पर्धकसंकलनेन प्रथमस्पर्धकवीर्याणवो गुणनीयाः, ततः किं कर्तव्यमित्याह—'एगूणफड्डगाणं किच्चा संकलणसंकलणं' इति, एकन्यूनस्पर्धकानां संकलनसङ्कलनं कृत्वा, 'संगुणिऊण चयेहिं जीवपएसेहि एगफड्डस्स' इति, एकस्पर्धकस्य चयरूपा ये जीवप्रदेशास्तैर्गुणयित्वा, 'गुणिउं विरियाणूहिं आइमवग्गस्स बीअफड्डस्स' इति, द्वितीयस्पर्धकस्यादिवर्गस्य ये वीर्याणवस्तैर्गुणयित्वा, 'पुव्वुत्ता य विसुद्धा ते' इत्यादि, ते— एकन्यूनस्पर्धकानां संकलनसंकलनं कृत्वा, एकस्पर्धकस्य चयरूपजीवप्रदेशैर्गुणयित्वा, द्वितीयस्पर्धकस्य प्रथमवर्गवीर्याणुभिर्गुणयित्वा च यावन्तो वीर्याविभागाः प्राप्तास्ते वीर्याविभागाः पूर्वोक्तात्— स्पर्धकसंकलनेन प्रथमस्पर्धकवीर्याणुषु गुणितेषु यद् गुणनफलं प्राप्तं तस्मात् विशुद्धाः, कर्तव्याः इति शेषः, 'किंचहियाऽत्थि जावइआ' इति, 'ते' इति पदमत्रापि सम्बध्यते, ते-स्पर्धकसंकलनेन गुणितेभ्यो वीर्याविभागेभ्य एकन्यूनस्पर्धकानां संकलनसंकलनं कृत्वा, एकस्पर्धकस्य चयरूपजीवप्रदेशैर्गुणयित्वा, द्वितीयस्पर्धकस्य प्रथमवर्गवीर्याणुभिर्गुणयित्वा च यावन्तो वीर्याविभागाः प्राप्तास्तेषु विशुद्धेषु कृतेषु येऽवशिष्टा वीर्याणवस्ते किञ्चिदधिकाः कृताः सन्तो यावन्तो भवन्ति, तावन्तो वीर्याणवः प्रथमद्विगुणहानौ भवन्ति ।

अयं भावः—स्पर्धकसंकलनेन प्रथमस्पर्धकवीर्याविभागान् गुणयित्वा यो राशिः प्राप्यते सः स्थापनीयः । तत एकन्यूनस्पर्धकानां सङ्कलनसंकलनं कर्तव्यम् । ततस्तत् संकलनसंकलनमेकस्पर्धकचयरूपजीवप्रदेशैर्गुणनीयम् । एकस्पर्धकचयरूपजीवप्रदेशैर्गुणिते सङ्कलनसङ्कलने यद् गुणनफलं प्राप्तं तद् द्वितीयस्पर्धकप्रथमवर्गवीर्याविभागैर्गुणनीयम् । एवं यद् गुणनफलं प्राप्तं तद् पूर्वं स्पर्धकसंकलनेन प्रथमस्पर्धकवीर्याविभागान् गुणयित्वा यो राशिः स्थापितस्तस्माद् विशुद्धं कर्तव्यम् । एवं

कृते यदवशिष्टं ततः किञ्चिदधिका वीर्याविभागा यावन्तो भवन्ति तावन्तो वीर्याविभागाः प्रथमद्विगुणहानौ भवन्ति ।

**तदत्रासत्कल्पनया चिन्त्यते**-पूर्वं विवक्षितैकस्पर्धकगतवीर्याविभागबोधार्थं प्रदर्शिते 'पढमंतवग्गणाणं इच्छिमफड्डस्स' इत्यादिगाथाद्विके(गाथा० १०६-१०७)तद्वृत्तौ योगस्थानादिषु स्पर्धकादीनां या कल्पना कृता सैवात्रापि ज्ञातव्या। तत्रैकद्विगुणहानावष्टौ स्पर्धकानि कल्पितानि,अतः १+८=९,९×४=३६,इति प्रथमद्विगुणहानिगतकस्पर्धकसंकलनं षट्त्रिंशद् , प्रथमस्पर्धके एकसहस्रलक्षाणि वीर्याविभागाः सन्ति,अत एकसहस्रलक्षाणि×३६=षट्त्रिंशत्सहस्रलक्षाणि । १+७=८,८×$\frac{७}{२}$=२८,इत्येवमेकन्यूनस्पर्धकानां संकलनमष्टाविंशतिर्भवति, संकलनसंकलनं=गच्छसंकलनम्×(गच्छः+२)÷३ ।

प्रस्तुते (२८)×(७+२)÷३=८४ ।

अतः २८×९=२५२,२५२÷३=८४, इत्येवमेकन्यूनस्पर्धकानां संकलनसंकलनं चतुरशीतिर्भवति । अत्र स्पर्धकगतचयः चतुःषष्टिरस्ति । नन्वेतत् कथं ज्ञायते ? इति चेद् , प्रतिविधीयते,वर्गणावर्गो=(वर्गणासंख्या) विवक्षितद्विगुणहानौ उत्तरोत्तरवर्गणायामात्मप्रदेशानां हानिरूपो यावान् चयस्तावता राशिना गुणनीयः, गुणकारे कृते यावद् गुणनफलं तावत्प्रमाणश्चयो विवक्षितद्विगुणहानेरेकस्पर्धकस्य भवति । तथाहि-प्रथमद्विगुणहानौ वर्गणायामात्मप्रदेशानां चयश्चत्वारि, अतो वर्गणावर्गः१६×४=६४ , इति प्रथमद्विगुणहानेरेकस्पर्धकस्यात्मप्रदेशानां चयश्चतुःषष्टिर्भवति । द्वितीयद्विगुणहानौ वर्गणायामात्मप्रदेशानां चयः द्वौ,अतो वर्गणावर्गः१६×२=३२, इति द्वितीयद्विगुणहानेरेकस्पर्धकस्यात्मप्रदेशानां चयो द्वात्रिंशद् । एवं तृतीयद्विगुणहानौ वर्गणायामात्मप्रदेशानां चय एकः, अतो वर्गणावर्गः१६×१=१६, इति तृतीयद्विगुणहानेरेकस्पर्धकस्यात्मप्रदेशानां चयः षोडश । इत्येवं चतुर्थादिद्विगुणहानिष्वपि परिभावनीयम् । वर्गणावर्गस्तु सर्वद्विगुणहानिषु षोडशैव भवति, प्रत्येकस्पर्धके चतसृणामेव वर्गणानां कल्पितत्वात् ।

तदेवं प्रसङ्गात् चयानयनकरणं प्रदर्शितम् । इदानीं प्रस्तुतं चिन्त्यते-अत्र प्रथमद्विगुणहानौ वीर्याणवश्चिन्त्यन्ते । प्रथमद्विगुणहानेरेकस्पर्धकस्य चयश्चतुःषष्टिः(६४) अस्ति । अतः ८४×६४=५३७६।५३७६×द्विलक्षे=१०७५२ लक्षाणि । ३६००० लक्षाणि-१०७५२ लक्षाणि=२५२४८ लक्षाणि । इत्येवं प्रथमद्विगुणहानौ सर्ववीर्याविभागाः किञ्चिदधिकानि २५२४८ लक्षाणि भवन्ति ।

तदेवं करणेन प्रथमद्विगुणहानौ सर्ववीर्याविभागा भाविताः । अथ यदि पूर्वं "पढमंतवग्गणाणं इच्छिमफड्डस्स" इत्यादिगाथाद्विके (गाथा० १०६-१०७) तद्वृत्तौ प्रथमयोगस्थानस्पर्धकवीर्याणूनां स्थापनायां प्रदर्शितप्रमाणेन प्रत्येकस्पर्धकगतवीर्याणूनां योगः क्रियते तर्ह्यपि सर्ववीर्याविभागाः किञ्चिदधिकानि २५२४८ लक्षाणि भवन्ति । अत्रैवं स्थापना-

| स्पर्धक-क्रमः | स्पर्धकगतसर्व-वीर्याविभागाः | वर्गणानां क्रमः | वर्गणागतसर्व-वीर्याविभागाः |
|---|---|---|---|
| १. | १००० लक्षाणि | १ | २५६ लक्षाणि |
| | | २ | २५२ लक्षाणि |
| | | ३ | २४८ लक्षाणि |
| | | ४ | २४४ लक्षाणि |
| २ | १८७२ लक्षाणि | १ | ४८० लक्षाणि |
| | | २ | ४७२ लक्षाणि |
| | | ३ | ४६४ लक्षाणि |
| | | ४ | ४५६ लक्षाणि |
| ३ | २६१६ लक्षाणि | १ | ६७२ लक्षाणि |
| | | २ | ६६० लक्षाणि |
| | | ३ | ६४८ लक्षाणि |
| | | ४ | ६३६ लक्षाणि |
| ४ | ३२३२ लक्षाणि | १ | ८३२ लक्षाणि |
| | | २ | ८१६ लक्षाणि |
| | | ३ | ८०० लक्षाणि |
| | | ४ | ७८४ लक्षाणि |
| ५ | ३७२० लक्षाणि | १ | ९६० लक्षाणि |
| | | २ | ९४० लक्षाणि |
| | | ३ | ९२० लक्षाणि |
| | | ४ | ९०० लक्षाणि |
| ६ | ४०८० लक्षाणि | १ | १०५६ लक्षाणि |
| | | २ | १०३२ लक्षाणि |
| | | ३ | १००८ लक्षाणि |
| | | ४ | ९८४ लक्षाणि |
| ७ | ४३१२ लक्षाणि | १ | ११२० लक्षाणि |
| | | २ | १०९२ लक्षाणि |
| | | ३ | १०६४ लक्षाणि |
| | | ४ | १०३६ लक्षाणि |
| ८ | ४४१६ लक्षाणि | १ | ११५२ लक्षाणि |
| | | २ | ११२० लक्षाणि |
| | | ३ | १०८८ लक्षाणि |
| | | ४ | १०५६ लक्षाणि |

सर्ववीर्याविभागाः=२५२४८ लक्षाणि

अत्र किञ्चिदधिका वीर्याविभागाः स्वयं परिभावनीयाः ॥११३।११४।११५॥

तदेवं प्रथमद्विगुणहानौ सर्ववीर्याविभागानयनार्थं करणं निर्दिष्टम्। सम्प्रति द्वितीयादिद्विगुण-हानिषु सर्ववीर्याविभागानां सशोधनार्थं गाथापञ्चकेन करणं प्रदर्शयति—

**तावइआ विरियाणू हवन्ति बीआइदुगुणहाणीए ।**
**सव्वपढमफड्डस्स उ जहुत्तरं ठविअ अद्धाऽद्धा ॥११६॥**
**इच्छिअगुणहाणीए फड्डेहि सपुव्वसव्वफड्डाणि ।**
**संगुणिउं संजोइअ इच्छिअगुणहाणिफड्डसंकलणं ॥११७॥** (गीतिः)
**तेण गुणिअ सा ठप्पा गुणिऊण सपुव्वसव्वफड्डेहिं ।**

इच्छिअगुणहाणीए इगूणफड्डाण संकलणं ॥११८॥
संकलणासंकलणा इच्छिअगुणहाणिगूणफड्डाणं ।
गुणिअ दुगेणं जोइअ गुणिउं सव्वजवग्गेणं ॥११९॥
इच्छिअगुणहाणीए गुणिउं फड्डचयजिअपएसेहिं ।
ठप्पाए य विसोइअ ते किंचहियाऽत्थि जावइआ॥१२०॥

(प्रे०) (१) 'तावइआ' इत्यादि, द्वितीयादिद्विगुणहानिषु वीर्याणवस्तावन्तो भवन्ति, कियन्त इत्याह-'सव्वपढम'इत्यादि, यथोत्तरं द्विगुणहानिषु सर्वप्रथमस्पर्धकस्य, प्रथमद्विगुणहानेः प्रथमस्पर्धकस्येत्यर्थः,वीर्याणूनामर्धानर्धान् वीर्याणून् स्थापयित्वा,यथोत्तरं द्विगुणहानिषु सर्वप्रथमस्पर्धकस्यार्धानर्धान् वीर्याणून् स्थापयित्वा इति यावत् । इदमुक्तं भवति-यात्र तिथ्या द्विगुणहानेः सर्ववीर्याणवो ज्ञातुमिष्यन्ते तत एकन्यूनवारं प्रथमद्विगुणहानेः प्रथमस्पर्धकस्य वीर्याविभागानर्धीकृत्य या संख्या प्राप्ता तां स्थापयित्वा । इति प्रथमगाथार्थः ।

(२) ततः किं कर्तव्यमित्याह-''इच्छिअगुणहाणीए फड्डेहि सपुव्वसव्वफड्डाणि संगुणिउ संजोइअ इच्छिअगुणहाणिफड्डसंकलणं तेण गुणिअ' इति, अनन्तरोक्तस्य 'ठविअ' इति पदस्य 'तेण गुणिअ' इत्यनेन सह सम्बन्धः, इष्टद्विगुणहानेः-यस्या द्विगुणहानेः सर्ववीर्याविभागा ज्ञातुमिष्यन्ते तस्या द्विगुणहानेः, अग्रेऽपि इष्टद्विगुणहानेरयमेवार्थो ज्ञातव्यः, इष्टद्विगुणहानेः स्पर्धकैः, 'सपुव्वसव्वफड्डाणि संगुणिउं' इति, स्वस्याः इष्टद्विगुणहानेः पूर्वाणि सर्वस्पर्धकानि संगुण्य, ततः किं विधेयमित्याह-'संजोइअ इच्छिअगुणहाणिफड्डसंकलणं' इति, इष्टद्विगुणहानिस्पर्धकैः स्वपूर्वसर्वस्पर्धकेषु गुणितेषु यद् गुणनफलं प्राप्तं तेन सहेष्टद्विगुणहानिस्पर्धकसंकलनं संयोज्य । इति द्वितीयगाथार्थः ।

(३) ततः किं कार्यमित्याह-'तेण गुणिअ' इति, इष्टद्विगुणहानिस्पर्धकैः स्वपूर्वसर्वस्पर्धकानि गुणयित्वा प्राप्तगुणनफलेन सहेष्टद्विगुणहानिस्पर्धकसंकलने संयोजिते यद् योगफलं प्राप्तं तेनैकन्यूनेनेष्टद्विगुणहानिवारमर्धीकृता सर्वप्रथमस्य स्पर्धकस्य वीर्याणूनां या संख्या पूर्वं स्थापिता तां गुणयित्वा ।

'सव्वपढमफड्डस्स' इत्यतः प्रारभ्य 'तेण गुणिअ' इति यावन्निरूपणस्यायं सरलार्थः-इष्टद्विगुणहानिस्पर्धकैः स्वपूर्वसर्वस्पर्धकानि गुणयित्वा गुणनफलेन सहेष्टद्विगुणहानिस्पर्धकसंकलनं संयोज्य, योगफलेनैकन्यूनेष्टद्विगुणहानिवारमर्धीकृता सर्वप्रथमस्पर्धकवीर्याणुसंख्या गुणनीया । ततः किं विधेयमित्याह-'सा ठप्पा' इति, इष्टद्विगुणहानिस्पर्धकैः स्वपूर्वसर्वस्पर्धकानि गुणयित्वा, गुणफलेन सहेष्टद्विगुणहानिसंकलनं संयोज्य, योगफलेनैकन्यूनेष्टद्विगुणहानिवारमर्धीकृतसर्वप्रथमस्पर्धकवीर्या-

विभागसंख्यायां गुणितायां या संख्या प्राप्ता सा स्थापनीया । नन्वत्र स्थापनायां किं बीजं ? प्रति-विधीयते, अनन्तरवक्ष्यमाणराशिरस्याः संख्याया विशुद्धः कर्तव्य इतीदानीमस्यां संख्यायां विशो-धनादिका काऽपि प्रक्रिया न कर्तव्या, तथैव स्थापनीया । अथ स्थापिताया अस्याः संख्याया यो राशिर्विशुद्धः कर्तव्यस्तदानयनार्थं करणमाह–'गुणिऊण सपुव्वसव्वफड्डेहिं' इति, स्वस्याः–इष्टद्विगुणहानेः पूर्वैः सर्वस्पर्धकैः गुणयित्वा, किं गुणयित्वा ? इत्याह–'इच्छिअगुणहाणीए इगूणफड्डाण संकलणं' इति, इष्टद्विगुणहानेरेकन्यूनस्पर्धकानां संकलनमिष्टद्विगुणहानिपूर्वसर्व-स्पर्धकैर्गुणयित्वेत्यर्थः । इति तृतीयगाथार्थः ।

(४) ततः किं करणीयमित्याह–संकलणासंकलणा इच्छिअगुणहाणिगूणफड्डाणं गुणिअ दुगेण' इति, इष्टद्विगुणहानेरेकन्यूनस्पर्धकानां सङ्कलनसंकलनं द्वाभ्यां गुणयित्वा, पुनः किं विधेयम् ? इत्याह–'जोइअ' इति, इष्टद्विगुणहानेः पूर्वसर्वस्पर्धकैरिष्टद्विगुणहान्येकन्यूनस्पर्धकसंक-लने गुणिते प्राप्तं गुणनफलं, द्वाभ्यामिष्टद्विगुणहान्येकन्यूनस्पर्धकसंकलनसंकलने गुणिते प्राप्तं गुणन-फलं च योजयित्वा, पुनः किं कर्तव्यम् ? इत्याह–'गुणिउं सव्वअवग्गेणं' इति, इष्टद्विगुण-हानिपूर्वसर्वस्पर्धकैरिष्टद्विगुणहान्येकन्यूनस्पर्धकसंकलनगुणकारेण प्राप्ते गुणनफले द्वाभ्यामिष्टद्विगुण-हान्येकन्यूनस्पर्धकसंकलनसंकलनगुणकारेण प्राप्ते गुणनफले च संयोजिते यद् योगफलं प्राप्तं तत् सर्वाद्यवर्गेण–प्रथमद्विगुणहानेः प्रथमस्पर्धकस्य प्रथमवर्गेण गुणयित्वा । इति चतुर्थगाथार्थः ।

(५) पुनः किं विधेयम् ? इत्याह-'इच्छिअगुणहाणीए गुणिउं फड्डचयजिअपएसेहिं' इति, अनन्तरोक्तगुणकारेण प्राप्तं गुणनफलमिष्टद्विगुणहानेरेकस्पर्धकस्य चयरूपजीवप्रदेशैर्गुणयित्वा, पुनः किं कर्तव्यम् ? इत्याह-'ठप्पाए य विसोइअ' इति, अनन्तरोक्तगुणकारेण प्राप्तं गुणनफलं स्थापितायाः–गाथापञ्चकस्य तृतीयगाथापूर्वार्धे 'सा ठप्पा' इत्यनेन या संख्या स्थापिता तस्याः विशोध्य, ततः किम् ? इत्याह–ते किंचहियाऽत्थि जावइआ' इति, 'तावइआ' आदिं कृत्वा 'तेण गुणिअ' इत्यन्तगाथोक्तगुणकारेण प्राप्तगुणनफलरूपायाः स्थापितायाः संख्यायाः 'गुणिऊण' आदिं कृत्वा 'फड्डचयजिअपएसेहिं' इत्यन्तगाथोक्तगुणकारेण प्राप्ते गुणनफले विशोधिते ये वीर्यांशवोऽवशिष्टास्ते किञ्चिदधिका यावन्तो भवन्ति, तावन्तो वीर्याविभागा विवक्षितद्वितीयादिद्विगुणहानौ भवन्तीति गाथापञ्चकस्य प्रथमगाथायाः पूर्वार्धेन सह सम्बन्धः । इति पञ्चमगाथार्थः ।

अत्रायं गाथापञ्चकसरलार्थः–प्रथममेकन्यूनेष्टद्विगुणहानिवारं सर्वप्रथमस्पर्धकवीर्याविभागा अर्धीकर्तव्याः । तत इष्टद्विगुणहानिस्पर्धकैः स्वपूर्वसर्वस्पर्धकानि गुणयित्वा, प्राप्तगुणनफलेन सहेष्टद्वि-गुणहानिस्पर्धकसंकलनं संयोज्य, प्राप्तयोगफलेनैकन्यूनेष्टद्विगुणहानिवारमर्धीकृताः सर्वप्रथमस्पर्धक-वीर्याविभागा गुणनीयाः । तदनन्तरं प्राप्तगुणनफलाद् वक्ष्यमाणकरणप्राप्तो राशिर्विशोधनीयः । एवं कृते यावती संख्या प्राप्ता किञ्चिदधिकास्तावत्प्रमाणा वीर्याविभागा इष्टद्वितीयादिद्विगुणहानौ भव-न्ति । विशोधनीयराश्यानयनकरणमेवम्–इष्टद्विगुणहानेरेकन्यूनस्पर्धकसंकलनमिष्टद्विगुणहानिपूर्व-

मर्वस्पर्धकैर्गु णनीयम् । तत इष्टद्विगुणहानेरेकन्यूनस्पर्धकसंकलनसंकलनं द्वाभ्यां गुणनीयम् । ततः संकलनगुणफलस्य संकलनसंकलनगुणनफलस्य च योगो विधेयः । ततः प्राप्तं योगफलं सर्वाद्यवर्गेण गुणनीयम् । ततः प्राप्तगुणनफलमिष्टद्विगुणहानिस्पर्धकस्य चयरूपजीवप्रदेशैर्गु णनीयम् । कृते गुणकारे यो राशिः प्राप्येत स उपयु क्तगुणनफलाद् विशोधनीयः । इति गाथापञ्चकसरलार्थः ।

अथैतत्सर्वमसत्कल्पनया द्वितीयद्विगुणहानौ तृतीयद्विगुणहानौ च चिन्त्यते। तत्राद्यौ द्वितीयद्विगुणहानावेवम्-सर्वप्रथमस्पर्धके सहस्रलक्षाण वीर्याणवः सन्ति । तेऽत्र पूर्वोक्तरीत्या सकृदेवार्धीकर्तव्याः । सकृदर्धीकृताः सर्वप्रथमस्पर्धकवीर्याविभागाः पञ्चशतलक्षाणि भवन्ति । इष्टाया द्वितीयद्विगुणहानेः स्पर्धकान्यष्टौ, एवं तस्याः पूर्वाणि सर्वस्पर्धकान्यप्यष्टौ, अतः८×८=६४। इष्टद्वितीयद्विगुणहानेरष्टानां स्पर्धकानां संकलनं षट्त्रिंशद्, अतः६४+३६=१००। इदानीमेकशतेन पञ्चशतलक्षाणि वीर्याविभागा गुणनीयाः, अतः ५००लक्षाणि×१००=५००००लक्षाणि । एभ्यो निम्नकरणप्राप्ता संख्या विशोधनीया। तद्यथा–एकन्यूनस्पर्धकसंकलनमष्टाविंशतिः, इष्टद्वितीयद्विगुणहानिपूर्वसर्वस्पर्धकान्यष्टौ, अतः २८×८=२२४ । इष्टद्वितीयद्विगुणहानेरेकन्यूनस्पर्धकानां संकलनसंकलनं चतुरशीतिः, अतः ८४×२=१६८। अथ संकलनगुणफलस्य संकलनसंकलनगुणफलस्य च योगो विधेयः, अतः २२४+१६८=३९२। सर्वाद्यवर्गः एकलक्षम्, अतः ३९२×एकलक्षम्=३९२ लक्षाणि । इष्टद्वितीयद्विगुणहानेरेकस्पर्धकस्य चयरूपजीवप्रदेशा द्वात्रिंशद्, अतः ३९२लक्षाणि× ३२=१२५४४ लक्षाणि । एषा संख्या पञ्चाशत्सहस्रलक्षेभ्यो विशोधनीया, अतः ५०००० लक्षाणि–१२५४४लक्षाणि=३७४५६लक्षाणि । इत्येवं द्वितीयद्विगुणहानौ सर्ववीर्याविभागाः किञ्चिदधिकानि ३७४५६ लक्षाणि सन्ति ।

यथाऽत्रासत्कल्पनायां करणेन द्वितीयद्विगुणहानौ सर्ववीर्याविभागाः किञ्चिदधिकानि ३७-४५६ लक्षाणि भवन्ति, तथैव प्रत्येकवर्गणायां प्रत्येकात्मप्रदेशे वर्तमानानां वीर्याविभागानां स्थापनां कृत्वा तदनुसारेण सर्ववीर्याविभागानां योगः क्रियते तदाऽपि तावन्त एव भवन्ति । तद्यथा–

| स्पर्धक-क्रमः | वर्गणा-क्रमः | वर्गणागत-जीवप्रदेशाः | प्रत्यात्मप्रदेशे-वीर्याविभागाः | वर्गणागतसर्व-वीर्याविभागाः | स्पर्धकगतसर्व-वीर्याविभागाः |
|---|---|---|---|---|---|
| १. | १ | १२८ | नवलक्षाणि | ११५२ लक्षाणि | ४५०० लक्षाणि |
| | २ | १२६ | एकाधिकनवलक्षाणि | ११३४ लक्षाणि | |
| | ३ | १२४ | द्वयधिकनवलक्षाणि | १११६ लक्षाणि | |
| | ४ | १२२ | त्र्यधिकनवलक्षाणि | १०९८ लक्षाणि | |
| २. | १ | १२० | दशलक्षाणि | १२०० लक्षाणि | ४६८० लक्षाणि |
| | २ | ११८ | एकाधिकदशलक्षाणि | ११८० लक्षाणि | |

| | | | | | |
|---|---|---|---|---|---|
| | ३ | ११६ | द्व्यधिकदशलक्षाणि | ११६० लक्षाणि | |
| | ४ | ११४ | त्र्यधिकदशलक्षाणि | ११४० लक्षाणि | |
| ३. | १ | ११२ | एकादशलक्षाणि | १२३२ लक्षाणि | ४७९६ लक्षाणि |
| | २ | ११० | एकाधिकैकादशलक्षाणि | १२१० लक्षाणि | |
| | ३ | १०८ | द्व्यधिकैकादशलक्षाणि | ११८८ लक्षाणि | |
| | ४ | १०६ | त्र्यधिकैकादशलक्षाणि | ११६६ लक्षाणि | |
| ४. | १ | १०४ | द्वादशलक्षाणि | १२४८ लक्षाणि | ४८४८ लक्षाणि |
| | २ | १०२ | एकाधिकद्वादशलक्षाणि | १२२४ लक्षाणि | |
| | ३ | १०० | द्व्यधिकद्वादशलक्षाणि | १२०० लक्षाणि | |
| | ४ | ९८ | त्र्यधिकद्वादशलक्षाणि | ११७६ लक्षाणि | |
| ५. | १ | ९६ | त्रयोदशलक्षाणि | १२४८ लक्षाणि | ४८३६ लक्षाणि |
| | २ | ९४ | एकाधिकत्रयोदशलक्षाणि | १२२२ लक्षाणि | |
| | ३ | ९२ | द्व्यधिकत्रयोदशलक्षाणि | ११९६ लक्षाणि | |
| | ४ | ९० | त्र्यधिकत्रयोदशलक्षाणि | ११७० लक्षाणि | |
| ६. | १ | ८८ | चतुर्दशलक्षाणि | १२३२ लक्षाणि | ४७६० लक्षाणि |
| | २ | ८६ | एकाधिकचतुर्दशलक्षाणि | १२०४ लक्षाणि | |
| | ३ | ८४ | द्व्यधिकचतुर्दशलक्षाणि | ११७६ लक्षाणि | |
| | ४ | ८२ | त्र्यधिकचतुर्दशलक्षाणि | ११४८ लक्षाणि | |
| ७. | १ | ८० | पञ्चदशलक्षाणि | १२०० लक्षाणि | ४६२० लक्षाणि |
| | २ | ७८ | एकाधिकपञ्चदशलक्षाणि | ११७० लक्षाणि | |
| | ३ | ७६ | द्व्यधिकपञ्चदशलक्षाणि | ११४० लक्षाणि | |
| | ४ | ७४ | त्र्यधिकपञ्चदशलक्षाणि | १११० लक्षाणि | |
| ८. | १ | ७२ | षोडशलक्षाणि | ११५२ लक्षाणि | ४४१६ लक्षाणि |
| | २ | ७० | एकाधिकषोडशलक्षाणि | ११२० लक्षाणि | |
| | ३ | ६८ | द्व्यधिकषोडशलक्षाणि | १०८८ लक्षाणि | |
| | ४ | ६६ | त्र्यधिकषोडशलक्षाणि | १०५६ लक्षाणि | |
| | | | | | =३७४५६ लक्षाणि |

अत्र द्विगुणहानिगतसर्ववीर्याविभागा अनन्तरोक्तसंख्याकेभ्यो वीर्याविभागेभ्यः किञ्चि-

दधिका विज्ञेयाः । तत्तत्स्पर्धकस्य प्रथमवर्गणात उत्तरोत्तरवर्गणायां वीर्याविभागानामेकैकेना-धिक्यात् , प्रस्तुतगणितप्रक्रियायां वीर्याविभागानां प्रथमवर्गणापेक्षया विवक्षितत्वाच्च ।

अथ तृतीयद्विगुणहानौ सर्ववीर्याविभागाश्चिन्त्यन्ते—अत्र सर्वप्रथमस्पर्धकगताः सहस्रलक्षाणि वीर्याणवो द्विरर्धीकर्तव्याः । अत एकन्यूनेष्टद्विगुणहानिवारमर्धीकृताः सर्वप्रथमस्पर्धकवीर्याविभागाः सार्धद्विशतलक्षाणि । इष्टायास्तृतीयद्विगुणहानेः स्पर्धकान्यष्टौ, एवं तस्याः पूर्वाणि सर्वस्पर्धकानि षोडश, अतः १६×८=१२८ । इष्टतृतीयद्विगुणहानेरष्टस्पर्धकानां संकलनं षट्त्रिंशद् , अतः १२८+३६=१६४ । सम्प्रति चतुःषष्ट्यधिकशतेन सार्धद्विशतलक्षाणि वीर्याविभागा गुण-नीयाः , अतः २५० लक्षाणि×१६४=४१००० लक्षाणि । एभ्योऽधस्तनकरणागता संख्या विशोधनीया । तद्यथा—एकन्यूनस्पर्धकसंकलनमष्टाविंशतिः , इष्टतृतीयद्विगुणहानेः पूर्वाणि सर्वस्पर्धकानि षोडश, अतः २८×१६=४४८ । इष्टतृतीयद्विगुणहानेरेकन्यूनस्पर्धकानां संकलनसंकलनं चतुरशीतिः, अतः ८४×२=१६८ । अथ संकलनगुणनफलस्य संकलनसंकलन-गुणनफलस्य च योगो विधेयः,अतः ४४८+१६८=६१६ । सर्वाद्यवर्ग एकलक्षम् , अतः ६१६× एकलक्षम्=६१६ लक्षाणि । इष्टतृतीयद्विगुणहानेरेकस्पर्धकस्य चयरूपजीवप्रदेशाः षोडश, अतः ६१६ लक्षाणि×१६=९८५६ लक्षाणि । एषा संख्या ४१०००लक्षेभ्यो विशोधनीया , अतः ४१०००लक्षाणि—९८५६लक्षाणि=३११४४ लक्षाणि । इत्येवं तृतीयद्विगुणहानौ सर्व-वीर्याविभागाः किञ्चिदधिकानि ३११४४ लक्षाणि । अत्रेयं स्थापना—

| स्पर्धक-क्रमः | वर्गणा-क्रमः | वर्गणागत-जीवप्रदेशाः | प्रत्यात्मप्रदेशे वीर्याविभागाः | वर्गणागत-वीर्याविभागाः | स्पर्धकगत-वीर्याविभागाः |
|---|---|---|---|---|---|
| १. | १ | ६४ | सप्तदशलक्षाणि | १०८८ लक्षाणि | ४२५० लक्षाणि |
| | २ | ६३ | एकाधिकसप्तदशलक्षाणि | १०७१ लक्षाणि | |
| | ३ | ६२ | द्व्यधिकसप्तदशलक्षाणि | १०५४ लक्षाणि | |
| | ४ | ६१ | त्र्यधिकसप्तदशलक्षाणि | १०३७ लक्षाणि | |
| २. | १ | ६० | अष्टादशलक्षाणि | १०८० लक्षाणि | ४२१२ लक्षाणि |
| | २ | ५९ | एकाधिकाष्टादशलक्षाणि | १०६२ लक्षाणि | |
| | ३ | ५८ | द्व्यधिकाष्टादशलक्षाणि | १०४४ लक्षाणि | |
| | ४ | ५७ | त्र्यधिकाष्टादशलक्षाणि | १०२६ लक्षाणि | |
| ३. | १ | ५६ | नवदशलक्षाणि | १०६४ लक्षाणि | ४१४२ लक्षाणि |
| | २ | ५५ | एकाधिकनवदशलक्षाणि | १०४५ लक्षाणि | |
| | ३ | ५४ | द्व्यधिकनवदशलक्षाणि | १०२६ लक्षाणि | |
| | ४ | ५३ | त्र्यधिकनवदशलक्षाणि | १००७ लक्षाणि | |

| | | | | | |
|---|---|---|---|---|---|
| ४. | १ | ५२ | विंशतिलक्षाणि | १०४० लक्षाणि | ४०४० लक्षाणि |
| | २ | ५१ | एकाधिकविंशतिलक्षाणि | १०२० लक्षाणि | |
| | ३ | ५० | द्वयधिकविंशतिलक्षाणि | १००० लक्षाणि | |
| | ४ | ४९ | त्र्यधिकविंशतिलक्षाणि | ९८० लक्षाणि | |
| ५. | १ | ४८ | एकविंशतिलक्षाणि | १००८ लक्षाणि | ३९०६ लक्षाणि |
| | २ | ४७ | एकाधिकैकविंशतिलक्षाणि | ९८७ लक्षाणि | |
| | ३ | ४६ | द्वयधिकैकविंशतिलक्षाणि | ९६६ लक्षाणि | |
| | ४ | ४५ | त्र्यधिकैकविंशतिलक्षाणि | ९४५ लक्षाणि | |
| ६. | १ | ४४ | द्वाविंशतिलक्षाणि | ९६८ लक्षाणि | ३७४० लक्षाणि |
| | २ | ४३ | एकाधिकद्वाविंशतिलक्षाणि | ९४६ लक्षाणि | |
| | ३ | ४२ | द्वयधिकद्वाविंशतिलक्षाणि | ९२४ लक्षाणि | |
| | ४ | ४१ | त्र्यधिकद्वाविंशतिलक्षाणि | ९०२ लक्षाणि | |
| ७. | १ | ४० | त्रयोविंशतिलक्षाणि | ९२० लक्षाणि | ३५४२ लक्षाणि |
| | २ | ३९ | एकाधिकत्रयोविंशतिलक्षाणि | ८९७ लक्षाणि | |
| | ३ | ३८ | द्वयधिकत्रयोविंशतिलक्षाणि | ८७४ लक्षाणि | |
| | ४ | ७ | त्र्यधिकत्रयोविंशतिलक्षाणि | ८५१ लक्षाणि | |
| ८. | १ | ३६ | चतुर्विंशतिलक्षाणि | ८६४ लक्षाणि | ३३१२ लक्षाणि |
| | २ | ३५ | एकाधिकचतुर्विंशतिलक्षाणि | ८४० लक्षाणि | |
| | ३ | ३४ | द्वयधिकचतुर्विंशतिलक्षाणि | ८१६ लक्षाणि | |
| | ४ | ३३ | त्र्यधिकचतुर्विंशतिलक्षाणि | ७९२ लक्षाणि | |
| | | | | | ३११४४ लक्षाणि |

अत्र वीर्याविभागानामाधिक्यं स्वयमेव विज्ञेयम् ॥११६।११७।११८।११९।१२०॥

तदेवम् "अहिकिच्च पडुगाई" इत्यादिगाथायां (गाथा० ८३)स्पर्धकादीन्याश्रित्य प्रतिज्ञातस्थानद्वारप्ररूपणा सम्पादिता, तस्यामेव गाथायां जीवानाश्रित्य स्थानद्वारप्ररूपणा सर्वपश्चात् करिष्यते इति प्रतिज्ञातम्, अतः सम्प्रति क्रमप्राप्तां वृद्धिप्ररूपणां चिकीर्षुराह—

चउहाऽत्थि वड्ढिहाणी असंखसंखगुणभागभेएहिं ।
कालोऽत्थि लहू समयो चउण्हमवि वड्ढिहाणीणं ॥१२१॥
जेट्ठो भिन्नमुहुत्तं होइ असंखगुणवड्ढिहाणीणं ।
आवलिआऽसंखंसो सेसाण तिवड्ढिहाणीणं ॥१२२॥

(प्रे०) 'चउहाऽत्थि' इत्यादि, 'योगस्थानानाम्' इति गम्यते, योगस्थानप्ररूपणायाः प्रक्रान्तत्वात्, योगस्थानानां वृद्धिहानी प्रत्येकं चतुर्धा भवतः, कथमित्याह-'असंखसंखगुण-भागभेएहिं' इति, गुणशब्दस्य भागशब्दस्य च पृथक् पृथक् संख्यासंख्यशब्दाभ्यां परतो योजनात् संख्यातगुणासंख्यातगुणसंख्यातभागासंख्यातभागरूपचतुर्भेदैः, अर्थात् संख्यातगुणा, असंख्यातगुणा, संख्यातभागाऽसंख्यातभागा चेति चतस्रो वृद्धयश्चतस्रो हानयश्च भवन्ति ।

अत्रेयं भावना-जीवानां योगप्रवृत्त्यनुसारेण योगो वर्धते हीयते च, अतो योगस्थानानि विभिन्नानि भवन्ति । योगस्थानानि पूर्वसमयापेक्षया कदाचित् योगवृद्ध्यनुसारेण वर्धन्ते, कदाचित् योगहान्यनुसारेण हीयन्ते । अर्थाज्जीवः कदाचित् पूर्वसमये यस्मिन् योगस्थाने वर्तते, तस्मिन् यावन्तो वीर्याविभागास्तदपेक्षया तदव्यवहितोत्तरसमये योगवृद्ध्या यस्मिन् योगस्थानेऽधिका वीर्याविभागास्तस्मिन् योगस्थाने गच्छति, कदाचिच्च योगहान्या यस्मिन् योगस्थाने स्तोका वीर्याविभागास्तस्मिन् योगस्थाने गच्छति । तत्र जीवो यदा पूर्वसमयापेक्षया तदव्यवहितोत्तरसमये योगवृद्ध्याऽसंख्यभागवृद्धवीर्याविभागेऽन्यस्मिन् योगस्थाने गच्छति तदाऽसंख्यभागा वृद्धिर्भवति, यदा संख्यातभागवृद्धवीर्याविभागेऽन्यस्मिन् योगस्थाने गच्छति तदा संख्यातभागा वृद्धिर्भवति, यदा संख्यातगुणवृद्धवीर्याविभागेऽन्यस्मिन् योगस्थाने गच्छति तदा संख्यातगुणा वृद्धिर्भवति, यदाऽसंख्यातगुणवृद्धवीर्याविभागेऽन्यस्मिन् योगस्थाने गच्छति तदाऽसंख्यातगुणा वृद्धिर्भवति । एवं यदा पूर्वसमयापेक्षया तदव्यवहितोत्तरसमये योगहान्याऽसंख्यातभागहीनवीर्याविभागेऽन्यस्मिन् योगस्थाने गच्छति तदाऽसंख्यातभागा हानिर्भवति । एवं संख्यातभागहान्यादिष्वपि वक्तव्यम् ।

अथ चतुर्विधा वृद्धयो हानयश्च प्रत्येकं सततं कियत्कालं यावत् प्रवर्तन्ते इति पर्यनुयोगं समाधातुं तासां प्रत्येकं कालमाह-'कालोऽत्थि' इत्यादि, चतसृणां वृद्धीनां चतसृणां हानीनाञ्च प्रत्येकं जघन्यकाल एकसमयोऽस्ति । 'जेट्ठो भिन्नमुहुत्तं' इत्यादि, असंख्यगुणवृद्धेरसंख्यगुणहानेश्चोत्कृष्टः कालः 'अन्तर्मुहूर्तं' भवति । 'आवलिआऽसंखंसो' इत्यादि, शेषाणां तिसृणां वृद्धीनां हानीनाञ्च प्रत्येकमुत्कृष्टकालः आवलिकाऽसंख्यातभागो भवति । अयं भावः-जीवो यदि तथाविधतीव्रवीर्यान्तरायक्षयोपशमभावतः प्रतिसमय पूर्वपूर्वसमयापेक्षयोत्तरोत्तरसमयेऽसंख्येयगुण-वृद्धवीर्याविभागेऽन्यस्मिन्नन्यस्मिन् योगस्थाने गच्छति तदोत्कृष्टतोऽन्तर्मुहूर्तकालं यावदेव गच्छति । तदनन्तरमवश्यं तस्य जीवस्यासंख्यगुणा वृद्धिर्निवर्तते । एवमसंख्यगुणहान्यादयोऽपि स्वकालं यावत् प्रवृत्याऽवश्यं निवर्तन्ते ॥१२१।१२२॥

तदेवमोघतो वृद्धिहानी प्रत्येकं चतुर्धेति प्रतिपादितम् । इदानीं चतुःसामयिकादियोगस्थानेषु वृद्धिहान्योः प्रत्येकं कियन्तो भेदा भवन्तीति प्रतिपादयन्नाह—

**हेट्ठिमचउसमयुवरिमदुतिसमयेसु चउवड्ढिहाणीओ ।**
**उवरिमचउसमयेसुं दो एगा सेससमयेसुं ॥१२३॥**

(प्रे०) 'हेट्ठिम' इत्यादि, अधस्तनचतुःसमयेषु-पञ्चमव्यस्याधस्तनेषु येषु योगस्थानेष्ववस्थानमुत्कृष्टतः चतुरः समयान् यावद् भवति तेषु, तथा उपरितनद्वित्रिसमयेषु-उपरितनयोगस्थानेषु येषु द्विसमयौ यावद् येषु च त्रिसमयान् यावदुत्कृष्टतोऽवस्थानं भवति तेषु, 'चउवुड्ढिहाणीओ' इति, पूर्वोक्ताश्चतस्रोऽपि वृद्धयो हानयश्च भवन्ति । 'उवरिमचउसमयेसु' 'दो' इति, उपरितनेषु येषु योगस्थानेषूत्कृष्टतश्चतुःसमयान् यावदवस्थानं भवति तेषु संख्यातभागरूपाऽसंख्यातभागरूपा चेति द्वे वृद्धी हानी च भवतः । 'एगा सेससमयेसु' इति, शेषेषूपरितनेषु अधस्तनेषु च योगस्थानेषु असंख्यातभागरूपा एकैव वृद्धिरेकैव हानिश्च भवति ।

इदमुक्तं भवति–अधस्तनचतुःसामयिकयोगस्थानानां जघन्ययोगस्थाने यावन्तो वीर्याविभागा वर्तन्ते तदपेक्षया प्रारम्भिकेषु केषुचिदधस्तनचतुःसामयिकेषु योगस्थानेषु असंख्यातभागवीर्याविभागा वर्धन्ते, तदनन्तरेषु अधस्तनचतुःसामयिकेष्वेव केषुचिद् योगस्थानेषु संख्यातभागवीर्याविभागा वर्धन्ते, तदनन्तरेषु केषुचिद् योगस्थानेषु संख्यातगुणवीर्याविभागा वर्धन्ते, तदनन्तरेषु केषुचिद् योगस्थानेषु असंख्यातगुणवीर्याविभागा वर्धन्ते । एवमुपरितनत्रिसामयिकयोगस्थानानां जघन्ययोगस्थाने यावन्तो वीर्याविभागा वर्तन्ते तदपेक्षया प्रारम्भिकेषु केषुचिदुपरितनत्रिसामयिकेषु योगस्थानेषु असंख्यातभागवीर्याविभागा वर्धन्ते, तदनन्तरेषु त्रिसामयिकेष्वेव केषुचिद् योगस्थानेषु संख्यातभागवीर्याविभागा वर्धन्ते । एवं संख्यातगुणासंख्यातगुणवृद्धिविषयेऽपि वक्तव्यम् । एवमेव द्विसामयिकयोगस्थानेष्वपि विभावनीयम् । उपरितनचतुःसामयिकान्तः स्वजघन्ययोगस्थानापेक्षया प्रारम्भिकेषु केषुचिद् योगस्थानेषु असंख्यातभागवीर्याविभागा वर्धन्ते, तदनन्तरेषु सर्वयोगस्थानेषु संख्यातभागवीर्याविभागा वर्धन्ते । अन्येषु अधस्तनपञ्चसामयिकादिसर्वयोगस्थानेषु असंख्यातभागैव वृद्धिर्भवतीति स्वस्वजघन्ययोगस्थानापेक्षया स्वस्वसर्वयोगस्थानेष्वसंख्यातभागवीर्याविभागा वर्धन्ते । अत्र स्थापनैवम्—

| अधस्तनयोगस्थानानि | उपरितनयोगस्थानानि | कतिविधा वृद्धिर्हानिश्च ? |
|---|---|---|
| ४ | ३–२ | चतुर्विधा |
| | ४ | द्विविधा |
| ५–६–७–८ | ७–६–५ | एकविधा |

अथैतत्सर्वमसत्कल्पनया चिन्त्यते–अष्टसामयिकानि योगस्थानानि चत्वारि, तदनन्तरमधस्तनोपरितनसप्तषट्पञ्चचतुःसामयिकयोगस्थानानि उत्तरोत्तरमष्टाष्टचतुरष्टगुणानि, तथोपरितनत्रिसामयिकद्विसामयिकयोगस्थानानि क्रमेण षोडशगुणानि कल्प्यन्ते । तद्यथा-अधस्तनोपरितनसप्तसामयिकानि योगस्थानानि द्वात्रिंशत् (३२)। अधस्तनोपरितनषट्सामयिकानि योगस्थानानि षट्पञ्चाशदधिकद्विशते (२५६) । अधस्तनोपरितनपञ्चसामयिकानि योगस्थानानि चतुर्विंशत्यधिकैकसह

क्षम् (१०२४)। अधस्तनोपरितनानि चतुःसामयिकानि योगस्थानानि द्विनवत्यधिकैकशतोत्तराऽष्टसहस्राणि (८१९२)। त्रिसामयिकानि योगस्थानानि द्वासप्तत्यधिकैकत्रिंशत्सहस्रोत्तरलक्षम् (१३१०७२)। द्विसामयिकानि योगस्थानानि द्विपञ्चाशदधिकैकशतोत्तरसप्तनवतिसहस्राधिकविंशतिलक्षाणि (२०९७१५२)। अग्रेऽल्पबहुत्वनिरूपणेऽष्टसामयिकानि योगस्थानानि सर्वस्तोकानि वक्ष्यतीत्यत्र चत्वारि कल्पितानि। एवं पूर्वोत्तरवर्तिसप्तसामयिकादियोगस्थानान्युत्तरोत्तरमनुक्रमेणासंख्येयगुणानि वक्ष्यतीत्यत्राष्टगुणानि चतुर्गुणानि षोडशगुणानि च कल्पितानि। अत्र स्थापनैवम्—

| स्थितिसमयाः– | ४ | ५ | ६ | ७ | ८ | ७ | ६ | ५ | ४ | ३ | २ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| योगस्थानसंख्या– | ८१९२ | १०२४ | २५६ | ३२ | ४ | ३२ | २५६ | १०२४ | ८१९२ | १३१०७२ | २०९७१५२ |

जघन्ययोगस्थाने, अर्थादधस्तनेषु चतुःसामयिकेषु द्विनवत्यधिकैकशतोत्तराष्टसहस्रेषु योगस्थानेषु यत् प्रथमं योगस्थानं तस्मिन् अष्टलक्षाणि वीर्याविभागाः कल्प्यन्ते। तदनन्तरं द्वितीययोगस्थानादारभ्योपरितनानां द्विसामयिकयोगस्थानानामन्तिमयोगस्थानं यावद्, अर्थादुत्कृष्टयोगस्थानं यावद्, अनुक्रमेणैकैकलक्षवीर्याविभागानां वृद्धिः कल्प्यते। एवं प्रतियोगस्थानमेकलक्षवीर्याविभागानां वृद्ध्या स्वस्वजघन्ययोगस्थानापेक्षया यस्मिन् योगस्थाने सार्धगुणा वीर्याविभागा भवन्ति तत्पूर्वेषु सर्वयोगस्थानेष्वसंख्यातभागवीर्याविभागा वर्धन्ते, अर्थाद् वीर्याविभागानामसंख्यातभागा वृद्धिर्भवति, यस्मिन् योगस्थाने द्विगुणा वीर्याविभागा भवन्ति तत्पूर्वेषु यस्मिन् योगस्थाने सार्धगुणा वीर्याविभागा भवन्ति तद् योगस्थानं यावत् सर्वयोगस्थानेषु वीर्याविभागानां संख्यातभागा वृद्धिर्भवति, यस्मिन् योगस्थाने चतुर्गुणा वीर्याविभागा भवन्ति तत्पूर्वेषु यस्मिन् योगस्थाने द्विगुणा वीर्याविभागा भवन्ति तद् योगस्थानं यावत् सर्वयोगस्थानेषु वीर्याविभागानां संख्यातगुणा वृद्धिर्भवति, यस्मिन् योगस्थाने चतुर्गुणा वृद्धिर्भवति तद्योगस्थानादारभ्य स्वस्वान्तिमयोगस्थानं यावत् सर्वेषु योगस्थानेषु वीर्याविभागानामसंख्यातगुणा वृद्धिर्भवतीति कल्प्यते।

अथोपर्युक्तासत्कल्पनयाऽधस्तनचतुःसामयिकयोगस्थानेषु चतस्रो वृद्धयश्चतस्रो हानयश्चोपपाद्यन्ते—जघन्ययोगस्थानेऽष्टलक्षवीर्याविभागाः सन्तीति यत्र द्वादशलक्षवीर्याविभागा भवेयुस्तत्र सार्धगुणा वृद्धिर्भवेत्। जघन्ययोगस्थानं विहाय चतुर्थे योगस्थाने वीर्याविभागा द्वादशलक्षाणि भवन्तीति जघन्ययोगस्थानानन्तरत्रियोगस्थानेषु जघन्ययोगस्थानापेक्षया वीर्याविभागानामसंख्यातभागा वृद्धिर्भवति। यत्र षोडशलक्षवीर्याविभागा भवेयुस्तत्र द्विगुणा वृद्धिर्भवेत्। जघन्ययोगस्थानं विहायाष्टमयोगस्थाने वीर्याविभागा षोडशलक्षाणि भवन्तीति चतुर्थयोगस्थानादारभ्य सप्तमयोगस्थानं यावत् चतुर्षु योगस्थानेषु संख्यातभागा वृद्धिर्भवति। यत्र द्वात्रिंशल्लक्षवीर्याविभागा भवेयुस्तत्र चतुर्गुणा वृद्धिर्भवेत्। जघन्ययोगस्थानं विहाय चतुर्विंशतितमे योगस्थाने वीर्याविभागा द्वात्रिंशल्लक्षाणि भवन्तीत्यष्टमयोगस्थानादारभ्य त्रयोविंशतितमयोगस्थानं यावत् षोडशयोग-

स्थानेषु संख्यातगुणा वृद्धिर्भवति । चतुर्विंशतितमयोगस्थानादारभ्य एकनवत्यधिकैकशतोत्तराष्ट-सहस्रतमं चरमं योगस्थानं यावत् सर्वयोगस्थानेषु असंख्यातगुणा वृद्धिर्भवति । इत्येवमधस्तनेषु चतुःसामयिकेषु योगस्थानेषु चतुर्विधा वृद्धिश्चिन्तिता । एवं वैपरीत्येनोत्कृष्टयोगस्थानात् प्रारभ्य जघन्ययोगस्थानं यावत् चतुर्विधा हानिरपि परिभावनीया ।

अधस्तनपञ्चसामयिकयोगस्थानेभ्यः प्रभृत्युपरितनपञ्चसामयिकयोगस्थानानि यावदसंख्य-भागैव वृद्धिर्भवति । तथा—"अधस्तनचतुःसामयिकजघन्ययोगस्थानेऽष्टलक्षाणि वीर्याविभागाः कल्प्यन्ते । तदनन्तरं द्वितीययोगस्थानादारभ्योपरितनानां द्विमामयिकानामन्तिमयोगस्थानं यावद-नुक्रमेणैकैकलक्षवीर्याविभागानां वृद्धिः कल्प्यते" इति प्रागुक्तम् । अतोऽनुक्रमेणैकैकलक्षवीर्यावि-भागवृद्ध्याऽधस्तनपञ्चसामयिकजघन्ययोगस्थाने द्विशताधिकाष्टसहस्र (८२००)लक्षाणि वीर्या-विभागा जाताः । अतो यत्र त्रिशताधिकद्वादशसहस्र (१२३००) लक्षाणि वीर्याविभागा भवेयुस्तत्र संख्यातभागा वृद्धिर्भवेत् । अधस्तनचतुःसामयिकजघन्ययोगस्थानाद् द्विनवत्यधिकद्विशतोत्तर-द्वादशसहस्र( १२२९२ )तमे योगस्थाने त्रिशताधिकद्वादशसहस्र( १२३०० )लक्षाणि वीर्या-विभागा भवन्ति । अत्रेदमवधेयम्-सर्वजघन्ययोगस्थानाद् यदनन्तरं योगस्थानं तदत्र प्रथमं गणनीयम् । तदनन्तरमनुक्रमेण द्वितीयादीनि योगस्थानानि ज्ञातव्यानि । एवमेवोपरितनेषु चतुःसामयिकादि-योगस्थानेष्वपि प्रत्येकं स्वस्वजघन्ययोगस्थानादनन्तरं योगस्थानं प्रथमं,तदनन्तरमनुक्रमेण द्विती-यादीनि योगस्थानानि ज्ञेयानि । अधस्तनपञ्चसामयिकयोगस्थानेषु तावतिथं योग-स्थानं न प्राप्यते, अधस्तनचतुःसामयिकजघन्ययोगस्थानादधस्तनपञ्चसामयिकान्तिमं योग-स्थानं पञ्चदशाधिकद्विशतोत्तरनवसहस्र(९२१५)तमं ज्ञेयम् । एवमधस्तनषट्सामयिकयोगस्था-नेभ्यः प्रभृति उपरितनपञ्चसामयिकयोगस्थानानि यावत् तावतिथं योगस्थानं न प्राप्यते, अधस्तन-षट्सामयिकचरमयोगस्थानं यावत् सर्वयोगस्थानानां द्वासप्तत्यधिकचतुःशतोत्तरनवसहस्र (९४७२)-मात्रत्वाद् , अधस्तनसप्तसामयिकचरमयोगस्थानं यावत् सर्वयोगस्थानानां चतुरधिकपञ्चशतोत्तरनव-सहस्र (९५०४) मात्रत्वाद् ,अष्टसामयिकचरमयोगस्थानं यावत् सर्वयोगस्थानानामष्टाधिकपञ्चशतो-त्तरनवसहस्र (९५०८) मात्रत्वाद् , उपरितनसप्तसामयिकचरमयोगस्थानं यावत् सर्वयोगस्थानानां चत्वारिंशदधिकपञ्चशतोत्तरनवसहस्र(९५४०)मात्रत्वाद् , उपरितनषट्सामयिकचरमयोगस्थानं यावत् सर्वयोगस्थानानां षण्णवत्यधिकसप्तशतोत्तरनवसहस्र (९७९६) मात्रत्वाद् , उपरितनपञ्च-सामयिकचरमयोगस्थानं यावत् सर्वयोगस्थानानां विंशत्यधिकाष्टशतोत्तरदशसहस्र (१०८२०) मात्रत्वाद् । इत्येवमधस्तनपञ्चसामयिकयोगस्थानेभ्यः प्रभृति उपरितनपञ्चसामयिकयोगस्थानानि यावदधस्तनपञ्चसामयिकजघन्ययोगस्थानगतवीर्याविभागापेक्षयाऽपि वीर्याविभागाः सार्धगुणा न भवन्ति,अतः स्वस्वजघन्ययोगस्थानगतवीर्याविभागापेक्षया तु सुतरां न भवन्ति । ततश्च यदि संख्यात-भागा वृद्धिरपि न भवति तर्हि संख्यातगुणाया असंख्यातगुणायाश्च वृद्धेस्तु वार्ताऽपि का ? । अतोऽ-

चरमतनपञ्चसामयिकयोगस्थानेभ्यः प्रभृति उपरितनपञ्चसामयिकयोगस्थानानि यावदसंख्यातभाग-वृद्धिरेव भवति ।

अथोपरितनचतुःसामयिकयोगस्थानेषु असंख्यातभागा संख्यातभागा च वृद्धिश्चिन्त्यते-स्वजघन्ययोगस्थानेऽष्टाविंशत्यधिकाष्टशतोत्तरदशसहस्र (१०८२८) लक्षवीर्याविभागाः सन्ति । अतः स्वजघन्ययोगस्थानात् चतुर्दशाधिकचतुःशतोत्तरपञ्चसहस्रतमे (५४१४) योगस्थाने वीर्याविभागाः सार्धगुणा भवन्ति । अतः स्वजघन्ययोगस्थानापेक्षया स्वत्रयोदशाधिकचतुःशतोत्तरपञ्चसहस्रतमं (५४१३) योगस्थानं यावदसंख्यातभागा वृद्धिर्भवति । स्वचतुर्दशाधिकचतुःशतोत्तरपञ्चसहस्रतमाद् योगस्थानादारभ्य स्वान्तिमयोगस्थानं यावत् संख्यातभागा वृद्धिर्भवति । क्वापि वीर्याविभागा द्विगुणा न भवन्तीति संख्यातगुणाऽसंख्यातगुणा च वृद्धिर्न भवति ।

अथोपरितनत्रिसामयिकयोगस्थानेषु चतुर्विधा वृद्धिरुच्यते—स्वजघन्ययोगस्थाने विंशत्य-धिकैकोनविंशतिसहस्र (१९०२०) लक्षवीर्याविभागाः सन्ति । अतः स्वजघन्ययोगस्थानात् नवा-धिकपञ्चशतोत्तरनवसहस्र (९५०९) तमं योगस्थानं यावदसंख्यातभागा वृद्धिर्भवति । एवं विंशत्य-धिकैकोनविंशतिसहस्र (१९०२०) तमे योगस्थाने वीर्याविभागा द्विगुणा भवन्ति । अतो दशाधिक-पञ्चशतोत्तरनवसहस्र(९५१०)तमयोगस्थानादारभ्यैकोनविंशत्यधिकैकोनविंशतिसहस्रतमं ( १९०-१९) योगस्थानं यावत् संख्यातभागा वृद्धिर्भवति । षष्ट्यधिकसप्तपञ्चाशत्सहस्र ( ५७०६० ) तमे योगस्थाने वीर्याविभागाश्चतुर्गुणा भवन्ति । अतो विंशत्यधिकैकोनविंशतिसहस्र (१९०२०) तमयोगस्थानादारभ्य नवपञ्चाशदधिकसप्तपञ्चाशत्सहस्र (५७०५९) तमं योगस्थानं यावत् संख्या-तगुणा वृद्धिर्भवति । ततश्चरमयोगस्थानं यावदसंख्यगुणा वृद्धिर्भवति ।

अथोपरितनद्विसामयिकयोगस्थानेषु चतुर्विधा वृद्धिश्चिन्त्यते-स्वजघन्ययोगस्थाने द्विनवत्यधिक-सार्धशतसहस्र(१५००९२)लक्षवीर्याविभागाः सन्ति । अतः स्वजघन्ययोगस्थानात् षट्चत्वारिंशदधिक-पञ्चसप्ततिसहस्र (७५०४६) तमे योगस्थाने वीर्याविभागाः सार्धगुणा भवन्ति । अतः स्वजघन्य-योगस्थानात् पञ्चचत्वारिंशदधिकपञ्चसप्ततिसहस्र (७५०४५) तमं योगस्थानं यावदसंख्यातभाग-वृद्धिर्भवति । द्विनवत्यधिकसार्धलक्ष (१५००९२) तमे योगस्थाने वीर्याविभागा द्विगुणा भवन्ति । अतः षट्चत्वारिंशदधिकपञ्चसप्ततिसहस्र (७५०४६) तमयोगस्थानादारभ्यैकनवत्यधिकसार्धलक्ष-(१५००९१) तमं योगस्थानं यावत् संख्यातभागा वृद्धिर्भवति । षट्सप्तत्यधिकद्विशतोत्तरसार्धचतु-र्लक्ष (४५०२७६) तमे योगस्थाने वीर्याविभागाश्चतुर्गुणा भवन्ति । अतो द्विनवत्यधिकसार्धलक्ष-(१५००९२) तमाद् योगस्थानादारभ्य पञ्चसप्तत्यधिकद्विशतोत्तरसार्धचतुर्लक्ष (४५०२७५) तमं योगस्थानं यावत् संख्यातगुणा वृद्धिर्भवति । ततोऽन्तिमयोगस्थानं यावदसंख्यगुणा वृद्धिर्भवति । अत्रेदं ध्येयम्-अस्यां गाथायां प्ररूपणा तन्त्रान्तरमाश्रित्य कृता, स्वतन्त्रमाश्रित्य स्वयं परिभावनीया ॥१२३॥

- इदानीं गाथाद्विकेन चतसृणां वृद्धीनां चतसृणां हानीनाञ्च प्रत्येकं कालस्याल्पबहुत्वमाह—

सव्वत्थोवो कालो अत्थि असंखंसवड्ढिहाणीणं ।
ताउ असंखेज्जगुणो संखंसवड्ढिहाणीणं ॥ १२४ ॥ (गीतिः)
तत्तो हवेज्ज कमसो संखअसंखगुणवड्ढिहाणीणं ।
ताओ विसेसअहियो चउण्हमवि वड्ढिहाणीणं ॥ १२५ ॥

(प्रे०) **'सव्वत्थोवो'** इत्यादि, असंख्यातभागाया वृद्धेर्हानेश्च कालः सर्वस्तोकः, आवलिकाऽसंख्यातभागमात्रत्वात् । परस्परं च तुल्यः । **'ताउ असंखेज्जगुणो'** इत्यादि, असंख्यातभागवृद्धिहानिकालतः संख्यातभागाया वृद्धेर्हानेश्च कालोऽसंख्यगुणः, असंख्यातभागवृद्धिहान्योरावलिकाऽसंख्यातभागकालतः संख्यातभागवृद्धिहान्योरावलिकाऽसंख्यातभागकालस्यासंख्यगुणत्वात् । **'तत्तो हवेज्ज'** इत्यादि, पूर्वगाथातः 'असंखेज्जगुणो' इति पदमत्रानुवर्तते, ततोऽनुक्रमेण संख्यातगुणवृद्धिहान्योरसंख्यातगुणवृद्धिहान्योश्च कालोऽसंख्येयगुणः । अत्रायं भावः—संख्यातभागवृद्धिहानिकालतः संख्यातगुणाया वृद्धेर्हानेश्च कालः असंख्यातगुणः परस्परं च तुल्यः, अत्र हेतुः पूर्वोक्तवद् ज्ञातव्यः । संख्यातगुणवृद्धिहानिकालतोऽसंख्यातगुणाया वृद्धेर्हानेश्च कालोऽसंख्यातगुणः, अन्तर्मुहूर्तप्रमाणत्वाद्, अत्रायं विशेषः—असंख्यगुणहानिकालतोऽसंख्येयगुणवृद्धिकालो विशेषाधिकः । एवमग्रेऽपि समुदितहानिकालतः समुदितवृद्धिकालो विशेषाधिको भवति **'ताओ विसेसअहिओ'** इत्यादि, असंख्यातगुणवृद्धिहानिकालतश्चतसृणां वृद्धीनां समुदितकालः चतसृणां हानीनां समुदितः कालो वा विशेषाधिकः । अत्रासंख्यातभागादीनां त्रिवृद्धीनां त्रिहानीनां च समुदितः कालो वृद्धः, स चावलिकाऽसंख्यातभागमात्र इति चतसृणां वृद्धीनां चतसृणां हानीनां वा समुदितः काल आवलिकाऽसंख्यभागाधिकान्तर्मुहूर्तप्रमाणो जातः, स चाऽसंख्यगुणवृद्धिहान्योरन्तर्मुहूर्तकालतो विशेषाधिक एव ॥ १२४ ।१२५ ॥

तदेवं गता वृद्धिप्ररूपणा । सम्प्रति जीवाः केषु योगस्थानेषु सततं कियत्कालं यावदवतिष्ठन्ते इति समयप्ररूपणां चिकीर्षुर्गाथाद्विकमाह—

उक्कोसा चउसमया पज्जत्तसुहुमणिगोअजीवस्स ।
लहुजोगट्ठाणाओ सेढिअसंखंसमेत्ताणि ॥ १२६ ॥
ताउ हवेज्ज कमा जा समयाऽट्ठ तओ य जा दुवे समया ।
होइ जहण्णा समयं सव्वाइं जोगठाणाइं ॥ १२७ ॥

(प्रे०) **'उक्कोसा चउसमया'** इत्यादि, पर्याप्तसूक्ष्मनिगोदजीवस्य, "व्याख्यानतो विशेष-

प्रतिपत्तिः" इति न्यायात् सर्वाल्पवीर्यस्य पर्याप्तसूक्ष्मनिगोदजीवस्य जघन्ययोगस्थानात् श्रेण्यसंख्यात-भागमात्राणि योगस्थानानि उत्कृष्टतश्चतुरः समयान् यावद् भवन्ति। 'ताउ हवेज्ज' इत्यादि, 'सेढिअसंखंसमेत्ताणि' इति पदमत्रानुवर्तते, ततोऽनुक्रमेणैकसमयवृद्ध्याऽष्टसमयान् यावत् श्रेण्यसं-ख्यातभागप्रमाणानि योगस्थानानि भवन्ति। 'तओ य' इत्यादि, ततोऽनुक्रमेणैकसमयहान्या द्विसमयौ यावत् श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि भवन्ति।

अत्रेदमुक्तं भवति–पर्याप्तसूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य जघन्ययोगस्थानादारभ्य क्रमशो यानि श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि तेषूत्कृष्टतश्चतुःसमयान् यावज्जीवा अवतिष्ठन्ते। तत परं यानि श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि तेषु पञ्चसमयान् यावद्, ततोऽपराणि यानि तावन्त्येव योगस्थानानि तेषु षट् समयान् यावत्, ततः पराणि यानि यथोक्तप्रमाणानि योगस्थानानि तेषु सप्तसमयान् यावत्, ततः पराणि यानि तावन्ति योगस्थानानि तेषु अष्टसम-यान् यावद्, ततः पराणि यानि तावन्ति योगस्थानानि तेषु सप्तसमयान् यावत्, ततोऽपराणि यानि तावन्ति योगस्थानानि तेषु षट्समयान् यावद्, एवमेकैकसमयहान्या तावद् वाच्यं यावच्च-रमाणि श्रेण्यसंख्यातभागप्रमाणानि यानि योगस्थानानि तेषु द्विसमयौ यावत्। सर्वत्रोत्कृष्टतो जीवा अवतिष्ठन्ते इति योजनीयम्।

इदानीं जघन्यतोऽवस्थानकालमाह–'होइ जहण्णा' इत्यादि, सर्वाणि योगस्थानानि जघन्यत एकसमयं यावदेव भवन्ति, सर्वेषु योगस्थानेषु जघन्यत एकसमयं यावदेव जीवा अवति-ष्ठन्ते इति भावः॥ १२६॥ १२७॥

तदेवं कृता समयप्ररूपणा। सम्प्रति क्रमप्राप्तामल्पबहुत्वप्ररूपणां वक्तुकाम आह—

**अडसमइगाणि हुन्ते थोवाणि तओ असंखियगुणाणि।**
**कमसोऽत्थि उभयपासे तुल्लसमइगाणि तुल्लाणि॥ १२८॥**

(प्रे०) **'अडसमइगाणि'** इत्यादि, अष्टसामयिकानि योगस्थानानि शेषसप्तसामयिकादि-योगस्थानेभ्यः स्तोकानि, तथास्वाभाव्यात् चिरकालावस्थायिनां योगस्थानानां स्तोकत्वेन प्राप्य-माणत्वाद्। 'तओ' इत्यादि, ततोऽनुक्रमेण सप्तसामयिकादीनि योगस्थानानि असंख्यगुणानि भवन्ति। 'उभयपासे' इत्यादि, तत्र पूर्वोत्तररूपोभयपार्श्वस्थानि यानि तुल्यसामयिकानि योगस्थानानि तानि परस्परं तुल्यानि। तद्यथा—

(१) अष्टसामयिकानि योगस्थानानि सर्वस्तोकानि। (२) तेभ्य उभयपार्श्वस्थायीनि सप्तसामयिकानि योगस्थानानि असंख्यगुणानि, स्वस्थाने च परस्परं तुल्यानि। (३) तेभ्यः उभयपार्श्वस्थायीनि षट्सामयिकानि योगस्थानानि असंख्यगुणानि, स्वस्थाने च परस्परं तुल्यानि। (४) तेभ्य उभयपार्श्वस्थायीनि पञ्चसामयिकानि योगस्थानानि असंख्यगुणानि, स्वस्थाने च

परस्परं तुल्यानि । (५)तेभ्यः उभयपार्श्वस्थायीनि चतुःसामयिकानि योगस्थानानि असंख्यगुणानि, स्वस्थाने च परस्परं तुल्यानि । ( ६ ) तेभ्यः त्रिसामयिकानि योगस्थानानि असंख्यगुणानि । ( ७ ) तेभ्यो द्विसामयिकानि योगस्थानानि असंख्यगुणानि ॥ १२८ ॥ इदानीं चतुर्दशजीव-भेदानाश्रित्य जघन्योत्कृष्टभेदभिन्नस्य योगस्याल्पबहुत्वमाह—

थोवोऽत्थि लहू जोगो अपज्जसुहमस्स तो असंखगुणो ।
कमसो अपज्जबायरबितिचउइंदियअसण्णिसण्णीणं ॥१२९॥(गीतिः)
ताउ अपज्जत्ताणं सुहमियराण कमसो गुरू तत्तो ।
सिं पज्जत्ताण कमा लहू तओ सिं कमा जेट्ठो ॥ १३० ॥
ताउ अपज्जत्ताणं कमा गुरू होइ बिंदियाईणं ।
तो सिं पज्जाण कमा लहू तओ सिं कमा परमो ॥ १३१ ॥

(प्रे०) ( १ ) 'थोवोऽत्थि' इत्यादि, अपर्याप्तसूक्ष्मैकेन्द्रियस्य जघन्ययोगः सर्वस्तोकः । 'तो असंखगुणो' इत्यादि, 'लहू जोगो' इत्यत्र संबध्यते, ततः क्रमशोऽपर्याप्तानां बादरैकेन्द्रिय-द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियसंज्ञिपञ्चेन्द्रियाणां जघन्यो योगोऽसंख्येयगुणः । इति प्रथमगाथार्थः ।

( २ ) 'ताउ अपज्जत्ताणं' इत्यादि, 'जोगो असंखगुणो' इत्यत्र संबध्यते, एवमग्रेऽपि ज्ञेयम्, ततोऽनुक्रमेणापर्याप्तानां सूक्ष्मबादरैकेन्द्रियाणामुत्कृष्टो योगोऽसंख्येयगुणः । 'तत्तो सिं पज्जत्ताण कमा लहू' इति, ततोऽनुक्रमेण पर्याप्तयोस्तयोः सूक्ष्मबादरैकेन्द्रिययोर्जघन्यो योगोऽ-संख्येयगुणः । 'तओ सिं कमा जेट्ठो' इति, ततस्तयोः सूक्ष्मबादरैकेन्द्रिययोः पर्याप्तयोरुत्कृष्टो योगोऽनुक्रमेणासंख्येयगुणः । इति द्वितीयगाथार्थः ।

( ३ ) 'ताउ अपज्जत्ताणं' इत्यादि, ततोऽनुक्रमेणापर्याप्तानां द्वित्रिचतुरसंज्ञिसंज्ञिपञ्चे-न्द्रियाणामुत्कृष्टो योगोऽसंख्येयगुणः। 'तो सिं पज्जाण कमा लहू' इति, ततोऽनुक्रमेण तेषामन-न्तरोक्तानां द्वीन्द्रियादीनां पर्याप्तानां जघन्यो योगोऽसंख्येयगुणः। 'तओ सिं कमा परमो' इति, ततोऽनुक्रमेण तेषां पर्याप्तद्वीन्द्रियादीनामुत्कृष्टयोगोऽसंख्येयगुणः । इति तृतीयगाथार्थः । गाथात्रिकार्थानुसारेणाल्पबहुत्वमेवम्—

(१) अपर्याप्तसूक्ष्मैकेन्द्रियस्य जघन्ययोगः सर्वस्तोकः। (२) ततोऽपर्याप्तबादरैकेन्द्रियस्य जघ-न्ययोगोऽसंख्येयगुणः । (३) ततोऽपर्याप्तद्वीन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः। (४) ततोऽपर्याप्त-त्रीन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः। (५) ततोऽपर्याप्तचतुरिन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः। (६) ततोऽपर्याप्तासंज्ञिपञ्चेन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः । (७) ततोऽपर्याप्तसंज्ञिपञ्चेन्द्रिय-

स्य जघन्ययोगोऽसंख्येयगुणः। (८) ततोऽपर्याप्तसूक्ष्मैकेन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः।(९)ततोऽपर्याप्तबादरैकेन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (१०) ततः पर्याप्तसूक्ष्मैकेन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः । (११) ततः पर्याप्तबादरैकेन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः । (१२) ततः पर्याप्तसूक्ष्मैकेन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (१३) ततः पर्याप्तबादरैकेन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (१४) ततोऽपर्याप्तद्वीन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (१५) ततोऽपर्याप्तत्रीन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (१६) ततोऽपर्याप्तचतुरिन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (१७) ततोऽपर्याप्तासंज्ञिपञ्चेन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (१८) ततोऽपर्याप्तसंज्ञिपञ्चेन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (१९) ततः पर्याप्तद्वीन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः । (२०) ततः पर्याप्तत्रीन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः । (२१) ततः पर्याप्तचतुरिन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः । ( २२ ) ततः पर्याप्तासंज्ञिपञ्चेन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः। ( २३ ) ततः पर्याप्तसंज्ञिपञ्चेन्द्रियस्य जघन्ययोगोऽसंख्येयगुणः । ( २४ ) ततः पर्याप्तद्वीन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (२५) ततः पर्याप्तत्रीन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । (२६) ततः पर्याप्तचतुरिन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः। (२७) ततः पर्याप्तासंज्ञिपञ्चेन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः । ( २८ ) ततः पर्याप्तसंज्ञिपञ्चेन्द्रियस्योत्कृष्टयोगोऽसंख्येयगुणः ॥१२९॥१३०॥१३१॥

सम्प्रति पूर्वं 'जीवाभिआ ठणा' ( गाथा०८३ ) इति वचनेन स्थापिताया जीवविषयकस्थानप्ररूपणाया अवसरः। तस्या अपि सत्पदादीनि षड्द्वाराणि सन्ति। तत्रादावेकगाथया सत्पदप्रमाणद्वारे निरूपयति—

पज्जतसजिआसिज्जिह परूवणाऽत्थि पइजोगठाणम्मि ।
सेढिअसंखेज्जसमा सव्वेसु वि जोगगठाणेसुं ॥ १३२ ॥

(प्रे०) ननु जीवविषयकप्ररूपणा जीवसामान्यमधिकृत्य क्रियते उत जीवविशेषमधिकृत्येत्याशङ्कायामाह-'**पज्जतसजिआसिज्जिह परूवणाऽत्थि**' इति, इह–स्थानद्वारान्तर्गतजीवविषयकप्ररूपणायां जीवविषयकप्ररूपणा पर्याप्तत्रसजीवानाश्रित्यास्ति, अर्थात् सत्पदादिसर्वद्वारेषु पर्याप्तत्रसजीवानामेव सत्तादीनि निरूपयिष्यन्ते। अथ योगस्थानेषु पर्याप्तत्रसजीवानां सत्तां प्रमाणं चाह-'**पइजोगठाणम्मि सव्वेसु वि जोगठाणेसु**' इति, सर्वेष्वपि योगस्थानेषु, जघन्ययोगस्थानादारभ्योत्कृष्टयोगस्थानं यावदित्यर्थः, प्रत्येकयोगस्थानेऽसंख्यश्रेणिप्रमाणाः पर्याप्तत्रसजीवा वर्तन्ते ॥ १३२ ॥

इदानीं श्रेणिद्वारे विवक्षितयोगस्थानापेक्षया तदनन्तरे योगस्थाने पर्याप्तत्रसजीवाः कियन्तो भवन्तीति बोधार्थमनन्तरोपनिधां चिकीर्षुराह—

अत्थि लहुजोगठाणा ठाणम्मि जहुत्तरे विसेसहिआ ।
जा जवमज्झं एत्तो विसेसहीणाऽत्थि जेट्ठं जा ॥ १३३ ॥

(प्रे०) 'अत्थि' इत्यादि, जघन्ययोगस्थानादारभ्य यवमध्यमयोगस्थानं यावत् यथोत्तरे योगस्थाने पर्याप्तत्रसजीवा विशेषाधिका भवन्ति। इदमुक्तं भवति-जघन्ययोगस्थाने यावन्तः पर्याप्तत्रसजीवा वर्तन्ते तदपेक्षया द्वितीययोगस्थाने विशेषाधिका भवन्ति। द्वितीययोगस्थानगतजीवेभ्यस्तृतीययोगस्थानगता जीवा विशेषाधिकाः, तृतीययोगस्थानगतजीवापेक्षया चतुर्थयोगस्थाने पर्याप्तत्रसजीवा विशेषाधिका भवन्ति। इत्येवं यवमध्यमयोगस्थानं यावदनुक्रमेण पूर्वपूर्वयोगस्थानगतपर्याप्तत्रसजीवेभ्योऽव्यवहितोत्तरोत्तरयोगस्थाने पर्याप्तत्रसजीवा विशेषाधिका वक्तव्याः। ततो विशेषहीना भवन्ति। तदेवाह-'एत्तो विसेसहीणाऽत्थि जेट्ठं जा' इति, यवमध्यमयोगस्थानात् प्रारभ्योत्कृष्टयोगस्थानं यावत् यथोत्तरे योगस्थाने पर्याप्तत्रसजीवा विशेषहीना भवन्ति।

अयं भावः-यवमध्यमयोगस्थाने यावन्तः पर्याप्तत्रसजीवा वर्तन्ते तेभ्यस्तदनन्तरयोगस्थाने ते विशेषहीना भवन्ति। तेभ्यस्तदनन्तरे योगस्थाने विशेषहीना भवन्ति। तेभ्यस्तदनन्तरयोगस्थाने विशेषहीना भवन्ति। इत्येवमुत्कृष्टयोगस्थानं यावदनुक्रमेण पूर्वपूर्वयोगस्थाने स्थितेभ्यः पर्याप्तत्रसजीवेभ्य उत्तरोत्तरयोगस्थाने पर्याप्तत्रसजीवा विशेषहीना भवन्ति ॥ १३३ ॥

इत्थं जघन्ययोगस्थानादारभ्य यवमध्यमयोगस्थानं यावत् पर्याप्तत्रसजीवानां विशेषवृद्धिस्ततश्चोत्कृष्टयोगस्थानं यावद् विशेषहानिर्भवति। परं विशेषवृद्धिर्विशेषहानिर्वाऽनेकभेदभिन्ना। अतोऽत्र विशेषवृद्धेर्विशेषहानेश्च प्रमाणनिर्णयार्थं चतुरो भागहारानुद्दिशति—

**इह अवठियरूवाहियरूवूणगछेअभागहारेहिं।**
**णेया अणंतरोवणिधाए उ परूवणा चउहा ॥१३४॥**

(प्रे०) 'इह' इति, 'अणंतरोवणिधाए' इति पदमत्र सम्बध्यते, अस्यामनन्तरोपनिधायाम् 'अवठिय' इत्यादि, 'द्वन्द्वात्परः प्रत्येकमभिसम्बध्यते' इति न्यायादवस्थितभागहारः, रूपाधिकभागहारः, रूपोनभागहारः, छेदभागहारश्चेति चतुर्भिर्भागहारैश्चतुर्विधा प्ररूपणा ज्ञेया। अर्थादिदानीं विशेषवृद्धेर्विशेषहानेश्च प्रमाणनिर्णयार्थमवस्थितादयश्चत्वारो भागहाराः प्ररूपयिष्यन्ते। यत्र यत्र भाजकराशिरवस्थितो भवति, अर्थादेक एव भवति, स भागहारोऽवस्थित उच्यते। रूपेन=एकेनाधिकः रूपाधिकः, यत्र भाजकराशिः क्रमश एकैकेनाधिको भवति स भागहारो रूपाधिक उच्यते। शास्त्रे एकस्य रूपेति संज्ञा। रूपेनोनः=रूपोनः, यत्र भाजकराशिः क्रमश एकैकेन न्यूनो भवति स भागहारो रूपोन उच्यते। छेदो नाम भागः, यत्र भाजकराशिर्द्वित्रिचतुरादिभागो भवति स भागहारो छेदभागहारो निगद्यते ॥ १३४ ॥ तदेवमनन्तरोपनिधायां चत्वारो भागहारा उद्दिष्टाः। सम्प्रति यथोद्देशं निर्देष्टुकामोऽवस्थितभागहारमाह—

**तहऽवठिअभागहारो इगगुणहाणीअ भाजिअं हस्सं।**
**सो पक्खेवो जाऽज्जं ठाणं बीअगुणहाणीए ॥ १३५ ॥**

(प्रे०) '**तइऽवठिअभागहारो**' इति, तत्र=अन्तरोक्तचतुर्विधभागहारमध्येऽवस्थितभाग-हारः, '**एवम्**' इत्यध्याहारः, '**इगगुणहाणीअ**' इति, एकद्विगुणहान्या, एकद्विगुणहानिगतयोगस्थानै-रित्यर्थः, '**भाजिअं हस्सं**' इति, सर्वजघन्ययोगस्थाने भाजिते, जीवाश्रितप्ररूपणायाः प्रक्रान्तत्वात् सर्वजघन्ययोगस्थानगतजीवेषु भाजितेषु इत्यर्थः, '**सो पक्खेवो**' इति, एकद्विगुणहानिगतयोग-स्थानैः प्रथमद्विगुणहानिप्रथमयोगस्थानगतजीवेषु भाजितेषु यावद् भागफलं भवति तावत्प्रमाणः स प्रक्षेपो भवति, प्रथमद्विगुणहानेर्द्वितीयादियोगस्थानेषूत्तरोत्तरं तावत्प्रमाणा जीवा अधिका भवन्ती-त्यर्थः, क यावत् ? इत्याह–'जाऽऽजं' इत्यादि, प्रथमद्विगुणहानिद्वितीययोगस्थानादारभ्य द्वितीय-द्विगुणहानेः प्रथमयोगस्थानं यावत् ।

**इदमुक्तं भवति**–एकद्विगुणहानियोगस्थानैर्जघन्ययोगस्थानगतजीवेषु भाजितेषु यावद् भागफलं लब्धं तस्य जघन्ययोगस्थानगतजीवेषु प्रक्षेपे निक्षिप्ते द्वितीययोगस्थानगतजीवानां प्रमाणं भवति, द्वितीययोगस्थानगतजीवेषु प्रक्षेपे निक्षिप्ते तृतीययोगस्थागतजीवानां प्रमाणं भवति, तृतीय-योगस्थानगतजीवेषु प्रक्षेपे निक्षिप्ते चतुर्थयोगस्थानगतजीवानां प्रमाणं भवति, चतुर्थयोगस्थानगत-जीवेषु प्रक्षेपे कृते पञ्चमयोगस्थानगतजीवानां प्रमाणं भवति, इत्येवमेकस्यैव भागफलस्यानुक्रमेण प्रथमादियोगस्थानगतजीवेषु प्रक्षेपे कृते द्वितीयादियोगस्थानगतजीवानां प्रमाणं भवति, एवं च ताव-द्वाच्यं यावत् प्रथमद्विगुणहानिचरमयोगस्थानगतजीवेषु तस्य भागफलस्य प्रक्षेपे कृते द्वितीयद्विगुण-हानिप्रथमयोगस्थानगतजीवानां प्रमाणं भवेत् । इति मुकुलितार्थः ।

**मुत्कलितार्थः** पुनरयम्–उपर्युक्तरीत्या भागहारे कृते असंख्यश्रेणयो भागफलं भवति । तद्यथा–एकद्विगुणहानेर्योगस्थानानि श्रेणिप्रथमवर्गमूलासंख्यातभागः सन्ति । जघन्य-योगस्थाने स्थिता जीवाः श्रेण्यसंख्यप्रथमवर्गमूलप्रमाणश्रेणिषु यावन्तः प्रदेशास्तावन्मिताः सन्ति । अतः जघन्ययोगस्थानगतजीवाः÷एकद्विगुणहानिगतयोगस्थानानि=श्रेणेरसंख्यप्रथमवर्गमूलानि×

$$\text{श्रेणिः} \div \frac{\text{श्रेणिप्रथमवर्गमूलम्}}{\text{असंख्येयम्}} = \text{असंख्यश्रेणिप्रथमवर्गमूलानि} \times \text{श्रेणिः} \times \frac{\text{असंख्यम्}}{\text{श्रेणिप्रथमवर्गमूलम्}} = \text{असंख्यश्रेणयः ।}$$

**अत्रासत्कल्पनया चिन्त्यते**–षट्त्रिंशदधिकपञ्चशतोत्तरपञ्चषष्टिसहस्र (६५५३६) प्रमाणा श्रेणिः कल्प्यते । असंख्यातराशिरष्टौ कल्प्यते । अतः श्रेणिप्रथमवर्गमूलं षट्पञ्चाशदधिकद्विशते (२५६) भवति । श्रेणिप्रथमवर्गमूलासंख्यातभागः षट्पञ्चाशदधिकद्विशताष्टभागाः ( $\frac{\text{२५६}}{\text{८}}$ ), द्वात्रिंशदि-त्यर्थः, भवति ।

एवं श्रेण्यसंख्यप्रथमवर्गमूलप्रमाणश्रेणयः=८×२५६×६५५३६ ।

$$\text{अतः } \text{८} \times \text{२५६} \times \text{६५५३६} \div \frac{\text{२५६}}{\text{८}} =$$

$$\frac{\text{८}}{\text{१}} \times \frac{\text{२५६}}{\text{१}} \times \frac{\text{६५५३६}}{\text{१}} \times \frac{\text{८}}{\text{२५६}} = \text{६४} \times \text{६५५३६}$$

इत्येवमत्रैका श्रेणिरसंख्यातराशिना गुण्यते, अतः फलमसंख्यातश्रेणयो भवति। अत्र कश्चिदाह-नन्वनया रीत्या प्रथमद्विगुणहानिद्वितीयादियोगस्थानेषूत्तरोत्तरमसंख्यातश्रेणिप्रमाणा जीवा वर्धन्त इति सिद्धम्, परमेकद्विगुणहानिगतानि योगस्थानानि श्रेणिप्रथमवर्गमूलासंख्यातभागप्रमाणानि कथं भवन्ति? अत्र प्रतिविधीयते, सर्वयोगस्थानेभ्य एकस्पर्धकगतवर्गणा असंख्यगुणाः। एकस्पर्धकगतवर्गणाभ्यः सर्वस्पर्धकान्यसंख्यगुणानि। सर्वस्पर्धकेभ्यः सर्ववर्गणा असंख्यगुणाः। अतः सर्ववर्गणा योगस्थानेभ्योऽसंख्यगुणा जाताः। अतः सर्ववर्गणासंख्या योगस्थानसंख्यातोऽसंख्यगुणसंख्यया भाजनीया, कृते भागहारे यावद् भागफलं भवेत् तावत्प्रमाणा सर्वयोगस्थानसंख्या भवति। सर्वा अपि वर्गणाः श्रेण्यसंख्यातभाग एव। अतोऽत्र भागहारप्रक्रियायां भागफलराशितो भाजकराशिर्बृहदस्ति। यतो भागफलराशिर्योगस्थानराशिरस्ति, भाजकराशिश्च योगस्थानराशितोऽसंख्यगुणोऽस्ति।

अथात्रायं नियमः-कस्मिन्नपि विवक्षितराशौ भाजिते सति यदि भागफलराशितो भाजकराशिर्बृहत् स्यात् तदा तद् भागफलमवश्यं भाज्यराशेः प्रथमवर्गमूलतो न्यूनं भवति। दृष्टान्ततो यथा-६५५३६÷१०२४=६४। अत्र भागफलराशिः ६४, भाजकराशिः १०२४, इति भागफलराशितो भाजकराशिर्बृहत्तरः। अस्ति चेदं चतुःषष्टिप्रमाणं भागफलं भाज्यस्य ६५५३६ राशेः षट्पञ्चाशदधिकद्विशत(२५६)प्रमाणप्रथमवर्गमूलतो न्यूनम्। प्रस्तुते भागफलं योगस्थानानि अस्ति, भाज्यराशिर्वर्गणाराशिः, भाजकराशिश्च योगस्थानसंख्यातोऽसंख्यगुणोऽस्ति। अतो योगस्थानानि वर्गणाप्रथमवर्गमूलतो न्यूनानि भवन्तीति समायातम्। सर्वा अपि वर्गणाः श्रेण्यसंख्यातभाग एव। अतो योगस्थानानि श्रेण्यसंख्यातभागप्रथमवर्गमूलतो न्यूनानीति सिद्धम्।

अथ कियन्ति न्यूनानि भवन्तीति चिन्त्यते। अत्रायं नियमः-भागफलराशितो भाजकराशिर्यावद्गुणः स्यात् तावद्राशेः वर्गमूलं विधेयम्, कृते वर्गमूले यावद् वर्गमूलं भवेत्, भाज्यराशिप्रथमवर्गमूलतस्तावतिथे भागे भागफलं भवति। दृष्टान्ततो यथा-उपर्युक्तभागहारे भागफलराशिचतुःषष्टितो भाजकराशिः चतुर्विंशत्यधिकैकसहस्रं षोडशगुणः, षोडशराशेर्वर्गमूलं चत्वारि, अतो भागफलं चतुःषष्टिः षट्पञ्चाशदधिकद्विशतप्रमाणस्य भाज्यराशिप्रथमवर्गमूलस्य चतुर्थभागोऽस्ति। एवं प्रस्तुते भागफलराशितो भाजकराशिरसंख्यगुणः, तस्य वर्गमूलमसंख्यप्रमाणं भवति। अतो भागफलरूपयोगस्थानानि श्रेण्यसंख्यातभागप्रमाणभाज्यराशेः प्रथमवर्गमूलासंख्याततमो भागो भवन्ति। इत्येवं योगस्थानानि श्रेण्यसंख्यातभागप्रथमवर्गमूलासंख्याततमो भागो भवन्तीति सिद्धे श्रेणिप्रथमवर्गमूलासंख्याततमो भागो भवन्तीति तु सुतरां सिद्ध्यति।

पुनरत्र कश्चिदाह-ननु जघन्ययोगस्थानस्थिता जीवाः श्रेण्यसंख्यप्रथमवर्गमूलप्रमाणश्रेणयः कथं भवन्ति? अत्रोच्यते, यवमध्यमयोगस्थानस्थितजीवेभ्यो जघन्ययोगस्थानगता जीवा अद्धापल्योपमासंख्यातभागे सन्ति। अत आदौ यवमध्यमयोगस्थानस्थिता जीवा कियन्तः सन्तीति निश्चेयम्। तद्यथा-सर्वयोगस्थानासंख्यातभागेन पर्याप्तत्रसजीवसंख्यायां भाजितायां यावद् भागफलं

भवति तावत्प्रमाणाः पर्याप्तत्रसजीवा यवमध्यमयोगस्थाने स्थिताः प्राप्यन्ते । पर्याप्तत्रसजीवा अङ्गुलवर्गसंख्यातभागभाजितप्रतरप्रमाणाः सन्ति । सर्वयोगस्थानानि श्रेणिवर्गमूलासंख्यातभागप्रमाणानि भवन्तीति उपरि साधितमेव । अत्रेयं गणितप्रक्रिया–

$$\text{प्रतरम्}=\text{श्रेणिः}\times\text{श्रेणिः}\text{ । अतः }\frac{\text{श्रेणिः}\times\text{श्रेणिः}}{\frac{\text{अङ्गुलवर्गः}}{\text{संख्यातम्}}}\div\frac{\text{श्रेणिवर्गमूलम्}}{\text{असंख्यातम्}}$$

श्रेणिवर्गमूलम् असंख्यातम्

$$=\frac{\text{श्रेणिः}}{१}\times\frac{\text{श्रेणिः}}{१}\times\frac{\text{संख्यातम्}}{\frac{\text{अङ्गुलवर्गः}}{१}}\times\frac{\text{असंख्यातम्}}{\frac{\text{श्रेणिवर्गमूलम्}}{१}}=\text{असंख्यश्रेणिवर्गमूलतुल्यश्रेणयः ।}$$

इत्येवं यवमध्यमयोगस्थानस्थिताः पर्याप्तत्रसजीवा असंख्यश्रेणिवर्गमूलतुल्यश्रेणिप्रमाणाः सन्ति ।

अत्रेदं ध्येयम्–श्रेणिवर्गमूलासंख्यातभागघटकासंख्यातत्वं श्रेण्यसंख्यातभागप्रमाणमस्तीत्यङ्गुलवर्गतोऽसंख्येयगुणं भवति । अथ यवमध्यमयोगस्थानस्थितपर्याप्तत्रसजीवेभ्यो जघन्ययोगस्थानगतजीवा अद्धापल्योपमासंख्यातभागो भवन्ति । अतोऽद्धापल्योपमासंख्यातभागेन यवमध्यमयोगस्थानगतपर्याप्तत्रसजीवराशौ भाजिते जघन्ययोगस्थानगतजीवानां संख्या लभ्यते । तद्यथा–

$$\frac{\text{श्रेणिवर्गमूलम्}}{१}\times\frac{\text{श्रेणिः}}{१}\times\frac{\text{संख्यातम्}}{१}\times\frac{\text{असंख्यम्}}{१}\div\frac{\text{अद्धापल्योपम.}}{\text{असंख्यातम्}}$$

असंख्यातम्

$$=\frac{\text{श्रेणिवर्गमूलम्}}{१}\times\frac{\text{श्रेणिः}}{१}\times\frac{\text{संख्यातम्}}{१}\times\frac{\text{असंख्यातम्}}{१}\times\frac{\text{असंख्यातम्}}{\text{अद्धापल्योपम.}}=\text{असंख्यश्रेणिवर्गमूलतुल्यश्रेणयः}$$

इत्येवं यवमध्यमयोगस्थानस्थितजीववद् जघन्ययोगस्थानस्थिता जीवा अपि असंख्यश्रेणिवर्गमूलतुल्यश्रेणिप्रमाणा भवन्ति । यतः श्रेण्यसंख्यवर्गमूलघटकासंख्यातत्वमद्धापल्योपमादसंख्यगुणं वर्तते । नन्वत्रायं गाथार्थोऽसत्कल्पनया प्रदर्शनीयः । असत्कल्पनायां प्रदर्शितायां मत्सदृशबालजनानां प्रकृतगाथार्थो दृढीभवतीति चेत्, सत्यम्, मा त्वरिष्ठाः, अयं गाथार्थस्तथा वक्ष्यमाणगाथाद्विकार्थो वक्ष्यमाणगाथाद्विकस्य द्वितीयगाथाटीकायामसत्कल्पनया प्रदर्शयिष्यते ॥ १३५ ॥

इदानीं द्वितीयद्विगुणहानिद्वितीयादियोगस्थानेषु कियन्तो जीवा वर्धन्त इति निरूपयति—

**इगगुणहाणीअ हयं बीअदुगुणहाणिपढमठाणं सो ।**
**पक्खेवो जाव पढमठाणं तइअगुणहाणीए ॥ १३६ ॥**

(प्रे०) '**इगगुणहाणीअ हयं**' इत्यादि, एकद्विगुणहानिगतयोगस्थानैः द्वितीयद्विगुणहानेः प्रथमयोगस्थानस्थितजीवेषु भाजितेषु यद् भागफलं भवति, '**सो पक्खेवो**' इति, तावत्प्रमाणः क्षेपो द्वितीयद्विगुणहानिद्वितीयादियोगस्थानेषु भवति, क्व यावत् ? इत्याह-'**जाव**' इत्यादि,

तृतीयद्विगुणहानिप्रथमयोगस्थानं यावत् । अत्राप्यनन्तरगाथाप्रदर्शितगणितरीत्या भागफलमसंख्यात-श्रेण्यो भवति ॥ १३६ ॥ इदानीं यवमध्ययोगस्थानं यावज्जीववृद्धेरतिदेशपूर्वकं यवमध्ययोग-स्थानानन्तरयोगस्थानादिषु जीवानां कियती हानिर्भवतीति प्रतिपादयति—

**एवं जवमज्झं जा पक्खेवो ताउ दुगुणहाणिहयं ।**
**गुरुजोगट्ठाणं जा तहेव पक्खेवअवहारो ॥ १३७ ॥**

(प्रे०) 'एवं जवमज्झं जा पक्खेवो' इति, प्रथमद्विगुणहानिद्वितीयादियोगस्थानेषु द्वितीयद्विगुणहानिद्वितीयादियोगस्थानेषु च यथा प्रक्षेपः प्रदर्शितस्तथैव तृतीयद्विगुणहानिद्वितीय-योगस्थानादारभ्य यवमध्ययोगस्थानं यावत् प्रक्षेपो ज्ञातव्यः । तद्यथा-एकद्विगुणहानिगत-योगस्थानैस्तृतीयद्विगुणहानिप्रथमयोगस्थानस्थितजीवेषु भाजितेषु यावद् भागफलं भवति तावत्प्रमाणः प्रक्षेपः तृतीयद्विगुणहानिद्वितीययोगस्थानादारभ्य चतुर्थद्विगुणहानिप्रथमयोगस्थानं यावद् भवति । एकद्विगुणहानिगतयोगस्थानैश्चतुर्थद्विगुणहानिप्रथमयोगस्थानगतजीवेषु भाजितेषु यावद् भागफलं भवति तावत्प्रमाणः प्रक्षेपः चतुर्थद्विगुणहानिद्वितीययोगस्थानादारभ्य पञ्चमद्विगुण-हानिप्रथमयोगस्थानं यावद् भवति। एकद्विगुणहानिगतयोगस्थानैः पञ्चमद्विगुणहानिप्रथमयोगस्थान-स्थितजीवेषु भाजितेषु यावद् भागफलं भवति तावत्प्रमाणः प्रक्षेपः पञ्चमद्विगुणहानिद्वितीययोग-स्थानादारभ्य षष्ठद्विगुणहानिप्रथमयोगस्थानं यावद् भवति । एवं क्रमशो यवमध्ययोगस्थानं यावद् वक्तव्यम् ।

इत्थमत्रायं निष्कर्षः—यद्द्विगुणहानिगतद्वितीयादियोगस्थानेषु प्रक्षेपः चिन्त्यते तद्-द्विगुणहानिप्रथमयोगस्थानगतजीवेषु एकद्विगुणहानिगतयोगस्थानैर्भाजितेषु यावद् भागफलं भवति तावत्प्रमाणः प्रक्षेपः तद्द्विगुणहानिद्वितीययोगस्थानादारभ्य तदनन्तरद्विगुणहानिप्रथमयोग-स्थानं यावद् भवति ।

अथ हानिमाह—'ताउ' इत्यादि, ततः=यवमध्यमानन्तरयोगस्थानादुत्कृष्टयोगस्थानं यावद् तथैव=पूर्वोक्तक्रमेणैव, 'दुगुणहाणिहयं' इत्यादि, द्विद्विगुणहानिगतस्थानैस्तत्तद्द्विगुण-हानिप्रथमयोगस्थानगतजीवेषु हतेषु यावद् भागफलं भवति तावत्प्रमाणः, 'पक्खेवअवहारो' इति, प्रक्षेपापहारः कर्तव्यः । नन्वत्र प्रक्षेपशब्दस्य कोऽर्थः ? उच्यते, प्रक्षेपशब्देनात्र चयो बोध्यः । चयो नाम उत्तरोत्तरं समानतया वर्धमानो हीयमानो वा राशिः । इदमुक्तं भवति—यवमध्ययोग-स्थानं यावत् यथा प्रक्षेपश्चिन्तितः, तथैव यवमध्यमानन्तरयोगस्थानादारभ्योत्कृष्टयोगस्थानं यावद-पहारश्चिन्तनीयः । नवरं पूर्वं तत्तद्द्विगुणहानिप्रथमयोगस्थानगता जीवा एकद्विगुणहानियोगस्थानैर्भा-जिताः, अत्र तु द्विद्विगुणहानियोगस्थानैर्भाजनीयाः । अत्रासत्कल्पनयैवम्— अष्ट द्विगुणहानयः कल्प्यन्ते । एकद्विगुणहानौ चत्वारि योगस्थानानि कल्प्यन्ते । चतुर्थद्विगुणहानिप्रथमयोगस्थानं यवमध्ययोगस्थानं कल्प्यते । जघन्ययोगस्थाने षोडश जीवाः कल्प्यन्ते । अतश्चतुर्भिः षोडश

जीवेषु भाजितेषु भागफलं चत्वारि । अतः प्रथमद्विगुणहानिद्वितीययोगस्थानादारभ्य द्वितीयद्विगुणहानिप्रथमयोगस्थानं यावच्चतुर्णां जीवानां प्रक्षेपो भवति । अतो द्वितीयद्विगुणहानिप्रथमयोगस्थाने द्वात्रिंशज्जीवा जाताः । चतुर्भिर्द्वात्रिंशज्जीवेषु भाजितेषु भागफलमष्टौ भवति । अतो द्वितीयद्विगुणहानिद्वितीययोगस्थानादारभ्य तृतीयद्विगुणहानिप्रथमयोगस्थानं यावदष्टजीवानां प्रक्षेपो भवति । अतस्तृतीयद्विगुणहानिप्रथमयोगस्थाने चतुःषष्टिजीवा जाताः । चतुर्भिश्चतुःषष्टिजीवेषु भाजितेषु भागफलं षोडश भवति । अतस्तृतीयद्विगुणहानिद्वितीययोगस्थानाद् यवमध्ययोगस्थानं यावत् षोडशजीवानां प्रक्षेपो भवति । अतो यवमध्ययोगस्थानेऽष्टाविंशत्यधिकैकशतजीवा भवन्ति।

इदानीमुत्कृष्टयोगस्थानं यावद् हानिर्भवति । अष्टभिरष्टाविंशत्यधिकशतजीवेषु भाजितेषु भागफलं षोडश भवति । अतश्चतुर्थद्विगुणहानिद्वितीययोगस्थानादारभ्य पञ्चमद्विगुणहानिप्रथमयोगस्थानं यावत् षोडशजीवानां हानिर्भवति । अतः पञ्चमद्विगुणहानिप्रथमयोगस्थाने चतुःषष्टिजीवाः संजाताः । अष्टभिः चतुःषष्टिजीवेषु भाजितेषु भागफलमष्टौ भवति । अतः पञ्चमद्विगुणहानिद्वितीययोगस्थानादारभ्य षष्ठद्विगुणहानिप्रथमयोगस्थानं यावदष्टजीवानां हानिर्भवति । अतः षष्ठद्विगुणहानिप्रथमयोगस्थाने द्वात्रिंशज्जीवा भवन्ति । अष्टभिर्द्वात्रिंशज्जीवेषु भाजितेषु भागफलं चत्वारि भवति । अतः षष्ठद्विगुणहानिद्वितीययोगस्थानादारभ्य सप्तमद्विगुणहानिप्रथमयोगस्थानं यावच्चतुर्णां जीवानां हानिर्भवति । अतः सप्तमद्विगुणहानिप्रथमयोगस्थाने षोडश जीवा भवन्ति । अष्टभिः षोडशजीवेषु भाजितेषु भागफलं द्वे भवति । अतः सप्तमद्विगुणहानिद्वितीययोगस्थानादष्टमद्विगुणहानिप्रथमयोगस्थानं यावद् द्विजीवयोर्हानिर्भवति । ततोऽन्तिमयोगस्थानं यावदेकजीवस्य हानिर्भवति । कुतः ? यतोऽष्टभिः अष्टमद्विगुणहानिप्रथमयोगस्थानस्थिताष्टजीवेषु भाजितेषु भागफलमेकं भवति । अत्र स्थापनैवम्—

यवमध्ययोगस्थानम्
↑

जीवसंख्या—१६ २० २४ २८ ३२ ४० ४८ ५६ ६४ ८० ९६ ११२ १२८
योगस्थानानि- ! । । । ! । । । ! । । । ! अतः परं हानिः, तद्यथा—
द्विगुणहानिक्रमः-१ २ ३ ४

११२ ९६ ८० ६४ ५६ ४८ ४० ३२ २८ २४ २० १६ १४ १२ १० ८ ७ ६ ५
। । । ! । । । ! । । । ! । । । ! । । ।
५ ६ ७ ८

॥१३७॥

पूर्वं जघन्ययोगस्थानाद् यवमध्ययोगस्थानं यावद् वृद्धिमुखेन तत उत्कृष्टयोगस्थानं यावद् हानिमुखेनावस्थितभागहारः प्रदर्शितः । इदानीं यवमध्ययोगस्थानात् पूर्वपार्श्वे जघन्ययोगस्थानं यावदुत्तरपार्श्वे चोत्कृष्टयोगस्थानं यावद् हानिमुखेनावस्थितभागहारं प्रदिदर्शयिषुर्गाथाद्विकमाह—

अहव दुगुणहाणिहये जवमज्झे सो पक्खेवअवहारो ।
अत्थि उभयओ जाऽज्जं ठाणं दुइअगुणहाणीए ॥१३८॥
तो तम्मि दुगुणहाणिहये पुव्वद्धो पक्खेवअवहारो ।
जाव तइअ गुणिपढमठाणं एवं लहुगुरुं जा ॥१३९॥

(प्रे०) 'अहव' इत्यादि, अथवा यवमध्यमयोगस्थाने द्विद्विगुणहानिभ्यां हते, द्विद्विगुणहानियोगस्थानैः यवमध्ययोगस्थानगतजीवेषु हतेषु इत्यर्थः, यावद् भागफलं भवति, 'सो पक्खेव अवहारो अत्थि उभयओ' इति, तावत्प्रमाणः स प्रक्षेपापहारो यवमध्यमयोगस्थानात् पूर्वोत्तरोभयपार्श्वयोगस्थानेषु भवति। क्व यावत् ? इत्याह–'जाऽज्जं' इत्यादि, द्वितीयद्विगुणहानिप्रथमयोगस्थानं यावत् । ततः किं विधेयम् ? इत्याह–'तो' इत्यादि, ततो द्विद्विगुणहानिहते तस्मिन्=द्वितीयद्विगुणहानिप्रथमयोगस्थाने, द्विद्विगुणहानियोगस्थानाभ्यां द्वितीयद्विगुणहानिप्रथमयोगस्थानगतजीवेषु हतेष्वित्यर्थः, पूर्वतः=अनन्तरभागहारेण प्राप्तप्रक्षेपापहारतोऽर्धः प्रक्षेपापहारो भवति । क्व यावद् ? इत्याह–'जाव तइअ' इत्यादि, 'उभयओ' इति पदमत्रापि संबध्यते, पूर्वोत्तरोभयपार्श्वयोगस्थानेषु तृतीयद्विगुणहानिप्रथमयोगस्थानं यावद् । अथ तृतीयद्विगुणहानिद्वितीयादियोगस्थानेषु प्रक्षेपापहारमतिदिशन्नाह-'एवं लहुगुरुं जा' इति, प्रथमद्विगुणहानौ द्वितीयद्विगुणहानौ च यथा प्रक्षेपापहारः प्रदर्शितस्तथैव तृतीयादिसर्वद्विगुणहानिषु पूर्वपार्श्वे जघन्ययोगस्थानं यावदुत्तरपार्श्वे चोत्कृष्टयोगस्थानं यावद् ज्ञेयः । इदमुक्तं भवति–यद्द्विगुणहानिद्वितीयादियोगस्थानेषु हानिश्चिन्त्यते तद्द्विगुणहानिप्रथमयोगस्थाने यावन्तो जीवा वर्तन्ते तावन्तो द्विद्विगुणहानियोगस्थानैर्भजनीयाः, कृते भागहारे यावद् भागफलं भवति, तावतां जीवानां हानिस्तद्द्विगुणहानिद्वितीययोगस्थानादारभ्य तदनन्तरद्विगुणहानिप्रथमयोगस्थानं यावद् भवति । सर्वत्र भागफलं पूर्वपूर्वत उत्तरोत्तरमर्धमर्धं भवति ।

अथ पूर्वोक्तासत्कल्पनामाश्रित्यैतद्गाथाद्विकोक्तावस्थितभागहारश्चिन्त्यते–यवमध्यमयोगस्थानेऽष्टाविंशत्यधिकशतजीवाः सन्ति । द्विद्विगुणहानियोगस्थानैरष्टभिर्भाजितेषु भागफलं षोडश भवति । अतः पूर्वोत्तरोभयपार्श्वयोः प्रथमद्विगुणहानिद्वितीययोगस्थानादारभ्य द्वितीयद्विगुणहानिप्रथमयोगस्थानं यावत् षोडशजीवानां प्रक्षेपापहारो भवति । अतः पूर्वोत्तरोभयपार्श्वयोर्द्वितीयद्विगुणहानिप्रथमयोगस्थाने चतुःषष्टिजीवा भवन्ति । अष्टभिर्भाजितेषु तेषु भागफलमष्टौ भवति । अतः पूर्वोत्तरोभयपार्श्वयोर्द्वितीयद्विगुणहानिद्वितीययोगस्थानादारभ्य तृतीयद्विगुणहानिप्रथमयोगस्थानं यावदष्टजीवानां हानिर्भवति । अतः पूर्वोत्तरोभयपार्श्वयोस्तृतीयद्विगुणहानिप्रथमयोगस्थाने द्वात्रिंशज्जीवा भवन्ति । अष्टभिर्भाजितेषु तेषु भागफलं चत्वारि भवति । अतस्तृतीयद्विगुणहानिद्वितीययोगस्थानादारभ्य चतुर्थद्विगुणहानिप्रथमयोगस्थानं यावच्चतुर्णां जीवानां हानिर्भवति । इत्येवं पूर्वपूर्वद्विगुण-

हानित उत्तरोत्तरद्विगुणहान्यर्धार्धजीवानां हानिः पूर्वपार्श्वे जघन्ययोगस्थानं यावदुत्तरपार्श्वे चोत्कृष्ट-योगस्थानं यावद् ज्ञातव्या ॥१३८॥१३९॥

इत्येवमवस्थितभागहारो द्विधा प्रदर्शितः । इदानीं रूपाधिकभागहारं प्रदर्शयन् गाथात्रिकमाह-

रूवऽहियभागहारो इगगुणहाणीअ भाजिअं हस्सं ।
तम्मि चिअ तप्पक्खेवे जोगट्ठाणं भवे बीअं ॥१४०॥
तं रूवहियाअ भजिअ पक्खेवे तस्स तम्मि चिअ तइअं ।
एवं गुणहाणीए बीआए पढमठाणं जा ॥१४१॥
तं गुणहाणीअ भजिअ पक्खेवे तम्मि चिअ भवे बीअं ।
तो पुव्वव्वेवं जा जवमज्झं एवमेव जेट्ठा वि ॥१४२॥ [गीतिः]

(प्रे०) ( १ ) 'रूवऽहियभागहारो' इति, रूपाधिकभागहारः 'एवम्' इत्यध्याहारः, 'इगगुणहाणीअ' इत्यादि, एकद्विगुणहानियोगस्थानैर्जघन्ययोगस्थानगतजीवेषु भाजितेषु यद् भागफलं भवति, 'तम्मि चिअ' इत्यादि, तस्मिन्नेव=जघन्ययोगस्थाने एव, जघन्ययोगस्थानगत-जीवेष्वेवेति यावत्, तस्य =भागफलस्य प्रक्षेपे कृते द्वितीयं योगस्थानं भवति, द्वितीययोगस्थान-गतजीवानां प्रमाणं भवतीत्यर्थः । इति प्रथमगाथार्थः ।

(२) 'तं रूवहियाअ' इत्यादि, 'रूवहियाअ' इति 'इगगुणहाणीअ' इत्यस्य विशेषणम्, तद्= द्वितीययोगस्थानमेकाधिकयैकद्विगुणहान्या भाजयित्वा, द्वितीययोगस्थानगतजीवानेकाधिकैरेकद्वि-गुणहानियोगस्थानैर्भाजयित्वेत्यर्थः, 'पक्खेवे' इत्यादि, तस्य=भागफलस्य, तस्मिन्नेव=द्वितीय-योगस्थाने एव, द्वितीययोगस्थानगतजीवेष्वेवेति यावद्, प्रक्षेपे कृते तृतीयं योगस्थानं भवति, तृतीय-योगस्थानगतजीवानां प्रमाणं भवतीत्यर्थः । 'एवं' इत्यादि, एवं द्वितीयद्विगुणहानिप्रथमयोगस्थानं यावद् वक्तव्यम् । तद्यथा-तृतीययोगस्थानगतान् जीवान् पूर्ववत् एकाधिकैर्योगस्थानैः, द्व्यधिकैक-द्विगुणहानियोगस्थानैरित्यर्थः, भाजयित्वा तृतीययोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते चतुर्थ-योगस्थानगतजीवानां प्रमाणं भवति । चतुर्थयोगस्थानगतजीवान् पूर्ववत् एकाधिकैर्योगस्थानैः, त्र्यधिकैकद्विगुणहानियोगस्थानैरित्यर्थः, भाजयित्वा चतुर्थयोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते पञ्चमयोगस्थानगतजीवानां प्रमाणं भवति । इत्येवं पूर्वपूर्वयोगस्थानगतान् जीवान् क्रमशः पूर्वपूर्वस्मादेकैकाधिकैरेकद्विगुणहानियोगस्थानैर्भाजयित्वा पूर्वपूर्वयोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते उत्तरोत्तरयोगस्थानगतजीवानां प्रमाणं भवति । इति द्वितीयगाथार्थः ।

( ३ ) अथ द्वितीयद्विगुणहानिद्वितीयादियोगस्थानेषु किं विधेयमित्याह-'तं गुणहाणीअ' इत्यादि, तद्=द्वितीयद्विगुणहानिप्रथमयोगस्थानमेकद्विगुणहान्या भाजयित्वा, द्वितीयद्विगुणहानि-

प्रथमयोगस्थानगतजीवानेकद्विगुणहानियोगस्थानैर्भाजयित्वेत्यर्थः, 'पक्खेवे' इत्यादि, द्वितीयद्विगुणहानिप्रथमयोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते द्वितीयद्विगुणहानिद्वितीययोगस्थानगतजीवानां प्रमाणं भवति। 'तत्तो' इत्यादि, ततः पूर्ववद्, तद्यथा—द्वितीययोगस्थानगतान् जीवानेकाधिकैकद्विगुणहानियोगस्थानैर्भाजयित्वा द्वितीययोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते तृतीययोगस्थानगतानां जीवानां प्रमाणं भवति। तृतीययोगस्थानगतजीवान् पूर्ववद् एकाधिकैर्योगस्थानैः, द्व्यधिकैकद्विगुणहानियोगस्थानैरित्यर्थः, भाजयित्वा तृतीययोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते चतुर्थयोगस्थानगतजीवानां प्रमाणं भवति। चतुर्थयोगस्थानगतजीवान् पूर्ववद् एकाधिकैर्योगस्थानैस्त्र्यधिकैकद्विगुणहानियोगस्थानैरित्यर्थः, भाजयित्वा चतुर्थयोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते पञ्चमयोगस्थानगतजीवानां प्रमाणं भवति। इत्येवं पूर्वपूर्वयोगस्थानगतान् जीवान् क्रमशः पूर्वपूर्वत एकैकाधिकैरेकद्विगुणहानियोगस्थानैर्भाजयित्वा पूर्वपूर्वयोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते उत्तरोत्तरयोगस्थानगतजीवानां प्रमाणं भवति। एवं तृतीयद्विगुणहानिप्रथमयोगस्थानं यावद् वक्तव्यम्। ततस्तृतीयद्विगुणहानिप्रथमयोगस्थानगतजीवानेकद्विगुणहानियोगस्थानैर्भाजयित्वा तृतीयद्विगुणहानिप्रथमयोगस्थानेषु भागफलस्य प्रक्षेपे कृते तृतीयद्विगुणहानिद्वितीययोगस्थानगतजीवानां प्रमाणं भवति। द्वितीययोगस्थानगतजीवानेकाधिकैकद्विगुणहानियोगस्थानैर्भाजयित्वा द्वितीययोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते तृतीययोगस्थानगतजीवानां प्रमाणं भवति। तृतीययोगस्थानजीवान् पूर्ववत एकाधिकैर्योगस्थानैः, द्व्यधिकैकद्विगुणहानियोगस्थानैरित्यर्थः, भाजयित्वा तृतीययोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते चतुर्थयोगस्थानगतजीवानां प्रमाणं भवति। इत्येवं पूर्वपूर्वयोगस्थानगतान् जीवान् क्रमशः पूर्वपूर्वतः एकैकाधिकैरेकद्विगुणहानियोगस्थानैर्भाजयित्वा पूर्वपूर्वयोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते उत्तरोत्तरयोगस्थानगतजीवानां प्रमाणं भवति। एवं चतुर्थद्विगुणहानिप्रथमयोगस्थानं यावद् वक्तव्यम्। इत्येवं तत्तद्द्विगुणहानेर्द्वितीययोगस्थानगतजीवानां प्रमाणसंशोधनार्थं तत्तद्द्विगुणहानेः प्रथमयोगस्थानगतान् जीवान् भाजयित्वा तेषु भागफलस्य प्रक्षेपः कर्तव्यः। तत्तद्द्विगुणहानेस्तृतीयादियोगस्थानगतजीवानां प्रमाणानयनार्थं पूर्वपूर्वयोगस्थानगतान् जीवान् क्रमशः पूर्वपूर्वत एकैकाधिकैरेकद्विगुणहानियोगस्थानैर्भाजयित्वा पूर्वपूर्वयोगस्थानगतजीवेषु भागफलस्य प्रक्षेपः कर्तव्यः। इत्येवं क्व यावद् विधेयमित्याह—'एवं जा जवमज्झं' इति, इत्येवं यवमध्ययोगस्थानं यावत् कर्तव्यम्। 'एवमेव जेट्ठा वि' इति, 'एवं जा जवमज्झं' इति "मध्यमणिन्यायेन" अत्रापि संबध्यते, जघन्ययोगस्थानादारभ्य यवमध्ययोगस्थानं यावद् रूपाधिकभागहारो यथा कृतस्तथैवोत्कृष्टयोगस्थानादारभ्य यवमध्ययोगस्थानं यावत् कर्तव्यः।

अथायं रूपाधिकभागहारः पूर्वोक्तामसत्कल्पनामाश्रित्य चिन्त्यते—जघन्ययोगस्थाने षोडश जीवाः सन्ति। अतश्चतुर्भिः षोडशसु भाजितेषु भागफलं चत्वारि। षोडशसु चतुर्णां प्रक्षेपे कृते द्वितीययोगस्थाने विंशतिजीवा भवन्ति। एकाधिकैकद्विगुणहानियोगस्थानैः पञ्चभिर्विंशतिजीवेषु भाजि-

तेषु भागफलं चत्वारि । विंशतिजीवेषु चतुर्णां प्रक्षेपे कृते तृतीययोगस्थाने चतुर्विंशतिजीवा भवन्ति । षड्भिश्चतुर्विंशतिजीवेषु भाजितेषु भागफलं चत्वारि । चतुर्विंशतौ चतुर्णां प्रक्षेपे कृते चतुर्थयोगस्थानेऽष्टाविंशतिजीवा भवन्ति । सप्तभिरष्टाविंशतिजीवेषु भाजितेषु भागफलं चत्वारि । अष्टाविंशतौ चतुर्णां प्रक्षेपे कृते द्वितीयद्विगुणहानिप्रथमयोगस्थाने द्वात्रिंशज्जीवा भवन्ति । चतुर्भिर्द्वात्रिंशज्जीवेषु भाजितेषु भागफलमष्टौ, द्वात्रिंशति अष्टानां प्रक्षेपे कृते द्वितीयद्विगुणहानिद्वितीययोगस्थाने चत्वारिंशज्जीवा भवन्ति । ततो द्वितीयद्विगुणहानेर्द्वितीयादियोगस्थानगतजीवेषु क्रमशः पञ्चभिः, षड्भिः, सप्तभिश्च भाजितेषु भागफलमष्टौ भवति । द्वितीयादियोगस्थानगतजीवेषु क्रमशोऽष्टानां प्रक्षेपे कृते तृतीयद्विगुणहानिप्रथमयोगस्थाने चतुःषष्टिजीवा भवन्ति । इत्येवं यवमध्यमयोगस्थानं यावत् परिभावनीयम् । ततोऽनयैव रीत्योत्कृष्टयोगस्थानादारभ्य यवमध्यमयोगस्थानं यावत् परिभावनीयम् । ॥ १४० । १४१।१४२ ॥ इदानीं रूपोनभागहारं वक्तुकामो गाथात्रिकमाह—

रूवूणभागहारो जवमज्झं भाजिअं दुहाणीहिं ।
जवमज्झा तं सुद्धं ठाणं बीअं उभयपासे ॥१४३॥
रूवूणाहिं भत्तं तं तो सुद्धं तदुत्तरं ठाणं ।
एवं पढमट्ठाणं जा गुणहाणीअ बीआए ॥१४४॥
तं हाणिदुगेण हयं ताउ विसुद्धं हवेज्ज बीआए ।
बीअं एवं णेयं जहण्णउक्कोसठाणं जा ॥१४५॥

(प्रे०) (१) 'रूवूणभागहारो' इति, रूपोनभागहारः, 'एवम्' इत्यध्याहारः, 'जवमज्झं' इत्यादि, द्विद्विगुणहानिगतयोगस्थानैर्यवमध्यमयोगस्थानगतजीवेषु भाजितेषु यद् भागफलं भवति, 'जवमज्झा' इत्यादि, यवमध्यमयोगस्थानगतजीवेभ्यस्तस्मिन् भागफले विशुद्धे, 'ठाणं' इत्यादि, पूर्वोत्तरोभयपार्श्वस्थस्य द्वितीययोगस्थानस्य जीवानां प्रमाणं भवति । इति प्रथमगाथार्थः ।

( २ ) 'रूवूणाहिं' इत्यादि, एकन्यूनैर्द्विद्विगुणहानियोगस्थानैर्द्वितीययोगस्थानगतजीवेषु भाजितेषु यद् भागफलं भवति, 'तो' इत्यादि, तस्मात्=द्वितीययोगस्थानात्, द्वितीययोगस्थानगतजीवेभ्य इति यावत्, तस्मिन् भागफले विशुद्धे, 'तदुत्तरं' इत्यादि, तस्मात्=द्वितीययोगस्थानादुत्तरं पूर्वोत्तरोभयपार्श्वस्थं तृतीयं योगस्थानं भवति, तृतीययोगस्थानगतजीवानां प्रमाणं भवतीत्यर्थः । तृतीययोगस्थानगतान् जीवान् पूर्ववत् एकन्यूनैर्योगस्थानैः, द्विन्यूनद्विद्विगुणहानियोगस्थानैरित्यर्थः, भाजयित्वा तृतीययोगस्थानगतजीवेभ्यो भागफले विशुद्धे चतुर्थयोगस्थानगतजीवानां प्रमाणं भवति । चतुर्थयोगस्थानगतजीवान् पूर्ववत् एकन्यूनैर्योगस्थानैः त्रिन्यूनद्विद्विगुणहानियोगस्थानैरित्यर्थः, भाजयित्वा चतुर्थयोगस्थानगतजीवेभ्यो भागफलविशुद्धौ कृतायां पञ्चम-

योगस्थानगतजीवानां प्रमाणं भवति । इत्येवं पूर्वपूर्वयोगस्थानगतजीवान् क्रमशः पूर्वपूर्वत एकैकन्यूनैर्द्विद्विगुणहानियोगस्थानैर्भाजयित्वा पूर्वपूर्वयोगस्थानगतजीवेभ्यो भागफलस्य विशुद्धौ कृतायामुत्तरोत्तरयोगस्थानगतजीवानां प्रमाणं भवति । एवं च यावद् वक्तव्यमित्याह-'एवं पढमठाणं' इत्यादि, इत्येवं द्वितीयद्विगुणहान्याः प्रथमयोगस्थानं यावद् वक्तव्यम् । इति द्वितीयगाथार्थः ।

(३) ततः किं विधेयमित्याह-'तं हाणिदुगेण' इत्यादि, ततो द्विद्विगुणहानियोगस्थानैर्द्वितीयद्विगुणहानिप्रथमयोगस्थानगतजीवेषु भाजितेषु, 'लाउ विसुद्धं' इति, द्वितीयद्विगुणहानिप्रथमयोगस्थानगतजीवेभ्यो भागफले विशुद्धे, 'हवेज्ज बीआए बीअं' इति, द्वितीयद्विगुणहानिद्वितीययोगस्थानगतजीवानां प्रमाणं भवति । ततः पुनः पूर्ववत् पूर्वपूर्वयोगस्थानगतान् जीवान् क्रमशः पूर्वपूर्वत एकैकन्यूनैर्द्विद्विगुणहानियोगस्थानैर्भाजयित्वा पूर्वपूर्वयोगस्थानगतजीवेभ्यो भागफलस्य विशुद्धौ कृतायामुत्तरोत्तरयोगस्थानगतजीवानां प्रमाणं भवति । इत्येवं तृतीयद्विगुणहानिप्रथमयोगस्थानं यावद् वक्तव्यम् । ततः पुनर्द्विद्विगुणहानियोगस्थानैस्तृतीयद्विगुणहानिप्रथमयोगस्थानगतजीवेषु भाजितेषु तृतीयद्विगुणहानिप्रथमयोगस्थानगतजीवेभ्यो भागफलस्य विशुद्धौ कृतायां पूर्वोत्तरोभयपार्श्वस्थतृतीयद्विगुणहानिद्वितीययोगस्थानगतजीवानां प्रमाणं भवति ।

ततः पुनः पूर्ववत् पूर्वपूर्वयोगस्थानगतजीवान् क्रमशः पूर्वपूर्वतः एकैकन्यूनैर्द्विद्विगुणहानियोगस्थानैर्भाजयित्वा पूर्वपूर्वयोगस्थानगतजीवेभ्यो भागफलस्य विशुद्धौ कृतायामुत्तरोत्तरयोगस्थानगतजीवानां प्रमाणं भवति । एवं च यावद् वक्तव्यमित्याह-'एवं णेयं जहण्णउक्कोसठाणं जा' इत्येवं पूर्वपार्श्वे जघन्ययोगस्थानं यावदुत्तरपार्श्वे चोत्कृष्टयोगस्थानं यावद् वक्तव्यम् । इति तृतीयगाथार्थः ।

इत्थमत्रेदं समायातम्-तत्तद्द्विगुणहानेर्द्वितीययोगस्थानगतजीवानां प्रमाणनिर्णयार्थं तत्तद्द्विगुणहानेः प्रथमयोगस्थानगतजीवान् द्विद्विगुणहानियोगस्थानैर्भाजयित्वा भाज्यराशितो भागफलं विशोधनीयम् । तत्तद्द्विगुणहानेस्तृतीयादियोगस्थानगतजीवानां प्रमाणनिर्णयार्थं पूर्वपूर्वयोगस्थानगतान् जीवान् क्रमशः पूर्वपूर्वत एकैकन्यूनैर्द्विद्विगुणहानियोगस्थानैर्भाजयित्वा भाज्यराशितो भागफलं विशोधनीयम् ।

अथायं रूपोनभागहारः पूर्वोक्तासत्कल्पनामाश्रित्य प्रदर्श्यते-यवमध्यमयोगस्थानेऽष्टाविंशत्यधिकशतं जीवाः सन्ति । द्विद्विगुणहानिस्थानैरष्टभिरष्टाविंशत्यधिकशते भाजिते भागफलं षोडश । अष्टाविंशत्यधिकशतात् षोडशसु विशोधितेषूभयपार्श्वयोर्द्वितीययोगस्थानगतजीवानां प्रमाणं द्वादशाधिकशतं भवति । एकन्यूनद्विद्विगुणहानिस्थानैः सप्तभिर्द्वादशाधिकशते भाजिते भागफलं षोडश । तस्मात् षोडशसु विशोधितेषूभयपार्श्वयोस्तृतीययोगस्थानगतजीवानां प्रमाणं षण्णवतिर्भवति । षड्भिः षण्णवतौ भाजितायां भागफलं षोडश । तस्याः षोडशसु विशोधितेषूभयपार्श्वयोः चतुर्थयोग-

स्थानगतानां जीवानां प्रमाणमशीतिर्भवति । पञ्चभिरशीतौ भाजितायां भागफलं षोडश । अशीतेः षोडशसु विशोधितेषु पूर्वोत्तरोभयपार्श्वयोर्द्वितीयद्विगुणहानिप्रथमयोगस्थानगतजीवानां प्रमाणं चतुःषष्टिर्भवति । अतः परं पूर्वोक्तवत् क्रमशोऽष्टादिभिर्द्वितीयद्विगुणहानिप्रथमादियोगस्थानगतजीवान् भाजयित्वा भाज्यराशितो भागफले विशोधिते पूर्वोक्तवदनुक्रमेण पूर्वोत्तरोभयपार्श्वयोर्द्वितीयद्विगुणहानिद्वितीयादियोगस्थानगतानां जीवानां प्रमाणं षट्पञ्चाशदादि भवति । इत्येवं पूर्वपार्श्वे जघन्ययोगस्थानं यावदुत्तरपार्श्वे चोत्कृष्टयोगस्थानं यावत् परिभावनीयम् ॥१४३।१४४।१४५॥

इदानीं छेदभागहारं विवक्षुर्गाथात्रिकमाह—

अह छेअभागहारो इगगुणहाणीअ भाजिअं हस्सं ।
तम्मि चिअ तप्पक्खेवे जोगट्ठाणं भवे बीअं ॥१४६॥
पढमं चेव विभइउं इगगुणहाणिदुतिआइभागेहिं ।
तम्मि चिअ तप्पक्खेवे कमसो तइआइठाणाणि ॥१४७॥
एवं बीआए जा पढमं तत्तो हवेज्ज पुव्वव्व ।
एवं जवमज्झं जा जेट्ठा वि तहेव विण्णेयं ॥१४८॥

(प्रे०) (१) 'अह छेअभागहारो' इति, अथ छेदभागहारः, 'एवम्' इत्यध्याहारः, 'इगगुणहाणीअ' इत्यादि, एकद्विगुणहानियोगस्थानैर्जघन्ययोगस्थानगतजीवेषु भाजितेषु यद् भागफलं भवति, 'तम्मि चिअ तप्पक्खेवे' इति, तस्मिन्नेव=जघन्ययोगस्थाने एव, जघन्ययोगस्थानगतजीवेष्वेवेति यावत्, तस्य=भागफलस्य प्रक्षेपे कृते 'जोगट्ठाणं भवे बीअं' इति, द्वितीययोगस्थानगतजीवानां प्रमाणं भवति । इति प्रथमगाथार्थः ।

(२) ततः किं कर्तव्यमित्याह-'पढमं चेव' इत्यादि, प्रथमं जघन्ययोगस्थानमेव, जघन्ययोगस्थानगतजीवानेवेत्यर्थः, अनुक्रमेणैकद्विगुणहानियोगस्थानानां द्वित्रिचतुरादिभिर्भागैर्भाजयित्वा यद् भागफलं प्राप्यते, 'तम्मि चिअ' इत्यादि, जघन्ययोगस्थानगतजीवेष्वेव तस्य भागफलस्य प्रक्षेपे कृते, 'कमसो तइआइठाणाणि' इति,अनुक्रमेण तृतीययोगस्थानगतजीवानां प्रमाणं प्राप्यते । इति द्वितीयगाथार्थः ।

इत्येवं क यावद् विधेयमित्याह-'एवं बीआए जा पढमं' इति,एवं द्वितीयद्विगुणहान्याः प्रथमयोगस्थानं यावद् विधेयम् । इदमुक्तं भवति-प्रथमयोगस्थानगतजीवानेकद्विगुणहानियोगस्थानद्विभागेन भाजयित्वा प्रथमयोगस्थानगतजीवेषु भागफलस्य प्रक्षेपे कृते तृतीययोगस्थानगतजीवानां प्रमाणं भवति । प्रथमयोगस्थानगतजीवानेकद्विगुणहानियोगस्थानत्रिभागेन भाजयित्वा भाज्यराशौ भागफलस्य प्रक्षेपे कृते चतुर्थयोगस्थानगतजीवानां प्रमाणं भवति । प्रथमयोगस्थान-

गतजीवानेकद्विगुणहानियोगस्थानचतुर्भागेन भाजयित्वा भाज्यराशौ भागफलस्य प्रक्षेपे कृते पञ्चम-योगस्थानगतजीवानां प्रमाणं भवति । इत्येवं क्रमश एकैकाधिकेनैकद्विगुणहानियोगस्थानभागेन प्रथमयोगस्थानगतजीवान् भाजयित्वा भाज्यराशौ भागफलस्य प्रक्षेपे कृते क्रमश उत्तरोत्तरयोग-स्थानगतजीवानां प्रमाणं भवति । एवं द्वितीयद्विगुणहानिप्रथमयोगस्थानं यावद् विधेयम् । ततः किं विधेयमित्याह—'तत्तो हवेज्ज पुव्वव्व' इति, ततो द्वितीयादिद्विगुणहानिषु पूर्ववत्=प्रथमद्विगुण-हानिवद् विधेयम् । तद्यथा-द्वितीयद्विगुणहानौ प्रथमयोगस्थानगतजीवानेकद्विगुणहानियोगस्थानैर्भा-जयित्वा भाज्यराशौ भागफलस्य प्रक्षेपे कृते द्वितीयद्विगुणहानेर्द्वितीययोगस्थानगतजीवानां प्रमाणं प्राप्यते । द्वितीयद्विगुणहानौ प्रथमयोगस्थानगतजीवानेकद्विगुणहानियोगस्थानद्विभागेन भाजयित्वा भाज्यराशौ भागफलस्य प्रक्षेपे कृते तृतीययोगस्थानगतानां जीवानां प्रमाणं भवति । प्रथमयोग-स्थानगतजीवानेकद्विगुणहानियोगस्थानत्रिभागेन भाजयित्वा भागराशौ भागफलस्य प्रक्षेपे कृते चतुर्थयोगस्थानगतजीवानां प्रमाणं भवति । इत्येवं क्रमश एकैकाधिकेनैकद्विगुणहानियोग-स्थानभागेन प्रथमयोगस्थानगतजीवान् भाजयित्वा भाज्यराशौ भागफलस्य प्रक्षेपे कृते क्रमश उत्तरोत्तरयोगस्थानगतजीवानां प्रमाणं भवति । इत्येवं तृतीयद्विगुणहानिप्रथमयोगस्थानं यावद् विधेयम् । इत्येवमनुक्रमेण तृतीयादिद्विगुणहानिष्वपि विधेयम् । एवं क्व यावद् विधेयमित्याह-'एवं जवमज्झं जा' इति, एवं यवमध्यमयोगस्थानं यावद् विधेयम् । 'जेट्ठा वि तहेव विण्णेयं' इति, 'जवमज्झं जा' इत्यत्रापि संबध्यते, जघन्ययोगस्थानादारभ्य यवमध्यमयोगस्थानं यावद् यथोक्तं तथैवोत्कृष्टयोगस्थानाद् यवमध्यमयोगस्थानं यावद् ज्ञातव्यम् ।

अथायं छेदभागहारः पूर्वोक्तासत्कल्पनामाश्रित्योच्यते—जघन्ययोगस्थाने षोडश जीवाः सन्ति। अतः १६÷४=४, १६+४=२०, इत्येवं द्वितीययोगस्थाने विंशतिजीवा भवन्ति । $\frac{१६}{१} \div \frac{४}{२} = \frac{१६}{१} \times \frac{२}{४} = ८$, १६+८=२४ इत्येवं तृतीययोगस्थाने चतुर्विंशतिजीवा भवन्ति । $\frac{१६}{१} \div \frac{४}{३} = \frac{१६}{१} \times \frac{३}{४} =$ १२, १६+१२=२८, इत्येवं चतुर्थयोगस्थानेऽष्टाविंशतिजीवा भवन्ति । $\frac{१६}{१} \div \frac{४}{४} = \frac{१६}{१} \times \frac{४}{४} = १६$, १६+१६= ३२, इत्येवं द्वितीयद्विगुणहानिप्रथमयोगस्थाने द्वात्रिंशज्जीवा भवन्ति । ३२÷४=८, ३२+८=४० इत्येवं द्वितीयद्विगुणहानिद्वितीययोगस्थाने चत्वारिंशज्जीवा भवन्ति । इत्येवं यवमध्यमयोगस्थानं यावद् ज्ञातव्यम् । तथैवोत्कृष्टयोगस्थानादपि यवमध्यमयोगस्थानं यावद् ज्ञातव्यम् ।।१४६।।१४७।।१४८।।

तदेवं श्रेणिद्वारेऽनन्तरोपनिधा कृता । सम्प्रति श्रेणिद्वारे कियन्ति योगस्थानानि गत्वा जीवा द्विगुणा भवन्तीति प्रतिपादयितुं परम्परोपनिधां चिकीर्षुः सत्पदमाह—

**सेढिअसंखियभागं गच्चाऽत्थि दुगुणिआ जीवा ।**
**जा जवमज्झं एत्तो दुगुणूणा जाव गुरुठाणं ।।१४९।।**

(प्रे०) '**सेढिअसंखियभागं**' इत्यादि, जघन्ययोगस्थानात् श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि गत्वा गत्वा पर्याप्तत्रसजीवा द्विगुणा भवन्ति। क यावदित्याह-'**जा जवमज्झ**" इति, यवमध्यमयोगस्थानं यावद्, '**एत्तो दुगुणूणा जाव गुरुठाणं**' इति, यवमध्यमयोगस्थानादुत्कृष्टयोगस्थानं यावत् श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि गत्वा गत्वा जीवा द्विगुणहीना भवन्ति। अत्रेदं तात्पर्यम्-जघन्ययोगस्थाने यावन्तो जीवा भवन्ति तदपेक्षया जघन्ययोगस्थानात् श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि गत्वाऽनन्तरं यद् योगस्थानं तस्मिन् जीवा द्विगुणा भवन्ति। पुनरपि श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि उल्लङ्घ्यानन्तरे योगस्थाने जीवा द्विगुणा भवन्ति। पुनरपि तावन्त्येव योगस्थानान्यतिक्रम्यानन्तरे योगस्थाने जीवा द्विगुणा भवन्ति। एवं यवमध्यमयोगस्थानं यावद् वक्तव्यम्। ततो यवमध्यमयोगस्थानात् श्रेण्यसंख्यातभागप्रमाणानि योगस्थानान्यतीत्यानन्तरे योगस्थाने जीवा यवमध्यमयोगस्थानस्थितजीवेभ्यो द्विगुणहीना भवन्ति। पुनरपि यथोक्तप्रमाणानि योगस्थानान्यतिक्रम्यानन्तरे योगस्थाने जीवा द्विगुणहीना भवन्ति। पुनरपि तावन्त्येव योगस्थानानि गत्वाऽनन्तरयोगस्थाने द्विगुणहीना भवन्ति। इत्येवमुत्कृष्टयोगस्थानं यावद् वक्तव्यम्। पूर्वोक्तामसत्कल्पनामाश्रित्य स्थापनैवम्—

यवमध्यमयोगस्थानम्
↑

जीवसंख्या→ १६ २० २४ २८ ३२ ४० ४८ ५६ ६४ ८० ९६ ११२ १२८ अतः पर द्विगुणहानि, तद्यथा-
योगस्थानानि→ । । । । ⁞ । । । ⁞ । । । ⁞

११२ ९६ ८० ६४ ५६ ४८ ४० ३२ २८ २४ २० १६ १४ १२ १० ८ ७ ६ ४
। । । ⁞ । । । ⁞ । । । ⁞ । । । ⁞ । । ।

अत्र श्रेण्यसंख्यातभागश्चत्वारि कल्पनीयः ॥ १४९ ॥

इदानीं परम्परोपनिधायां द्विगुणवृद्धिद्विगुणहानिस्थानानामेकस्या द्विगुणवृद्धे र्द्विगुणहानेर्वाऽन्तरालस्थानानां च प्रमाणमाह—

**पल्लासंखियभागो ठाणाइं दुगुणवड्ढिहाणीणं।**
**वड्ढीए हाणीए वा सेढीए असंखंसो ॥१५०॥**

(प्रे०) '**पल्लासंखियभागो**' इत्यादि, द्विगुणवृद्धीनां द्विगुणहानीनाञ्च प्रत्येकं समुदितानि वा स्थानानि पल्योपमासंख्यातभागप्रमाणानि भवन्ति। एकस्या द्विगुणवृद्धेर्द्विगुणहानेर्वा स्थानानि श्रेण्यसंख्यातभागप्रमाणानि भवन्ति, श्रेण्यसंख्यातभागप्रमाणानि योगस्थानानि गत्वैकस्या द्विगुणवृद्धेर्द्विगुणहानेर्वा भवनात् ॥ १५० ॥

सम्प्रति गाथाद्विकेन परम्परोपनिधायां द्विगुणवृद्धिद्विगुणहानिस्थानानां तदन्तरालस्थानानां चाल्पबहुत्वमाह—

जवमज्झस्स अहत्था गुणहाणीओ हवेज्ज सव्वप्पा ।
तत्तो विसेसअहिया गुणहाणीओ उवरिमाओ ॥१५१॥
ताओ विसेसअहिया गुणहाणीओ हवेज्ज सव्वाओ ।
ताउ असंखगुणाइं इगंतरे अत्थि ठाणाइं ॥१५२॥

(प्रे०) **'जवमज्झस्स'** इत्यादि, यवमध्ययोगस्थानस्याधस्तन्यो द्विगुणहानयः सर्वस्तोका भवन्ति । ननु परम्परोपनिधायां सत्पदनिरूपणे "सेढिअसंखियभागं गंता गच्छाऽत्थि दुगुणिआ जीवा जा जवमज्झं" (गाथा० १४९) इत्युल्लेखाद् यवमध्ययोगस्थानस्याधस्तनयोगस्थानेषु जीवानां द्विगुणा वृद्धयो भवन्तीति कथमत्र यवमध्ययोगस्थानस्याधस्तनद्विगुणहानयः सर्वस्तोका भवन्तीत्युक्तम् ? सत्यम्, जघन्ययोगस्थानादारभ्य यवमध्ययोगस्थानं यावद् या द्विगुणवृद्धयस्ता एव पश्चानुपूर्व्या द्विगुणहानयो भवन्ति । तथाहि-यवमध्ययोगस्थानात् श्रेण्यसंख्यातभागप्रमाणानि योगस्थानान्यतिक्रम्यानन्तरे योगस्थाने जीवा द्विगुणहीना भवन्ति । ततः पुनरपि तावन्ति योगस्थानानि गत्वाऽनन्तरे योगस्थाने द्विगुणहीना भवन्ति । इत्येवं जघन्ययोगस्थानं यावद् वक्तव्यम् । अतोऽत्र यवमध्ययोगस्थानस्याधस्तन्यो द्विगुणहानयः सर्वस्तोका भवन्तीति निरूपणे न विरोधावकाशः । **'तत्तो'** इत्यादि, ततः-यवमध्ययोगस्थानस्याधस्तनद्विगुणहानिभ्यो यवमध्ययोगस्थानस्योपरितन्यो द्विगुणहानयो विशेषाधिका भवन्ति । अत्र विशेषाधिकत्वं पल्योपमासंख्यातभागमात्रमेव बोध्यम् । **'ताओ'** इत्यादि, यवमध्ययोगस्थानस्योपरितनद्विगुणहानिभ्यः सर्वा द्विगुणहानयो विशेषाधिकाः, यवमध्ययोगस्थानस्याधस्तनद्विगुणहानीनां प्रवेशात् । **'ताउ'** इत्यादि, सर्वद्विगुणहानिभ्य एकस्या एव द्विगुणवृद्धेर्द्विगुणहानेर्वाऽन्तराले स्थितानि योगस्थानान्यसंख्यगुणानि । यतः प्रमाणनिरूपणे द्विगुणवृद्धिद्विगुणहानीनां समुदितान्यपि स्थानानि पल्योपमासंख्यातभागप्रमाणानि, एकस्या द्विगुणवृद्धेर्द्विगुणहानेर्वा स्थानानि श्रेण्यसंख्यातभागप्रमाणानीति निरूपितम् । पल्योपमाऽसंख्यातभागतः श्रेण्यसंख्यातभागोऽसंख्येयगुणः ॥ १५१ । १५२ ॥

तदेवं श्रेणिद्वारं निरूपितम् । सम्प्रति क्रमाऽऽयातमपहारद्वारं निरूपयन्नाह-

जवमज्झेणऽवहारो सयलजिआणूणतिगुणहाणीसुं ।
लहुजोगट्ठाणेणं अत्थि असंखगुणहाणीसुं ॥१५३॥

(प्रे०) **'जवमज्झेण'** इत्यादि, योगस्थानगतजीवानां प्रतिसमयं यवमध्येन=यवमध्ययोगस्थानगतजीवैरपहारे क्रियमाणे सर्वपर्याप्तत्रसजीवानामपहारः किञ्चिन्न्यूनत्रिद्विगुणहानिषु भवति, किञ्चिन्न्यूनत्रिद्विगुणहानिषु यावन्ति योगस्थानानि तावत्समयेषु भवतीत्यर्थः । तदसत्कल्पनयैवम्-पूर्वमवस्थितभागहारे प्रदर्शितासत्कल्पनानुसारेण यवमध्ययोगस्थानेऽष्टाविंशत्यधिकशतं (१२८)

जीवा भवन्ति । सर्वयोगस्थानेषु स्थितानां जीवानां योगे कृते द्वाविंशत्यधिकचतुःशतोत्तरसहस्रं ( १४२२ ) जीवा भवन्ति । यवमध्यमयोगस्थानगतजीवैः सर्वयोगस्थानगतजीवेषु विभाजितेषु यावती लब्धिर्भवति तावत्समयैः सर्वपर्याप्तत्रसजीवा अपह्रियन्ते । अत $१४२२ \div १२८ = ११\frac{१४}{१२८} = ११\frac{७}{६४}$ इत्येवं किञ्चिन्न्यूनद्वादशसमयैः सर्वजीवानामपहारो भवति । किञ्चिन्न्यूनद्वादशसमयाः किञ्चिन्न्यूनत्रिद्विगुणहानयो भवन्ति । प्रतिद्विगुणहानौ चतुर्णां योगस्थानानां कल्पितत्वात् त्रिद्विगुणहानिषु द्वादश योगस्थानानि भवन्ति ।

इदानीं सर्वयोगस्थानगतजीवानां जघन्ययोगस्थानगतजीवैः प्रतिसमयमपहारे क्रियमाणे सर्वजीवानामपहारः कियति काले भवतीत्याह–'लहुजोगठाणेणं' इत्यादि, सर्वयोगस्थानस्थितजीवानां जघन्ययोगस्थानगतजीवैः प्रतिसमयमपहारे क्रियमाणेऽसंख्यद्विगुणहानिगतयोगस्थानसमयेषु सर्वजीवानामपहारो भवति ॥१५३॥ अथ जघन्ययोगस्थानगतजीवैः सर्वजीवानामपहारोऽसंख्यद्विगुणहानिषु कथं भवतीति गणितप्रक्रिययोपपादयन्नाह—

**जइ जवमज्झे हेट्ठिमअण्णोण्णऽब्भत्थरासिलहुठाणा ।**
**किं जवमज्झस्स लहे ऊणासुं तिगुणहाणीसुं ॥१५४॥**

(प्रे०) 'जइ' इत्यादि, यदि यवमध्यमयोगस्थानेऽधस्तनान्योन्याभ्यस्तराशिलघुस्थानानि=यवमध्यमयोगस्थानादधस्तनीनां द्विगुणहानीनामन्योन्याभ्यस्तो राशिर्यावान् भवति तावत्प्रमाणानि जघन्ययोगस्थानानि भवन्ति तर्हि, 'किं जवमज्झस्स लहे ऊणासुं तिगुणहाणीसु" इति, यवमध्यमयोगस्थानस्य किञ्चिन्न्यूनत्रिद्विगुणहानिषु जघन्ययोगस्थानानि कियन्ति भवन्ति ? अनन्तरगाथायां जघन्ययोगस्थानैः सर्वजीवानामपहारोऽसंख्यद्विगुणहानिषु भवतीति यदुक्तं तदित्येवं त्रैराशिकेनाऽपि सिद्ध्यतीत्यर्थः ।

इदमुक्तं भवति–यदि यवमध्यमयोगस्थाने एवासंख्येयानि जघन्ययोगस्थानानि भवन्तीति जघन्ययोगस्थानजीवैरपहारे क्रियमाणे यवमध्यमयोगस्थानस्थिता जीवा अप्यसंख्यसमयैरपह्रियन्ते तर्हि यवमध्यमयोगस्थानस्य किञ्चिन्न्यूनत्रिद्विगुणहानिषु स्थिता जीवाः सुतरामसंख्यद्विगुणहानिषु अपह्रियन्ते । अत्रेदं ध्येयम्-अत्रान्योन्याभ्यस्तराशिरधस्तनद्विगुणहानिवारं द्व्यङ्कान् विन्यस्य परस्परं गुणनरूपो बोध्यः, न तु वीर्याविभागबाहुल्यप्रदर्शनपरगाथासप्तकवृत्तौ प्रदर्शितः ।

असत्कल्पनयाऽत्र त्रैराशिकमेवम्-अवस्थितभागहारनिरूपणोक्तासत्कल्पनानुसारेण यवमध्यमयोगस्थानादधस्तन्यो द्विगुणहानयस्तिस्रः सन्ति । अतस्तासामन्योन्याभ्यस्तराशिः $(२\times२\times२=८)$ अष्टौ । अतो यवमध्यमयोगस्थाने जघन्ययोगस्थानान्यष्टौ जातानि । जघन्ययोगस्थानस्थितजीवराशिना यवमध्यमयोगस्थानगतजीवराशौ भाजितेऽपि लब्धिरष्टौ भवति । यद्येकयवमध्यमयोगस्थानस्याष्टौ जघन्ययोगस्थानानि भवन्ति तर्हि $११\frac{७}{६४}$ यवमध्यमयोगस्थानानां कियन्ति जघन्य-

योगस्थानानि भवन्ति ? ८×११$\frac{७}{२४}$=८८$\frac{६}{६}$=$\frac{७}{२}$' इत्येवं यवमध्यस्य किञ्चिन्न्यूनत्रि द्विगुणहानिषु '$\frac{७}{२}$' जघन्ययोगस्थानानि भवन्ति ।'$\frac{७}{२}$' योगस्थानानां '$\frac{७}{३२}$' द्विगुणहानयो भवन्ति । यतः पूर्वं चतुर्णां योगस्थानानामेकद्विगुणहानिः कल्पिता । इत्थं जघन्ययोगस्थानस्थितजीवैः प्रतिसमयमपहारे क्रियमाणे सर्वजीवानामपहारः $\frac{७}{३२}$ द्विगुणहानिषु भवति । ॥ १५४ ॥

सम्प्रति प्रतिसमयं द्वितीयादिद्विगुणहानेः प्रथमयोगस्थानस्थितजीवानामपहारे क्रियमाणे सर्वजीवानामपहारः कियति काले भवतीत्याह—

**होअइ जहुत्तरदुगुणवड्ढीए अज्जजोगठाणेणं ।**
**अवहारो विण्णेयो अद्धाऽद्धासु गुणहाणीसुं ॥ १५५ ॥**

(प्रे०) 'होअइ' इत्यादि, यथोत्तरं द्विगुणवृद्धेराद्ययोगस्थानेन, प्रथमयोगस्थानगतजीवैरित्यर्थः, प्रतिसमयमपहारे क्रियमाणे सर्वयोगस्थानेषु स्थितपर्याप्तत्रसजीवानामपहारः क्रमशोऽर्धार्धासु द्विगुणहानिषु ज्ञातव्यः । अयम्भावः-प्रथमद्विगुणवृद्धिप्रथमयोगस्थानजीवैः प्रतिसमयमपहारे क्रियमाणे यावतीषु द्विगुणहानिषु सर्वजीवानामपहारो भवति ततो द्वितीयद्विगुणवृद्धिप्रथमयोगस्थानजीवैः प्रतिसमयमपहारे क्रियमाणेऽर्धासु द्विगुणहानिषु सर्वजीवानामपहारो भवति । तृतीयद्विगुणवृद्धिप्रथमयोगस्थानजीवैः प्रतिसमयमपहारे क्रियमाणे ततोऽर्धासु द्विगुणहानिषु सर्वजीवानामपहारो भवति । चतुर्थद्विगुणवृद्धिप्रथमयोगस्थानगतजीवैः प्रतिसमयमपहारे क्रियमाणे ततोऽप्यर्धासु द्विगुणहानिषु सर्वजीवानामपहारो भवति । पञ्चमद्विगुणवृद्धिप्रथमयोगस्थानजीवैः प्रतिसमयमपहारे क्रियमाणे ततोऽर्धासु द्विगुणहानिषु सर्वजीवानामपहारो भवति । इत्येवं क्रमश उत्तरोत्तरं द्विगुणवृद्धिप्रथमयोगस्थानजीवैः प्रतिसमयमपहारे क्रियमाणेऽर्धार्धद्विगुणहानिषु सर्वजीवानामपहारो भवति । वक्ष्यमाणानन्तरगाथास्थम् "एवं जवमज्झं जा णेयो" इत्यत्र सम्बध्यते, एतादृशोऽपहारो यवमध्ययोगस्थानं यावद् ज्ञातव्यः । अत्रायं हेतुः—उत्तरोत्तरं द्विगुणवृद्धेः प्रथमयोगस्थाने जीवाः क्रमशो द्विगुणा भवन्ति । अत उत्तरोत्तरद्विगुणवृद्धेः प्रथमयोगस्थानैरपहारे क्रियमाणे पूर्वपूर्वद्विगुणवृद्धेः प्रथमयोगस्थानापेक्षया प्रतिसमयं द्विगुणा अपह्रियन्त इति यथोत्तरद्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवानामपहारोऽर्धार्धद्विगुणहानिषु भवति ।

तदसत्कल्पनामाश्रित्यैवम्—प्रथमद्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवानामपहारः '$\frac{७}{३२}$' द्विगुणहानिषु भवतीत्यनन्तरगाथायां प्रदर्शितम् । अतो द्वितीयद्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवानामपहारः '$\frac{७}{६४}$' द्विगुणहानिषु भवति । तृतीयद्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवानामपहारः $\frac{७}{१२८}$ द्विगुणहानिषु भवति । एवं चतुर्थद्विगुणवृद्ध्यादिष्वपि ज्ञेयम् ॥१५५॥

सम्प्रति प्रथमादिद्विगुणवृद्धेः प्रथमयोगस्थानेनापहारे क्रियमाणे सर्वजीवानामपहारो यावतीषु द्विगुणहानिषु भवति तदपेक्षया प्रथमादिद्विगुणवृद्धेर्द्वितीयादियोगस्थानेन सर्वजीवानामपहारः कियतीषु द्विगुणहानिषु भवतीत्याह—

सव्वदुगुणवड्ढीसुं बिआइठाणेहि पढमठाणत्तो ।
ऊणूणयराईसुं गुणहाणीसु खलु अवहारो ॥१५६॥
एवं जवमज्झं जा णेयो एवं असंखगुणहाणीसुं ।
गुरुजोगट्ठाणेणं तत्तो पुव्वव्व होइ जवमज्झं जा ॥१५७॥(आर्यागीतिः)

(प्रे०) 'सव्वदुगुणवड्ढीसु' इत्यादि, सर्वद्विगुणवृद्धिषु प्रथमस्थानतः=स्वप्रथमयोगस्थानेन सर्वजीवापहारो यावतीषु द्विगुणहानिषु भवति तदपेक्षया द्वितीयादिस्थानैः=स्वद्वितीयादियोगस्थानैः सर्वजीवापहारः न्यूनन्यूनतरादिषु द्विगुणहानिषु ज्ञेयः । अत्रेदं हृदयम्–प्रथमद्विगुणवृद्धेः प्रथमयोगस्थानेन सर्वजीवानामपहारो यावतीषु द्विगुणहानिषु भवति तदपेक्षया प्रथमद्विगुणवृद्धेर्द्वितीययोगस्थानेन न्यूनासु द्विगुणहानिषु भवति, प्रथमद्विगुणवृद्धेस्तृतीययोगस्थानेन न्यूनतरासु द्विगुणहानिषु भवति, तस्या एव चतुर्थयोगस्थानेन न्यूनतमासु द्विगुणहानिषु भवति । इत्येवं प्रथमद्विगुणवृद्धेश्चरमयोगस्थानं यावद् वक्तव्यम् । द्वितीयद्विगुणवृद्धेः प्रथमयोगस्थानेन सर्वजीवानामपहारो यावतीषु द्विगुणहानिषु भवति तदपेक्षया तस्या द्वितीययोगस्थानेन न्यूनासु द्विगुणहानिषु भवति, तस्या एव तृतीययोगस्थानेन न्यूनतरासु द्विगुणहानिषु भवति, तस्या एव चतुर्थयोगस्थानेन न्यूनतमासु द्विगुणहानिषु भवति । इत्येवं द्वितीयद्विगुणवृद्धेरन्तिमयोगस्थानं यावद् वक्तव्यम् । इत्येवं तृतीयादिद्विगुणवृद्धिष्वपि वक्तव्यम् । क यावद् ? इत्याह–'एवं जवमज्झं जा' इति, इत्येवमपहारो यवमध्यमयोगस्थानं यावद् यावत्यो द्विगुणवृद्धयो भवेयुस्तावतीषु द्विगुणवृद्धिषु ज्ञेयः।

अथ पूर्वोक्तासत्कल्पनामाश्रित्य प्रथमद्विगुणवृद्धौ प्रकृतापहारश्चिन्त्यते । तत्रादौ द्वितीययोगस्थानेनापहारकाल एवम्–प्रथमद्विगुणवृद्धेराद्यं योगस्थानं जघन्ययोगस्थानम् । जघन्ययोगस्थानेन सर्वजीवानामपहारः '७/३२' द्विगुणहानिषु, अर्थात् '७/६' योगस्थानेषु भवतीति पूर्वं प्रदर्शितम् । प्रथमद्विगुणवृद्धेः प्रथमयोगस्थाने षोडश द्वितीययोगस्थाने च विंशतिर्जीवाः सन्ति, अतो द्वितीययोगस्थानेनापहारे क्रियमाणे प्रथमयोगस्थानापहारापेक्षया प्रतियोगस्थाने चतुष्प्रमाणो वृद्धिरूप एकचयो भवति, अर्थात् प्रथमयोगस्थानापहारापेक्षया प्रतियोगस्थाने चत्वारो जीवा अधिका अधिका अपह्रियन्ते । जघन्ययोगस्थानगतजीवप्रमाणेन सर्वाणि योगस्थानानि '७/६' भवन्तीति सर्वे चया अपि '७/६' भवन्ति । द्वितीययोगस्थाने विंशतिर्जीवाः सन्तीति एकाधिकैकद्विगुणहानिचयैः, पञ्चचयैरित्यर्थः, एकं द्वितीययोगस्थानं निष्पद्यते । सर्वेषां चयानां योगस्थानानयनार्थं त्रैराशिकं विधेयम्, तद्यथा–यदि एकाधिकैकद्विगुणहानियोगस्थान-(५) चयैरेकं द्वितीयं योगस्थानं भवति तर्हि '७/६' चयैः कियन्ति द्वितीययोगस्थानानि स्युः ? अत्र चतुर्णां योगस्थानानामेका द्विगुणहानिः कल्पिता इत्येकाधिकैकद्विगुणहानियोगस्थानानि पञ्च, अतः '७/६'×१/५='७/३०', इति द्वितीययोगस्थानेनापहारे

क्रियमाणे $\frac{७११}{८}$ योगस्थानेष्वपहृतेषु $\frac{७११}{४०}$ योगस्थानानि वृद्धानि, अधिकान्यपहृतानीत्यर्थः । अतः $\frac{७११}{८}$ योगस्थानेभ्यः $\frac{७११}{४०}$ योगस्थानानां हानिर्विधेया, $\frac{७११}{८}-\frac{७११}{४०}=\frac{३५५५-७११}{४०}=\frac{२८४४}{४०}=\frac{७११}{१०}$ इत्येवं द्वितीययोगस्थानेन प्रतिसमयमपहारे क्रियमाणे $\frac{७११}{१०}$ योगस्थानेषु सर्वजीवानामपहारो भवति । यदि कियतीषु द्विगुणहानिषु भवतीति चिन्त्यते तदा प्रतिद्विगुणहानौ चत्वारि योगस्थानानि कल्पितानीति $\frac{७११}{१०}\times\frac{१}{४}=\frac{७११}{४०}$ द्विगुणहानिषु सर्वजीवापहारो भवति ।

अथ तृतीययोगस्थानेन सर्वजीवापहारकाल एवम्—तृतीययोगस्थाने चतुर्विंशतिर्जीवाः सन्तीति प्रथमयोगस्थानापहारापेक्षया प्रतियोगस्थाने चतुष्प्रमाणौ द्विचयौ भवतः, अर्थात् प्रतियोगस्थानेऽष्टजीवा अधिका अपह्रियन्ते । अतः सर्वे चयाः $\frac{७११}{८}\times\frac{२}{१}=\frac{७११}{४}$ भवन्ति । द्व्यधिकैकद्विगुणहानियोगस्थानचयैः, षट्चयैरित्यर्थः, एकं तृतीययोगस्थानं निष्पद्यते । यदि षट्चयैरेकं तृतीययोगस्थानं भवति तर्हि $\frac{७११}{४}$ चयैः कियन्ति तृतीययोगस्थानानि स्युः ? $\frac{७११}{४}\times\frac{१}{६}=\frac{७११}{२४}$, इत्येवं तृतीययोगस्थानेनापहारे क्रियमाणे $\frac{७११}{८}$ योगस्थानेष्वपहृतेषु $\frac{७११}{२४}$ योगस्थानान्यधिकान्यपहृतानि । $\frac{७११}{८}-\frac{७११}{२४}=\frac{२१३३-७११}{२४}=\frac{१४२२}{२४}=\frac{७११}{१२}$, इत्येवं तृतीययोगस्थानेन सर्वजीवापहारः $\frac{७११}{१२}$ योगस्थानेषु भवति, द्विगुणहानिना चिन्त्यमाने तु $\frac{७११}{४८}$ द्विगुणहानिषु भवति ।

अथ चतुर्थयोगस्थानेनैवम्—अत्राष्टाविंशतिजीवाः सन्तीति प्रथमयोगस्थानापहारापेक्षया प्रतियोगस्थाने चतुष्प्रमाणास्त्रिचयाः । सर्वचयाः $\frac{७११}{८}\times\frac{३}{१}=\frac{२१३३}{८}$ । सप्तचयैरेकं चतुर्थयोगस्थानं भवतीति यदि सप्तचयैरेकं चतुर्थयोगस्थानं भवति तर्हि $\frac{२१३३}{८}$ चयैः कियन्ति चतुर्थयोगस्थानानि स्युः ? $\frac{२१३३}{८}\times\frac{१}{७}=\frac{२१३३}{५६}$, इत्येवं चतुर्थयोगस्थानेनापहारे क्रियमाणे $\frac{७११}{८}$ योगस्थानेष्वपहृतेषु $\frac{२१३३}{५६}$ योगस्थानान्यधिकान्यपहृतानि । $\frac{७११}{८}-\frac{२१३३}{५६}=\frac{४९७७-२१३३}{५६}=\frac{२८४४}{५६}=\frac{७११}{१४}$, इत्येवं चतुर्थयोगस्थानेन सर्वजीवापहारः $\frac{७११}{१४}$ योगस्थानेषु यद्वा $\frac{७११}{१४}\times\frac{१}{४}=\frac{७११}{५६}$ द्विगुणहानिषु भवति । $\frac{७११}{३२}$ द्विगुणहानिभ्यः $\frac{७११}{४०}$ द्विगुणहानयः, $\frac{७११}{४८}$ द्विगुणहानयः, $\frac{७११}{५६}$ द्विगुणहानयोऽनुक्रमेण हीनाः, हीनतराः, हीनतमा भवन्ति ।

अथ द्वितीयद्विगुणवृद्धौ प्रकृतापहारकालश्चिन्त्यते । तत्रादौ प्रथमयोगस्थानेनैवम्—प्रथमद्विगुणवृद्धिप्रथमयोगस्थानापेक्षयाऽत्र जीवा द्विगुणाः सन्तीति प्रथमद्विगुणवृद्धिप्रथमयोगस्थानेनापहारकालापेक्षया द्वितीयद्विगुणवृद्धिप्रथमयोगस्थानेनापहारोऽर्धासु द्विगुणहानिषु भवति । प्रथमद्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवापहारः $\frac{७११}{३२}$ द्विगुणहानिषु भवतीति द्वितीयद्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवापहारः $\frac{७११}{६४}$ द्विगुणहानिषु भवति । एवमग्रेऽपि सर्वत्र तत्तद्द्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवापहारः स्वाव्यवहितपूर्वद्विगुणवृद्धिप्रथमयोगस्थानेन यावतीषु द्विगुणहानिषु सर्वजीवापहारो भवति, ततोऽर्धासु द्विगुणहानिषु भवतीति ध्येयम् ।

अथ द्वितीययोगस्थानेनैवम्–प्रथमयोगस्थाने द्वात्रिंशद् द्वितीययोगस्थाने च चत्वारिंशज्जीवाः सन्तीति द्वितीययोगस्थानेनापहारे क्रियमाणे प्रथमयोगस्थानापहारापेक्षया प्रतियोगस्थानेऽष्टप्रमाणश्चयो भवति। अत्र प्रथमयोगस्थानगतजीवप्रमाणेन सर्वाणि योगस्थानानि $\frac{७११}{१६}$ भवन्तीति सर्वे चया अपि $\frac{७११}{१६}$ भवन्ति। पञ्चचयैरेकं द्वितीयं योगस्थानं निष्पद्यते। अत्र त्रैराशिकप्रकारोल्लेखः स्वयं विधेयः। $\frac{७११}{१६} \times \frac{१}{५} = \frac{७११}{८०}$ इत्येवं द्वितीययोगस्थानेनापहारे क्रियमाणे $\frac{७११}{१६}$ योगस्थानेष्वपहृतेषु $\frac{७११}{८०}$ योगस्थानान्यधिकान्यपहृतानि। अतः $\frac{७११}{१६}$ योगस्थानेभ्यः $\frac{७११}{८०}$ योगस्थानानां हानिर्विधेया, $\frac{७११}{१६} - \frac{७११}{८०} = \frac{३५५५-७११}{८०} = \frac{२८४४}{८०} = \frac{७११}{२०}$, $\frac{७११}{२०} \times \frac{१}{४} = \frac{७११}{८०}$ इत्येवं द्वितीययोगस्थानेन प्रतिसमयमपहारे क्रियमाणे $\frac{७११}{८०}$ द्विगुणहानिषु सर्वे जीवा अपह्रियन्ते।

अथ तृतीययोगस्थानेनैवम्–अत्राष्टाचत्वारिंशज्जीवाः सन्तीति प्रतियोगस्थाने पूर्वोक्तप्रमाणौ द्विचयौ। सर्वचयाः $\frac{७११}{१६} \times \frac{२}{१} = \frac{७११}{८}$। षट्चयैरेकं तृतीययोगस्थानं निष्पद्यते इति

$$\frac{७११}{८} \times \frac{१}{६} = \frac{७११}{४८},\quad \frac{७११}{१६} - \frac{७११}{४८}, = \frac{२१३३-७११}{४८} = \frac{१४२२}{४८} = \frac{७११}{२४},\quad \frac{७११}{२४} \times \frac{१}{४} = \frac{७११}{९६}।$$

इत्येवं तृतीययोगस्थानेन $\frac{७११}{९६}$ द्विगुणहानिषु सर्वे जीवा अपह्रियन्ते।

अथ चतुर्थयोगस्थानेनैवम्–अत्र षट्पञ्चाशज्जीवाः सन्तीति प्रतियोगस्थाने त्रिचयाः। सर्वचयाः $\frac{७११}{१६} \times \frac{३}{१} = \frac{२१३३}{१६}$। सप्तचयैरेकं चतुर्थयोगस्थानं निष्पद्यते इति $\frac{२१३३}{१६} \times \frac{१}{७} = \frac{२१३३}{११२}$ योगस्थानान्यधिकान्यपहृतानीति $\frac{७११}{१६} - \frac{२१३३}{११२} = \frac{४९७७-२१३३}{११२} = \frac{२८४४}{११२} = \frac{७११}{२८}$, इत्येवं चतुर्थयोगस्थानेन $\frac{७११}{२८}$ योगस्थानैः सर्वजीवापहारो भवति। $\frac{७११}{६४}$ द्विगुणहानिभ्यः $\frac{७११}{८०}$ द्विगुणहानयः $\frac{७११}{९६}$ द्विगुणहानयः, $\frac{७११}{११२}$ द्विगुणहानयोऽनुक्रमेण हीनाः, हीनतराः, हीनतमा भवन्ति। अनयैव रीत्या तृतीयद्विगुणवृद्धेः प्रथमादियोगस्थानेन सर्वजीवापहारोऽनुक्रमेण $\frac{७११}{१२८}$ $\frac{७११}{१६०}$, $\frac{७११}{१९२}$, $\frac{७११}{२२४}$, द्विगुणहानिषु भवति। $\frac{७११}{१२८}$ द्विगुणहानिभ्यः $\frac{७११}{१६०}$, $\frac{७११}{१९२}$, $\frac{७११}{२२४}$ द्विगुणहानयः क्रमशो न्यूनाः, न्यूनतराः, न्यूनतमा भवन्ति।

तदेवं यवमध्यमयोगस्थानेन यवमध्यमयोगस्थानपूर्वपार्श्वयोगस्थानैश्च सर्वयोगस्थानगतजीवविषयकापहारप्ररूपणा कृता। सम्प्रति यवमध्यमयोगस्थानोत्तरपार्श्वयोगस्थानैस्तां कर्तुकाम उत्कृष्टयोगस्थानेन प्रतिसमयमपहारे क्रियमाणे सर्वजीवानामपहारः कियतीषु द्विगुणहानिषु भवतीत्याह–'एवं असंखहाणीसुं गुरुजोगट्ठाणेणं' इति, उत्कृष्टयोगस्थानेन प्रतिसमयमपहारे क्रियमाणे सर्वजीवानामपहारोऽसंख्यद्विगुणहानिषु भवति। तथापि जघन्ययोगस्थानेनापहारे जायमानाभ्योऽसंख्यद्विगुणहानिभ्य उत्कृष्टयोगस्थानेनापहारे जायमाना असंख्यद्विगुणहानयोऽसंख्यगुणा ज्ञेयाः, जघन्ययोगस्थानगतजीवेभ्य उत्कृष्टयोगस्थानस्थितजीवानामसंख्यगुणहीनत्वात्।

पूर्वोक्तवदत्रापि त्रैराशिकं विधेयम् । तद्यथा– उत्कृष्टयोगस्थाने पञ्च जीवाः सन्ति । अतः १२८÷५=१२८/५, इत्येवमेकयवमध्यमयोगस्थाने १२८/५ उत्कृष्टयोगस्थानानि भवन्ति । यद्येकयवमध्यमयोगस्थाने १२८/५ उत्कृष्टयोगस्थानानि तर्हि ७१/६४ यवमध्यमयोगस्थानेषु कियन्ति उत्कृष्टयोगस्थानानि ? १२८/५×७१/६४=१४२/५ योगस्थानानि । १४२/५÷४=१४२/२० द्विगुणहानयः । इत्येवमुत्कृष्टयोगस्थानेन सर्वजीवानामपहारः १४२/२० द्विगुणहानिषु भवति । 'तत्तो पुव्वव्व होइ जवमज्झं जा' इति, ततो यवमध्यमयोगस्थानं यावदपहारः पूर्ववत्=

"होअइ जहुत्तरदुगुणवड्ढीए जज्जोगटाणेणं । अवहारो णिण्णेयो अद्धाऽद्धासु गुणहाणीसु ॥ १ ॥
सव्वदुगुणवड्ढीसुं बिआइठाणेहिं पढमठाणत्तो । ऊणूणयराइसुं गुणहाणीसु खलु" ॥ २ ॥
इत्यनन्तरगाथाद्विकोक्तवद् ज्ञातव्यः ।

स च प्रथमगाथानुसारेणैवम्– प्रथमद्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवानामपहारो यावतीषु द्विगुणहानिषु भवति ततो द्वितीयद्विगुणवृद्धिप्रथमयोगस्थानेनार्धासु द्विगुणहानिषु भवति । ततस्तृतीयद्विगुणवृद्धिप्रथमयोगस्थानेनार्धासु द्विगुणहानिषु भवति । ततश्चतुर्थद्विगुणवृद्धिप्रथमयोगस्थानेनार्धासु द्विगुणहानिषु भवति । इत्येवं यवमध्यमयोगस्थानं यावत् क्रमशो यथोत्तरद्विगुणवृद्धिप्रथमयोगस्थानेन सर्वजीवानामपहारोऽर्धार्धद्विगुणहानिषु भवति ।

द्वितीयगाथानुसारेणैवम्– प्रथमद्विगुणवृद्धेः प्रथमयोगस्थानेन सर्वजीवानामपहारो यावतीषु द्विगुणहानिषु भवति ततः प्रथमद्विगुणहानेर्द्वितीययोगस्थानेन न्यूनासु द्विगुणहानिषु भवति, तस्या एव तृतीययोगस्थानेन ततोऽपि न्यूनासु द्विगुणहानिषु भवति, तस्या एव चतुर्थयोगस्थानेन ततोऽपि न्यूनासु द्विगुणहानिषु भवति । इत्येवं प्रथमद्विगुणहानिचरमयोगस्थानं यावद् वक्तव्यम् । इत्येवं यवमध्यमयोगस्थानं यावद् यावन्त्यो द्विगुणवृद्धयस्तासु स्वप्रथमयोगस्थानेन सर्वजीवानामपहारो यावतीषु द्विगुणहानिषु भवति तदपेक्षया स्वद्वितीयादियोगस्थानैः क्रमशो न्यूनासु न्यूनासु द्विगुणहानिषु भवति । ॥ १५६ ॥ १५७ ॥

इत्येवं जघन्ययोगस्थानादारभ्य यवमध्यमयोगस्थानं यावदुत्कृष्टयोगस्थानादारभ्य यवमध्यमयोगस्थानं यावच्चापहारप्ररूपणा कृता । सम्प्रति यवमध्यमयोगस्थानादारभ्य पूर्वपार्श्वे जघन्ययोगस्थानं यावदुत्तरपार्श्वे चोत्कृष्टयोगस्थानं यावदपहारप्ररूपणां विधातुकाम आह—

जवमज्झेणऽवहारो सयलजिआणूणतिगुणहाणीसुं ।
णेयो जहुत्तरदुगुणहाणीए उभयपासम्मि ॥१५८॥
दुदुगुणिआसुं हवए अवहारो पढमजोगठाणेणं ।
जाव लहुगुरुं लहुणा गुरुणाऽसंखगुणहाणीसुं ॥१५९॥

(प्रे०) आदौ यवमध्यमयोगस्थानेनापहारकालमाह-'जवमज्झेण' इत्यादि, सुगमम्,

अवहारद्वारप्रथमगाथा (गाथा० १५३) टीकायां सविस्तरं प्रदर्शितत्वात् । इदानीं पूर्वोत्तरपार्श्वयोः प्रत्येकं सर्वद्विगुणहानिषु स्वप्रथमयोगस्थानेनापहारकालमाह-'जहुत्तरदुगुणहाणीए' इत्यादि, पूर्वोत्तरोभयपार्श्वयोः प्रत्येकं यथोत्तरद्विगुणहान्याः प्रथमयोगस्थानेन सर्वजीवापहारो द्विद्विगुणितासु द्विगुणहानिषु भवति, क्रमशो द्विगुणद्विगुणासु द्विगुणहानिषु भवतीत्यर्थः, क्रमशो द्विगुणद्विगुणकालेन भवतीति यावत्, यथोत्तरं द्विगुणहानेः प्रथमयोगस्थाने जीवानामर्धार्धत्वात् । इदमुक्तं भवति-यवमध्यमयोगस्थानात् पूर्वपार्श्वे प्रथमद्विगुणहानिप्रथमयोगस्थानेन सर्वजीवापहारो यावतीषु द्विगुणहानिषु भवति ततः पूर्वपार्श्वे द्वितीयद्विगुणहानिप्रथमयोगस्थानेन द्विगुणासु द्विगुणहानिषु भवति । अत्र प्रथमद्विगुणहानिप्रथमयोगस्थानं यवमध्यमरूपयोगस्थानं ज्ञातव्यम् । ततः पूर्वपार्श्वे तृतीयद्विगुणहानिप्रथमयोगस्थानेन द्विगुणासु द्विगुणहानिषु भवति । एवं पूर्वपार्श्वे चतुर्थादिद्विगुणहानिष्वपि वक्तव्यम् । एवमेवोत्तरपार्श्वे प्रथमादिद्विगुणहानिप्रथमयोगस्थानापहारकालतोऽनुक्रमेण द्वितीयादिद्विगुणहानिप्रथमयोगस्थानापहारकालो द्विगुणो वक्तव्यः । ननूक्तरीत्या द्विगुणोऽपहारकालः क यावद् भवति ? इत्याह-'जाव लहुगुरु' इति, इत्येवं द्विगुणोऽपहारकालः पूर्वपार्श्वे जघन्ययोगस्थानं यावदुत्तरपार्श्वे चोत्कृष्टयोगस्थानं यावद् भवति । सम्प्रति जघन्ययोगस्थानेनोत्कृष्टयोगस्थानेन चापहारकालमाह-'लहुणा गुरुणाऽसंखगुणहाणीसु' इति, सुगमम्, पूर्वं सविस्तरं विवृतत्वात् ।

न च यवमध्यमजघन्योत्कृष्टेषु त्रियोगस्थानेषु पूर्वमपहारप्ररूपणा कृतेत्यत्र तेषु पुनरपहारप्ररूपणा "पिष्टपेषण"न्यायं समाश्रयतीति वाच्यम्, पूर्वतोऽत्र भिन्नक्रमेणापहारप्ररूपणायाः कृतत्वात् । पूर्वं हि जघन्ययोगस्थानादारभ्य यवमध्यमयोगस्थानं यावत्, तथोत्कृष्टयोगस्थानाद् यवमध्यमयोगस्थानं यावदिति क्रमेणापहारप्ररूपणा कृता । अत्र तु यवमध्यमयोगस्थानादारभ्य पूर्वपार्श्वे जघन्ययोगस्थानं यावदुत्तरपार्श्वे चोत्कृष्टयोगस्थानं यावदिति क्रमेणापहारप्ररूपणा क्रियते । अतो भिन्नक्रमप्ररूपणायां तत्स्थानाशून्यार्थं पुनरत्र यवमध्यमजघन्योत्कृष्टेषु योगस्थानेषु कृतायामपहारप्ररूपणायां न पिष्टपेषणत्वम् ॥१५८।१५९॥ साम्प्रतं विवक्षितद्विगुणहानेः प्रथमयोगस्थानापेक्षया तस्या एव द्वितीयादियोगस्थानैः सर्वजीवानामपहारः कियता कालेन भवतीत्याह—

सव्वदुगुणहाणीसुं विआइठाणेहि पढमठाणत्तो ।
अहियहियपराईसुं गुणहाणीसु खलु अवहारो ॥१६०॥

(प्रे०) 'सव्वदुगुणहाणीसु' इत्यादि, सर्वद्विगुणहानिषु स्वप्रथमयोगस्थानेन सर्वजीवानामपहारो यावतीषु द्विगुणहानिषु भवति तदपेक्षया स्वद्वितीयादियोगस्थानैरनुक्रमेणाधिकाधिकतरादिषु द्विगुणहानिषु भवति । अत्रायं भावः-पूर्वपार्श्वे प्रथमद्विगुणहानेः प्रथमयोगस्थानेन यावतीषु द्विगुणहानिषु सर्वजीवानामपहारो भवति तदपेक्षया पूर्वपार्श्वे एव प्रथमद्विगुणहानेरेव द्वितीय-

योगस्थानेनाधिकासु द्विगुणहानिषु भवति, तृतीययोगस्थानेनाधिकतरासु द्विगुणहानिषु भवति, ततः चतुर्थयोगस्थानेनाधिकतरासु द्विगुणहानिषु भवति। इत्येवं पूर्वपार्श्वे प्रथमद्विगुणहानेश्चरमयोगस्थानं यावद् वक्तव्यम्। पूर्वपार्श्वे द्वितीयद्विगुणहानेः प्रथमयोगस्थानेन सर्वजीवानामपहारो यावतीषु द्विगुणहानिषु भवति ततः पूर्वपार्श्वे एव द्वितीयद्विगुणहानेरेव द्वितीययोगस्थानेनाधिकासु द्विगुणहानिषु भवति, तृतीययोगस्थानेनाधिकतरासु द्विगुणहानिषु भवति, इत्येव द्वितीयद्विगुणहानेश्चरमयोगस्थानं यावद् वक्तव्यम्। एवक्रमेण पूर्वपार्श्वे जघन्ययोगस्थानं यावद् यावत्यो द्विगुणहानयस्तासु सर्वासु स्वप्रथमयोगस्थानापेक्षया द्वितीयादियोगस्थानैः सर्वजीवापहारकालोऽधिकाधिकतरादिको वक्तव्यः। अनेनैव क्रमेणोत्तरपार्श्वेऽपि उत्कृष्टयोगस्थानं यावद् यावत्यो द्विगुणहानयस्तासु सर्वासु स्वप्रथमयोगस्थानापेक्षया स्वद्वितीयादियोगस्थानैः सर्वजीवापहारकालोऽधिकाधिकतरादिको वक्तव्यः।

अत्र पूर्वोक्तासत्कल्पनामाश्रित्य प्रथमद्विगुणहानौ चिन्त्यते। तत्र द्वितीययोगस्थानेनापहारकाल एवम्– यवमध्यमयोगस्थानं प्रथमद्विगुणहानेः प्रथमयोगस्थानं भवति। यवमध्यमयोगस्थानेन सर्वजीवापहारः $\frac{711}{256}$ द्विगुणहानिषु, अर्थात् $\frac{711}{64}$ योगस्थानेषु भवतीति पूर्वं प्रदर्शितम्। प्रथमद्विगुणहानेः प्रथमयोगस्थानेऽष्टाविंशत्यधिकशतं द्वितीययोगस्थाने च द्वादशाधिकशतं जीवाः सन्ति, अतो द्वितीययोगस्थानेनापहारे क्रियमाणे प्रथमयोगस्थानापहारापेक्षया प्रतियोगस्थाने षोडशप्रमाणो हानिरूप एकचयो भवति, अर्थात् प्रथमयोगस्थानापेक्षया प्रतियोगस्थाने षोडश जीवा हीना अपह्रियन्ते। यवमध्यमयोगस्थानगतप्रमाणेन सर्वाणि योगस्थानानि $\frac{711}{64}$ भवन्तीति सर्वे चया अपि $\frac{711}{64}$ भवन्ति। एकन्यूनद्विद्विगुणहानियोगस्थानचयैः, सप्तचयैरित्यर्थः, एकं द्वितीययोगस्थानं निष्पद्यते। सर्वेषां चयानां योगस्थानानयनार्थं त्रैराशिकं विधेयम्। तद्यथा—यदि सप्तचयैरेकं द्वितीययोगस्थानं भवति तर्हि $\frac{711}{64}$ चयैः कियन्ति द्वितीययोगस्थानानि स्युः? $\frac{711}{64}\times\frac{1}{7}=\frac{711}{448}$ इति द्वितीययोगस्थानेनापहारे क्रियमाणे प्रथमयोगस्थानापहारापेक्षया $\frac{711}{448}$ योगस्थानानि हीनानि अपहृतानि, अतः प्रथमयोगस्थानेन सर्वजीवापहारकालापेक्षया द्वितीययोगस्थानेन सर्वजीवापहारकालः $\frac{711}{448}$ योगस्थानप्रमाणोऽधिको भवति, अतः $\frac{711}{64}$ योगस्थानेषु $\frac{711}{448}$ योगस्थानानां योगो विधेयः, $\frac{711}{64}+\frac{711}{448}=\frac{4977+711}{448}=\frac{5688}{448}=\frac{711}{56}$ इति द्वितीययोगस्थानेनापहारे क्रियमाणे $\frac{711}{56}$ योगस्थानेषु सर्वजीवानामपहारो भवति। पूर्वं प्रतिद्विगुणहानौ चत्वारि योगस्थानानि कल्पितानीति $\frac{711}{56}$ योगस्थानानां $\frac{711}{224}$ द्विगुणहानयो भवन्ति। अतो द्वितीययोगस्थानेनापहारे क्रियमाणे $\frac{711}{224}$ द्विगुणहानिषु सर्वजीवानामपहारो भवति।

अथ तृतीययोगस्थानेन सर्वजीवापहारकाल एवम्—तृतीययोगस्थाने षण्णवतिजीवाः सन्तीति यवमध्यमयोगस्थानापहारापेक्षया प्रतियोगस्थाने षोडशप्रमाणौ द्विचयौ, अर्थात् प्रतियोगस्थाने द्वात्रिं-

र्वजीवा न्यूना अपह्रियन्ते । अतः सर्वचयाः $\frac{७११}{६४}\times\frac{२}{१}=\frac{७११}{३२}$ भवन्ति । इह षट्चयैरेकं तृतीयं योगस्थानं भवति । यदि षट्चयैरेकं तृतीययोगस्थानं भवति तर्हि $\frac{७११}{३२}$ चयैः कियन्ति तृतीययोगस्थानानि स्युः ? $\frac{७११}{३२}\times\frac{१}{६}=\frac{७११}{१९२}$ इत्येवं तृतीययोगस्थानेनापहारे क्रियमाणे प्रथमयोगस्थानापहारापेक्षया $\frac{७११}{१९२}$ योगस्थानानि न्यूनान्यपहृतानि । अतः $\frac{७११}{६४}+\frac{७११}{१९२}=\frac{२१३३+७११}{१९२}=\frac{२८४४}{१९२}=\frac{७११}{४८}$ योगस्थानानि, $\frac{७११}{४८}\times\frac{१}{४}=\frac{७११}{१९२}$ द्विगुणहानयः । इत्येवं तृतीययोगस्थानेषु प्रतिसमयमपहारे क्रियमाणे $\frac{७११}{१९२}$ द्विगुणहानिषु सर्वजीवा अपह्रियन्ते ।

अथ चतुर्थयोगस्थानेनैवम्–अत्राशीतिजीवाः सन्तीति प्रथमयोगस्थानेनापहारापेक्षया प्रतियोगस्थाने षोडशप्रमाणास्त्रिचयाः । सर्वचयाः $\frac{७११}{६४}\times\frac{३}{५}=\frac{२१३३}{३२०}$ । पञ्चचयैरेकं चतुर्थयोगस्थानं भवतीति सर्वचयैः $\frac{२१३३}{३२०}$ चतुर्थयोगस्थानानि भवन्ति । अतश्चतुर्थयोगस्थानेनापहारे क्रियमाणे प्रथमयोगस्थानापेक्षया $\frac{२१३३}{३२०}$ योगस्थानानि हीनान्यपहृतानि ।

$$\frac{७११}{६४}+\frac{२१३३}{३२०}=\frac{३५५५+२१३३}{३२०}=\frac{५६८८}{३२०}=\frac{७११}{४०},\ \frac{७११}{४०}\times\frac{१}{४}=\frac{७११}{१६०}\ ।$$

इत्येवं चतुर्थयोगस्थानेन प्रतिसमयमपहारे क्रियमाणे $\frac{७११}{१६०}$ द्विगुणहानिषु सर्वजीवा अपह्रियन्ते । $\frac{७११}{२५६}$ द्विगुणहानिभ्यः $\frac{७११}{२२४}$ द्विगुणहानयः, $\frac{७११}{१९२}$ द्विगुणहानयः, $\frac{७११}{१६०}$ द्विगुणहानयोऽनुक्रमेणाधिका अधिकतरा अधिकतमा भवन्ति । इत्येवं द्वितीयादिद्विगुणहानिषु स्वयं परिभावनीयम् ॥ १६० ॥ इदानीमिष्टद्विगुणहानेः प्रथमयोगस्थानेन सर्वजीवापहारकालं ज्ञातुं करणगाथामाह—

**गुणणेगूणिट्ठदुगुणहाणिदुसंखा परोप्परं गुण्णा ।**
**किंचूणतिहाणीहिं तासुं इट्ठऽज्जठाणेणं ॥१६१॥**

( प्रे० ) 'गुणणेगूणिट्ठदुगुणहाणिदुसंखा परोप्परं' इति, एकन्यूना इष्टद्विगुणहानिप्रमाणा द्विसंख्या परस्परं गुणनीया । ततः किं विधेयमित्याह–'गुण्णा किंचूणतिहाणीहिं' इति, एकन्यूनेष्टद्विगुणहानिप्रमाणद्विसंख्यायां परस्परं गुणितायां या संख्या प्राप्ता सा किञ्चिन्न्यूनत्रिद्विगुणहानिभिर्गुणनीया, कृते गुणकारे गुणनफलं या द्विगुणहानयः प्राप्ताः 'तासुं इट्ठऽज्जठाणेणं' इति, तासु द्विगुणहानिषु इष्टद्विगुणहानेः प्रथमयोगस्थानेन सर्वजीवापहारो भवति इत्यक्षरयोजना ।

भावार्थः पुनरयम्—यावतिथ्या द्विगुणहान्याः प्रथमयोगस्थानेन सर्वजीवापहारो ज्ञातुमिष्यते तावतिथीं द्विगुणहानिं यावद् एकन्यूना यावन्त्यो द्विगुणहानयस्तावत्प्रमाणा द्व्यङ्काः स्थापयित्वा परस्परं गुणनीयाः, कृते गुणकारे यद् गुणनफलं समागतं तत् किञ्चिन्न्यूनत्रिद्विगुणहानिभिर्गुणनीयम् , कृते गुणकारे गुणफलत्वेन यावत्यो द्विगुणहानयः प्राप्तास्तावतीषु द्विगुणहानिषु इष्टद्विगुणहानेः प्रथमयोगस्थानेन सर्वजीवापहारो भवति ।

तत् पूर्वोक्तासत्कल्पनयैवम्-तृतीयाया द्विगुणहान्याः प्रथमयोगस्थानेन सर्वजीवापहारो ज्ञातुमिष्यते, अतः २×२=४ $\frac{४}{१} \times \frac{७११}{२५६} = \frac{७११}{६४}$ इत्येवं तृतीयद्विगुणहानिप्रथमयोगस्थानेन $\frac{७११}{६४}$ द्विगुणहानिषु सर्वजीवानामपहारो भवति।

चतुर्थद्विगुणहानिप्रथमयोगस्थानेन सर्वजीवानामपहारो ज्ञातुमिष्यते, अतः २×२×२=८, $\frac{८}{१} \times \frac{७११}{२५६} = \frac{७११}{३२}$, इत्येवं चतुर्थद्विगुणहानिप्रथमयोगस्थानेन $\frac{७११}{३२}$ द्विगुणहानिषु सर्वजीवापहारो भवति।

पञ्चमद्विगुणहानिप्रथमयोगस्थानेन सर्वजीवापहारो ज्ञातुमिष्यते, अतः २×२×२×२=१६, $\frac{१६}{१} \times \frac{७११}{२५६} = \frac{७११}{१६}$ इत्येवं पञ्चमद्विगुणहानिप्रथमयोगस्थानेन सर्वजीवापहारः $\frac{७११}{१६}$ द्विगुणहानिषु भवति।

यदि द्वितीयद्विगुणहानिप्रथमयोगस्थानेन सर्वजीवापहारो ज्ञातुमिष्यते तदा सकृद् द्व्यङ्कः स्थापनीयः, द्वितीयद्व्यङ्काभावात् परस्परं गुणाभावः। $\frac{२}{१} \times \frac{७११}{२५६} = \frac{७११}{१२८}$। इत्येवं द्वितीयद्विगुणहानिप्रथमयोगस्थानेन $\frac{७११}{१२८}$ द्विगुणहानिषु सर्वजीवापहारो भवति ॥१६१॥

तदेवमपहारद्वारं निरूपितम्। सम्प्रति क्रमायातं भागद्वारं निरूपयन्नाह—

**जवमज्झम्मि असंखियभागोऽत्थि सयलजिआण एमेव ।**
**हस्से तहा गुरुम्मि वि तहेव सव्वत्थ विण्णेया ॥१६२॥**

(प्रे०) '**जवमज्झम्मि**' इत्यादि, यवमध्यमयोगस्थाने वर्तमानाः पर्याप्तत्रसजीवाः सर्वपर्याप्तत्रसजीवानामसंख्याततमे भागे भवन्ति। अत्रेयं भावना-सर्वे पर्याप्तत्रसजीवा यवमध्यमयोगस्थानगतजीवप्रमाणेन देशोनत्रिद्विगुणहानीनां यावन्ति योगस्थानानि तावत्प्रमाणाः सन्तीति यवमध्यमयोगस्थाने स्थिता जीवा देशोनत्रिद्विगुणहानियोगस्थानप्रमाणासंख्याततमे भागे भवन्ति। असत्कल्पनया सर्वे जीवाः १४२२ सन्तीति यवमध्यमयोगस्थानगतजीवाः $\frac{१४२२}{१२८}$ तमे भागे भवन्ति। '**एमेव**' तथैव जघन्ययोगस्थाने वर्तमाना जीवा असंख्याततमे भागे भवन्ति। असंख्यातद्विगुणहानियोगस्थानप्रमाणासंख्याततमे भागे भवन्ति। असत्कल्पनया तु जघन्ये उत्कृष्टे च योगस्थानेऽनुक्रमेण $\frac{१४२२}{१६}$ तमे भागे $\frac{१४२२}{४}$ तमे भागे जीवा भवन्ति। '**तहेव सव्वत्थ विण्णेया**' इति, तथैव सर्वत्र-सर्वयोगस्थानेषु प्रतियोगस्थाने वर्तमाना जीवाः सर्वजीवानामसंख्याततमे भागे ज्ञातव्याः ॥१६२॥

तदेवं गतं भागद्वारम्। सम्प्रति क्रमप्राप्तमल्पबहुत्वद्वारं प्रतिपादयितुमुपक्रमते—

**लहुजोगट्ठाणेऽप्पा जीवा णेया तओ असंखगुणा ।**
**जवमज्झे हुन्ति तओ जवमज्झाहअजहण्णेसुं ॥१६३॥**
**ताओ विसेसअहिया णेया जवमज्झहेट्ठिमेसु तओ ।**
**हेट्ठिमअजहण्णेसुं तओ अहत्थेसु सव्वेसुं ॥१६४॥**

( प्रे० ) अत्रेदं बोध्यम्- इदमल्पबहुत्वद्वारं त्रिधा चिन्तयिष्यते । (१) तत्र प्रथमप्रकारेण जघन्ययोगस्थानाद् यवमध्यमयोगस्थानं यावत् स्थितेषु योगस्थानेषु जीवानामल्पबहुत्वं वक्ष्यते । ( २ ) द्वितीयप्रकारेणोत्कृष्टयोगस्थानाद् यवमध्यमयोगस्थानं यावत् स्थितेषु योगस्थानेषु जीवानामल्पबहुत्वं वक्ष्यते । ( ३ ) तृतीयप्रकारेण येषु योगस्थानेषु प्रथमप्रकारेण येषु च द्वितीयप्रकारेण जीवानामल्पबहुत्वं चिन्तितं तेष्वेव युगपच्चिन्तयिष्यते ।

तत्रादौ तावत् प्रथमप्रकारेणाल्पबहुत्वं निरूपयति-'लहुजोगट्ठाणेऽप्पा, इत्यादि, जघन्ययोगस्थाने वर्तमाना जीवाः स्तोकाः । 'तओ असंखगुणा' इत्यादि, ततः-जघन्ययोगस्थानगतजीवेभ्यो यवमध्यमयोगस्थानगता जीवा असंख्यगुणा भवन्ति । ननु कियत्प्रमाणोऽत्र गुणकारः ? उच्यते, यावत्योऽधस्तन्यो द्विगुणहानयस्तावद्वारं द्वयङ्कं स्थापयित्वा परस्परं गुणकारे कृते यावद् गुणनफलं तावत्प्रमाणो ज्ञेयः । तदसत्कल्पनयैवम्-यवमध्यमयोगस्थानादधस्तनद्विगुणहानयस्तिस्र इति तासामन्योन्याभ्यस्तराशिरष्टौ भवति । अतो जघन्ययोगस्थानापेक्षया यवमध्यमयोगस्थाने जीवा अष्टगुणा भवन्ति । अत एवाष्टभिर्जघन्ययोगस्थानजीवराशौ गुणिते यवमध्यमयोगस्थानजीवराशिर्भवति-१६×८=१२८ ।

'तओ जवमज्झाहअजहण्णेसु" इति, 'असंखगुणा' इति पदमत्रापि सम्बध्यते,ततः=यवमध्यमयोगस्थानगतजीवेभ्यो यवमध्यादधस्तनेषु अजघन्येषु, जघन्ययोगस्थानं विना यवमध्यादधस्तनेषु, सर्वयोगस्थानेष्वित्यर्थः, वर्तमाना जीवा असंख्यगुणा भवन्ति । अत्र गुणकारो देशोनसार्धद्विगुणहानिप्रमाणो ज्ञातव्यः । असत्कल्पनयैवम् यवमध्यादधस्तनेषु जघन्ययोगस्थानाच्चोपरितनेषु सर्वयोगस्थानेषु सर्वजीवाः षट् शतानि, यवमध्यमयोगस्थानेऽष्टाविंशत्यधिकशतं जीवाः । अतो यवमध्यमयोगस्थानगतजीवेभ्यो यवमध्यादधस्तनेषु जघन्ययोगस्थानाच्चोपरितनेषु सर्वयोगस्थानेषु वर्तमाना जीवाः $\frac{७५}{१६}$ गुणाः भवन्ति । अत एव $\frac{७५}{१६}$ राशिना १२८राशौ गुणिते गुणनफलं ६०० भवति-$\frac{७५}{१६}\times\frac{१२८}{१}$ = ६०० ।

'ताओ'इत्यादि,यवमध्यमादधस्तनेषु जघन्ययोगस्थानाच्चोपरितनेषु योगस्थानेषु स्थितेभ्यो जीवेभ्यो यवमध्यादधस्तनेषु सर्वयोगस्थानेषु स्थिता जीवा विशेषाधिका भवन्ति, जघन्ययोगस्थानगतजीवानां प्रवेशात् । असत्कल्पनयैवम्-जघन्ययोगस्थाने जीवाः १६.तथा पूर्वोक्तजीवाः ६००, अतः ६००+१६=६१६ । यवमध्यमादधस्तनेषु सर्वयोगस्थानेषु ६१६ जीवाः भवन्ति ।

'तओ' इत्यादि, यवमध्यमादधस्तनयोगस्थानगतजीवेभ्योऽधस्तनाजघन्येषु=जघन्ययोगस्थानं विनाऽधस्तनसर्वयोगस्थानेषु वर्तमाना जीवा विशेषाधिका भवन्ति । इयमत्र भावना— अत्र जघन्ययोगस्थानं निर्गतं यवमध्यमयोगस्थानं च प्रविष्टम् । अतो जघन्ययोगस्थानगतजीवन्यूना यवमध्यमयोगस्थानगता जीवाः पूर्वतोऽधिका जाताः । तद्यथा-१२८-१६=११२, ६१६+११२= ७२८ । इत्येवं जघन्ययोगस्थानं विनाऽधस्तनसर्वयोगस्थानेषु ७२८ जीवा भवन्ति ।

'तओ अहृस्येसु सव्वेसु" इति, अजघन्यावस्तनयोगस्थानजीवेभ्योऽधस्तनेषु सर्वयोग-स्थानेषु वर्तमाना जीवा विशेषाधिका भवन्ति, अधस्तनेषु सर्वयोगस्थानेषु अजघन्ययोगस्थानस्य समावेशात् । सर्वे जीवाः ७४४ भवन्ति ॥१६३।१६४॥

सम्प्रति गाथाद्विकेन द्वितीयप्रकारमल्पबहुत्वमाह—

जीवा थोवा जेट्ठे जोगट्ठाणे तओ असंखगुणा ।
जवमज्झे अत्थि तओ जवमज्झुवरिल्लअगुरूसुं ॥१६५॥
तत्तो विसेसअहिया णेया जवमज्झउवरिमेसुं तओ ।
उवरिमजेट्ठेसु तओ हुन्ति उवरिमेसु सव्वेसु ॥१६६॥

( प्रे० ) 'जीवा थोवा' इत्यादि, उत्कृष्टे योगस्थाने जीवाः स्तोकाः, तथास्वाभाव्याद् योगस्थानेषु यथा यथा योगोऽधिकस्तथा तथा जीवानां स्तोकत्वेन प्राप्यमाणत्वात् । असत्कल्पनया पञ्चैव जीवाः सन्ति ।

'तओ' इत्यादि, ततः=उत्कृष्टयोगस्थानगतजीवेभ्यो यवमध्यमयोगस्थानगतजीवा असंख्यगुणा भवन्ति । अत्र गुणकारो यवमध्यमयोगस्थानादुपरितन्यो यावत्यो द्विगुणहानयस्तावद्वारं द्वयङ्कं विन्यस्य परस्परं गुणकारे कृते यावद् गुणनफलं तावत्प्रमाणोऽवगन्तव्यः । तदसत्कल्पनयैवम्—यवमध्यमयोगस्थानादुपरितन्यो द्विगुणहानयः किञ्चिन्न्यूनपञ्च सन्तीति तासामन्योन्याभ्यस्तराशिः द्वात्रिंशदपेक्षया हीनो भवति । अत उत्कृष्टयोगस्थानतो यवमध्यमयोगस्थाने जीवाः $\frac{१२८}{५}$गुणा भवन्ति । अतः $\frac{१२८}{५}$राशिभिः ५राशौ गुणिते यवमध्यमयोगस्थानगतजीवराशिर्भवति-$\frac{१२८}{५} \times \frac{५}{१} = १२८$ ।

"तओ जवमज्झुवरिल्लअगुरूसु" इति, 'असंखगुणा' इति पदमत्रापि सम्बध्यते, ततः यवमध्यमयोगस्थानगतजीवेभ्य उपरितनेष्वनुत्कृष्टेषु, अर्थादुत्कृष्टयोगस्थानात् पाश्चात्येषु यवमध्यमयोगस्थानाद्अग्रेतनेषु योगस्थानेषु वर्तमाना जीवा असंख्यगुणा भवन्ति । अत्र गुणकारः किञ्चिन्न्यूनसार्धद्विगुणहानिप्रमाणो ज्ञेयः । अत्रासत्कल्पनयैवम्—यवमध्यमयोगस्थानादग्रेतनेषूत्कृष्टयोगस्थानाच्च पाश्चात्येषु योगस्थानेषु जीवाः ६७२, यवमध्ययोगस्थाने च १२८ । अतो यवमध्यमयोगस्थानगतजीवेभ्यो यवमध्यमयोगस्थानादग्रेतनेषूत्कृष्टयोगस्थानाच्च पाश्चात्येषु योगस्थानेषु स्थिता जीवाः $\frac{६७२}{१२८}$ गुणा भवन्ति । अत एव $\frac{६७२}{१२८}$ राशिना १२८राशौ गुणिते गुणनफलं ६७२ भवति-$\frac{६७२}{१२८} \times \frac{१२८}{१} = ६७२$ ।

'तत्तो' इत्यादि, यवमध्यमयोगस्थानादग्रेतनेषूत्कृष्टयोगस्थानाच्च पाश्चात्येषु योगस्थानेषु यावन्तो जीवास्तेभ्यो यवमध्यमयोगस्थानादुपरितनेषु योगस्थानेषु वर्तमाना जीवा विशेषाधिका भवन्ति, उत्कृष्टयोगस्थानगतजीवानां समावेशात् । असत्कल्पनयैवम्-उत्कृष्टयोगस्थाने

जीवाः ५, अतः ६७३+५=६७८ । इत्येवं यवमध्यमयोगस्थानादुपरितनयोगस्थानेषु सर्वे जीवाः ६७८ भवन्ति ।

'तओ' इत्यादि, यवमध्यमयोगस्थानादुपरितनयोगस्थानगतजीवेभ्य उपरि अज्येष्ठेषु, अर्थादुत्कृष्टयोगस्थानं विनोपरितनसर्वयोगस्थानेषु वर्तमाना जीवा विशेषाधिका भवन्ति । इयं भावनाऽत्र–अत्रोत्कृष्टयोगस्थानं निर्गतं यवमध्यमयोगस्थानं च प्रविष्टम् । अत उत्कृष्टयोगस्थानजीवहीना यवमध्यमयोगस्थानजीवाः पूर्वतोऽधिका भवन्ति । १२८-५=१२३, ६७८+१२३=८०१ । इत्येवमुत्कृष्टयोगस्थानमन्तरोपरितनसर्वयोगस्थानेषु ८०१ जीवा भवन्ति ।

'तओ' इत्यादि, अनुत्कृष्टोपरितनयोगस्थानगतजीवेभ्य उपरितनसर्वयोगस्थानेषु स्थिता जीवा विशेषाधिका भवन्ति, उत्कृष्टयोगस्थानस्य समावेशात् । उपरितनसर्वयोगस्थानेषु ८०६ जीवा भवन्ति–८०१+५=८०६ ॥१६५।१६६॥ इदानीं तृतीयप्रकारमल्पबहुत्वं चिन्तयति—

जेट्ठे थोवा तत्तो अत्थि असंखियगुणा जहण्णम्मि ।
तो जवमज्झे ताओ जवमज्झाहत्थअलहूसुं ॥१६७॥
एत्तो विसेसअहिया णेया जवमज्झहेट्ठिमेसु तओ ।
अत्थि अणुक्कोसेसुं जवमज्झस्स उवरिल्लेसुं ॥१६८॥
तत्तो जवमज्झुवरिमठाणेसुं ताउ उवरिअगुरूसुं ।
ताउ सयलुवरिमेसुं तओ सयलजोगठाणेसुं ॥१६९॥

(प्रे०) 'जेट्ठे थोवा' इति, उत्कृष्टयोगस्थाने जीवाः सर्वस्तोकाः । अत्र हेतुर्द्वितीयप्रकाराल्पबहुत्वे उक्त एव ज्ञातव्यः ।

'तत्तो' इत्यादि, उत्कृष्टयोगस्थानगतजीवेभ्यो जघन्ययोगस्थानगता जीवा असंख्यगुणा भवन्ति । नन्वत्र को गुणकारः ? इति चेद्, उच्यते, अधस्तनद्विगुणहानिन्यूना उपरितनद्विगुणहानयो यावत्यो भवन्ति तावद्वारं द्वयङ्कं स्थापयित्वा परस्परं गुणकारे कृते यावद् गुणनफलं किञ्चिन्न्यूनस्तावत्प्रमाणोऽत्र गुणकारो बोध्यः । तदसत्कल्पनयैवम्–उपरितनद्विगुणहानयः पञ्च, अधस्तनद्विगुणहानयस्तिस्रः । अतः उपरितनद्विगुणहानिभ्योऽधस्तनद्विगुणहानीनां विश्लेषे कृते द्वे द्विगुणहानी शिष्टे । तयोरन्योन्याभ्यस्तराशिः ४, स च किञ्चिन्न्यूनः कर्तव्यः, अतः $\frac{१५}{४}$ राशिरत्र गुणकारः । $\frac{१५}{४}$ राशिनोत्कृष्टयोगस्थानस्थजीवराशौ गुणिते जघन्ययोगस्थानगतजीवराशिर्भवति-$\frac{१५}{४} \times \frac{५}{१}$=१६ ।

'तो जवमज्झे' इति, 'असंखगुणा' इति पदमत्रापि सम्बध्यते, जघन्ययोगस्थानगतजीवेभ्यो यवमध्यमे योगस्थाने वर्तमाना जीवा असंख्यगुणाः । अत्र भावना प्रथमप्रकाराल्पबहुत्वे प्रदर्शितपथा विधेया ।

**'ताओ जवमज्झाहुत्थअन्ह्रुसु'** इति, 'असंखगुणा' इति पदमत्रापि संबध्यते, यवमध्यमयोगस्थानस्थजीवेभ्योऽधस्तनाऽजघन्ये योगस्थाने वर्तमाना जीवा असंख्यातगुणाः । अत्र भावना प्रथमप्रकाराल्पबहुत्वे निगदितरीत्या कार्या ।

**'एत्तो'** इत्यादि, अधस्तनाजघन्ययोगस्थानगतजीवेभ्यो यवमध्यमयोगस्थानादधस्तनेषु योगस्थानेषु वर्तमाना जीवा विशेषाधिकाः । भावनाऽऽद्यप्रकाराल्पबहुत्ववद् ।

**'तओ अत्थि अणुक्कोसेसु जवमज्झस्स उवरिल्लेसु'** इति, **"विसेसअहिया"** इति पदमत्रापि संबध्यते, यवमध्यमयोगस्थानस्याधस्तनयोगस्थानगतजीवेभ्यो यवमध्यमयोगस्थानस्योपरितनेष्वनुत्कृष्टयोगस्थानेषु वर्तमाना जीवा विशेषाधिकाः । **इयमत्र भावना-**यवमध्यादुपरितनवर्तिषु यस्मिन् योगस्थाने जघन्ययोगस्थानप्रमाणा जीवा भवन्ति तत उत्कृष्टयोगस्थानं विहाय यावन्ति योगस्थानानि विद्यन्ते तेषु स्थिता जीवा यावत्प्रमाणा भवन्ति तावत्प्रमाणेन अधिकाः । असत्कल्पनया तु-१४+१२+१०+८+७+६=५७, इत्येवं यवमध्यमयोगस्थानादधस्तनेषु योगस्थानेषु यावन्तो जीवास्तेभ्यो यवमध्यमयोगस्थानादुपरितनेषु अनुत्कृष्टेषु योगस्थानेषु सप्तपञ्चाशज्जीवा अधिकाः । अतो यवमध्यमस्योपरितनानुत्कृष्टयोगस्थानेषु सर्वे जीवाः ६१६ +५७=६७३ भवन्ति ।

**'तत्तो जवमज्झुवरिमठाणेसु'** इति, यवमध्यमोपरितनानुत्कृष्टयोगस्थानस्थजीवेभ्यो यवमध्यमोपरितनसर्वयोगस्थानेषु वर्तमाना जीवा विशेषाधिकाः, उत्कृष्टयोगस्थानस्य प्रवेशात् । असत्कल्पनया यवमध्यमोपरितनयोगस्थानस्थाः सर्वे जीवाः६७३+५=६७८ ।

**'ताउ उवरिअणुक्कसु'** इति, "विसेसअहिआ" इति पदमत्रापि संबध्यते, यवमध्यमोपरितनयोगस्थानस्थजीवेभ्य उपरितनानुत्कृष्टयोगस्थानस्था जीवा विशेषाधिकाः । अत्र भावना द्वितीयप्रकाराल्पबहुत्वोक्तनीत्या विधेया ।

**'ताउ सयलुवरिमेसु'** इति, 'विसेसअहिया' इति पदमत्रापि संबध्यते, उपरितनानुत्कृष्टयोगस्थानस्थजीवेभ्य उपरितनसर्वयोगस्थानस्था जीवा विशेषाधिकाः । भावना पूर्ववत् ।

**'तओ सयलजोगठाणेसु'** इति, 'विसेसअहिया' इति पदमत्रापि संबध्यते, उपरितनसर्वयोगस्थानस्थजीवेभ्यः सर्वयोगस्थानस्था जीवा विशेषाधिकाः । **इयमत्र भावना-**अत्र यवमध्यमादधस्तनानि योगस्थानानि प्रविष्टानीति तद्गता जीवाः पूर्वतोऽधिकाः । उपरितनयोगस्थानेषु ८०६ जीवाः, यवमध्यमादधस्तनयोगस्थानेषु वर्तमाना जीवाः ६१६, अतः सर्वयोगस्थानगता जीवाः ८०६+६१६=१४२२ भवन्ति ॥ १६७।१६८।१६९ ॥

इति जीवविषयकप्ररूपणायाः षड्द्वाराणि समाप्तानि । समाप्तेषु च तेषु अष्टप्ररूपणाऽन्तर्गता स्थानप्ररूपणा समाप्ता, तत्समाप्तौ च योगस्थानप्ररूपणा समाप्ता ।

— इति योगस्थानप्ररूपणा —

## ॥ प्रदेशबन्धस्थानप्ररूपणा ॥

तदेवं गता योगस्थानप्ररूपणा । विस्तरेण निरूपितान्येतानि योगस्थानान्येव प्रदेशबन्धकारणानि, नान्यानीति सूचनार्थं सम्प्रति क्रमप्राप्तां प्रदेशबन्धस्थानप्ररूपणां प्रारभते—

**जत्तिअजोगट्ठाणा तत्तिअठाणा पएसबंधस्स ।**
**णवरं विसेसअहिया पयडिविसेसेण विण्णेया ॥१७०॥**

(प्रे०) 'जत्तिअजोगट्ठाणा' इत्यादि, यावन्ति योगस्थानानि तावन्त्येव प्रदेशबन्धस्थानानि । नवरं प्रकृतिविशेषेणाधिकानि विज्ञेयानि, प्रकृतिविशेषेण योगस्थानेभ्यः प्रदेशबन्धस्थानानि विशेषाधिकानि भवन्तीत्यर्थः । इति समासार्थः । व्यासार्थः पुनरयम्—सर्वजघन्ययोगस्थानेन ज्ञानावरणीयं कर्म बध्नतो जीवस्यैकं प्रदेशबन्धस्थानम्, प्रक्षेपाधिकद्वितीययोगस्थानेन ज्ञानावरणीयं कर्म बध्नतो द्वितीयं प्रदेशबन्धस्थानम्, पुनः प्रक्षेपाधिकतृतीययोगस्थानेन तद् बध्नतस्तृतीयं प्रदेशबन्धस्थानम्, पुनः प्रक्षेपाधिकचतुर्थयोगस्थानेन तद् बध्नतश्चतुर्थं प्रदेशबन्धस्थानम्, इत्येवमन्तिमं सर्वोत्कृष्टयोगस्थानं यावद् वक्तव्यम् । एवं ज्ञानावरणीयकर्मणो यावन्ति योगस्थानानि तावन्त्येव प्रदेशबन्धस्थानानि भवन्ति । एवमायुरन्तराऽन्यषट्कर्मस्वपि वक्तव्यम् । आयुष्ययं विशेषः—आयुःकर्मणो यावन्ति योगस्थानानि तावन्ति प्रदेशबन्धस्थानानि न भवन्ति, उपपातैकान्तवृद्धियोगस्थानानामायुर्बन्धाप्रायोग्यत्वात् । नन्वयं विशेषो मूले तु नोक्तः ? इति चेत्, सत्यम्, "व्याख्यानतो विशेषप्रतिपत्तिः" इत्यतिप्रसिद्धन्यायोऽत्राश्रयणीयः ।

सम्प्रति "णवरं विसेसअहिया" इत्याद्युत्तरार्धस्य व्यासार्थो ज्ञानावरणीयकर्माश्रित्य प्रदर्श्यते, तद्यथा—ज्ञानावरणीयबन्धकाले कदाचिदष्टौ, कदाचित् सप्त कदाचिच्च षट् कर्माणि बध्यन्ते । तत्राष्टविधबन्धकाले ज्ञानावरणीयकर्मणो यावन्ति योगस्थानानि तावन्ति प्रदेशबन्धस्थानानि भवन्ति, परन्तु सप्तविधबन्धकाले षड्विधबन्धकाले च यानि प्रदेशबन्धस्थानानि तान्यधिकानि भवन्ति । यतो योगस्थानानि तु तान्येव । इदमुक्तं भवति—यावन्ति योगस्थानानि सन्ति तेषु प्रत्येकयोगस्थाने ज्ञानावरणीयकर्मणो यथाऽष्टविधबन्धकाले एकं प्रदेशबन्धस्थानं भवति, तथैव सप्तविधबन्धकाले एकमेकं च षड्विधबन्धकाले भवति; अष्टविधबन्धकालापेक्षया सप्तविधबन्धकाले सप्तविधबन्धकालापेक्षया च षड्विधबन्धकाले भागहाराणां स्तोकत्वेनाधिकप्रदेशानां प्राप्यमाणत्वात् । इति ज्ञानावरणीयकर्मणो सप्तविधबन्धस्य षड्विधबन्धस्य च यावन्ति प्रदेशबन्धस्थानानि तावन्ति योगस्थानेभ्योऽधिकानि ।

ननु यदि अष्टविधबन्धकाले, सप्तविधबन्धकाले षड्विधबन्धकाले च प्रत्येकयोगस्थाने ज्ञानावरणीयकर्मणो भिन्नं भिन्नं प्रदेशबन्धस्थानं भवति तदा तु योगस्थानेभ्यः प्रदेशबन्धस्थानानि त्रिगुणानि भवितव्यानि तत्कथं विशेषाधिकान्येवोक्तानि ? इति चेद्, न, अष्टविधबन्धकाले ज्ञाना-

वरणीयस्य यावन्तः प्रदेशा बद्धास्तस्यैव तावन्त एव प्रदेशाः सप्तविधबन्धकाले यस्मिन् योगस्थाने बद्धास्तत्र सप्तविधबन्धस्य प्रदेशबन्धस्थानं भिन्नं न भवति, एवं सप्तविधबन्धकाले ज्ञानावरणीयस्य यावन्तः प्रदेशा बध्यन्ते तस्यैव तावन्त एव प्रदेशाः षड्विधबन्धकाले यस्मिन् योगस्थाने बद्धास्तत्र षड्विधबन्धस्य प्रदेशबन्धस्थानं भिन्नं न भवति, समानप्रदेशबन्धद्वियोगस्थानयोरेकस्यैव प्रदेशबन्धस्थानस्य सत्त्वात् । अतो यावत्सु योगस्थानेषु अष्टविधबन्धकालापेक्षया सप्तविधबन्धकाले समानाः प्रदेशा बध्यन्ते तावन्ति प्रदेशबन्धस्थानानि अपवर्त्य यावन्ति अवशिष्टानि तावन्ति सप्तविधबन्धस्य प्रदेशबन्धस्थानान्यधिकानि भवन्ति, न तु सर्वाणि । एवं यावत्सु योगस्थानेषु सप्तविधबन्धकालापेक्षया षड्विधबन्धकाले समानाः प्रदेशा बध्यन्ते तावन्ति प्रदेशबन्धस्थानान्यपवर्त्य यावन्ति शिष्टानि तावन्ति षड्विधबन्धस्य प्रदेशबन्धस्थानान्यधिकानि भवन्ति, न तु सर्वाणि । अतो ज्ञानावरणीयकर्मणो योगस्थानापेक्षया प्रदेशबन्धस्थानानि विशेषाधिकानि भवन्ति ।

सम्प्रति कियत्सु योगस्थानेषु अष्टविधबन्धापेक्षया सप्तविधबन्धे ज्ञानावरणीयकर्मणः समानाः प्रदेशा बध्यन्ते इति प्रदर्श्यते- जघन्ययोगस्थाने सप्तविधबन्धे यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशा जघन्ययोगस्थाने बद्धप्रदेशानां सप्तमभागेनाधिकाः प्रदेशा यत्र बध्यन्ते तत्र, अर्थाज्जघन्ययोगस्थानात् प्रथमद्विगुणहानिसर्वयोगस्थानानां सप्तमभागप्रमाणेषु योगस्थानेषु गतेषु अष्टविधबन्धे बध्यन्ते । ततो जघन्ययोगस्थानात् सप्तप्रक्षेपाधिकयोगस्थाने सप्तविधबन्धकाले यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशाः पूर्वोक्तात् सप्तमभागादष्टप्रक्षेपाधिकयोगस्थानेऽष्टविधबन्धे बध्यन्ते । ततः पुनः सप्तप्रक्षेपाधिकयोगस्थाने सप्तविधबन्धे यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशाः पूर्वोक्ताद् योगस्थानादष्टप्रक्षेपाधिकयोगस्थानेऽष्टविधबन्धे बध्यन्ते । इत्येवं क्रमशः पूर्वपूर्वतः सप्तप्रक्षेपाधिकयोगस्थाने सप्तविधबन्धे यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशाः पूर्वपूर्वतोऽष्टप्रक्षेपाधिकयोगस्थानेऽष्टविधबन्धे बध्यन्ते । एवं च तावद् वाच्यं यावदुत्कृष्टयोगस्थानेऽष्टविधबन्धे बद्धा ज्ञानावरणीयकर्मप्रदेशास्तथा उत्कृष्टयोगस्थानबद्धप्रदेशानामष्टमभागेन हीनाः प्रदेशा यत्र बध्यन्ते तत्र, अर्थादुत्कृष्टयोगस्थानात् चरमद्विगुणहानिसर्वयोगस्थानानां चतुर्थभागयोगस्थानेष्ववतीर्णेषु सप्तविधबन्धे बद्धा ज्ञानावरणीयप्रदेशास्तुल्याः स्युः । अन्तिमद्विगुणहान्युपरितनचतुर्थभागयोगस्थानेषु सप्तविधाष्टविधबन्धयोः संवेधो न वक्तव्य इति यावद् । यतस्तेषु योगस्थानेषु अष्टविधबन्धे उत्कृष्टयोगस्थाने बद्धप्रदेशेभ्यः सप्तविधबन्धेऽधिकाः प्रदेशा बध्यन्ते । चरमद्विगुणहान्युपरितनचतुर्थभागो योगस्थानानि सर्वयोगस्थानानां साधिकाष्टमो भागः, उत्तरोत्तरद्विगुणवृद्धौ द्विगुणानां योगस्थानानां सत्त्वाद् । इत्थमत्र सर्वयोगस्थानानां साधिकाष्टमभागयोगस्थानानि विहाय सप्तविधबन्धस्य शेषयोगस्थानेषु प्रतियोगस्थानसप्तके एकस्मिन् योगस्थानेऽष्टविधबन्धापेक्षया समानप्रदेशा बध्यन्ते, षट्सु योगस्थानेषु विषमा बध्यन्ते । अतः सप्तविधबन्धे

सप्तयोगस्थानेषु षट्प्रदेशबन्धस्थानान्यधिकानि भवन्ति । अष्टमभागयोगस्थानेषु तु यावन्ति योगस्थानानि तावन्ति प्रदेशबन्धस्थानानि वर्धन्ते ।

अष्टमभागन्यूनसर्वयोगस्थानेषु वृद्धानि प्रदेशबन्धस्थानानि सर्वाणि कियन्ति भवन्तीति बोधार्थं त्रैराशिकं विधेयम् । तद्यथा- यदि सप्तयोगस्थानेषु षट् प्रदेशबन्धस्थानानि वर्धन्ते तर्हि अष्टभागहीनसर्वयोगस्थानेषु कियन्ति प्रदेशबन्धस्थानानि वर्धेरन् ? सर्वयोगस्थानानि$\times\frac{७}{८}\times\frac{१}{७}\times\frac{६}{१}=\frac{६}{८}\times$सर्वयोगस्थानानि । इत्येवमष्टमागहीनसर्वयोगस्थानेषु $\frac{६}{८}$ भागेन प्रदेशबन्धस्थानानि वृद्धानि । तेषूपरितनानामष्टमभागप्रदेशबन्धस्थानानां प्रक्षेपे कृते $\frac{६}{८}+\frac{१}{८}=\frac{७}{८}$प्रदेशबन्धस्थानानि । इत्येवं सप्तविधबन्धमाश्रित्य ज्ञानावरणीयकर्मणः सर्वयोगस्थानापेक्षया $\frac{७}{८}$ भागेन प्रदेशबन्धस्थानानि वृद्धानि ।

साम्प्रतं कतिषु योगस्थानेषु सप्तविधबन्धापेक्षया षड्विधबन्धे ज्ञानावरणीयकर्मणः समानाः प्रदेशा बध्यन्ते इति चिन्त्यते,-जघन्ययोगस्थाने षड्विधबन्धे यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशा जघन्ययोगस्थानात् प्रथमद्विगुणहानियोगस्थानानां षष्ठभागप्रमाणेषु योगस्थानेषु गतेषु सप्तविधबन्धे बध्यन्ते । ततो जघन्ययोगस्थानात् षट्प्रक्षेपाधिकयोगस्थाने षड्विधबन्धे यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशाः षष्ठभागान्तिमयोगस्थानात् सप्तप्रक्षेपाधिकसप्तविधबन्धे बध्यन्ते । ततः पुनः पूर्वतः षट्प्रक्षेपाधिकयोगस्थाने षड्विधबन्धे यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशाः पूर्वतः सप्तप्रक्षेपाधिकयोगस्थाने सप्तविधबन्धे बध्यन्ते । इत्येवं क्रमशः पूर्वपूर्वतः षट्प्रक्षेपाधिकयोगस्थाने षड्विधबन्धे यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशाः पूर्वपूर्वतः सप्तप्रक्षेपाधिकयोगस्थाने सप्तविधबन्धे बध्यन्ते । एवं तावद् वाच्यं यावदुत्कृष्टयोगस्थाने सप्तविधबन्धे बद्धा ज्ञानावरणीयकर्मप्रदेशास्तथा उत्कृष्टयोगस्थानबद्धप्रदेशानां सप्तमभागेन हीनाः प्रदेशा यत्र बध्यन्ते तत्र, अर्थादुत्कृष्टयोगस्थानात् चरमद्विगुणहानिसर्वयोगस्थानानां द्विसप्तभागयोगस्थानेषु अवतीर्णेषु षड्विधबन्धे बद्धा ज्ञानावरणीयकर्मप्रदेशास्तुल्याः स्युः । चरमद्विगुणहान्युपरितनद्विसप्तभागयोगस्थानेषु षड्विधसप्तविधबन्धयोः संवेधो न वक्तव्य इत्यर्थः । यतस्तेषु योगस्थानेषु सप्तविधबन्धे उत्कृष्टयोगस्थाने बद्धप्रदेशेभ्यः षड्विधबन्धेऽधिकाः प्रदेशा बध्यन्ते । चरमद्विगुणहान्युपरितनद्विसप्तभागे योगस्थानानि सर्वयोगस्थानानां सप्तमभागो भवति । इत्थमत्र सर्वयोगस्थानानां सप्तमभागयोगस्थानानि विहाय षड्विधबन्धस्य शेषयोगस्थानेषु प्रतियोगस्थानषट्के एकस्मिन् योगस्थाने सप्तविधबन्धापेक्षया समानाः प्रदेशा बध्यन्ते, पञ्चसु योगस्थानेषु विषमा बध्यन्ते । अतः षड्विधबन्धे षड्योगस्थानेषु पञ्चप्रदेशबन्धस्थानानि वर्धन्ते । सप्तमभागयोगस्थानेषु तु यावन्ति योगस्थानानि तावन्ति प्रदेशबन्धस्थानानि वर्धन्ते ।

सप्तमभागन्यूनसर्वयोगस्थानेषु वृद्धानि प्रदेशबन्धस्थानानि सर्वाणि कियन्ति भवन्तीति ज्ञानार्थं त्रैराशिकं विधेयम्, तद्यथा-यदि षड्योगस्थानेषु पञ्चप्रदेशबन्धस्थानानि वर्धन्ते तर्हि सप्तम-

भागहीनसर्वयोगस्थानेषु कियन्ति प्रदेशबन्धस्थानानि वर्धेरन् सर्वयोगस्थान × $\frac{१}{७} \times \frac{७}{६} \times \frac{५}{१} = \frac{५}{७}$ सर्वयोग० इत्येवं सप्तमभागन्यूनसर्वयोगस्थानेषु सर्वयोगस्थानानां पञ्चसप्तभागेन ($\frac{५}{७}$) प्रदेशबन्धस्थानानि वृद्धानि । तेषूपरितनानां सप्तमभागप्रदेशबन्धस्थानानां प्रक्षेपे कृते $\frac{५}{७} + \frac{१}{७} = \frac{६}{७}$ प्रदेशबन्धस्थानानि । इत्येवं षड्विधबन्धमाश्रित्य ज्ञानावरणीयकर्मणः सर्वयोगस्थानापेक्षया $\frac{६}{७}$ भागेन प्रदेशबन्धस्थानानि वृद्धानि ।

अथ षड्विधबन्धमाश्रित्य सप्तविधबन्धमाश्रित्य च वृद्धानां प्रदेशबन्धस्थानानां योगे कृते $\frac{७}{९} + \frac{६}{७} = \frac{४९}{६३} + \frac{५४}{६३} = \frac{१०३}{६३} = १\frac{४०}{६३}$ प्रदेशबन्धस्थानानि । इत्येवं ज्ञानावरणीयकर्मणो योगस्थानापेक्षया $१\frac{४०}{६३}$ गुणप्रदेशबन्धस्थानान्यधिकानि । तेष्वष्टविधबन्धस्य प्रदेशबन्धस्थानानां योगे कृते ज्ञानावरणीयकर्मणः सर्वाणि प्रदेशबन्धस्थानानि [$१ + १\frac{४०}{६३}$] $२\frac{४०}{६३}$ गुणानि भवन्ति ।

अत्रायं विशेषः– आयुर्बन्धकालेऽष्टानामेव प्रकृतीनां बन्धसद्भावेन सप्तविधबन्धं षड्विधबन्धञ्चाश्रित्याधिकप्रदेशबन्धस्थानानामप्राप्यमाणत्वादायुषः स्वप्रायोग्याणि यावन्ति योगस्थानानि तावन्त्येव प्रदेशबन्धस्थानानि भवन्ति । विशेषाधिकानि न भवन्ति । एवं मोहनीयबन्धकाले षट्प्रकृतिबन्धस्यासद्भावेन षड्विधबन्धमाश्रित्याधिकप्रदेशबन्धस्थानानामप्राप्यमाणत्वाद् मोहनीयस्य सप्तविधबन्धमेवाश्रित्याधिकप्रदेशबन्धस्थानानि भवन्ति । अतो मोहनीयस्य प्रदेशबन्धस्थानानि योगस्थानापेक्षया $\frac{७}{९}$ भागेनाधिकानि । तस्य सर्वाणि प्रदेशबन्धस्थानानि $१\frac{७}{९}$ गुणानि भवन्ति । दर्शनावरणीयादिपञ्चकर्मसु ज्ञानावरणीयवद् विभावनीयम् ।

## अत्रासत्कल्पनया स्थापनैवम्—

| षड्विधबन्धे प्राप्तदलिकानि | सप्तविधबन्धे प्राप्तदलिकानि | अष्टविधबन्धे प्राप्तदलिकानि | तत्तद्योगस्थाने बध्यमान-सर्वदलिकानि | योगस्थानक्रमः |
|---|---|---|---|---|
| ११२० | ९६० | ८४० | ६७२० | १ |
| | | ८५० | ६८०० | २ |
| | | ८६० | ६८८० | ३ |
| | | ८७० | ६९६० | ४ |
| | | ८८० | ७०४० | ५ |
| | | ८९० | ७१२० | ६ |
| १२०० | | ९०० | ७२०० | ७ |
| | १०४० | ९१० | ७२८० | ८ |
| | | ९२० | ७३६० | ९ |
| | | ९३० | ७४४० | १० |
| | | ९४० | ७५२० | ११ |
| | | ९५० | ७६०० | १२ |

| | | | | |
|---|---|---|---|---|
| १२८० | | ९६० | ७६८० | १३ |
| | | ९७० | ७७६० | १४ |
| | ११२० | ९८० | ७८४० | १५ |
| | | ९९० | ७९२० | १६ |
| | | १००० | ८००० | १७ |
| | | १०१० | ८०८० | १८ |
| | | १०२० | ८१६० | १९ |
| | | १०३० | ८२४० | २० |
| | | १०४० | ८३२० | २१ |
| | १२०० | १०५० | ८४०० | २२ |
| | | १०६० | ८४८० | २३ |
| | | १०७० | ८५६० | २४ |
| | | १०८० | ८६४० | २५ |
| | | १०९० | ८७२० | २६ |
| | | ११०० | ८८०० | २७ |
| | | १११० | ८८८० | २८ |
| | १२८० | ११२० | ८९६० | २९ |

| | |
|---|---|
| | ८४ |
| प्रथमद्विगुणहानिः | |
| द्वितीयद्विगुणहानिः | २५२ |
| तृतीयद्विगुणहानिः | ५८६ |
| चतुर्थद्विगुणहानिः | १२६० |
| पञ्चमद्विगुणहानिः | |
| षष्ठद्विगुणहानिः | |

| | | | | |
|---|---|---|---|---|
| १२२८८० | | | ७३७२८० | १५३६ ← |
| | १०७५२० | | ७५२६४० | १३४४ ← |
| | १२२८८० | १०७५२० | ८६०१६० | १०६६८ |

उत्कृष्टयोगस्थानम्

अथ प्रदर्शितस्थापनाव्याख्या क्रियते–सर्वयोगस्थानानि १०६६८ कल्पितानि । सप्त द्विगुणवृद्धिस्थानानि कल्पितानि । प्रथमादिद्विगुणवृद्धौ क्रमशः ८४, १६८, ३३६, ६७२, १३४४, २६८८, ५३७६ योगस्थानानि । जघन्ययोगस्थाने ६७२० कर्मदलिकानि बध्यन्ते, अतोऽष्टविधबन्धे, सप्तविधबन्धे षड्विधबन्धे च क्रमशः ८४०, ९६०, ११२० कर्मदलिकानि ज्ञानावरणीयस्य स्वभागतया परिणमन्ति । द्वितीययोगस्थाने ६८००, तृतीययोगस्थाने ६८८०,

चतुर्थयोगस्थाने ६९६० कर्मदलिकानि बध्यन्ते, इत्येवं क्रमश उत्कृष्टयोगस्थानं यावत् प्रतियोगस्थानेऽशीतिः कर्मदलिकान्यधिकानि बध्यन्ते ।

अथ सप्तविधबन्धेऽष्टविधबन्धे च कुत्र कुत्र प्रदेशाः समाना भवन्तीति स्थापनानुसारेण चिन्त्यते पूर्वं सत्कल्पनायां "जघन्ययोगस्थाने बद्धानां सर्वप्रदेशानां सप्तमभागेनाधिकाः प्रदेशा यत्र बध्यन्ते तत्र जघन्ययोगस्थाने सप्तविधबन्धे यावन्तः प्रदेशा बध्यन्ते तावन्त एव प्रदेशा अष्टविधबन्धे बध्यन्ते" इत्युक्तम् , अतोऽत्र जघन्ययोगस्थानाद् द्वादशयोगस्थानेषु गतेषु जघन्ययोगस्थाने सप्तविधबन्धे बद्धप्रदेशप्रमाणाः प्रदेशा अष्टविधबन्धे बध्यन्ते । जघन्ययोगस्थाने सप्तविधबन्धे ज्ञानावरणीयतया ९६० कर्मदलिकानि परिणतानि, एवं जघन्ययोगस्थानाद् त्रयोदशे योगस्थानेऽष्टविधबन्धेऽपि ज्ञानावरणीयतया ९६० कर्मदलिकानि परिणतानि । जघन्ययोगस्थानाद् द्वादशयोगस्थानेषु गतेषु बद्धाः प्रदेशा जघन्ययोगस्थाने बद्धानां सर्वप्रदेशानां सप्तमभागेनाधिका सन्त्येव । एवं द्वादश योगस्थानानि प्रथमद्विगुणहानिसर्वयोगस्थानानां सप्तमभागः सन्त्येव । तदनन्तरं सप्तविधबन्धे सप्तयोगस्थानानि गत्वाऽष्टविधबन्धे चाष्टयोगस्थानानि गत्वा सप्तविधबन्धेऽष्टविधबन्धे च ज्ञानावरणीयत्वतया परिणतानि दलिकानि समानानि भवन्ति । अत्र जघन्ययोगस्थानात् सप्तयोगस्थानेषु गतेषु सप्तविधबन्धे ज्ञानावरणीयस्य १०४० दलिकानि भवन्ति । एवमष्टविधबन्धे यत्र ९६० दलिकानि सन्ति ततोऽष्टयोगस्थानेषु गतेषु ज्ञानावरणीयस्य १०४० दलिकानि भवन्ति । अतस्तद्द्वयोर्योगस्थानयोः प्रदेशबन्धस्थानमेकमेव । एवं सप्तविधबन्धे यत्र ज्ञानावरणीयस्य १०४० दलिकानि ततः सप्तयोगस्थानेषु गतेषु १२०० दलिकानि भवन्ति । अष्टविधबन्धे यत्र ज्ञानावरणीयस्य १०४० दलिकानि ततोऽष्टयोगस्थानेषु गतेषु १२०० दलिकानि भवन्ति । अतस्तद्द्वयोर्योगस्थानयोः प्रदेशबन्धस्थानमेकमेव । एवं तावद् वाच्यं यावदुत्कृष्टयोगस्थानेऽष्टविधबन्धे बद्धाः प्रदेशास्तथोत्कृष्टयोगस्थाने बद्धानां सर्वप्रदेशानामष्टमभागेन हीनाः प्रदेशा यस्मिन् योगस्थाने बध्यन्ते तस्मिन् योगस्थाने सप्तविधबन्धे बद्धाः प्रदेशाः समानाः स्युः । उत्कृष्टयोगस्थाने सर्वे प्रदेशाः ८६०१६० बध्यन्ते । तेषामष्टमभागेन हीनाः ७५२६४० प्रदेशाः उत्कृष्टयोगस्थानात् चतुश्चत्वारिंशदधिकत्रिशतोत्तरैकसहस्र ( १३४४ ) तमे योगस्थाने बध्यन्ते । चतुश्चत्वारिंशदधिकत्रिशतोत्तरैकसहस्र (१३४४) तमे योगस्थाने सप्तविधबन्धे १०७५२० प्रदेशाः बध्यन्ते । तावन्त एव प्रदेशा उत्कृष्टयोगस्थानेऽष्टविधबन्धे बध्यन्ते । अत उत्कृष्टयोगस्थानाद् चतुश्चत्वारिंशदुत्तरत्रिशताधिकैकसहस्र(१३४४)तमं योगस्थानं यावत् सप्तविधबन्धे सप्तयोगस्थानानि गत्वाऽष्टविधबन्धे चाष्टौ योगस्थानानि गत्वा ज्ञानावरणीयस्य समानाः प्रदेशा भवन्ति ।

अथ षड्विधबन्धे सप्तविधबन्धे च कुत्र कुत्र समानप्रदेशा बध्यन्ते इति चिन्त्यते—जघन्ययोगस्थानात् चतुर्दशयोगस्थानानि व्यतिक्रम्य पञ्चदशतमे योगस्थाने जघन्ययोगस्थाने बद्धानां सर्वदलि-

कानां षड्भागेनाधिकाः प्रदेशा बध्यन्ते। अतः पञ्चदशतमे योगस्थाने ज्ञानावरणीयस्य सप्तविधबन्धे बद्धाः प्रदेशास्तथा जघन्ययोगस्थाने षड्विधबन्धे बद्धाः प्रदेशास्तुल्याः । जघन्ययोगस्थाने षड्विधबन्धे ११२० प्रदेशा बद्धाः, जघन्ययोगस्थानात्पञ्चदशतमे योगस्थाने सप्तविधबन्धेऽपि तावन्त एव प्रदेशा बध्यन्ते। अतस्तयुद्वयोर्योगस्थानयोरेकमेव प्रदेशबन्धस्थानम्। तदनन्तरं सप्तविधबन्धे सप्त योगस्थानानि षड्विधबन्धे च षड् योगस्थानानि गत्वा समानाः प्रदेशा बध्यन्ते। जघन्ययोगस्थानात् षड्योगस्थानेषु गतेषु ज्ञानावरणीयस्य १२०० कर्मदलिकानि बध्यन्ते। एवं सप्तविधबन्धे यत्र ११२० कर्मदलिकानि बध्यन्ते ततः सप्तयोगस्थानानि गत्वा १२०० कर्मदलिकानि बध्यन्ते। एवं षड्विधबन्धे यत्र ज्ञानावरणीयस्य १२०० दलिकानि ततः षड्योगस्थानेषु गतेषु १२८० दलिकानि बध्यन्ते, सप्तविधबन्धे यत्र १२०० दलिकानि ततः सप्तयोगस्थानेषु गतेषु १२८० दलिकानि बध्यन्ते। एवं तावद् वाच्यं यावदुत्कृष्टयोगस्थाने सप्तविधबन्धे बद्धाः प्रदेशास्तथोत्कृष्टयोगस्थाने बद्धानां सर्वप्रदेशानां सप्तभागेन हीनाः प्रदेशा यत्र बध्यन्ते तस्मिन् योगस्थाने षड्विधबन्धे बद्धाः प्रदेशास्तुल्याः स्युः। उत्कृष्टयोगस्थाने सर्वे प्रदेशाः ८६०१६० बध्यन्ते। तेषां सप्तमभागेन हीनाः ७३७२८० प्रदेशा उत्कृष्टयोगस्थानात् प्राक् षट्त्रिंशदधिकपञ्चशतोत्तरैकसहस्र (१५३६) तमे योगस्थाने बध्यन्ते। उत्कृष्टयोगस्थानात् प्राक षट्त्रिंशदुत्तरपञ्चशताधिकैकसहस्र (१५३६) तमे योगस्थाने षड्विधबन्धे १२२८८० दलिकानि बध्यन्ते। तावन्त्येव दलिकानि उत्कृष्टयोगस्थाने सप्तविधबन्धे बध्यन्ते। अत उत्कृष्टयोगस्थानात् प्राक् षट्त्रिंशदधिकपञ्चशतोत्तरैकसहस्र (१५३६) तमं योगस्थानं यावत् षड्विधबन्धे षड्योगस्थानानि गत्वा सप्तविधबन्धे च सप्तयोगस्थानानि गत्वा ज्ञानावरणीयस्य तुल्याः प्रदेशा भवन्ति।

अथ प्रदर्शितस्थापनानुसारेण कियन्ति प्रदेशबन्धस्थानानि वर्धन्त इति चिन्त्यते- यद्यपि स्थापनानुसारेण वास्तविकं च सप्तमद्विगुणहानौ यावन्ति योगस्थानानि ततः किञ्चिन्न्यूनानि योगस्थानान्यन्यसर्वद्विगुणहानिषु सन्ति, परमत्र गणितप्रक्रियासौकर्यानुरोधेन सप्तमद्विगुणहानौ यावन्ति योगस्थानानि तावन्त्येव योगस्थानान्यन्यसर्वद्विगुणहानिषु कल्प्यन्ते। अतः सर्वाणि योगस्थानानि १०७५२ सन्ति।

आदौ तावत् सप्तविधबन्धमाश्रित्य कियन्ति प्रदेशबन्धस्थानानि वर्धन्त इति चिन्त्यते। अत्रेदं त्रैराशिकम्—यदि सप्तयोगस्थानेषु षट्प्रदेशबन्धस्थानानि वर्धन्ते तर्हि अष्टभागन्यूनेषु १०७५२ योगस्थानेषु कियन्ति वर्धेरन्? १०७५२ योगस्थानानामष्टमो भागः १३४४। १०७५२-१३४४=९४०८। $\frac{९४०८}{७} \times \frac{६}{१} \times \frac{१}{१}$ = ८०६४, तेष्वसमानप्रदेशबन्धानां चरमाष्टमभागप्रदेशबन्धस्थानानां प्रक्षेपे कृते [८०६४ + १३४४=]९४०८ प्रदेशबन्धस्थानानि जातानि। इत्येवं सप्तविधबन्धमाश्रित्य ज्ञानावरणीयकर्मणः ९४०८ प्रदेशबन्धस्थानानि वर्धन्ते।

अथ षड्विधबन्धमाश्रित्य कियन्ति प्रदेशबन्धस्थानानि वर्धन्ते इति चिन्त्यते । अत्रेदं त्रैराशिकम्—यदि षड्योगस्थानेषु पञ्च प्रदेशबन्धस्थानानि वर्धन्ते तर्हि सप्तमभागन्यूनेषु १०७-५२ योगस्थानेषु कियन्ति प्रदेशबन्धस्थानानि वर्धेरन् ? १०७५२ योगस्थानानां सप्तमो भागः १५३६ । १०७५२-१५३६=९२१६, $\frac{\overset{१५३६}{९२१६}}{१}\times\frac{५}{६}$=७६८० । ७६८०+१५३६=९२१६ ।

इत्येवं षड्विधबन्धमाश्रित्य ज्ञानावरणीयकर्मणः ९२१६ प्रदेशबन्धस्थानानि वर्धन्ते । ९२१६+९४०८=१८६२४, १८६२४÷१०७५२=१$\frac{७८७२}{१०७५२}$=१$\frac{१२३}{१६८}$ । इत्येवं ज्ञानावरणीयकर्मणो योगस्थानापेक्षया ज्ञानावरणीयकर्मणः प्रदेशबन्धस्थानानि १$\frac{१२३}{१६८}$ गुणाधिकानि । तेष्वष्टविधबन्धस्य प्रदेशबन्धस्थानानां प्रक्षेपे कृते ज्ञानावरणीयकर्मणः सर्वप्रदेशबन्धस्थानानि २$\frac{१२३}{१६८}$ गुणानि भवन्ति । इत्येवं दर्शनावरणीयादिपञ्चकर्मस्वपि परिभावनीयम् । मोहनीये षड्विधबन्धस्य प्रदेशबन्धस्थानानि न वक्तव्यानि । आयुषि तु सप्तविधबन्धस्यापि योगस्थानानि न वक्तव्यानि । एवमायुर्बन्धाऽप्रायोग्येषु योगस्थानेषु प्रदेशबन्धस्थानानि न वक्तव्यानि ।

ननु यथा सप्तविधबन्धेऽष्टविधबन्धापेक्षया यावत्सु योगस्थानेषु समानाः प्रदेशा बध्यन्ते, एवं षड्विधबन्धे सप्तविधबन्धापेक्षया यावत्सु योगस्थानेषु समानाः प्रदेशा बध्यन्ते तावन्ति प्रदेशबन्धस्थानान्यपवर्तितानि तथैव षड्विधाष्टविधबन्धयोः संवेधं विधाय षड्विधबन्धेऽष्टविधबन्धापेक्षया यावत्सु योगस्थानेषु समानाः प्रदेशा बध्यन्ते तावन्ति योगस्थानानि कथं नापवर्तितानि ? इति चेद्, उच्यते, षड्विधबन्धे सप्तविधबन्धापेक्षया येषु योगस्थानेषु समानाः प्रदेशा बध्यन्ते किञ्चिन्न्यूनेषु तेषु एव योगस्थानेषु षड्विधबन्धेऽष्टविधबन्धापेक्षया समानाः प्रदेशा बध्यन्ते । तानि च षड्विधसप्तविधबन्धसंवेधेऽपवर्तितान्येवेति षड्विधाष्टविधबन्धसंवेधे एकमपि नवीनमपवर्तनीयं प्रदेशबन्धस्थानं न प्राप्यते ।

ननु सप्तविधबन्धेऽष्टविधबन्धापेक्षया षड्विधबन्धे च सप्तविधबन्धापेक्षया यावत्सु योगस्थानेषु समानाः प्रदेशा बध्यन्ते तावत्सु योगस्थानेष्वपवर्तितेष्वपि ज्ञानावरणीयकर्मणो योगस्थानापेक्षया प्रदेशबन्धस्थानानि द्विगुणतोऽप्यधिकानि भवन्तीति कथं विशेषाधिकानि भवन्तीति पूर्वं समाहितम् ? एवमायुषः प्रदेशबन्धस्थानानि तुल्यान्येव भवन्ति न विशेषाधिकानीति चेद्, सत्यम्, अत्र संख्यातगुणानि प्रदेशबन्धस्थानानि विशेषाधिकत्वेन विवक्षितानि, एवं प्रधानफलमाश्रित्य विशेषाधिकान्युक्तानीत्यायुषि विशेषाधिकत्वाभावे न दोषः । यद्वा "नवरं विसेसअहिया पयडिविसेसेण विन्नेया" इत्युत्तरार्धस्यायमर्थः कार्यः—प्रकृतिः=स्वभावः, स्वभावश्चैवम्-आयुषो बन्धेऽष्टानामेव प्रकृतीनां बन्धो भवति, मोहनीयबन्धे सप्तानामष्टानां वा प्रकृतीनां बन्धो भवति, ज्ञानावरणीयादिषट्प्रकृतिबन्धे षण्णां, सप्तानामष्टानां वा प्रकृतीनां बन्धो भवति, इति स्वभावभेदतया कस्यचित्कर्मणः प्रदेशबन्धस्थानानि अन्यकर्मणः प्रदेशबन्धस्थानेभ्यो विशेषाधिकानि, कस्यचित्

विशेषहीनानि भवन्ति । तद्यथा—आयुषः प्रदेशबन्धस्थानानि सर्वस्तोकानि, तेभ्यो मोहनीयस्य विशेषाधिकानि, तेभ्यो ज्ञानावरणीयादिषट्कर्मणां विशेषाधिकानि, परस्परं च तुल्यानि । इत्येवमत्र 'णवरं' इत्याद्युत्तरार्धेन योगस्थानप्रदेशबन्धस्थानानामल्पबहुत्वं न वक्तव्यम्, किन्तु भिन्नभिन्नकर्मणां प्रदेशबन्धस्थानानामल्पबहुत्वं वक्तव्यम् ॥१७०॥

'णवरं' इत्युत्तरार्धेन प्रकृतिविशेषेण प्रदेशबन्धस्थानानि विशेषाधिकानि भवन्तीति सामान्यत उक्तम्, परं कस्य कर्मणः प्रदेशबन्धस्थानेभ्यः कस्य कर्मणः प्रदेशबन्धस्थानानि विशेषाधिकानि कस्य च विशेषहीनानीति विशेषतो नोक्तम्, अतः सम्प्रति 'णवरं' इत्यनेन सामान्यत उक्तमेवाल्पबहुत्वं विशेषेण निरूपयन्नाह—

हुन्ते सव्वप्पाइं आउस्स पएसबंधठाणाणि ।
ताउ विसेसहियाइं मोहस्स तओ छकम्माणं ॥१७१॥

(प्रे०) 'हुन्ते' इत्यादि, आयुषः प्रदेशबन्धस्थानानि सर्वस्तोकानि, 'ताउ विसेसहियाइं मोहस्स' इति, 'पएसबंधठाणाणि' इत्यत्रापि संबध्यते, एवमग्रेऽपि, आयुषः प्रदेशबन्धस्थानेभ्यो मोहनीयस्य प्रदेशबन्धस्थानानि विशेषाधिकानि । अत्रेयं भावना उपपातैकान्तवृद्धियोगस्थानेषु आयुषो बन्धो न भवतीति तेषु आयुषः प्रदेशबन्धस्थानानि न भवन्ति, मोहनीयकर्मणस्तु भवन्ति । एवमायुर्बन्धकालेऽष्टानामेव प्रकृतीनां बध्यमानत्वादायुषः सप्तविधबन्धमाश्रित्य प्रदेशबन्धस्थानानि न भवन्ति, मोहनीयस्य तु सप्तविधबन्धमाश्रित्यापि प्रदेशबन्धस्थानानि भवन्ति । अतो मोहनीयस्योपपातैकान्तवृद्धियोगस्थानप्रमाणानि तथा सप्तविधबन्धमाश्रित्य प्राप्तानि प्रदेशबन्धस्थानानि आयुषः प्रदेशबन्धस्थानेभ्योऽधिकानि । 'तओ छकम्माणं' इति, मोहनीयस्य प्रदेशबन्धस्थानेभ्यो ज्ञानावरणीयादिषट्कर्मणां प्रत्येकं प्रदेशबन्धस्थानानि विशेषाधिकानि, स्वस्थाने च परस्परं तुल्यानि । इयमत्र भावना—मोहनीयबन्धे षड्विधबन्धो न भवतीति तन्निबन्धनानि प्रदेशबन्धस्थानानि मोहनीयस्य न भवन्ति, ज्ञानावरणीयादिषट्कर्मणां तु भवन्ति, अतो ज्ञानावरणीयादिषट्कर्मणां षड्विधबन्धे यावन्ति प्रदेशबन्धस्थानानि भवन्ति तावन्ति मोहनीयप्रदेशबन्धस्थानेभ्योऽधिकानि । मोहनीयस्य ज्ञानावरणीयादिषट्कर्मणां च प्रदेशबन्धस्थानानि कियन्ति भवन्तीति प्रदेशबन्धस्थाननिरूपणे प्रथमगाथायां सविस्तरं निरूपितम् । मोहनीयस्य प्रदेशबन्धस्थानानि स्वयोगस्थानेभ्यः सप्ताष्टभागाधिकैक(१$\frac{७}{८}$)गुणानि भवन्ति । षट्कर्मणां प्रदेशबन्धस्थानानि स्वयोगस्थानेभ्य एकचत्वारिंशत्षट्पञ्चाशद्भागाधिकद्विगुणानि २$\frac{४१}{५६}$ भवन्ति । असत्कल्पनया मोहनीयस्य षष्ट्यधिकैकशतोत्तरविंशतिसहस्राणि (२०१६०), षट्कर्मणां च षट्सप्तत्यधिकत्रिशतोत्तरनवविंशतिसहस्राणि (२९३७६) प्रदेशबन्धस्थानानि भवन्ति ॥१७१॥

इदानीं गाथात्रिकेन प्रकृताल्पबहुत्वं मार्गणासु चिन्तयति—

तिणरदुपणिंदितसपणमणवयकायुरललोहणाणेसुं ।
संयमतिदरिसणेसुं सुक्कभवियसम्मखइएसुं ॥१७२॥
सण्णिम्मि तहाहारे ओघव्व सगपयडीण तुल्लाइं ।
विकियमीसे कम्मे सुहमे मीसे अणाहारे ॥१७३॥
गयवेअउवसमेसुं छण्ह विसेसाहियाणि मोहत्तो ।
सेसासुं आउत्तो सत्तण्ह विसेसअहियाणि ॥१७४॥

(प्रे०) 'तिणर' इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, पञ्चेन्द्रियौघ-पर्याप्तपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसयोः, पञ्चमनःपञ्चवचनेषु, काययोगौघौदारिककाययोगयोः, लोभे, मतिश्रुतावधिमनःपर्यवलक्षणचतुर्ज्ञानेषु, संयमौघे, दर्शनत्रिके, शुक्ललेश्यायां, भव्ये, सम्यक्त्वौघ-क्षायिकसम्यक्त्वयोः संज्ञिन्याहारके चेति चतुस्त्रिंशन्मार्गणासु अल्पबहुत्वमोघवद् भवति । तच्चानन्तर-गाथायामेवोक्तम् । मनुष्यौघादिमार्गणासु ओघवदल्पबहुत्वनिरूपणे बीजं तासु त्रिविधबन्धस्थानसद्-भावः । मनुष्यौघादिमार्गणासु श्रेणिसत्त्वात् षट्प्रकृतिबन्धमाश्रित्यापि प्रदेशबन्धस्थानानि भवन्ति ।

इदानीमायुर्बन्धानर्हासु यासु मार्गणासु एकविधबन्धस्थानसद्भावः तास्वाह-"सगपयडीण तुल्लाइं विकियमीसे कम्मे सुहमे मीसे अणाहारे" इति, वैक्रियमिश्रादिपञ्चमार्गणासु स्व-स्यां यावत्यः प्रकृतयो बध्यन्ते तासां प्रदेशबन्धस्थानानि परस्परं तुल्यानि । अत्रेयं भावना-सूक्ष्मसंपरायं विना एतासु मार्गणासु आयुर्बन्धाभावात् सप्तकर्मणामेव प्रदेशबन्धस्थानानामल्पबहुत्वं वक्तव्यम् । तत्रैतासु श्रेणेरभावेन षड्विधबन्धाभावाद् ज्ञानावरणीयादिषट्कर्मणां षड्विधबन्धनि-बन्धनानि प्रदेशबन्धस्थानानि न भवन्ति । अतः सप्तानामपि कर्मणां प्रदेशबन्धस्थानानि तुल्यानि भवन्ति । सूक्ष्मसम्पराये श्रेणेः सत्त्वेऽपि षट्प्रकृत्यात्मकस्यैकविधबन्धस्थानस्यैव सद्भावादधिक-प्रदेशबन्धस्थानस्यालाभः ।

इदानीमायुर्बन्धानर्हयोर्द्विविधबन्धस्थानयोरवेदोपशममार्गणयोराह-"गयवेअउवसमेसुं-छण्ह विसेसाहियाणि मोहत्तो" इति, अवेदोपशममार्गणयोर्मोहनीयस्य प्रदेशबन्धस्थानेभ्यो ज्ञानावरणीयादिषट्कर्मणां प्रदेशबन्धस्थानानि विशेषाधिकानि । इयमत्र भावना-अवेदोपशमयोः श्रेणि-सत्त्वात् षड्विधबन्धमाश्रित्यापि प्रदेशबन्धस्थानानि भवन्ति, अतो ज्ञानावरणीयादिषट्कर्मणां षड्विध-बन्धमाश्रित्य यावन्ति प्रदेशबन्धस्थानानि भवन्ति तावन्ति मोहनीयप्रदेशबन्धस्थानेभ्योऽधिकानि ।

अथ शेषमार्गणास्वाह-'सेसासुं आउत्तो' इत्यादि, शेषासु एकोनत्रिंशदधिकैकशतमार्गणासु आयुषः प्रदेशबन्धस्थानेभ्यो ज्ञानावरणीयादिकर्मणां प्रदेशबन्धस्थानानि विशेषाधिकानि । अत्रेयं भावना उपपातैकान्तवृद्धियोगस्थानेषु आयुषः प्रदेशबन्धस्थानानि न भवन्ति, शेषसप्तप्रकृतीनां

तु भवन्ति । एवमायुर्बन्धकालेऽष्टानामेव प्रकृतीनां बन्धो भवति, ज्ञानावरणीयादिबन्धकाले तु सप्तानामपि प्रकृतीनां बन्धो भवति। अत आयुषः सप्तविधबन्धमाश्रित्य प्रदेशबन्धस्थानानि न भवन्ति, शेषसप्तप्रकृतीनां सप्तविधबन्धमाश्रित्यापि प्रदेशबन्धस्थानानि भवन्ति । इत्युपपातैकान्तवृद्धियोगस्थानेषु यावन्ति प्रदेशबन्धस्थानानि तथा सप्तविधबन्धमाश्रित्य यावन्ति योगस्थानानि तावत्प्रमाणानि सप्तकर्मणां प्रदेशबन्धस्थानानि आयुषः प्रदेशबन्धस्थानेभ्योऽधिकानि । तथा शेषमार्गणासु सूक्ष्मसम्परायगुणस्थानाप्राप्त्या ज्ञानावरणीयादीनां षड्विधबन्धनिबन्धनप्रदेशबन्धस्थानानामप्राप्यमाणत्वात् सप्तानामपि कर्मणां प्रदेशबन्धस्थानानि तुल्यानि भवन्ति।

शेषमार्गणा नामत इमाः- कृत्स्ननरकभेदाः, सर्वतिर्यग्भेदाः, अपर्याप्तमनुष्यः समामर्त्यभेदाश्चेति चतुश्चत्वारिंशद्गतिभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ विना सप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना निखिलकायभेदाः, औदारिकमिश्रः, वैक्रियकाय आहारकद्विकं चेति चत्वारो योगभेदाः, स्त्रीपुरुषनपुंसकवेदाः, लोभमन्तरा कषायत्रिकम्, अज्ञानत्रिकम्, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिदेशविरत्यसंयमाः, शुक्लामन्तरा पञ्चलेश्याः, अभव्यः, क्षायोपशमिकसास्वादनमिथ्यात्वान्यसंज्ञी चेति। इत्यष्टकर्मणां प्रदेशबन्धस्थानानामल्पबहुत्वम् । इत्येवं प्रदेशबन्धस्थानप्ररूपणा समाप्ता, तस्याः समाप्तौ च द्वितीयं स्थानद्वारं समाप्तम् ॥१७२।१७३।१७४॥

इति श्रीप्रेमप्रभाटीकासमलंकृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे द्वितीयं स्थानद्वारं समाप्तम् ।



## ॥ तृतीयं स्वामित्वद्वारम् ॥

निरूपितं प्रपञ्चेन स्थानद्वारम् । साम्प्रतं तृतीयं स्वामित्वद्वारं प्रारिप्सुरिमां गाथामाह—

**यो जोगे उक्कोसे वट्टइ बंधेइ पयडिमप्पयरं ।**
**सो चेव बंधगो खलु जेट्ठपएसस्स विण्णेयो ॥१७५॥**

(प्रे०) प्रदेशबन्धस्य योगाधीनत्वं पूर्वमसकृत् प्रतिपादितम् । तथाहि—जघन्ययोगव्यापारेण जघन्यप्रदेशबन्धः, उत्कृष्टयोगव्यापारेणोत्कृष्टप्रदेशबन्धो भवति । तदेवात्र ग्रन्थकारः प्रतिपादयन्नाह—'यो जोगे उक्कोसे वट्टइ' इति, अत्र यत्पदेन जीवो गृह्यते, जीवव्यतिरिक्तस्य योगासंभवाद् । एवमग्रेऽपि यथास्थाने बोध्यम् , यो जीवः उत्कृष्टयोगे=उत्कृष्टयोगव्यापारे वर्तते, यत्तदोर्नित्याभिसंबद्धत्वादाह—'सो चेव' इत्यादि, खलु वाक्यालङ्कारे, स एव जीवः, 'जेट्ठपएसस्स' इति, जातावेकवचनम् , ज्येष्ठानाम्=उत्कृष्टसंख्याकानां प्रदेशानां बन्धको विज्ञेयः । उत्कृष्टयोगव्यापारे पर्याप्तः संज्ञी जीवो वर्तते इति पूर्वं जीवस्थानेषु जघन्योत्कृष्टयोगविषयेऽल्पबहुत्वे प्रतिपादितम् । एतादृशोऽपि जीवो यदि बहुतरप्रकृतिबन्धको भवति तर्हि भागहाराणां बहुत्वेन विवक्षितप्रकृतौ प्रदेशभागः स्तोकः स्यात् , अतो बहुतरप्रकृतिबन्धकस्य व्यवच्छेदनार्थमाह—'बंधेइ पयडिमप्पयरं' इति, जातावेकवचनम् , यो जीवोऽल्पतराः प्रकृतीर्बध्नाति, भागहाराणां स्तोकत्वेन विवक्षितप्रकृतौ बृहत्प्रदेशभागप्राप्तेः ।

इत्थमत्रेदं समापतितम्-सर्वोत्कृष्टव्यापारवानल्पतरप्रकृतिबन्धकः पर्याप्तः च संज्ञी जीव उत्कृष्टप्रदेशबन्धस्वामी भवति । अत्रेदं ध्येयम्—कर्मदलिकबन्धानन्तरं विभागेन यस्यां प्रकृतौ यावन्तः प्रदेशाः स्वतया परिणमन्ति तावत्प्रदेशापेक्षयोत्कृष्टप्रदेशबन्धो बोध्यः, न तु दलविभाजनद्वारे प्रदर्शिताल्पबहुत्वापेक्षया, अन्यथा वेदनीयस्यैवोत्कृष्टप्रदेशबन्धः स्यात् , तस्यैवान्यज्ञानावरणीयाद्यपेक्षयोत्कृष्टप्रदेशानां प्राप्तिर्भवति । एवमग्रे जघन्यप्रदेशबन्धेऽपि बोध्यम् ॥१७५॥

तदेवं सामान्यतः उत्कृष्टप्रदेशबन्धस्वामी प्ररूपितः । इदानीमोघतो प्रत्येकमूलप्रकृतिमाश्रित्य विशिष्टमुत्कृष्टप्रदेशबन्धस्वामिनं चिन्तयति—

**छण्ह उवसामगो उअ खवगो मोहाउगाण सम्मत्ती ।**
**मिच्छत्ती वा सण्णी समग्गपज्जत्तिपज्जत्तो ॥१७६॥**

(प्रे०) "इहोत्कृष्टयोगे वर्तमान उत्कृष्टप्रदेशबन्धस्वामी भवति" इत्यनुसन्धेयम् । 'छण्ह उवसामगो उअ खवगो' इति, षण्णां ज्ञानदर्शनावरणीयवेदनीयनामगोत्रान्तरायलक्षणानां प्रत्येकं मूलप्रकृतीनामुत्कृष्टप्रदेशबन्धम् 'उपशामको यद्वा क्षपकः' सूक्ष्मस्वान्तस्य सूक्ष्मसम्पराये उत्कृष्टयोगे वर्तमानो जीवो विदधाति । सूक्ष्मसम्परायस्थो जीवो मोहनीयायुषी न बध्नात्यतस्तयू-

भागोऽधिको लभ्यते इत्यस्यैव ग्रहणम् । तथा चोक्तं शतकचूर्णौ–एएसिं छण्ह कम्माणं उक्कोसगो पदेसबंधो मोहणिज्जस्स बंधे वोच्छिन्ने सुहुमसंपराइगस्स उवसामगस्स खवगस्स वा उक्कोसे जोगे वट्टमाणस्स उक्कोसो लब्भति एक्क वा दो वा समया । हेट्ठिल्लोवि उक्कोसो जोगो लब्भति, तहि आउगस्स मोहणिज्जस्स य भागो लब्भतित्ति तहिं [पि] उक्कोसो पदेसबंधो ण भवइ ।

अथ मोहनीयायुष्कयोरुत्कृष्टप्रदेशबन्धस्वामिनं निरूपयति–'मोहाउगाण' इत्यादि, मोहायुष्कलक्षणस्य मूलप्रकृतिद्विकस्योत्कृष्टप्रदेशबन्धमुत्कृष्टवीर्यव्यापारवान् 'संज्ञी' विदधाति । संज्ञा मनोविकल्पनलब्धिः, सा विद्यते यस्यासौ संज्ञी, "शिखादिभ्य इन्" [सिद्ध० ७।२।४] इति मत्वर्थीयः 'इन्' प्रत्ययः । कथम्भूतः संज्ञीत्याह–'सम्मत्तो मिच्छत्ती वा' सम्यक्त्वमस्यास्तीति सम्यक्त्वी, मिथ्यात्वमस्यास्तीति मिथ्यात्वी, 'अतोऽनेकस्वरात्' [सिद्ध० ७।२।६] इति मत्वर्थीयः 'इन्' प्रत्ययः, सम्यग्दृष्टिमिथ्यादृष्टिर्वेत्यर्थः, पुनः कथम्भूतः संज्ञीत्याह–'समग्गपज्जत्तिपज्जत्तो' समग्राः षट्संख्याका याः पर्याप्तयस्ताभिः पर्याप्तः । असमाप्तसर्वपर्याप्तिकः सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा संज्ञी यद्वा पर्याप्तोऽसंज्ञी उत्कृष्टयोगे वर्तमानो न भवतीति तद्व्यवच्छेदनार्थमुक्तं 'संज्ञी समग्रपर्याप्तिपर्याप्तः' इति ।

अत्रायं विशेषो बोध्यः-मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामी सप्तप्रकृतिबन्धको भवति । कुतः ? इति चेद् ; तस्यैवाष्टप्रकृतिबन्धकापेक्षयाल्पतरप्रकृतिबन्धकत्वात् , *षड्विधबन्धकस्य तु मोहनीयबन्धाभावात् । आयुर्बन्धकालेऽष्टावपि प्रकृतयो बध्यन्ते इति आयुरुत्कृष्टप्रदेशबन्धस्वाम्यष्टप्रकृतिबन्धक एव भवति ॥१७६॥

तदेवमोघत उत्कृष्टप्रदेशबन्धस्वामित्वप्ररूपणा कृता । साम्प्रतं तामादेशतश्चिकीर्षुर्लाघवप्रियो ग्रन्थकृत् सर्वमार्गणासु वर्तमानं स्वामित्वसामान्यं प्रदर्शयन्नाह–

**सव्वासु बंधगो सो जेट्ठपएसस्स आउवज्जाणं ।**
**यो उक्कडजोगत्थो कुणइ पयडिबंधमप्पयरं ॥१७७॥**

(प्रे०) 'सव्वासु' इत्यादि, प्रथमाधिकारद्वारगाथाटीकायां प्रदर्शितासु सप्ततिशतसंख्याकासु मार्गणासु विनाऽऽयुष्कं सप्तकर्मणामुत्कृष्टप्रदेशानां बन्धकः स जीवः, भवतीति प्रयोजनीयम् , तथा चोक्तं–"श्रीहेमहंसगणिविरचितन्यायमञ्जूषायां "यत्रान्यत् क्रियापदं न श्रूयते ,तत्रास्तिर्भवन्तीपरः ꖦप्रयुज्यते" इति, यत्तदोर्नित्याभिसम्बद्धत्वादाह–'यो उक्कडजोगत्थो' इति, यः उत्कृष्टयोगस्थो भवति, यः उत्कृष्टयोगव्यापारे वर्तते इत्यर्थः, उत्कृष्टयोगव्यापारवानपि यदि

---

* ननु अल्पतरप्रकृतिबन्धकोऽपेक्ष्यते तर्हि षड्विधबन्धक एवोपादेय इत्याशङ्कायामाह-'षड्विधबन्धकस्य' इत्यादि-

ꖦ भवन्तीपरः=वर्तमानापरः । अत्रास्तिरित्युपलक्षणम् , तेन भवतिर्विद्यतिरित्यादयोऽपि प्रयुज्यन्ते । अस्य न्यायस्य विशेषावबोधार्थं "श्रीहेमप्रकाशं न्यायमञ्जूषां वा दृष्टिपथं कुर्वन्तु ।

बहुतरप्रकृतिबन्धको भवति तर्हि भागहाराणां बहुत्वेन विवक्षितप्रकृतौ स्तोकभागप्राप्तेरुत्कृष्टप्रदेश-बन्धस्वामी न भवितुमर्हतीत्याह–'कुणइ पयडिबंधमप्पयरं' इति, तथा योऽल्पतरं प्रकृतिबन्धं विदधाति । अल्पतरप्रकृतिबन्धक उत्कृष्टयोगे वर्तमानो जीवो बहूनि कर्मदलिकानि गृह्णाति, प्रकृतीनाञ्चाल्पतराणां बध्यमानत्वादबध्यमानप्रकृतिभागोऽधिको लभ्यते इत्यत्र तात्पर्यार्थः । उत्कृष्टप्रदेशबन्धस्वामिनः उत्कृष्टयोगवानल्पतरप्रकृतिबन्धकश्चेति विशेषणद्वयमुत्कृष्टप्रदेश-बन्धस्वामित्वनिरूपणं यावदनुवर्तनीयम्, तस्य सर्वमार्गणास्वपेक्ष्यमाणत्वाद् ॥१७७॥ अत्रेदं त्ववधेयम्-कामुचिन्नरकादिमार्गणासु ओघसत्कोत्कृष्टयोगो ग्राह्यः, यत्र तस्याभावस्तत्रैकेन्द्रियादि-मार्गणासु मार्गणाप्रायोग्योत्कृष्टयोगो ग्राह्यः । साम्प्रतमादेशतः क्रियमाणायामुत्कृष्टप्रदेशबन्धस्वामित्वप्ररूपणायामावश्यकसामान्यसिद्धान्तं प्रदिदर्शयिषुराह—

जत्थ उ पज्जत्तियरा दुहाऽवि जीवाऽत्थि तत्थ पज्जत्तो ।
णेयो पज्जत्तीहिं सव्वाहिं अत्थ भणइ विसेसो ॥१७८॥ (गीतिः)

(प्रे०) 'जत्थ' इत्यादि,-प्रस्तुतोत्कृष्टप्रदेशबन्धस्वामित्वप्रकरणे यस्यां कस्यामपि मार्गणायाम्, 'पज्जत्तियरा' इति लब्धितःपर्याप्ता इतराश्च लब्धितोऽपर्याप्ताः, यद्वा करणपर्याप्ताः करणापर्याप्ताश्चेति द्विविधा जीवाः सम्भवन्ति, 'तत्थ' इत्यादि, तत्र "स्वप्रायोग्याभिः सर्वाभिः पर्याप्तिभिः पर्याप्तो" ग्राह्यः, तस्यैवोत्कृष्टप्रदेशबन्धयोग्योत्कृष्टयोगप्राप्तिसद्भावात् ।

अत्रायं भावः-ग्रन्थकारोऽत्र लाघवाद् मार्गणायामुत्कृष्टप्रदेशबन्धस्वामिनं पर्याप्ताऽपर्याप्ताभ्यामविशिष्यैवाभिधास्यति, ततो यस्यां मार्गणायां लब्धिकरणान्यतरपर्याप्ता यद्वा लब्धिकरणान्यतरापर्याप्ता इति द्विविधा अपि जीवाः स्युः, तत्र पर्याप्ता ग्राह्या उतापर्याप्ता इत्यारेकायाः सम्भाव्यमानत्वात् तन्निराकरणार्थमुक्तं 'पज्जत्तो णेयो पज्जत्तीहिं सव्वाहिं' इति, यत्र पर्याप्तास्तदितरे चेति द्विविधा जीवास्तत्र स्वप्रायोग्याभिः सर्वाभिः पर्याप्तिभिः पर्याप्तो ग्राह्य इति तात्पर्यार्थः ।

अथाभिधास्यमानविषयं प्रतिजानीते–"अत्थ भणइ विसेसो" इति;-अनन्तरोक्तगाथायां मार्गणासु सामान्येनोत्कृष्टप्रदेशबन्धस्वामी प्रतिपादितः । साम्प्रतमनन्तरवक्ष्यमाणगाथातो विशेषेणोत्कृष्टप्रदेशबन्धस्वामी प्रतिपाद्यते ॥१७८॥

इदानीमनन्तरोक्तप्रतिज्ञानिर्वाहाय मार्गणासु षण्णां मूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामिनं गाथाद्वयेन निरूपयति—

छण्ह उवसामगो उअ खवगो तिणरदुपणिंदियतसेसुं ।
पणमणवयजोगेसुं कायोरालियअवेएसुं ॥१७९॥
लोहे चउणाणेसुं संयमसुहुमणयणेयरोहीसुं ।
सुकभविअसम्मखइअउवसमसण्णीसु आहारे ॥१८०॥

(प्रे०) इहोत्कृष्टयोगे वर्तमानोऽल्पतरप्रकृतिबन्धक उत्कृष्टप्रदेशबन्धस्वामी भवतीति सम्बन्धः, एवमग्रेऽप्युत्कृष्टप्रदेशबन्धस्वामित्वनिरूपणं यावज्ज्ञेयम् । 'छण्ह' इत्यादि,-षण्णां मूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी 'उपशामकः' यद्वा 'क्षपकः' सूचकत्वात्सूत्रस्य सूक्ष्मसम्पराये उत्कृष्टयोगे वर्तमानो जीवो भवति । सूक्ष्मसम्पराये मोहनीयबन्धाभावात् तत्रस्थजीवस्य षड्विधप्रकृतिबन्धकत्वादल्पतरप्रकृतिबन्धकत्वमुपपद्यते, अत उपशामकः क्षपको वा सूक्ष्मसम्परायस्थ एव ग्राह्यः । कासु मार्गणासु ? इत्याह-'तिणर' इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियलक्षणद्विपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसलक्षणद्वित्रसयोः, 'पणमण' इत्यादि, मनोयोगमार्गणापञ्चके ,वचनयोगमार्गणापञ्चके, काययोगौघौदारिककाययोगयोः, अवेदे, [द्वितीयगाथावृत्तिः] । लोभे, मतिश्रुतावधिमनःपर्यवलक्षणज्ञानचतुष्के, संयमौघसूक्ष्मसम्परायसंयमयोः, चक्षुरचक्षुरवधिदर्शनेषु, शुक्ललेश्यायां, भव्ये, सम्यक्त्वौघक्षायिकौपशमिकसम्यक्त्वेषु, संज्ञिन्याहारके चेति सप्तत्रिंशन्मार्गणासु । शेषासु मार्गणासु षड्विधमूलप्रकृतिबन्धप्रायोग्यस्थानं न प्राप्यते इति ता वर्जिताः ।। १७९ ।।१८० ।।

अथान्तरोक्तसप्तत्रिंशन्मार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामी चिन्तनीय इति यासु मार्गणासु मोहनीयोत्कृष्टप्रदेशबन्धस्वामी संज्ञी ता आह—

**मोहस्स भवे सण्णी दुपणिंदितसेसु दुवयजोगेसु ।**
**कायउरललोहनयणअणयणभवियेसु आहारे ।।१८१।।**

(प्रे०) इहाप्युत्कृष्टयोगे वर्तमानोऽल्पतरप्रकृतिबन्धक उत्कृष्टप्रदेशबन्धस्वामी भवतीत्यनुवर्तनीयम् । 'मोहस्स' इत्यादि, मोहनीयाभिधमूलप्रकृतेरुत्कृष्टप्रदेशबन्धस्वाम्युत्कृष्टयोगे वर्तमानोऽल्पतरप्रकृतिबन्धकः 'संज्ञी पञ्चेन्द्रियो' भवति, असंज्ञितः संज्ञिनोऽधिकतरयोगमत्त्वाद् । कासु मार्गणासु ? इत्याह-'दुपणिंदिय' इत्यादि, अपर्याप्तमन्तरा द्विपञ्चेन्द्रिययोः, विनाऽपर्याप्तं द्वित्रसयोः, वचनौघव्यवहारवचनयोः, काययोगौघौदारिककाययोगयोः, लोभे, चक्षुरचक्षुदर्शनयोः, भव्ये आहारके चेति त्रयोदशमार्गणासु । अत्राल्पतरप्रकृतिबन्धकत्वेन सप्तप्रकृतिबन्धको गृह्यते, मोहनीयबन्धे षड्विधबन्धाभावात् । द्विपञ्चेन्द्रियादिमार्गणासु असंज्ञिनः संज्ञिनश्चेति द्विविधा जीवा भवन्ति, तत्रासंज्ञिजीवेभ्यः संज्ञिजीवानां योगोऽधिकतरो भवतीत्यसंज्ञिजीवव्यवच्छेदनार्थं संज्ञीति विशेषणमुपात्तम् ।

अत्रायं विशेषोऽवगन्तव्यः-अनन्तरगाथायां सप्तत्रिंशन्मार्गणासु षट्कर्मणामुत्कृष्टप्रदेशबन्धस्वामी चिन्तितः । सम्प्रति तासु मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामी चिन्तनीयः । तत्रानेन सूत्रेन त्रयोदशमार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामी साक्षान्निरूपितः । शेषासु सूक्ष्मसम्परायमार्गणां विहाय त्रिमनुष्यपञ्चमनोयोगत्रिवचनयोगापगतवेदज्ञानचतुष्कसंयमौघावधिदर्शनशुक्ल-

लेश्यासम्यक्त्वौघक्षायिकौपशमिकसम्यक्त्वसंज्ञिरूपासु त्रयोविंशतिमार्गणासु स्वामित्वद्वारप्रथमगाथायामुक्तः "यो जोगे उक्कोसे वट्टइ' इत्यादिसामान्यविशेषणविशिष्टो जीवो मोहनीयोत्कृष्टप्रदेशबन्धस्वामी भवति। तास्वसंज्ञिजीवाभावात् संज्ञीति विशेषणं नोपादेयम्। सूक्ष्मसम्परायमार्गणायां तु मोहनीयबन्ध एव नास्तीति तस्यां मोहनीयोत्कृष्टप्रदेशबन्धस्वामिचिन्तैव न कर्तव्या। इत्थं मोहनीयकर्माश्रित्य षट्त्रिंशन्मार्गणासु षट्प्रकृतीराश्रित्य च सप्तत्रिंशन्मार्गणासूत्कृष्टप्रदेशबन्धस्वामी प्रदर्शितः। वक्ष्यमाणमार्गणासु तु षड्विधबन्धकाभावादल्पतरप्रकृतिबन्धकत्वेन सप्तप्रकृतिबन्धक एव प्राप्यते इत्यालक्षितव्यं धीधनैः ॥ १८१ ॥

एतर्हि शेषमार्गणासु सप्तप्रकृतीराश्रित्योत्कृष्टप्रदेशबन्धस्वामिनं विभणिषुर्यासु मार्गणासूत्कृष्टप्रदेशबन्धस्वामी संज्ञी ताः सार्धगाथयाह—

सण्णी सत्तण्ह सयलतिरियापज्जगपणिंदियतसेसुं ।
कम्मम्मि तिवेएसुं तिकसायऽण्णाणअयतेसुं ॥१८२॥
तिअसुहलेसाअभवियमिच्छाणाहारगेसु विण्णेयो ।
सत्तण्हेगिंदियपणकायणिगोएसु बायरो णेयो ॥१८३॥ ( गीतिः )

(प्रे०) "सण्णी' इत्यादि, सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वाम्युत्कृष्टयोगे वर्तमानः सप्तप्रकृतिबन्धकः 'संज्ञी', 'विज्ञेयः' इति परेणान्वयः। कासु मार्गणास्वित्याह-'सयल' इत्यादि, तिर्यगोघतिर्यक्पञ्चेन्द्रियौघपर्याप्तापर्याप्तपञ्चेन्द्रियतिर्यक्तिरश्चीलक्षणेषु सकलतिर्यग्गतिभेदेषु, अपर्याप्तपञ्चेन्द्रिये, अपर्याप्तत्रसे, कार्मणकाययोगे, वेदत्रिके, लोभे प्ररूपितत्वात् क्रोधमानमायारूपत्रिकषायेषु, अज्ञानत्रिके, असंयमे, अशुभलेश्यात्रिके, अभव्ये मिथ्यात्वेऽनाहारके चेति चतुर्विंशतिमार्गणासु संज्ञित्वे सति सामान्यत उक्तेन विशेषणेन विशिष्टो जीवः सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी भवतीति तात्पर्यार्थः। तथाहि-अपर्याप्तपञ्चेन्द्रियतिर्यगादिपञ्चापर्याप्तमार्गणासु "सप्तप्रकृतिबन्धक उत्कृष्टयोगी संज्ञी, तत्रापि कार्मणानाहारयोः करणापर्याप्तो संज्ञी बोध्यः, शेषासु मार्गणासु पर्याप्ताऽपर्याप्तानां संभवात् * "पर्याप्तः सप्तप्रकृतिबन्धक उत्कृष्टयोगी संज्ञी" सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी भवति।

अथोत्तरार्धेन यासु मार्गणासूत्कृष्टप्रदेशबन्धस्वामी बादरस्ता आह-'सत्तण्हेगिंदिय' इत्यादि, सप्तानां मूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी उत्कृष्टयोगे वर्तमानः सप्तप्रकृतिबन्धको बादरो ज्ञातव्यः। कासु मार्गणास्वित्याह-'एगिंदिय' इत्यादि, एकेन्द्रियौघे, पृथिव्यप्तेजोवायुवनस्पतिकायरूपपञ्चकायौघेषु निगोदे चेति सप्तमार्गणासु। अत्रायं भावः-एतासु मार्गणासु सूक्ष्मा बादराश्चेति

* 'पर्याप्तः' इति, विशेषणं "जत्थ व पज्जत्तिबरा" इति गाथातो लभ्यते, एवमग्रेऽपि बोध्यम्।

द्विविधा जीवाः संभवन्ति । तत्र सूक्ष्मापेक्षया बादरस्य योगोऽधिकतरो भवतीति सूक्ष्मजीवानां व्यवच्छेदनार्थं बादरेति विशेषणमुपात्तम् ॥ १८२ । १८३ ॥

इदानीमौदारिकमिश्रे सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्वामिनं चिन्तयति–

**ओरालमीसजोगे यो खलु सण्णी अणंतरे काले ।**
**तणुपज्जत्तिं गहिहिइ सो खलु सत्तण्ह विण्णेयो ॥१८४॥**

(प्रे०) **'ओरालमीसजोगे'** इत्यादि, औदारिकमिश्रमार्गणायां यः 'संज्ञी' जीवोऽनन्तरे काले-औदारिकमिश्रकाययोगमार्गणाचरमसमये शरीरपर्याप्तिं ग्रहीष्यति, समापयिष्यतीत्यर्थः, यत्तदो-र्नित्याभिसम्बद्धत्वादाह-'सो खलु' इत्यादि, खलु वाक्यालङ्कारे, स जीवः सप्तप्रकृतिबन्धकत्वे सत्युत्कृष्टयोगवान् सन् सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी भवति ।

अत्रेदमाकूतम्-असंज्ञिजीवेभ्यः संज्ञिजीवेषु योगोऽधिकतरः, तत्रापि लब्ध्यपर्याप्तापेक्षया करणा-पर्याप्ते योगोऽधिकतरः । लब्ध्यपर्याप्तापेक्षया करणापर्याप्तेषु योगोऽसंख्येयगुणो वर्तते । करणा-पर्याप्तावस्थायामपि प्रतिसमयमसंख्येयगुणा योगवृद्धिर्भवति । तथा चोक्तं "सव्वोवि अपज्जत्तगो पइखणसंखगुणाए जोगवुड्ढीए वड्ढइ" इति, ततश्चौदारिकमिश्रमार्गणायामुत्कृष्टयोगव्यापारः औदा-रिकमिश्रमार्गणाचरमसमयावच्छिन्नसंज्ञिन एव लभ्यते । इत्यतः समीचीनमेवोक्तं यः संज्ञी जीवोऽ-नन्तरे काले शरीरपर्याप्तिं समापयिष्यति स उत्कृष्टप्रदेशबन्धस्वामी भवतीति ॥ १८४ ॥

सम्प्रति वैक्रियमिश्राहारकमिश्रकाययोगयोः सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामिनं चिन्तयन्नाह-

**मीसदुजोगेसु भवे सत्तण्ह स यो अणंतरे काले ।**
**तणुपज्जत्तिं गहिहिइ अमणम्मि पणिंदियो णेयो ॥१८५॥**

(प्रे०) **"मीसदुजोगेसु"** इत्यादि, अनन्तरगाथायामौदारिकमिश्रमार्गणायामुत्कृष्टप्रदेश-बन्धस्वामी निगदितः, ततः परिशेषाद् वैक्रियमिश्राहारकमिश्राकाययोगमार्गणयोरिति लभ्यते । एतयोः सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वाम्युत्कृष्टयोगवत्त्वे सति सप्तप्रकृतिबन्धकः सन् "योऽ-नन्तरे काले=वैक्रियमिश्राहारकमिश्रकाययोगमार्गणाचरमसमये शरीरपर्याप्तिं ग्रहीष्यति=समाप-यिष्यति स जीवो भवति । एतादृशो जीवो वैक्रियमिश्रमार्गणायां देवो नरको वा तथा-ऽऽहारकमिश्रकाययोगमार्गणायां संयत एव ज्ञातव्यः । अत्र वैक्रियमिश्राहारकमिश्रकाययोग-मार्गणाचरमसमयावच्छिन्नस्य जीवस्य ग्रहणे हेतुरौदारिकमिश्रकाययोगमार्गणायां दर्शितेन प्रका-रेण यथासंभवं भावनीयः । अथासंज्ञिमार्गणायां प्रकृतस्वामिनं चिन्तयति-**'अमणम्मि'** इत्यादि, असंज्ञिमार्गणायां सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वाम्युत्कृष्टयोगवत्त्वे सति सप्तप्रकृतिबन्धकः सन्

'पञ्चेन्द्रियो' जीवो ज्ञातव्यः, अन्यासंज्ञिजीवापेक्षया तस्यैवोत्कृष्टयोगव्यापारवत्त्वात् । अन्य-चतुरिन्द्रियादिसर्वासंज्ञिजीवास्तदपेक्षया हीनयोगव्यापारवन्तः ।

**अत्रायं विशेषोऽवगन्तव्यो विपश्चिद्भिः**-अत्र पर्यन्तं द्वासप्ततिमार्गणासूत्कृष्टप्रदेशबन्ध-स्वामी भावितः, अष्टनवतिमार्गणाश्चावशिष्टाः । तासु सामान्यनियममनुसृत्यैवोत्कृष्टप्रदेशबन्धस्वामी परिभावनीय इति ग्रन्थकृता न भावितः, अतोऽस्माभिः परिभाव्यते, तद्यथा-नरकदेवसर्वभेदाः, सूक्ष्मबादरैकेन्द्रियसूक्ष्मबादरपर्याप्तैकेन्द्रियद्वीन्द्रियौघद्वीन्द्रियपर्याप्तत्रीन्द्रियौघत्रीन्द्रियपर्याप्तचतुरि-न्द्रियौघचतुरिन्द्रियपर्याप्तमार्गणाः, पृथ्वीकायाप्कायतेजस्कायवायुकायसाधारणवनस्पतिकायसूक्ष्माः, पृथ्वीकायाप्कायतेजस्कायवायुकायसाधारणवनस्पतिकायबादराः, पृथ्वीकायाप्कायतेजस्कायवायुकाय-साधारणवनस्पतिकायसूक्ष्मपर्याप्ताः, पृथ्वीकायाप्कायतेजस्कायवायुकायसाधारणवनस्पतिकायबादर-पर्याप्ताः, प्रत्येकवनस्पतिकायपर्याप्तप्रत्येकवनस्पतिकायमार्गणे, आहारकवैक्रियकाययोगौ, तेजःपद्म-लेश्ये, वेदकसास्वादनसम्यक्त्वभेदाविति षट्सप्ततिमार्गणासु सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी पूर्वं "सव्वासु बधगो" इत्यत्राभिहितेन 'उत्कृष्टयोगव्यापारवानल्पतरप्रकृतिबन्धकश्च' इति विशे-षणद्वयेन तथा "जत्थ उ पज्जत्तियरा" इत्यत्र निगदितेन 'सर्वपर्याप्तिपर्याप्तः' इति विशेषणेन विशिष्टो ज्ञातव्यः । तथाऽपर्याप्तमनुष्यः, अपर्याप्तसूक्ष्मबादरैकेन्द्रियभेदौ, अपर्याप्तद्वित्रिचतुरिन्द्रियाः, अप-र्याप्तसूक्ष्मबादरपृथ्वीकायाप्कायतेजस्कायवायुकायसाधारणवनस्पतिकायभेदाः, अपर्याप्तप्रत्येकवनस्प-तिकायभेदश्चेति सप्तदशाऽपर्याप्तमार्गणासु "उत्कृष्टयोगव्यापारवानल्पतरप्रकृतिबन्धकः" इति विशे-षणद्वयविशिष्टो जीवः सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी ज्ञातव्यः । तत्र पर्याप्तजीवानाम-सम्भवात् पर्याप्तविशेषणस्यानवकाशः । एवं सामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरति-भेदेषु, मिश्रमार्गणायाञ्च "उत्कृष्टयोगव्यापारवानल्पतरप्रकृतिबन्धकश्च" इति विशेषणद्वयमेव योज्यम् ,तत्र पर्याप्तविशेषणस्याव्यभिचारात् । यद्वा विशेषावबोधाय क्वचित् स्वरूपबोधकं विशेषणं प्रयुज्यते, यथा वह्नावुष्णत्वस्य व्यभिचाराभावेऽपि वह्निरुष्ण इत्यभिधीयते, तथैवात्रापि स्वरूप-बोधकं पर्याप्तविशेषणं योजनीयम् । तदेवं सप्ततिशतसंख्याकासु सर्वासु मार्गणासु सप्तमूलप्रकृतीना-मुत्कृष्टप्रदेशबन्धस्वामी भावितः ॥ १८५ ॥

तदेवं सप्तकर्माण्याश्रित्यादेशत उत्कृष्टप्रदेशबन्धस्वामिचिन्ता कृता । साम्प्रतमायुराश्रित्या-देशत उत्कृष्टप्रदेशबन्धस्वामिचिन्तां चिकीर्षुरादौ तावत्सर्वमार्गणासम्भविसामान्यसिद्धान्तमाह—

**सव्वासु मग्गणासु जेट्ठपएसस्स बंधगो णेयो ।**
**आउस्सुक्कडजोगी अट्ठवि कम्माणि बंधंतो ॥१८६॥**

(प्रे०) **'सव्वासु'** इत्यादि, सर्वासु त्रिषष्टयधिकशतसङ्ख्याकासु मार्गणासु आयुषः, **'जेट्ठ-पएसस्स'** इति, जातावेकवचनम् , उत्कृष्टप्रदेशानां बन्धक उत्कृष्टयोगव्यापारवान् तथाष्टावपि मूल-

प्रकृतीर्बध्नन् जीवो ज्ञातव्यः । आयुर्बन्धकाले सर्वैर्जीवैरवश्यमष्टावपि प्रकृतयो बध्यन्ते इत्यायुर्बन्धकोऽष्टप्रकृतिबन्धक एव लभ्यते, न सप्तादिबन्धकोऽपि, अत उक्तम् 'अट्ठवि कम्माणि बंधंतो' इति । ननु कथमत्र सप्तमार्गणा वर्जिताः ? इति चेद्, उच्यते, वैक्रियमिश्रकार्मणापगतवेदसूक्ष्मसम्परायोपशमभिश्रसम्यक्त्वानाहारकरूपासु सप्तमार्गणास्वायुषो बन्धाभावात् तासामत्र वर्जनं कृतम् ॥ १८६ ॥

पुनरपि प्रस्तुतप्रकरणोपयोगिसामान्यसिद्धान्तं प्रदर्शयन्नाह—

जत्थ उ पज्जत्तियरा दुहा वि जीवाऽत्थि तत्थ पज्जत्तो ।
णेयो पज्जत्तीहिं सव्वाहिं अत्थ भण्णइ विसेसो ॥१८७॥(गीतिः)

(प्रे०) 'जत्थ' इत्यादि, प्रस्तुतायुरुत्कृष्टप्रदेशबन्धस्वामिचिन्तायां यस्यां कस्यामपि मार्गणायां "पर्याप्तेतराः" करणपर्याप्ता इतरे करणापर्याप्ताश्च, यद्वा लब्धिपर्याप्ता लब्ध्यपर्याप्ताश्चेति द्विविधा अपि जीवाः सम्भवन्ति तत्र स्वप्रायोग्याभिः सर्वाभिः पर्याप्तिभिः पर्याप्तो ज्ञातव्यः, तस्यैवायुरुत्कृष्टप्रदेशबन्धयोग्योत्कृष्टयोगव्यापारवत्त्वात् । अथ विशेषेणायुरुत्कृष्टप्रदेशबन्धस्वामित्वनिरूपणं प्रतिजानीते—"अत्थ भण्णइ विसेसो" इति, अनन्तरोक्तगाथायां मार्गणासु सामान्येनायुरुत्कृष्टप्रदेशबन्धस्वामी निगदितः । साम्प्रतमनन्तरवक्ष्यमाणगाथातो विशेषेणायुरुत्कृष्टप्रदेशबन्धस्वामी निगद्यते ॥ १८७ ॥

तत्रादौ सप्तमनरकादिमार्गणासु आयुरुत्कृष्टप्रदेशबन्धस्वामिनं चिन्तयन्नाह—

सत्तमपुहवीए खलु मिच्छादिट्ठी मुणेयव्वो ।
सव्वतिरिक्खपणिंदियतसदुवयणकायउरलेसुं ॥१८८॥ (उपगीतिः)
वेअतिगकसायचउगतिअणाणायतअचक्खुचक्खूसुं ।
तिअसुहलेसाभवियरमिच्छाहारेसु खलु सण्णी ॥१८९॥

(प्रे०) 'सत्तम' इत्यादि, सप्तमपृथिव्यां=सप्तमनरकमार्गणायामायुरुत्कृष्टप्रदेशबन्धस्वामी "उत्कृष्टयोगव्यापारवत्त्वे सत्यष्टप्रकृतिबन्धको मिथ्यादृष्टिः" भवति । अत्रायं भावः-सप्तमनरके सम्यग्दृष्टयो मिथ्यादृष्टयश्चेति द्विविधा अपि जीवाः सम्भवन्ति । नरकस्थाः सम्यग्दृष्टयो जीवा मनुष्यायुरेव बध्नन्तीति त्रिकालाबाधितो नियमः । परं सप्तमनरकस्था जीवा मनुष्यायुर्न बध्नन्ति, अपि तु तिर्यगायुरेव बध्नन्ति, अतः सप्तमनरकस्था जीवाः प्राप्तं सम्यग्दर्शनं परित्यजन्ति, सम्यग्दर्शनसद्भावे तिर्यगायुषोऽबध्यमानत्वात् । अर्थात् सप्तमनरके यदा जीवस्य सम्यग्दर्शनसद्भावस्तदाऽऽयुर्न बध्यते, यदाऽऽयुर्बध्यते तदा न सम्यग्दर्शनमिति सप्तमनरके सम्यग्दृष्टिरायुर्न बध्नाति, अतोऽत्र सम्यग्दृष्टिजीवानां व्यवच्छेदार्थं 'मिच्छादिट्ठी' इति विशेषणमु-

पादम् । अत्रेदं बोध्यम्—सास्वादनगुणस्थानकेऽपि तथास्वाभाव्यात् तेषामायुर्बन्धाभावः । सम्प्रति यासु मार्गणास्वायुरुत्कृष्टप्रदेशबन्धस्वामी 'संज्ञी' भवति ताः सार्धद्वयेनाह—'सव्व-तिरिक्ख' इत्यादि, सर्वतिर्यग्भेदेषु, सर्वपञ्चेन्द्रियभेदेषु, सर्वत्रसभेदेषु, वचनौघव्यवहारवचनरूप-द्विवचनयोः, काययोगौघौदारिककाययोगयोः, वेदत्रिके, कषायचतुष्के, अज्ञानत्रिके, असंयमे, चक्षुर-चक्षुर्दर्शनयोः, अशुभलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे आहारके चेति पञ्चत्रिंशन्मार्गणासु अष्टप्रकृतिबन्धकत्वे सत्युत्कृष्टयोगव्यापारवान् सन् संज्ञी जीव आयुरुत्कृष्टप्रदेशबन्धस्वामी भवति । अत्रेयं भावना-एतासु मार्गणासु संज्ञिनोऽसंज्ञिनश्चेति द्विविधा जीवाः सम्भवन्ति । परमसंज्ञिजीवा-पेक्षया संज्ञिनो योगोऽधिकतरो भवति, अतोऽसंज्ञिव्यवच्छेदनाय 'सण्णी' इति विशेषणमुपात्तम् । परं विभङ्गमार्गणायां तत् स्वरूपबोधकं ज्ञेयम् , तत्रासंज्ञिजीवानामसंभवात् ॥१८८। १८९॥

एगिंदियपुढवाइगपणगणिगोएसु बायरोणेयो ।
ओरालमीसजोगे मिच्छादिट्ठी भवे सण्णी ॥१९०॥

(प्रे०) 'एगिंदिय' इत्यादि, एकेन्द्रियौघे, पृथ्व्यप्तेजोवायुवनस्पतिकायौघलक्षणपृथ्व्या-दिपञ्चके, निगोदे चेति सप्तमार्गणासु आयुरुत्कृष्टप्रदेशबन्धस्वामी "उत्कृष्टयोगव्यापारवत्त्वे सत्यष्ट-प्रकृतिबन्धको बादरो" ज्ञेयः । अत्रेयं भावना—एतासु मार्गणासु सूक्ष्मा बादराश्चेति द्विविधा जीवा भवन्ति, तत्र सूक्ष्मजीवापेक्षया बादराणां योगोऽधिकतर इति सूक्ष्माणां व्यवच्छेदनार्थं 'बायरो' इति विशेषणमुपात्तम् । अथोत्तरार्धेनौदारिकमिश्रे प्रस्तुतं चिन्तयति-'ओरालमीस' इत्यादि, औदारिकमिश्रकाययोगे आयुरुत्कृष्टप्रदेशबन्धस्वामी "उत्कृष्टयोगव्यापारवत्त्वे सत्यष्टप्रकृतिबन्धको मिथ्यादृष्टिः संज्ञी" ज्ञातव्यः । अत्रेयं भावना—औदारिकमिश्रमार्गणायां लब्ध्यपर्याप्ता लब्धि-पर्याप्ताश्चेति द्विविधा जीवाः सम्भवन्ति । परन्तु सम्यग्दृष्टिजीवा लब्ध्यपर्याप्तत्वेन नोत्पद्यन्तेऽपि तु लब्धिपर्याप्तत्वेनैव । लब्धिपर्याप्तानाञ्च जीवानामौदारिकमिश्रमार्गणायामायुषो बन्धो न भवति किन्तु लब्ध्यपर्याप्तानामेव । ततः आयुर्बन्धकाले मार्गणाप्रायोग्योत्कृष्टयोगो न प्राप्यते, किन्तु लब्ध्य-पर्याप्तप्रायोग्योत्कृष्टयोगः प्राप्यते अर्थादौदारिकमिश्रमार्गणायां ये लब्धिपर्याप्ताः तेषामायुर्बन्धो न भवति, येषाञ्च भवति ते लब्ध्यपर्याप्ताः, लब्ध्यपर्याप्ताश्च मिथ्यादृष्टय एव । अतः सम्यग्दृष्टिव्यव-च्छेदार्थमौदारिकमिश्रमार्गणायामायुरुत्कृष्टप्रदेशस्वामिनः "मिथ्यादृष्टिः" इति विशेषणं योजित-वान् । अथैतादृशो मिथ्यादृष्टिरपि यद्यसंज्ञी भवति तदा तस्य संज्ञिमिथ्यादृष्टेर्हीनयोगव्यापारवत्त्वा-दायुःप्रायोग्योत्कृष्टव्यापारो न भवति, ततोऽसंज्ञिमिथ्यादृष्टिव्यवच्छेदार्थं संज्ञीति प्रोक्तम् ॥१९०॥

साम्प्रतमाहारकमिश्रेऽसंज्ञिनि चायुरुत्कृष्टप्रदेशबन्धस्वामिनं चिन्तयति—

आहारमीसजोगे सो णेयो यो अणंतरे काले ।
तणुपज्जत्तिं गाहिइ अमणम्मि पणिंदियो कुणए ॥१९१॥

(प्रे०) 'आहार' इत्यादि, आहारकमिश्रकाययोगमार्गणायां स जीव आयुरुत्कृष्टप्रदेशबन्धकत्वेन ज्ञातव्यो भवति योऽनन्तरे काले, आहारकमिश्रमार्गणाचरमसमये इत्यर्थः, शरीरपर्याप्तिं ग्रहीष्यति, समापयिष्यतीत्यर्थः । अत्राहारकमिश्रमार्गणाचरमसमयावच्छिन्नग्रहणे हेतुः पूर्वं सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामिचिन्तायामौदारिकमिश्रमार्गणायां यथा भावितः तथैव भावनीयः, ग्रन्थगौरवभयादत्र न प्रपञ्च्यते । "असणम्मि" इत्यादि, असंज्ञिमार्गणायामायुरुत्कृष्टप्रदेशबन्धमुत्कृष्टयोगव्यापारवानष्टमूलप्रकृतिबन्धकश्च पञ्चेन्द्रियः करोति, अन्यासंज्ञिजीवापेक्षया पञ्चेन्द्रियस्यैवोत्कृष्टयोगव्यापारवत्त्वात् । एतद् योगविषयकाल्पबहुत्वे दर्शितमेव ।

तदेवं ग्रन्थकृता पट्चत्वारिंशद्मार्गणास्वायुरुत्कृष्टप्रदेशबन्धस्वामी भावितः । शेषासु सप्तदशोत्तरशतमार्गणासु सामान्यनियमेन परिभावनीयत्वात् नोक्तः, अतोऽस्माभिः परिभाव्यते । तद्यथा-सप्तनरकसर्वदेवमार्गणा अपर्याप्तमन्तरा तिस्रो मनुष्यमार्गणाः, सूक्ष्मबादरपर्याप्तसूक्ष्मबादरैकेन्द्रियभेदाः, द्वित्रिचतुरिन्द्रियौघपर्याप्तद्वित्रिचतुरिन्द्रियमार्गणाः, पृथिव्यप्तेजोवायुसाधारणवनस्पतिकायसूक्ष्माः, पृथिव्यप्तेजोवायुसाधारणवनस्पतिकायबादराः, पर्याप्तपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायसूक्ष्माः, पर्याप्तपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायबादराः, प्रत्येकवनस्पतिपर्याप्तप्रत्येकवनस्पतिकायभेदौ, मतिश्रुतावधिज्ञानानि, अवधिदर्शनं, शुभलेश्यात्रिकं, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वभेदाः, संज्ञी चेति पञ्चाशीतिमार्गणास्वायुरुत्कृष्टप्रदेशबन्धस्वामी "सव्वासु मग्गणासु" इत्यत्राभिहितेन "उत्कृष्टयोगव्यापारवानष्टमूलप्रकृतिबन्धकश्च" इति विशेषणद्वयेन "जत्थ उ पज्जत्तियरा" इत्यत्र प्रोक्तेन "सर्वपर्याप्तिपर्याप्तः" इति विशेषणेन च विशिष्टो जीवो ज्ञातव्यः । पञ्चमनःसत्यासत्यसत्यासत्यरूपत्रिवचनवैक्रियकाययोगभेदाः, मनःपर्यवज्ञानम्, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमभेदाश्चेति पञ्चदशमार्गणासु "उत्कृष्टयोगवानष्टप्रकृतिबन्धकश्च" इति विशेषणद्वयविशिष्टो जीव आयुरुत्कृष्टप्रदेशबन्धस्वामी ज्ञातव्यः । एतासु मार्गणासु सर्वे जीवाः पर्याप्ता एवातः पर्याप्तविशेषणं न योजनीयम् । एवमपर्याप्तमनुष्यः, अपर्याप्तसूक्ष्मबादरैकेन्द्रियभेदौ, अपर्याप्तद्वित्रिचतुरिन्द्रियभेदाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायमार्गणाः, अपर्याप्तबादरपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायमार्गणाः, अपर्याप्तप्रत्येकवनस्पतिकायभेदश्चेति सप्तदशमार्गणास्वपि "उत्कृष्टयोगव्यापारवानष्टप्रकृतिबन्धकश्च" इति विशेषणद्वयविशिष्टो जीव आयुरुत्कृष्टप्रदेशबन्धस्वामी ज्ञातव्यः । तदेवमायुर्बन्धप्रायोग्यासु त्रिषष्टिशतमार्गणास्वायुरुत्कृष्टप्रदेशबन्धस्वामी भावितः । इत्युत्कृष्टप्रदेशबन्धस्वामित्वप्ररूपणा समाप्ता ॥ १९१ ॥

तदेवमष्टकर्मणामुत्कृष्टप्रदेशबन्धस्वामिचिन्ता कृता । साम्प्रतं जघन्यप्रदेशबन्धस्वामिनं निरूपयिषुरादौ तावदोघतो विनाऽऽयुः सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामिनं प्रतिपादयति—

सुहुमापज्जणिगोओ भवपढमखणम्मि सत्तविहबंधी ।
णेयो जहन्नजोगी हस्सपएसस्स सत्तण्हं ॥१९२॥

(प्रे०) "**सुहुमापज्जणिगोओ**" इति, सूक्ष्मश्चापर्याप्तश्चासौ निगोदश्चेति सूक्ष्मापर्याप्तनिगोदः, "**भवपढमखणम्मि**" इति, भवस्य प्रथमक्षणः-प्रथमः समयः इति भवप्रथमक्षणः, तस्मिन्, वर्तमान इत्यध्याहार्यम्, "**सत्तविहबंधी**" इति, सप्तविधानां मूलप्रकृतीनां बन्धः सप्तविधबन्धः, सप्तविधबन्धोऽस्यास्तीति सप्तविधबन्धी, सप्तविधबन्धक इत्यर्थः, '**णेयो**' इति, ज्ञातव्यः, '**जहन्नजोगी**' इति, जघन्ययोगव्यापारवान्, '**हस्सपएसस्स**' इति, जातावेकवचनम्, ह्रस्वानां जघन्यसंख्याकानां प्रदेशानाम्, बन्धक इति प्रकरणाल्लभ्यते, जघन्यप्रदेशबन्धस्वामीत्यर्थः, '**सत्तण्हं**' इति, आयुरन्तरा सप्तमूलप्रकृतीनाम्, इति शब्दार्थः। आयुर्विना सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी सप्तविधमूलप्रकृतिबन्धको जघन्ययोगी भवप्रथमसमये वर्तमानः सूक्ष्माऽपर्याप्तनिगोदो ज्ञातव्य इत्यन्वयार्थः। अत्र निगोदो विशेष्यः, शेषाणि तु तस्य विशेषणानि।

**अत्रेयं भावना**–पूर्वं योगाधिकारे जघन्यप्रदेशबन्धस्य जघन्ययोगाधीनत्वमिति प्रतिपादितम्, यथा यथा योगव्यापारोऽल्पः तथा तथा प्रदेशबन्धः स्तोकः। तथा पर्याप्तद्वीन्द्रियादियोगापेक्षयैकेन्द्रियस्य योगो न्यूनः। तत्रापि पृथ्वीकायादितो निगोदस्य न्यूनः। निगोदेऽपि पर्याप्तापेक्षयाऽपर्याप्तस्य न्यूनः। तत्रापि बादरापेक्षया सूक्ष्मस्य न्यूनतरः। इत्येवं सूक्ष्मापर्याप्तनिगोदस्यैव सर्वजीवापेक्षया जघन्ययोगो भवति। अत. पृथ्वीकायादेः, पर्याप्तनिगोदस्य बादरापर्याप्तनिगोदस्य च व्यवच्छेदनार्थमुक्तं "सूक्ष्मापर्याप्तनिगोदः" इति। तत्र 'निगोदः' इत्यनेन पृथ्वीकायादीनां व्यवच्छेदः, 'अपर्याप्त' इत्यनेन पर्याप्तनिगोदस्य व्यवच्छेदः, 'सूक्ष्म' इत्यनेन बादरनिगोदस्य व्यवच्छेदः। तथा सूक्ष्मापर्याप्तनिगोदस्यापि भवद्वितीयादिसमये योगस्यासंङ्ख्येयगुणवृद्धिर्भवतीति भवद्वितीयादिसमये वर्तमानस्य सूक्ष्मापर्याप्तनिगोदस्य व्यवच्छेदनार्थमुक्तं "भवप्रथमसमये" इति। भवप्रथमसमयेऽपि वर्तमानानां सूक्ष्मापर्याप्तनिगोदानामन्योन्यमाश्रित्य योगव्यापारे हीनताधिक्ये जायेतेऽतोऽधिकयोगव्यापारवतां व्यवच्छेदनार्थमुक्तं 'जघन्ययोगी' इति। अथैतादृशः सूक्ष्मापर्याप्तनिगोदः सप्तविधबन्धक एव भवतीति सप्तविधबन्धकत्वस्य व्यभिचाराभावेऽपि स्वरूपावबोधनाय निगदितं "सप्तविधबन्धकः" इति। अत्र 'जघन्यप्रदेशबन्धस्वामी' इति जघन्यप्रदेशबन्धस्वामित्वनिरूपणं यावदनुवर्तनीयम्। न चात्राष्टविधप्रकृतिबन्धको ग्राह्यः, तस्य सप्तविधप्रकृतिबन्धकापेक्षया बध्यमानप्रकृतीनामधिकत्वेन भागहाराणामाधिक्याद् विवक्षितप्रकृतौ स्तोकप्रदेशबन्धप्राप्तेरिति वाच्यम्; अष्टविधप्रकृतिबन्धकत्वमायुर्बन्धकाले एव प्राप्यते, आयुर्बन्धश्च स्वभवद्विभागस्य पश्चादेव भवितुमर्हति। तदा च योगस्य भवप्रथमसमयापेक्षयाऽसंङ्ख्येयगुणत्वमिति जघन्यप्रदेशबन्धस्यासंभवात्। अत्रेदं ध्येयम्-एकजीवविषयकान्तरद्वारे ओघतोऽष्टकर्मणां जघन्यप्रदेश-

बन्धस्योत्कृष्टान्तरम् 'असंख्यलोकाः' यद्वा 'श्रेण्यसंख्यातभागः' प्ररूपितम् । तत्रासंख्यलोकप्रमाणमन्तरं सूक्ष्मापर्याप्तनिगोदमाश्रित्योपपद्यते, तद्यथा–सकृज्जघन्यप्रदेशबन्धं विधाय पुनरुत्कृष्टतो यावता विलम्बेन विदधाति तावत्प्रमाणः कालो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं भवति । सूक्ष्मनिगोदमार्गणाया उत्कृष्टमन्तरमसंख्यलोकः, अतः कश्चिज्जीवः सूक्ष्मनिगोदमार्गणां प्राप्य लब्ध्यपर्याप्तत्वेनोत्पद्य जघन्यप्रदेशबन्धं विदधाति, ततोऽसंख्यलोकान् यावत् सूक्ष्मनिगोदमार्गणा न प्राप्यते, असंख्यलोकप्रमाणे काले व्यतीते पुनः सूक्ष्मनिगोदमार्गणां प्राप्य लब्ध्यपर्याप्तत्वेन जघन्यप्रदेशबन्धं विदधाति, इत्येवं सूक्ष्मापर्याप्तमाश्रित्याष्टकर्मणां जघन्यप्रदेशबन्धस्योत्कृष्टान्तरमसंख्यलोका उपपद्यते, परं मतान्तरेण सूचिश्रेण्यसंख्यातभागप्रमाणमन्तरं यन्निरूपितं तत्तु तदा घटामञ्चेत् यदा जघन्यप्रदेशबन्धस्वामी न केवलं सूक्ष्मापर्याप्तनिगोदः, अपि तु पृथ्व्याद्यन्यतमः सूक्ष्मापर्याप्तः स्यात्, अतोऽत्र सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी मतान्तरेण पृथ्व्याद्यन्यतमः सूक्ष्मापर्याप्तो बोध्यः ॥१९२॥

साम्प्रतमोघत आयुःप्रकृतौ जघन्यप्रदेशबन्धस्वामिनं चिन्तयति—

**सुहुमापज्जणिगोओ साउतिभागस्स पढमसमयत्थो ।**
**अट्ठविहबंधगो खलु आउस्स जहण्णजोगत्थो ॥१९३॥**

(प्रे०) **'सुहुमापज्ज'** इत्यादि, सूक्ष्मापर्याप्तनिगोद आयुःप्रकृतेर्जघन्यप्रदेशबन्धस्वामी भवतीति सम्बन्धः । कथम्भूतः सूक्ष्मापर्याप्तनिगोदः ? इत्याह-**"साउतिभागस्स पढमसमयत्थो"** इति, स्वायुःत्रिभागस्य प्रथमसमये वर्तमानः स्वायुश्चरमत्रिभागस्य प्रथमसमये वर्तमान इत्यर्थः । स्वस्यायुः=स्वायुः, तृतीयो भागः त्रिभागः, "मयूरव्यंसकेत्यादय." (सिद्धहेम० ३।१।११६) इति मध्यमपदलोपिसमासः, ततः स्वायुषः त्रिभागः-स्वायुस्त्रिभागः इति तत्पुरुषः, स्वायुस्त्रिभागस्य यः प्रथमः समयः तत्र तिष्ठतीति प्रथमसमयस्थः, "स्थापास्नात्रः कः" (सिद्धहेम० ५।१।१४२) इति कः प्रत्ययः ।

न चात्र 'प्रथमसमयस्थः' इति समासप्रयोगो चतुराणां चिन्ताकारी, "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति नियमात् स्वायुस्त्रिभागस्य प्रथमसमयस्थस्य यः प्रथमसमयस्वरूप एकदेशः, तत्रान्वयस्यापत्तेरिति वाच्यम्, क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात्, यथा "शरैः शातितपत्रम्, चैत्रस्य गुरुकुलम्" इत्यादौ । शरैः शातितपत्रमित्यत्र शातितपत्रपदार्थैकदेशे शातनक्रियायां शरकरणत्वस्यान्वयस्य, तथा चैत्रस्य गुरुकुलमित्यत्र गुरुकुलपदार्थैकदेशे गुरुत्वे चैत्रनिरूपितत्वस्यान्वयस्य स्वीकृतत्वात् ।

पुनः कथम्भूतः ? इत्याह-**"अट्ठविहबंधगो"** इति, अष्टानामपि मूलप्रकृतीनां बन्धकः, आयुर्बन्धकालेऽष्टानामपि प्रकृतीनां बध्यमानत्वात् । अथैतादृशोऽपि निगोदो यद्यन्यैतादृशनिगोद-

माश्रित्याधिकयोगव्यापारवान् भवति तदा तस्य जघन्यप्रदेशबन्धाभावात् तद्व्यवच्छेदनार्थमाह- "जहण्णजोगत्थ" इति, सर्वसूक्ष्मापर्याप्तनिगोदापेक्षया जघन्ययोगव्यापारवानित्यर्थः । जघन्य- योगव्यापारवानष्टविधबन्धकः स्वायुश्चरमतृतीयभागप्रथमसमये वर्तमानः सूक्ष्मापर्याप्तनिगोद आयुः- प्रकृतेर्जघन्यप्रदेशबन्धस्वामी भवतीत्यन्वयार्थः ।।१९३।।

तदेवमष्टानामपि कर्मणां जघन्यप्रदेशबन्धस्वामिचिन्तौघतः कृता । साम्प्रतं तामादेशत- श्चिकीर्षुरादौ तावत्सप्तकर्माण्याश्रित्य सर्वमार्गणासम्भविसामान्यवक्तव्यतामाह—

सव्वासु बंधगो खलु हस्सपएसस्स आउवज्जाणं ।
जोगम्मि जहण्णे खलु वट्टमाणो मुणेयव्वो ।।१९४।।

(प्रे०) "सव्वासु" इति, सर्वासु सप्ततिशतसंख्याकासु मार्गणासु 'आउवज्जाणं' इति, कर्मणामिति गम्यते, आयुषो वर्जः=त्यागो येषु ते आयुर्वर्जाः, तेषामायुर्वर्जानामिति व्यधिकरण- बहुव्रीहिसमासः, आयुरन्तरा सप्तकर्मणामित्यर्थः, "बंधगो खलु हस्सपएसस्स" इति, खलु पादपूरणे, जघन्यप्रदेशानां बन्धकः, 'जोगम्मि' इत्यादि, जघन्ययोगे वर्तमानो ज्ञेयः । सर्वासु मार्गणासु आयुरन्तरा सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ये योगव्यापारे वर्तमानो जीवो भवतीत्यर्थः । "सप्तकर्मणां जघन्यप्रदेशबन्धकः" इति सप्तकर्मजघन्यप्रदेशबन्धस्वामित्वप्ररूपणां यावदनुवर्तनीयम् ।।१९४।।

सम्प्रति प्रतिमार्गणं सप्तकर्मणां जघन्यप्रदेशबन्धस्वामिनं वक्तुकाम आह—

पणमणतिवयेसु तहा मणपज्जवसंयमेसु सामइए ।
छेओवट्ठावणिये परिहारविसुद्धिदेसेसुं ।।१९५।।
अडविहबंधी घोलणजोगी दुवयेसु तारिसो णेयो ।
बेइंदियो विउव्वे तणुपज्जत्तिपढमखणत्थो ।।१९६।।

(प्रे०) 'पणमण' इत्यादि, 'जघन्यप्रदेशबन्धस्वामी' इत्यनुवर्तते, पञ्चमनोयोगेषु, सत्या- सत्यसत्यासत्यलक्षणत्रिवचनयोगेषु, तथा समुच्चयार्थे, मनःपर्यवज्ञाने, संयमौघे, सामायिके, छेदोपस्थापनीये, परिहारविशुद्धौ देशविरतौ चेति चतुर्दशमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्ध- स्वामी 'अडविहबंधी' इत्यादि, अष्टविधो बन्धः=अष्टविधबन्धः, सोऽस्यास्तीत्यष्टविधबन्धी, 'अतोऽनेकस्वरात्' (सि० हे० ७।२।६)इति मत्वर्थीयः इन् प्रत्ययः, यद्वा अष्टौ विधाः प्रकारा यस्य तद- ष्टविधं कर्म, अष्टविधं बध्नातीत्येवंशीलोऽष्टविधबन्धी, "अजाते शीले" (सिद्ध.५।१।१५४) इति णिन् प्रत्ययः, अष्टप्रकृतिबन्धक इत्यर्थः, घोलनः=परावर्तमानो योगोऽस्यास्तीति घोलणयोगी, परावर्त-

मानयोगव्यापारवानित्यर्थः, भवतीत्यध्याहारः । अत्राष्टविधबन्धको घोलणयोगी अपि जघन्ययोगव्यापारवान् सन् जघन्यप्रदेशबन्धं विदधातीति न विस्मर्तव्यम् ।

**अत्रेयं भावना**–एतासु मार्गणासु वर्तमाना जीवा करणपर्याप्ता एव । करणपर्याप्तानां परावर्तमानयोगव्यापारे एव जघन्ययोगः प्राप्यते । करणपर्याप्ता जीवा क्रमिकासंख्यगुणादिद्वीयमानयोगव्यापारे प्रवर्तमाने स्वप्रायोग्यजघन्ययोगस्थानं यावदागन्तुं समर्था न भवन्तीत्युक्तं '**घोलणजोगी**' इति । तथा यथा यथाऽधिकाः प्रकृतयो बध्यन्ते तथा तथा भागहाराणां बहुत्वेन तत्तत्कर्मणः स्वविभागतया स्तोकानि कर्मदलिकानि परिणमन्ति अतः सप्तविधबन्धकादिव्यवच्छेदनार्थमुक्तम् '**अडविहबंधी**' इति । अथ शेषद्विवचनयोः प्रकृतमाह–"**दुवयेसु तारिसो णेयो बेइंदियो**" इति, '**दुवयेसु**' इत्यत्र "द्विवचनस्य बहुवचनम्" सिद्ध० ८।३।१३०) इति प्राकृतसूत्रेण बहुवचनम्, एवमग्रेऽपि यथास्थानं बोध्यम्, सत्या-ऽसत्य-सत्यासत्यलक्षणत्रिवचनेष्वनन्तरगाथायां निरूपितत्वाद् वचनौघव्यवहारवचनलक्षणद्विवचनयोः सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी तादृशः=जघन्ययोगव्यापारवत्त्वे सत्यष्टविधबन्धको घोलणयोगी च द्वीन्द्रियो ज्ञातव्यः । अत्राष्टविधबन्धकस्य परावर्तमानयोगिनश्च ग्रहणे हेतुर्यथोक्त एव । वचनौघव्यवहारवचनमार्गणाप्रविष्टजीवेषु द्वीन्द्रियस्यैव जघन्ययोगव्यापारवत्त्वात् त्रीन्द्रियादिव्यवच्छेदार्थं द्वीन्द्रिय इति प्रोक्तम् । अथ वैक्रियकाये प्रकृतमाह-"**विउव्वे तणुपज्जत्तिपढमखणत्थो**" इति, वैक्रियकाययोगे सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगव्यापारवत्त्वे सति "तनुपर्याप्तिप्रथमक्षणस्थः" भवति, तनोः पर्याप्तिः तनुपर्याप्तिः, तनुपर्याप्तेः प्रथमक्षणः=तनुपर्याप्तिप्रथमक्षणः, तनुपर्याप्तिप्रथमक्षणे तिष्ठतीति तनुपर्याप्तिप्रथमक्षणस्थः, "स्थापास्नात्र कः" (सिद्धहेम ५।१।१४२) इति "कः" प्रत्ययः, शरीरपर्याप्तिनिष्ठापन्नप्रथमक्षणवर्तीत्यर्थः ।

**अत्रायं भावः**–शरीरपर्याप्तिनिष्ठापनप्रथमसमयादेव वैक्रियमार्गणाप्रारम्भो भवति । शरीरपर्याप्तिद्वितीयादिसमयेषु सव्वो वि अपज्जत्तगो पइखणमसंखगुणाए जोगवुड्ढीए वड्ढइ" इति नियमादसंख्यगुणयोगवृद्धिर्भवति । अतो वैक्रियकाये शरीरपर्याप्तिप्रथमसमये एव जघन्ययोगो भवति, तथा शरीरपर्याप्तिनिष्ठापन्नप्रथमक्षणस्थानां जीवानां सप्तविधबन्धकत्वमेव भवति, देवादेर्भवस्याद्यवस्थायां सत्यामायुषो बन्धाभावाद् ॥१९५।१९६॥

अथौदारिके आहारकद्विके च सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामिनं दर्शयति—

**उरले सुहमणिगोओ तणुपज्जत्तीअ पढमसमयत्थो ।**
**आहारदुगे सपढमसमयत्थो अट्ठविहबंधी ॥१९७॥**

(प्रे०) '**उरले**' इत्यादि, औदारिककायमार्गणायां सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगव्यापारवान् सन् सूक्ष्मनिगोदो भवति । कथम्भूतः ? इत्याह–**तणुपज्जत्तीअ पढम-**

**समयत्थो**' इति, स्वशरीरपर्याप्त्याः प्रथमसमये वर्तमान इत्यर्थः । एतादृशः सूक्ष्मनिगोदः करण-पर्याप्त एव भवति, औदारिककाययोगमार्गणायां लब्ध्यपर्याप्तानामसम्भवात् । पृथ्वीकायाद्येकेन्द्रिया-पेक्षया सूक्ष्मनिगोदस्याल्पयोगः, तत्रापि स्वशरीरसमाप्तिप्रथमसमये वर्तमानस्याल्पतरो योगः, पूर्वोक्त-नियमेन द्वितीयादिसमयेषु योगस्य वर्धनात् । अतः साधूक्तं "सूक्ष्मनिगोदः तनुपर्याप्त्याः प्रथम-क्षणस्थः" इति ।

न चात्र 卐 "सापेक्षमसमर्थम्" इति न्यायात् पदान्तरसापेक्षं पदं समासपदविधीन् प्राप्तुं नालम्, यथा "ऋद्धस्य राज्ञः पुरुषः" इत्यत्र राजपदस्य ऋद्धविशेषणसापेक्षपुरुषपदेन सह न समासः, तथैव प्रस्तुते प्रथमसमयपदस्य तनुपर्याप्तिपदसापेक्षत्वात् स्थपदेन सह समासो न भव-तीति वाच्यम् "सापेक्षमसमर्थम् इति न्यायस्यानित्यत्वात्, यथा देवदत्तस्य दासभार्येत्यादौ दासपदस्य देवदत्तस्येति पदसापेक्षत्वेऽपि समासदर्शनात् । देवदत्तस्य यो दासस्तस्य भार्येति ह्यत्रार्थः ।

[उत्तरार्धवृत्तिः] "**आहारदुगे**" इत्यादि,—आहारकाहारकमिश्ररूपाहारकद्विके सप्तमूल-प्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगव्यापारवान् सन् "स्वप्रथमसमयस्थोऽष्टविधबन्धको" भवति । "व्याख्यानतो विशेषार्थप्रतिपत्तिः" इति न्यायात् 'स्वप्रथमसमयस्थः' इत्यत्र स्वपदेन मार्गणा बोध्या । आहारकमार्गणायां शरीरपर्याप्त्याः प्रथमसमये स्थितः आहारकमिश्रमार्गणायाश्च मार्गणा-प्रथमसमये स्थित इत्यर्थः । पूर्वोक्तनियमबलेन द्वितीयादिसमयेषु योगस्य वृद्धिर्भवतीति मार्गणा-प्रथमसमये एव जघन्ययोगः प्राप्यते ॥१९७॥

साम्प्रतमवेदसूक्ष्मसम्परायमिश्रमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामिनं प्ररूपयति—

**वट्टमाणो घोलणजोगे गयवेअसुहुममीसेसु ।**
**सत्तविहबंधगो उण अवगयवेए मुणेयव्वो ॥१९८॥**

(प्रे०) '**वट्टमाणो**' इत्यादि, अवेदसूक्ष्मसम्परायमिश्रसम्यक्त्वमार्गणासु स्वबन्धप्रायोग्य-मूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगव्यापारवान् सन् घोलणयोगे=परावर्तमानयोगे वर्त-मानो भवति । अथावेदमार्गणायां यो विशेषः तमुत्तरार्धेन प्राह—'**सत्तविहबंधगो उण**' इत्यादि, पुनः विशेषतादर्शकमव्ययम्, विशेषता चेयम्-वृत्तपूर्वार्धेऽवेदमार्गणायां सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी यः प्रतिपादितः स सप्तविधप्रकृतिबन्धको ज्ञातव्यो न तु षड्विधबन्धकः, षड्विधबन्धकापेक्षया सप्तविधबन्धकस्य भागहाराणामधिकत्वाद् विवक्षितप्रकृतौ स्तोकप्रदेश-बन्धप्राप्तेः ।

न चात्र सूक्ष्मसम्परायमिश्रसम्यक्त्वयोरपि यथाक्रमं "षड्विधबन्धकः "सप्तविध-

---

卐 श्रीहैमप्रकाशे "लोकात्" इति सूत्रे न्यायप्रकरणम्, यद्वा न्यायमञ्जूषामवलोकयन्तु ।

बन्धकः" इति विशेषणे योजनीये इति वाच्यम्, यतो विशेषणं हि सम्भवे★व्यभिचारे चार्थवद् भवति, अत्र तु सूक्ष्मसम्पराये सर्वे षड्विधबन्धका एव, मिश्रसम्यक्त्वे च सर्वे सप्तविधबन्धका एवेति व्यभिचाराभावाद् न विशेषणप्रयोजनम् ॥१९८॥ सम्प्रति विभङ्गज्ञानमार्गणायां सप्तकर्मणां जघन्यप्रदेशबन्धस्वामिनं मतान्तरनिर्देशपूर्वकमाह—

विब्भंगे णेरइयो देवो व भवे भवऽज्जसमयत्थो ।
अण्णे अडविहबंधी घोलणजोगी चउगइट्टो ॥१९९॥

(प्रे०) "**विब्भंगे**" इत्यादि, विभङ्गज्ञानमार्गणायां सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी भवप्रथमसमयस्थो नैरयिको देवो वा भवति। **इयमत्र भावना**–द्वितीयादिसमयापेक्षया भवप्रथमसमये योगो न्यूनतमो भवति । भवप्रथमसमये विभङ्गज्ञानं देवनारकाणामेव भवति, तिर्यग्मनुष्याणामपर्याप्तावस्थायां विभङ्गज्ञानस्याभावात्, यतो देवनारका विभङ्गज्ञानेन सहान्यगतौ नोत्पद्यन्ते तथा तिर्यग्मनुष्याणामपर्याप्तयावस्थायां नूतनमपि विभङ्गज्ञानं नोत्पद्यते । अथ मतान्तरमाह-'**अण्णे**' इत्यादि, अन्ये तु विभङ्गज्ञानमार्गणायां सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी अष्टविधबन्धको घोलणयोगी चतुर्गत्यन्तोऽन्यतमगतौ वर्तमानो जीवो भवतीति मन्यन्ते ।

**इयमत्र भावना**–केचिद् देवनारकाणामप्यपर्याप्तवस्थायां विभङ्गज्ञानं न मन्यन्ते । अतः करणपर्याप्तानामेव जीवानां विभङ्गज्ञानं सम्भवति । करणपर्याप्तानां जीवानां परावर्तमानयोगव्यापारे एव जघन्ययोगः प्राप्यते । करणपर्याप्ता जीवाः क्रमिकक्षीयमानयोगव्यापारे प्रवर्तमाने स्वप्रायोग्यजघन्ययोगस्थानं यावदागन्तुं समर्था न भवन्तीत्युक्तं 'घोलणजोगी' इति । तथा सप्तविधबन्धापेक्षयाऽष्टविधबन्धे भागहाराणां बहुत्वेन तत्तत्कर्मणः स्वस्वभागतया स्तोकानि कर्मदलिकानि परिणमन्तीत्युक्तम् '**अडविहबंधी**' इति । विभङ्गज्ञानवानष्टविधबन्धको घोलणयोगी चतुर्ष्वपि गतिषु प्राप्यते अत उक्तम् '**चउगइट्टो**' इति ॥१९९॥

अथ शेषासु मार्गणासु सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामिनं निरूपयितुमना आदौ तावत् तस्य शेषसर्वमार्गणासम्भवि सामान्यविशेषणमाह—

सेसासु मग्गणासुं भवस्स पढमसमयम्मि वट्टंतो ।
सत्तविहबंधगो खलु सत्तण्हं बंधगो णेयो ॥२००॥

(प्रे०) "**सेसासु**" इत्यादि, शेषासु षट्चत्वारिंशदधिकशतप्रमाणासु मार्गणासु स्वभवस्य प्रथमे समये वर्तमानः सप्तविधबन्धको जीवः, '**सत्तण्हं बंधगो णेयो**' इति, जघन्यप्रदेशाना-

★ सम्भवः=विशेषणस्य विशेष्यसम्बन्धयोग्यता, व्यभिचारः=विशेषणमन्तरापि विशेष्यस्योपलभ्यमानता, तयोः सतोरेव विशेषणं सार्थकं भवति, नान्यथा । तयोरेकस्याप्यभावे विशेषणप्रयोगस्यानौचितीत्यर्थः । नहि गवि द्विपादिति विशेषणं दीयतेऽसम्भवाद्, नापि चतुष्पादिति व्यभिचाराभावाद् । एवं प्रस्तुतेऽपि षड्विधबन्धकः सप्तविधबन्धकश्चेति विशेषणे न दीयते व्यभिचाराभावाद् ।

मिति गम्यते, सप्तकर्मणां जघन्यप्रदेशानां बन्धको ज्ञातव्यः । इयमत्र भावना—शेषसर्वमार्गणासु वर्तमानानां जीवानां भवद्वितीयादिसमयेषु पूर्वोक्तनियमवशादसंख्यगुणा योगवृद्धिर्भवतीति भव-प्रथमसमये एव जघन्ययोगः प्राप्यते । अत्रेदं ध्येयम्-यद्यपि शेषासु जघन्यप्रदेशबन्धस्वामिनो यथा सम्भवमन्यान्यपि विशेषणानि वक्ष्यति तथाप्येतद्विशेषणद्वयस्य सर्वासु मार्गणासु योजनीयत्वाल्लाघ वादत्रैव सामान्येनाभिहितवान् । ततश्च यत्र विशेषोऽभिधास्यते तत्राप्येतद्विशेषणद्वयं तु योज-नीयमेव । तथा "सप्तविधबन्धकः" इति विशेषणं स्वरूपबोधकं ज्ञेयम् । भवप्रथमसमये सप्तैव प्रकृतयो बन्धमायान्ति, न त्वष्टावपि, तदानीमायुषोऽबध्यमानत्वाद् ॥२००॥ पुनरपि लाघवार्थं प्रस्तुतप्रकरणोपयोगिसामान्यनियमं निर्वक्ति—

जहि बंधगाऽत्थि दुविहा लद्धिअपज्जत्तगो तहा अण्णो ।
तहिं मुणह अपज्जत्तो जोऽत्थि विसेसोऽत्थ वुच्चइ सो ॥२०१॥

(प्रे०) 'जहि' इत्यादि, यस्यां मार्गणायां सप्तकर्मणां जघन्यप्रदेशानां बन्धका जीवा लब्ध्य-पर्याप्तास्तथाऽन्ये लब्धिपर्याप्ता इति द्विविधाः सन्ति तस्यां मार्गणायां लब्ध्यपर्याप्तान् जानीत । इदमुक्तं भवति—यस्यां मार्गणायां लब्ध्यपर्याप्ता लब्धिपर्याप्ताश्चेति द्विविधा जीवा भवन्ति, तस्यां मार्गणायां लब्धिपर्याप्तेभ्यो लब्ध्यपर्याप्तानां योगो जघन्यतरो भवतीति जघन्यप्रदेशबन्धकत्वेन लब्ध्यपर्याप्ता जीवा बोध्याः ॥२०१॥ अथ शेषासु मार्गणासु यो विशेषस्तमभिधातुकामः प्रति-जानीते-'**जोऽत्थि विसेसोऽत्थ वुच्चइ सो**' इति, अत्र=शेषासु मार्गणासु यो विशेषोऽस्ति स उच्यते ॥२०१॥

कृतप्रतिज्ञां निर्वाहयितुकाम आह—

णिरयपढमणिरयसयलणरसुरभवणदुगविउवमीसेसुं ।
सण्णिम्मि य सत्तण्हं असण्णिणो आगओ णेयो ॥२०२॥

(प्रे०) '**णिरय**' इत्यादि, नरकौघप्रथमनरकयोः, सर्वमनुष्यभेदेषु, देवौघे, '**भवण-दुग**' इति, "व्याख्यानतो विशेषार्थप्रतिपत्तिः" इति भवनपतिव्यन्तरमार्गणयोः, वैक्रियमिश्रे संज्ञिनि चेत्येकादशमार्गणासु सप्तानां मूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगव्यापारवान् "**असं-ज्ञित आगतो**" जीवो ज्ञातव्यः, संज्ञित आगतेभ्योऽसंज्ञित आगतानां जीवानां योगस्य न्यून-तरत्वाद् । तथाऽसंज्ञीनां सम्यग्दर्शनाभावाद् तेभ्य आगतो जीवो भवप्रथमसमये मिथ्यादृष्टिरेव भवति । स च पूर्वोक्तेन "भवस्य प्रथमसमये वर्तमानः सप्तविधबन्धकः" इति विशेषणद्वयेन विशिष्टो जघन्यप्रदेशबन्धस्वामी भवतीति न विस्मर्तव्यम् ॥२०२॥ एतर्हि यासु मार्गणासु सप्त-प्रकृतीनां जघन्यप्रदेशबन्धस्वामी मिथ्यात्वी यासु चासंज्ञी ता निर्वक्ति—

**मिच्छत्ती सेसणिरयजोइसदेवेसु होअइ असण्णी ।**
**सव्वेसु पणिंदितिरियपणिंदियेसु पुरिसथीसु ॥२०३॥**

(प्रे०) **'मिच्छत्ती'** इति, सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी "जघन्ययोगव्यापारवान् मिथ्यादृष्टिः," भवति । कासु मार्गणासु ? इत्याह–**'सेस'** इत्यादि, शेषेषु षड्नरकेषु, ज्योतिष्कदेवे चेति सप्तमार्गणासु । एतासु मार्गणासु भवप्रथमसमये वर्तमानः सप्तविधबन्धको मिथ्यात्वी सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी भवतीत्यर्थः । एतासु मार्गणासु सम्यग्दृष्टीनामुत्पादाभावाद् भवप्रथमसमये वर्तमाना जीवा मिथ्यादृष्टय एव भवन्ति ।

ननु क्षायिकसम्यग्दृष्टयस्तृतीयनरकं यावद् गच्छन्तीति जिनागमेषु श्रूयते तत्कथमत्र द्वितीयादिषड्नरकेषु भवप्रथमसमये वर्तमाना जीवा मिथ्यादृष्टय एव भवन्तीत्युच्यते ? इति चेद्, सत्यम्, क्षायिकसम्यग्दृष्टयः प्रायो रत्नप्रभां यावद् गच्छन्ति, परतस्तु स्वल्पा एवेत्यत्र तेषां विवक्षा न कृता । तदुक्तं **जीवसमासे** "वेमाणिया य मणुया रयणाए" इत्यादिगाथाया वृत्तौ- "ननु वासुदेवादीनां क्षायिकसम्यग्दृष्टीनां तृतीयां नरकपृथ्वीं यावदुत्पत्तिरागमे श्रूयते तत्किमिति शर्कराप्रभावालुकाप्रभानारकाणामपि क्षायिकसम्यक्त्वं निषिध्यते ? सत्यं किन्तु क्षायिकसम्यग्दृष्टयः प्रायो रत्नप्रभामेव यावद् गच्छन्ति, परतस्तु स्वल्पा एव किञ्चिद् व्रजन्तीति स्वल्पत्वात् ते इह ग्रन्थे न विवक्षिताः, अन्यतो वा कुतश्चित्कारणादिति केवलिनो बहुश्रुता वा विदन्तीति"।

**'असण्णी'** इति, सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी जघन्ययोगव्यापारवान् "असञ्ज्ञी" भवति । कासु मार्गणासु ? इत्याह–**"सव्वेसु"** इत्यादि, सर्वेषु पञ्चेन्द्रियतिर्यक्षु, सर्वेषु पञ्चेन्द्रियेषु, पुरुषस्त्रीवेदयोश्चेति नव मार्गणासु । एतासु मार्गणासु "भवप्रथमसमये वर्तमानः सप्तविधबन्धकोऽसंज्ञी" सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी भवतीत्यर्थः । इयमत्र भावना–एतासु मार्गणासु संज्ञिनोऽसंज्ञिनश्चेति द्विविधा जीवा भवन्ति । तत्र संज्ञिभ्योऽसंज्ञिनां योगोऽल्पतर इति संज्ञिजीवानां व्यवच्छेदनार्थमसंज्ञीति विशेषणमुपात्तम् ॥२०३॥

सम्प्रति सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी यासु मार्गणासु सूक्ष्मनिगोदो यासु च निगोदस्ता गाथाद्विकेनाह—

**हवए सुहमणिगोओ तिरिएगिंदियवणेसु कायम्मि ।**
**ओरालियमीसणपुमकसायदुअणाणअयतेसु ॥२०४॥**
**अणयणतिअसुहलेसाभवियरमिच्छामणेसु आहारे ।**
**होइ णिगोओ खलु छसु एगिंदियसकभेएसु ॥२०५॥**

(प्रे०) **'हवए'** इत्यादि, सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगी "सूक्ष्मनिगोदो" भवति । कासु मार्गणास्वित्याह–**'तिरि'** इत्यादि, तिर्यगोघे, एकेन्द्रियौघे, वनस्पति-

कायौघे, काययोगौघे, औदारिकमिश्रे, नपुंसकवेदे, कषायचतुष्के, मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, [द्वितीयगाथावृत्तिः] अचक्षुर्दर्शने, अप्रशस्तलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिन्याहारके चेति द्वाविंशतिमार्गणासु । तिर्यगोघादिद्वाविंशतिमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी जघन्ययोगी, भवप्रथमसमये वर्तमानः, सप्तविधबन्धकः, सूक्ष्मनिगोदो भवतीत्यर्थः, अन्यबादर-निगोदाद्यपेक्षया तस्याल्पयोगवत्त्वात् । 'होइ णिगोओ' इत्यादि, सूक्ष्मबादरैकेन्द्रियौ, पर्याप्त-सूक्ष्मबादरैकेन्द्रियौ अपर्याप्तसूक्ष्मबादरैकेन्द्रियौ चेति षडेकेन्द्रियभेदेषु सप्तकर्मणां जघन्यप्रदेशबन्ध-स्वामी जघन्ययोगी 'निगोदो' भवति, पृथ्वीकायाद्यपेक्षया तस्याल्पयोगवत्त्वात् । स च पूर्वोक्तेन "भवप्रथमसमये वर्तमानः, सप्तविधबन्धकः" इति विशेषणद्वयेन विशिष्टो ज्ञातव्यः ॥२०४।२०५॥

इदानीं पृथ्वीकायौघादिमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामिनं निरूपयति—

पुहवाइणिगोएसुं सुहमो तितसेसु बिंदियो णेयो ।
कम्माणाहारेसुं सुहमणिगोओ उ विग्गहगईए ॥२०६॥ (गीतिः)

(प्रे०)'पुहवाई' इत्यादि, अत्रादिना पृथ्व्यादयः चत्वार एव गृह्यन्ते, वनस्पतिकायेऽन-न्तरमेवोक्तत्वात् । पृथिव्यप्तेजोवायुकायौघेषु, निगोदौघे च सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्ध-स्वामी जघन्ययोगी 'सूक्ष्मो' भवति । तथाहि—एतासु मार्गणासु बादराः सूक्ष्माश्चेति द्विविधा जीवाः सन्ति । बादरेभ्यः सूक्ष्माणां योगोऽल्पतर इति प्रकृतप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्य-योगी सूक्ष्मो भवति । स च पूर्वोक्तेन "भवप्रथमसमये वर्तमानः सप्तविधबन्धक "इति विशेषण-द्वयेन विशिष्टो ज्ञातव्यः । अथ त्रसत्रिके प्रकृतं चिन्तयति—"तितसेसु" इत्यादि,-त्रित्रसमार्ग-णासु सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगी पूर्वोक्तेन भवप्रथमसमये वर्तमानः सप्तप्रकृतिबन्धकः" इति विशेषणद्वयेन विशिष्टो द्वीन्द्रियो भवति, त्रीन्द्रियादिभ्यस्तस्याल्पयोग-सद्भावात् । अथोत्तरार्धेन कार्मणकायानाहारकयोः सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामिनं चिन्त-यति—"कम्माणाहारेसु" इत्यादि, कार्मणकाययोगानाहारकयोः सप्तप्रकृतीनां जघन्यप्रदेशबन्ध-स्वामी जघन्ययोगी "विग्रहगतौ वर्तमानः सूक्ष्मनिगोदो" भवति । एतस्मिन् मार्गणाद्विके जीवा विग्रहगतावेव वर्तमाना भवन्ति । सूचकत्वात्सूत्रस्य विग्रहगतौ "प्रथमसमये" वर्तमानः सूक्ष्म-निगोदो ज्ञेयः, अपर्याप्तत्वेन द्वितीयादिसमयेषु योगवृद्धेः ॥२०६॥ साम्प्रतं चक्षुर्दर्शनादिषु सप्त-प्रकृतीनां जघन्यप्रदेशबन्धस्वामिनं प्रतिपादयन्नाह—

चउरिंदियो उ णयणे सुहलेसासुं णरो अहव देवो ।
हवइ उवसमे देवो तिगइट्ठो सासणे णेयो ॥२०७॥

(प्रे०) 'चउरिंदियो' इत्यादि, चक्षुर्दर्शनमार्गणायां सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्ध-स्वामी जघन्ययोगी 'चतुरिन्द्रियो' ज्ञेयः । पञ्चेन्द्रियतस्तस्याल्पयोगसद्भावात् , त्रीन्द्रियादीनां

चात्रासम्भवः । सम्प्रति शुभलेश्यात्रिके प्रकृतं प्ररूपयति–'**सुहलेसासु**' इत्यादि, शुभलेश्यात्रिके सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगवान् "मनुष्यः यद्वा देवः" भवति । अत्रेयं भावना–नारकाणां शुभलेश्यानामत्यन्ताभाव एव । तिरश्चां शुभलेश्यानां सद्भावेऽपि भवप्रथमसमये त्वत्यन्ताभाव एव, शुभलेश्यासहितानां जीवानां तिर्यग्गतावनुत्पादात् । अतो भवप्रथमसमये देवमनुष्याणामेव शुभलेश्यानां सद्भावाज्जघन्यप्रदेशबन्धस्वामित्वं देवमनुष्याणामेवोपपद्यते । अथोपशमसम्यक्त्वे प्रकृतं प्रतिपादयति–'**उवसमे देवो**' इति, उपशमसम्यक्त्वे सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगवान् "देवो" भवति । इयमत्र भावना–उपशमश्रेणिमन्तरोपशमसम्यक्त्वसहिता जीवाः पञ्चत्वं न यान्ति उपशमश्रेणौ निधनं प्राप्ता जीवा देवगतावेवोत्पद्यन्ते इत्यत्र सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामिनो विबुधा एव भवन्ति । सम्प्रति सास्वादनसम्यक्त्वे प्रस्तुतं निरूपयति–'**तिगइड्ढो सासणे णेयो**' इति, सास्वादनसम्यक्त्वे सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामी जघन्ययोगव्यापारवान् "त्रिगतिकः"=नरकगतिमन्तरा तिसृषु गतिषु वर्तमानो जीवो ज्ञातव्यः, सास्वादनसम्यक्त्ववतां जीवानां नरकगतावनुत्पादात् । अत्र चतुरिन्द्रियादयः सर्वे भवप्रथमसमये वर्तमानाः सप्तविधबन्धकाश्च ज्ञातव्याः ।

तदेवं षट्चत्वारिंशदधिकशतमार्गणान्त एकसप्ततिमार्गणासु सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी निरूपितः । अवशिष्टासु पञ्चसप्ततिमार्गणासु विशेषवक्तव्यताभावाद् "सेसासु मग्गणासु" इत्यादिगाथाद्विकानुसारेण स्वयं परिभावनीयः । तद्यथा–द्वादशवैमानिकाः, नवग्रैवेयकाः पञ्चानुत्तराश्चेति षड्विंशतिदेवभेदाः, पर्याप्तद्वित्रिचतुरिन्द्रियाः, अपर्याप्तद्वित्रिचतुरिन्द्रियाः, पर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुनिगोदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदप्रत्येकवनस्पतिकायाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदप्रत्येकवनस्पतिकायाः, मतिश्रुतावधिज्ञानानि, अवधिदर्शनं सम्यक्त्वं क्षायिकवेदकसम्यक्त्वानि चेति एकषष्टिमार्गणासु सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी "जघन्ययोगी भवप्रथमसमये वर्तमानः सप्तविधबन्धको" भवति । अत्र "लब्ध्यपर्याप्तः" इति न वक्तव्यम्, अपर्याप्तमार्गणासु व्यभिचाराभावाद्, शेषासु च लब्ध्यपर्याप्तानामसम्भवः । तथा द्वित्रिचतुरिन्द्रियौघाः, सूक्ष्मपृथिव्यप्तेजोवायुनिगोदाः, बादरपृथिव्यप्तेजोवायुनिगोदप्रत्येकवनस्पतिकाया इति चतुर्दशमार्गणासु सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी "जघन्ययोगवान्, भवप्रथमसमये वर्तमानः, सप्तविधबन्धकः, लब्ध्यपर्याप्तो" भवति । तदेवं सप्तकर्माण्याश्रित्य जघन्यप्रदेशबन्धस्वामित्वप्ररूपणा कृता ॥२०७॥

साम्प्रतमादेशत आयुषो जघन्यप्रदेशबन्धस्वामिनं निरूपयितुमना आदौ तावत् सर्वमार्गणासम्भविसामान्यवक्तव्यतामाह—

**सव्वासु बंधगो खलु हस्सपएसस्स आउगस्स भवे ।**
**बंधंतोऽट्ठवि पयडी जहण्णजोगम्मि वट्टंतो ॥२०८॥**

(प्रे०) "सव्वासु" इत्यादि, सर्वासु त्रिषष्टिशतप्रमितासु मार्गणासु आयुषो जघन्यप्रदेशबन्धकोऽष्टावपि मूलप्रकृतीर्बध्नन् तथा जघन्ययोगे वर्तमानो जीवो भवति। आयुषो बन्धकालेऽष्टानामपि प्रकृतीनां बध्यमानत्वादुक्तं 'बंधंतोऽट्ठ वि पयडी' इति ॥२०८॥

पुनरपि गाथात्रिकेण सामान्यवक्तव्यतामाह—

घोलणजोगी उ सयलणारगसुरपज्जजोणिणीसु तहा।
पणमणवयउरलेसुं विउव्वथीपुमविभंगेसुं ॥२०९॥
चउणाणसंयमेसुं समइअछेअपरिहारदेसेसुं।
णयणोहितिसुहलेसासम्मखइअवेअगेसु सामाणे ॥२१०॥ (गीतिः)

(प्रे०) "घोलणजोगी" इति–आयुषो जघन्यप्रदेशबन्धस्वामी परावर्तमानयोगी भवति। कासु मार्गणासु ? इत्याह–"सयल" इत्यादि, सर्वनरकभेदेषु, सर्वदेवभेदेषु, सर्वपर्याप्तभेदेषु, सर्वे पर्याप्ता विंशतिः, तद्यथा–पञ्चेन्द्रियतिर्यग्, मनुष्यः, सूक्ष्मैकेन्द्रियः, बादरैकेन्द्रियः, द्वित्रिचतुःपञ्चेन्द्रियाः, सूक्ष्मपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायाः, बादरपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायाः, प्रत्येकवनस्पतिकायस्त्रसकायश्च, 'पर्याप्त' इति यथावचनं सर्वत्र योजनीयम्, 'जोणिणीसु' इति, तिर्यग्मनुष्ययोनिमत्योः, तथा समुच्चये, 'पणमण' इत्यादि, पञ्चमनःपञ्चवचनेषु, औदारिकवैक्रियकाययोगयोः, स्त्रीपुरुषवेदयोः, विभङ्गज्ञाने, चतुर्ज्ञानमार्गणासु, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमेषु, चक्षुरवधिदर्शनयोः, शुभलेश्यात्रिके, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वेषु चेति त्रिनवतिमार्गणासु।

अत्रेदमाकूतम्–एतन्मार्गणाप्रविष्टजीवा लब्धिपर्याप्ता एव, लब्धिपर्याप्तानां चायुषो बन्धः करणपर्याप्तावस्थायामेव। तथा करणपर्याप्तावस्थायामायुर्जघन्यप्रदेशबन्धयोग्यजघन्ययोगो घोलणयोगे एव, नान्यत्र। करणापर्याप्तावस्थायां घोलणयोगादल्पतरयोगसत्त्वेऽपि तत्रायुर्बन्धाभावात् तत्रस्था जीवा जघन्यप्रदेशबन्धस्वामित्वेन ग्रहीतुमशक्याः। एतत्परिभाव्यैवोक्तं घोलणयोगीति ॥२०९।२१०॥

प्रस्तुतमेवाह—

आहारदुगे मग्गणपारंभखणम्मि कुणइ वट्टंतो।
सेसासु पढमसमये आउतिभागस्स विण्णेयं ॥२११॥

(प्रे०) "आहारदुगे" इत्यादि, आहारकद्विके आयुषो जघन्यप्रदेशबन्धं "मार्गणाप्रारम्भक्षणे"=आहारकाहारकमिश्रमार्गणयोः प्रारम्भस्य यः प्रथमः क्षणस्तस्मिन् वर्तमानो जीवः करोति, मार्गणाद्वितीयादिसमयेषु असंख्यगुणयोगवृद्धिप्रवर्तनात्। "सेसासु" इत्यादि, शेषासु–उक्तव्यतिरिक्तासु अष्टषष्टिमार्गणासु आयुषो जघन्यप्रदेशबन्धं स्वायुषः तृतीयभागस्य प्रथमसमये वर्त-

मानो जीवः करोतीति ज्ञेयम् । अत्रेयं भावना—शेषासु अष्टषष्टिमार्गणासु क्वचित् लब्ध्यपर्याप्ताः क्वचिच्च लब्धिपर्याप्ता इति द्विविधा अपि जीवाः सम्भवन्ति। तत्र लब्धिपर्याप्तापेक्षया लब्ध्यपर्याप्तानां योगः स्तोकः, लब्ध्यपर्याप्तानाञ्चायुर्बन्धः स्वायुस्तृतीयभागे भवति। स्वायुस्तृतीयभागेऽपि द्वितीयादिसमयापेक्षया प्रथमसमये योगो जघन्य इति प्रोक्तं "पढमसमये आउतिभागस्स" इति । तत्रापि जघन्यायुष्को जीवो ग्राह्यः । शेषमार्गणाश्चेमाः-तिर्यगोघपञ्चेन्द्रियतिर्यगोघाऽपर्याप्ततिर्यक्पञ्चेन्द्रियाः, मनुष्यौघापर्याप्तमनुष्यौ, पर्याप्तैर्विना त्रयोदशेन्द्रियभेदाः, पर्याप्तैर्विना त्रिंशत्कायभेदाः, काययोगौघौदारिकमिश्रयोगौ, नपुंसकवेदः, कषायचतुष्कम्, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अशुभलेश्यात्रिकम्, भव्याभव्यौ, मिथ्यात्वम्, संज्ञी, असंज्ञी आहारकश्च ॥२११॥

साम्प्रतं प्रस्तुतप्रकरणोपयोगिसामान्यनियमं निर्वक्ति—

**जहि बंधगाऽत्थि दुविहा लद्धिअपज्जत्तगो तहा अण्णो ।**
**तहि मुणह अपज्जत्तो जोऽत्थि विसेसोऽत्थ वुच्चइ सो ॥२१२॥**

(प्रे०) 'जहि' इत्यादि, यस्यां मार्गणायामयुषो बन्धका जीवा लब्ध्यपर्याप्तास्तथाऽन्ये लब्धिपर्याप्ता इति द्विविधाः सन्ति तस्यां मार्गणायामायुषो जघन्यप्रदेशबन्धको लब्ध्यपर्याप्तो भवतीति जानीत । इदमुक्तं भवति—यस्यां मार्गणायां लब्ध्यपर्याप्ता लब्धिपर्याप्ताश्चेति द्विविधा जीवा भवन्ति, तस्यां मार्गणायां लब्धिपर्याप्तेभ्यो लब्ध्यपर्याप्तानां योगो जघन्यतरो भवतीति जघन्यप्रदेशब-धकत्वेन लब्ध्यपर्याप्ता जीवा बोध्याः । अथ शेषासु मार्गणासु यो विशेषः तमभिधातुकामः प्रतिजानीते—'जोऽत्थि विसेसोऽत्थ वुच्चइ सो' इति, अत्र=शेषासु मार्गणासु यो विशेषोऽस्ति स उच्यते ॥२१२॥

अथ कृतप्रतिज्ञां निर्वाहयितुकामो विशेषवक्तव्यतां निर्वक्तुमुपक्रमते—

**मिच्छादिट्ठीयो खलु सत्तमणिरयम्मि होअइ असण्णी ।**
**सव्वेसु पणिंदितिरियपणिंदियेसु पुरिसथीसु ॥२१३॥**

(प्रे०) 'मिच्छादिट्ठीयो' इत्यादि, सप्तमनरके आयुर्जघन्यप्रदेशबन्धस्वामी घोलणयोगे वर्तमानो "मिथ्यादृष्टिः" भवति, सप्तमनरके द्वितीयादिगुणस्थानकेष्वायुषो बन्धाभावात् । 'असण्णी' इत्यादि, सर्वेषु=चतुर्षु पञ्चेन्द्रियतिर्यक्षु, सर्वेषु=त्रिषु पञ्चेन्द्रियेषु, पुरुषस्त्रीवेदयोश्चेति नवमार्गणास्वायुर्जघन्यप्रदेशबन्धस्वामी "असंज्ञी" भवति । एतासु मार्गणास्वसंज्ञिनः संज्ञिनश्चेति द्विविधा जीवाः सम्भवन्ति, तत्र संज्ञितोऽसंज्ञिनो योगस्य हीनतरत्वात् संज्ञिव्यवच्छेदार्थमुक्तमसंज्ञीति । अत्रेदमवधेयम्-पञ्चेन्द्रियतिर्यगोघापर्याप्तपञ्चेन्द्रियतिर्यक्पञ्चेन्द्रियौघापर्याप्तपञ्चेन्द्रियेषु वेद्यमानस्वायुस्तृतीयभागप्रथमसमये वर्तमानोऽपर्याप्ताऽसंज्ञी ज्ञातव्यः । तथा शेषपर्याप्तपञ्चेन्द्रियतिर्यगादिषु घोलणयोगवानसंज्ञी ज्ञातव्यः । एतच्च सामान्यवक्तव्यतातो लब्धं तथापि सुकुमार-

मतीनां शीघ्रावबोधायास्माभिः स्पष्टीकृतम् । एवमग्रेऽपि बोध्यम् ॥२१३॥

णेयो सुहमणिगोओ तिरिये एगिंदिये वणम्मि तहा ।
कायोरालदुगेसुं णपुंसगे चउकसायेसुं ॥२१४॥
अण्णाणदुगे अयते अचक्खुअपसत्थलेसभवियेसुं ।
अभवियमिच्छत्तेसुं असण्णिआहारगेसुं च ॥२१५॥

(प्रे०) "णेयो सुहमणिगोओ" इति, आयुर्जघन्यप्रदेशबन्धस्वामी सूक्ष्मनिगोदो ज्ञातव्यः । कासु मार्गणासु ? इत्याह–"तिरिये" इत्यादि, तिर्यगोघे, एकेन्द्रियौघे, वनस्पतिकायौघे, काययोगौघे, औदारिकद्विके, नपुंसकवेदे, चतुष्कषायेषु, मतिश्रुताज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अप्रशस्तलेश्यात्रिके, भव्ये, अभव्ये, मिथ्यात्वे, असंज्ञिन्याहारके चेति त्रयोविंशतिमार्गणासु । इयमत्र भावना–सर्वजीवेभ्यो निगोदानां योगोऽल्पतरः, निगोदेष्वपि बादरेभ्यः सूक्ष्माणां योगोऽल्पतरः, अतोऽत्र पृथ्वीकायादीनां बादरनिगोदानां च व्यवच्छेदनार्थमुक्तं 'सुहमणिगोओ' इति । अत्रेदमालक्षितव्यम्-सामान्यवक्तव्यतानुसारेणौदारिककाययोगमार्गणायां पर्याप्तो घोलणयोगी च सूक्ष्मनिगोद आयुर्जघन्यप्रदेशबन्धस्वामी भवति । तथा शेषासु मार्गणासु अपर्याप्तो वेद्यमानस्वायुस्त्रिभागप्रथमसमये वर्तमानः सूक्ष्मनिगोदः आयुर्जघन्यप्रदेशबन्धस्वामी भवति । मतान्तरे सप्तकर्मजघन्यप्रदेशबन्धस्वामिवदत्रापि सूक्ष्मपृथ्वीकायादिको ज्ञेयः ॥२१४।२१५॥

पुहवाइणिगोएसुं सुहमो सव्वतसदुवयजोगेसुं ।
बेइंदियो हवेज्जा णयणे चउरिंदियो णेयो ॥२१६॥

(प्रे०) "पुहवाइ" इत्यादि, अत्र पृथ्व्यादीत्यनेन पृथ्व्यादयः चत्वार एव गृह्यन्ते, वनस्पतिकायेऽनन्तरमेवोक्तत्वात्, पृथ्व्यप्तेजोवायुनिगोदौघेषु आयुर्जघन्यप्रदेशबन्धस्बन्धस्वामी "सूक्ष्मो" भवति, बादरेभ्यो सूक्ष्माणां योगस्य हीनतरत्वात् । स च सामान्यवक्तव्यतानुसारेण वेद्यमानस्वायुस्त्रिभागप्रथमसमये वर्तमानो लब्ध्यपर्याप्तो ज्ञातव्यः । 'सव्वतस' इत्यादि, सर्वेषु=त्रिषु त्रसेषु, वचनौघव्यवहारवचनरूपद्विवचनयोगयोरायुर्जघन्यप्रदेशबन्धस्वामी "द्वीन्द्रियो" भवति, त्रीन्द्रियादिभ्यो द्वीन्द्रियस्य हीनयोगात् । स त्रसौघत्रसापर्याप्तयोः वेद्यमानस्वायुस्तृतीयभागप्रथमसमये वर्तमानो लब्ध्यपर्याप्तत्रसवचनौघव्यवहारवचनेषु पर्याप्तो घोलणयोगी ज्ञेयः । "णयणे" इत्यादि,-चक्षुर्दर्शनमार्गणायामायुर्जघन्यप्रदेशबन्धस्वामी "चतुरिन्द्रियो" ज्ञातव्यः, पञ्चेन्द्रियेभ्यश्चतुरिन्द्रियाणां हीनयोगात् । स च पर्याप्तो घोलणयोगी बोध्यः, लब्ध्यपर्याप्तजीवानामप्रवेशात् ।

तदेवं विशेषवक्तव्यतायां चतुश्चत्वारिंशद्मार्गणासु आयुर्जघन्यप्रदेशबन्धस्वामी प्ररूपितः । आहारद्विके तु सामान्यवक्तव्यतातो नास्ति कश्चिद् विशेषः । शेषासु सप्तदशशतमार्गणासु

* आयुर्वर्जसप्तमूलप्रकृत्युत्कृष्ट-

ओघतः—सामान्यत उत्कृष्टयोगी अल्पतरप्रकृतिबन्धकश्च (गाथा० १७५)। विशेषतस्तु ज्ञानावरणीयादिषट्कर्मणां सूक्ष्मसम्परायस्थः क्षपक उपशमको वा, मोहनीयस्य समप्रपर्याप्तिपर्याप्त', संज्ञी, सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा गाथा० १७६)

| प्रकृतिः | आदेशतः स्वामिनः | गति० | इन्द्रिय० | काय० | योग० | वेद० | कषाय० |
|---|---|---|---|---|---|---|---|
| षट्० | षड्विधबन्धी सूक्ष्मसम्परायस्थः क्षपक उपशमको वा | म.सा.मानु० प. म. | पञ्चे. सा. पञ्चे. प. | त्रससा० त्रसप० | पञ्चम० पञ्चव० का० सा० औ० का० | अवे० | लो० |
| मोह० | सप्तप्रकृतिबन्धकः सञ्ञी | | पञ्चे. सा. पञ्चे० प. | त्रससा० त्रसप० | म०सा व्यव. का.सा औदा. | | ला० |
| ,, | ,, | म.सा.मानु. प० म० | | | पञ्चम० स० व० अ० व० सत्या० व० | अवे० | |
| सप्त० | ,, सञ्ञी | ति. सा. पञ्चे. ति.२ तिरश्ची | पञ्चे. अप. | त्रस. अप. | कार्मण० | वेद० ३ | कषाय० ३ |
| ,, | ,, बादरः | | एके. सा. | पृथ्व्यादिपञ्च निगोदौघ० | | | |
| ,, | स. प्र. ब. मार्गणाचरमसमयावच्छिन्नकरणापर्याप्त सञ्ञी | | | | औदा. मि. | | |
| ,, | स.प्र.ब.मार्गणाचरमसमयावच्छिन्नः, वै. मिश्रे देवो नारको वा, आ. मिश्रे संयतः | | | | वै मि.आ मि. | | |
| ,, | पञ्चेन्द्रियः | | | | | | |
| ,, | सप्तप्रकृतिबन्धकः | सर्वनरकदेवभेदाः अ.म. | शेष० १५ | शेष० ३३ | आहा.वैक्रि० | | |

प्रदेशबन्धस्वामिप्रदर्शकयन्त्रकम् *

आदेशतः—सामान्यत उत्कृष्टयोगी अल्पतरप्रकृतिबन्धकश्च ( गाथा १७७ ), पर्याप्ताऽपर्याप्तोभयसत्त्वे पर्याप्त एव, ( गाथा० १७८ ) विशेषतस्तु निम्नोक्तयन्त्राज्ज्ञेय. ( गाथा० १७९-१८५ )

| ज्ञान० | संयम० | दर्शन० | लेश्या० | भव्य० | सम्य० | संज्ञी० | आहा० | सर्वा: | गाथा० |
|---|---|---|---|---|---|---|---|---|---|
| ज्ञा० ४ | सं० सा० सूक्ष्म० | च० अच० अवधि० | शुक्ल० | भव्य० | स.सा औ. क्षायिक० ३ | संज्ञी० | आहा० | १७ | १७९ १८० |
| | | चक्षु० अचक्षु० | | भव्य० | | | आहा० | ११ | १८१ |
| ज्ञा० ४ | संयमसा० | अव० | शुक्ल० | | स०सा० उप० क्षायिक. | संज्ञी० | | २३ | १८१ |
| अज्ञान० ३ | असंयम० | | अशुभ० ३ | अभ० | मिथ्या० | | अना० | २४ | १८२ १८३ |
| | | | | | | | | ७ | १८१ |
| | | | | | | | | १ | १८४ |
| | | | | | | | | २ | १८५ |
| | | | | | | असं० | | १ | |
| | शेष० ४ | | शेष० २ | | शेष० ३ | | | ९८ | |

## * आयुरुत्कृष्टप्रदेशबन्धस्वामिप्रदर्शकं यन्त्रकम् *

**ओघतः**—सामान्यतः उत्कृष्टयोगे वर्तमानः ( गाथा० १७५ ), विशेषतः सर्वपर्याप्तिपर्याप्तः संज्ञी सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा ( गाथा० १७६ )

**आदेशतः**—सामान्यत उत्कृष्टयोगी अष्टप्रकृतिबन्धकश्च (गाथा० १८६), पर्याप्तापर्याप्तोभयसत्त्वे पर्याप्त एव ( गाथा० १८७ ), विशेषतस्तु निम्नप्रदर्शितयन्त्रादवसेयः ( गाथा० १८७-१९१ ) ।

| आदेशतः स्वामिनः | गति० | इन्द्रिय० | काय० | योग० | वेद० | कषाय० | ज्ञान० | संयम० | दर्शन० | लेश्या० | भव्य. | सम्य० | संज्ञि० | आहा. | गाथा० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मिथ्यादृष्टिः | सप्तम-नरक० | | | | | | | | | | | | | | १८८ |
| संज्ञी | तिर्य० ५ | पञ्चे० ३ | त्रस० ३ | व.सा.,व्य. व.का.सा, औदा० | सर्व. ३ | सर्व० ४ | अज्ञान. ३ | असं० | च० अचक्षु० | अशुभ० ३ | सर्व० २ | मिथ्या० | | आहा. | १८९ |
| बादरः | | एके. सा. | पृथ्व्यादि पञ्चनि-गोदौघ० | | | | | | | | | | | | १९० |
| मिथ्यादृष्टिः संज्ञी | | | | औ० मि० | | | | | | | | | | | १९० |
| मार्गणाचरमसमया-वच्छिन्नसंयतः | | | | आ० मि० | | | | | | | | | | | १९१ |
| पञ्चेन्द्रियः | | | | | | | | | | | | | अस. | | १:१ |
| अष्टविधबन्धकः | शेष० ४१ | शेष० १५ | शेष० ३३ | शेष० १० | | | ज्ञान० ४ | शेष० ५ | अव० | शुभ० ३ | | शेष० ४ | संज्ञि. | | |

## * आयुर्जघन्यप्रदेशबन्धस्वामिप्रदर्शकं यन्त्रम् *

**ओघत:**—जघन्ययोगवानष्टप्रकृतिबन्धकः स्वायुस्त्रिभागप्रथमसमये वर्तमानः सूक्ष्मापर्याप्तनिगोद. ( गाथा० १९३ ) ।
**आदेशत.**—सामान्यतो जघन्ययोगवानष्टप्रकृतिबन्धकः ( गाथा २०८ ), पर्याप्तापर्याप्तोभयसत्त्वेऽपर्याप्त एव ग्राह्यः ( गाथा २१२ ), विशेषतस्तु निम्नोल्लिखितयन्त्राद् बोध्यः ( गाथा २०९-२१६ ) ।

| आदेशतः स्वामिनः | गति० | इन्द्रिय० | काय० | योग० | वेद० | कषाय० | ज्ञान० | संयम० | दर्शन० | लेश्या. | भव्य० | सम्य० | संज्ञि० | आहा० | गाथा० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| घोलणयोगी मिथ्यादृष्टिः | सप्तमनरक० | | | | | | | | | | | | | | २०९ २१३ |
| स्वायुस्त्रिभागप्रथमसमयस्थोऽसंज्ञी | ति.पञ्चे०सा० ति०पञ्चे०अ | पञ्चे.सा० पञ्चे.अ. | | | | | | | | | | | | | २११ २१३ |
| घोलणयोगी असंज्ञी | ति पञ्चे.प. तिरश्ची | पर्या०प० | | | पु.स्त्री | | | | | | | | | | २०९ २१३ |
| स्वायुस्त्रिभागप्रथमसमयस्थः सूक्ष्मनिगोद. 卐 | तिर्यग्गा० | एके. सा० | वन०सा० | का.सा. औ०मि० | न० | सर्व० | मति-श्रुता० | असं० | अच० | अशु-भ. ३ | सर्व.२ | मिथ्या त्व० | असं० | आहा० | २११ २१४ २१५ |
| घोलणयोगिसूक्ष्मनिगोदः 卐 | | | पृथ्व्यादि-चतुर्निगो-दौघ० ५ | औदा० | | | | | | | | | | | २०९ २१५ |
| स्वायुस्त्रिभागाद्यसमयस्थः सूक्ष्मः | | | | | | | | | | | | | | | २११ २१६ |
| स्वायुस्त्रिभागादिसमयस्थां द्वीन्द्रियः | | | त्रस. सा., त्रस अप. | | | | | | | | | | | | २११ २१६ |
| घोलणयोगी द्वीन्द्रियः | | | त्रस प. | वचनसा., व्य व० | | | | | | | | | | | २०९ २१६ |
| घोलणयोगी चतुरिन्द्रियः | | | | | | | | | चक्षु० | | | | | | २०९-१० २१६ |
| घोलणयोगी | शेषनरक०७ सर्वदेव. ३० म प. मानुषी | शेषसर्व-पर्याप्त० ५ | शेषसर्व पर्याप्त० ११ | पञ्चमनो. शेषवच०३ वैक्रिय० | | | शेष० ५ | शेष० ५ | अवधि. | शुभ.३ | | शेष.४ | | | २०९ २१० |
| मार्गणाप्रथमसमयस्थः | | | | आहारक-द्विक० | | | | | | | | | | | २११ |
| स्वायुस्त्रिभागाद्यसमयस्थः | मनु सा.,म.अ | शेष० १० | शेष २२ | | | | | | | | | | संज्ञि० | | २११ |

卐 मतान्तरेण सूक्ष्मः पृथ्व्याद्यन्यतमो ज्ञेयः ।

* आयुर्वर्जसप्तकर्मजघन्यप्रदेशबन्ध-

ओघत:—सप्तप्रकृतिबन्धको जघन्ययोगी भवप्रथमसमये वर्तमान सूक्ष्मापर्याप्तो 卐 निगोद: ( गाथा० १९२ )।

| आदेशत: स्वामिन: | गति० | इन्द्रिय० | काय० | योग० | वेद० | कषाय० |
|---|---|---|---|---|---|---|
| घोलणयोगवानष्टविधबन्धक | | | | पञ्चम० सत्यव० अ.व. सत्या० व० | | |
| घोल० अष्ट० द्वीन्द्रिय: | | | | व. सा.. व्यव व. | | |
| तनुपर्याप्तिप्रथमक्षणस्थ: | | | | वैक्रियकाय० | | |
| तनु.पर्या. प्र. सूक्ष्मनिगोद: | | | | औदारिककाय० | | |
| मार्गणाप्रथमक्षणस्थोऽष्ट-विधबन्धक: | | | | आहा , आहा. मि० | | |
| घोलणयोगी | | | | | | |
| घोलणयोगिसप्तविधबन्धक: | | | | | अवेद० | |
| भवाद्यक्षणस्थो देवो नारको वा | | | | | | |
| असंज्ञित आगतो भव-प्रथमक्षणस्थ: | नरकसा० प्र० न० सर्वमनुष्य० देवसा०, भव० व्यंतर० | | | वैक्रियमिश्र० | | |
| मिथ्यादृष्टिर्भवादिक्षणस्थ. | शेषनरक०६ ज्यो०१ | | | | | |
| असञ्ज्ञी भवप्रथमक्षणस्थ: | तिर्यगोघमन्तरा सर्वतिर्यग्भेदा: ४ | पञ्चे० ३ | | | पु० स्त्री० | |
| + सूक्ष्मनिगोदो भव-प्रथमक्षणस्थ: | ति. सा. | एके० सा० | वन० सा० | का. सा., औ. मिश्र | न० | सर्व० |
| भवादिक्षणस्थो निगोद: | | शेषैकेन्द्रिय०६ | | | | |
| सूक्ष्मो भवाद्यक्षणस्थ: | | | पृथ्व्यादिचतु-र्निगोदोघा. | | | |
| द्वीन्द्रियो भवाद्यक्षणस्थ: | | | त्रस० ३ | | | |
| विग्रहगतौ प्रथमसमयस्थ: सूक्ष्मनिगोद: | | | | कार्मण० | | |
| चतुरिन्द्रियो भवाद्यक्षणस्थ: | | | | | | |
| नरो देवो वा भवाद्यक्षणस्थ | | | | | | |
| देवो भवाद्यक्षणस्थ: | | | | | | |
| त्रिगतिस्थो भवाद्यक्षणस्थ: | | | | | | |
| भवप्रथमसमये वर्तमान: | शेष० २६ | शेष० १ | शेष० ३३ | | | |

卐 मतान्तरेण पृथ्व्याद्यन्यतम: सूक्ष्मापर्याप्तो बोध्य: । + मतान्तरेण सूक्ष्म: पृथ्व्याद्यन्यतमोऽवसातव्य: ।

## स्वामिप्रदर्शक यन्त्रकम् ❀

**आदेशत:**—सामान्यतो जघन्ययोगे वर्तमान: (गाथा १९४), पर्याप्तापर्याप्तोभयसत्त्वेऽपर्याप्त एव ग्राह्य: (गाथा २०१), विशेषतस्तु निम्नोक्तयन्त्रादवसातव्य (गाथा० १९५-२०७) ।

| ज्ञान० | संयम० | दर्शन० | लेश्या० | भव्य० | सम्य० | संज्ञि० | आहा० | गाथा० |
|---|---|---|---|---|---|---|---|---|
| मन पर्यव० | सं.सा.,सा., छे. प. दे. | | | | | | | १९५ १९६ |
| | | | | | | | | १९६ |
| | | | | | | | | १९६ |
| | | | | | | | | १९७ |
| | | | | | | | | १९७ |
| | सूक्ष्म० ★ | | | | मिश्र० | | | १९८ |
| | | | | | | | | १९८ |
| विभङ्ग० * | | | | | | | | १९९ |
| | | | | | | संज्ञि० | | २०२ |
| | | | | | | | | २०३ |
| | | | | | | | | २०३ |
| मतिश्रुता० २ | असं० | अचक्षु० | अशुभ० ३ | सर्व० | मिथ्या० | असं० | आहा० | २०४ २०५ |
| | | | | | | | | २०५ |
| | | | | | | | | २०६ |
| | | | | | | | | २०६ |
| | | | | | | | अना० | २०६ |
| | | चक्षु० | | | | | | २०७ |
| | | | शुभ० ३ | | | | | २०७ |
| | | | | | औप० | | | २०७ |
| | | | | | सास्वा० | | | २०७ |
| शेष० २ | | अवधिद० | | | शेष० ३ | | | २०० |

★ सूक्ष्मसम्पराये प्रकृतस्वामी षट्कर्मणां वक्तव्य: । * मतान्तरेणाष्टप्रकृतिबन्धको योलणयोगी मनुष्याद्यन्यतमगतौ वर्तमानोऽवसातव्य: ।

सामान्यवक्तव्यतानुसारेण परिभावनीयः । तद्यथा–सप्तमनरकं विना सप्तनरकभेदाः, सर्वामराः, पर्याप्तमनुष्यमानुष्यौ, पर्याप्तसूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियभेदाः, पर्याप्तत्रसं विनैकादशकाय-पर्याप्तभेदाः, पञ्चमनोयोगसत्यासत्यसत्यासत्यवचनयोगवैक्रियकाययोगमार्गणाः, मतिश्रुतावधि-मनःपर्यवविभङ्गज्ञानानि संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिभेदाः, अव-धिदर्शनम्,शुभलेश्यात्रिकम् , सम्यक्त्वौघक्षायिकवेदकसास्वादनभेदाश्चेति द्व्यशीतिमार्गणास्वायुर्जघ-न्यप्रदेशबन्धस्वामी ''घोलणयोगी'' भवति । तथा मनुष्यौघापर्याप्तमनुष्यौ सूक्ष्मबादरैकेन्द्रियौ, अपर्याप्तसूक्ष्मबादरैकेन्द्रियौ, द्वित्रिचतुरिन्द्रियौघाः, अपर्याप्तद्वित्रिचतुरिन्द्रियाः, अपर्याप्तत्रसं विनैका-दश कायापर्याप्तभेदाः, सूक्ष्मपृथ्वीकायादिपञ्चबादरपृथिवीकायादिपञ्चप्रत्येकवनस्पतिकायौघभेदाः संज्ञी चेति पञ्चत्रिंशद्मार्गणास्वायुर्जघन्यप्रदेशबन्धस्वामी ''वेद्यमानस्वायुस्तृतीयभागप्रथमसमये वर्त-मानो लब्ध्यपर्याप्तो'' भवति । अपर्याप्तमार्गणासु ''लब्ध्यपर्याप्त'' इति विशेषणं स्वरूपबोधकं बोध्यम् ॥२१६॥

॥इति श्रीप्रेमप्रभाटीकासमलंकृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे तृतीयं स्वामित्वद्वारं समाप्तम्॥



## ॥ चतुर्थं साद्यादिद्वारम् ॥

तदेवं तृतीयं स्वामित्वद्वारं चिन्तितम् । सम्प्रति क्रमप्राप्तं चतुर्थं साद्यादिद्वारं वक्तुं प्रक्रमते-

**बंधम्मि साइआई चउभंगा मोहआउवज्जाणं ।**
**अगुरुपएसस्स दुवे सेसपएसाण तिविहाणं ॥२१७॥**

(प्रे०) अत्रेदमवधेयम्-प्रदेशबन्धः चतुर्विधः, तद्यथा-उत्कृष्टः, अनुत्कृष्टः, जघन्यः अजघन्यश्च । तद्व्याख्या त्वेवम्–इह तावद्यत्र सर्वोत्कृष्टयोगव्यापारादिना सर्वोत्कृष्टसंख्याकाः कर्मस्कन्धा गृह्यन्ते तत्र यः प्रदेशबन्धः स उत्कृष्टप्रदेशबन्धः । सर्वोत्कृष्टप्रदेशबन्धात् यथायोगहान्यादि कर्मस्कन्धहानिमाश्रित्य यावत्सर्वस्तोककर्मस्कन्धग्रहणं तावत्सर्वोऽपि प्रदेशबन्धो "न उत्कृष्टः=अनुत्कृष्टः" इति कृत्वा अनुत्कृष्टः । इत्येवमुत्कृष्टानुत्कृष्टप्रकाराभ्यां सर्वोऽपि प्रदेशबन्धः संगृहीतः । तथा यत्र सर्वजघन्ययोगव्यापारादिना सर्वस्तोकाः कर्मस्कन्धा गृह्यन्ते तत्र यः प्रदेशबन्धः स जघन्यप्रदेशबन्धः । सर्वजघन्यप्रदेशबन्धात् यथायोगव्यापारवृद्ध्यादि कर्मस्कन्धवृद्धिमाश्रित्य यावत्सर्वोत्कृष्टकर्मस्कन्धग्रहणं तावत्सर्वोऽपि प्रदेशबन्धः "न जघन्यः-अजघन्यः" इति कृत्वा अजघन्यः । इत्येवं जघन्याजघन्यप्रकाराभ्यामपि सर्वोऽपि प्रदेशबन्धः संगृहीतः । तथा चतुर्विधेऽपि प्रदेशबन्धे प्रत्येके चतुर्भङ्गानाश्रित्य मार्गणीयम् । चत्वारो भङ्गा एवम्–सादिः, अनादिः, ध्रुवः, अध्रुवश्च । तद्व्याख्या त्वित्थम्–य उत्कृष्टादिप्रदेशबन्धो व्यवच्छिन्नीभूतोऽपूर्वो वा प्रारब्धः स आदिना सह वर्तते इति कृत्वा सादिरुच्यते । यस्त्वनादिकालतः सततं प्रवृत्तोऽन्तराले कदाचिदपि न व्यवच्छिन्नः स न विद्यते आदिर्यस्येति कृत्वाऽनादिरभिधीयते । योऽतीतकाले कदापि न व्यवच्छिन्नः, नाप्यनागतकाले व्यवच्छेदं प्राप्स्यति स ध्रुवः, सदैव भवनात् । यश्चायत्यामवश्यं व्यवच्छिन्नीभविष्यति सोऽध्रुवः, सदैवाऽभवनात् । ध्रुवो नित्योऽनन्त इत्याद्यनर्थान्तरम् । अध्रुवोऽनित्यः सान्त इत्याद्येकार्थवाचकाः ।

अथ प्रकृतगाथार्थः प्रस्तूयते–"बंधम्मि" इत्यादि, मोहायुर्वर्जानामगुरुप्रदेशस्य बन्धे साद्यादयः चत्वारो भङ्गाः, त्रिविधानां शेषप्रदेशानां द्वौ भङ्गावित्यन्वयः । मोहायुर्वर्जानां षण्णां मूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धे "साद्यादयः चतुर्भङ्गाः" सम्भवन्ति । सादिरादौ येषां ते साद्यादयः । चत्वारश्च ते भङ्गाश्चेति चतुर्भङ्गाः । तदुपपत्तिस्त्वेवम्-एतासां षण्णां प्रकृतीनामुत्कृष्टप्रदेशबन्धः सूक्ष्मसम्पराये भवतीति प्राक् प्रदर्शितम् । ततः य उपशमकः सूक्ष्मसम्पराये षण्णां प्रकृतीनामुत्कृष्टप्रदेशबन्धं विधायोपशान्तमोहगुणस्थानं चारुह्य पुनः प्रतिपत्योत्कृष्टयोगाद्वाऽत्रैव प्रतिपत्य यदाऽनुत्कृष्टप्रदेशबन्धं करोति, तदासौ सादिः । एतत्स्थानमप्राप्तपूर्वाणामनादिः, सदैव सततं बध्यमानत्वात् । अभव्यस्य ध्रुवः, अभव्यस्य हि अनादिकालतोऽनुत्कृष्टप्रदेशबन्धो भवति, पूर्वं कदापि न व्यव-

च्छिन्नः, नाप्यायत्यां व्यवच्छेदं प्राप्स्यति। भव्यस्याध्रुवः, भव्यो हि भविष्यति काले क्षपकश्रेणि-मुपशमश्रेणिं वाऽऽरुह्यानुत्कृष्टप्रदेशबन्धस्य व्यवच्छेदं करोति ।

मोहायुर्वर्जानां षण्णां मूलप्रकृतीनामुत्कृष्टादिशेषप्रदेशबन्धानां पुनः सादिरध्रुवश्चेति द्वौ भङ्गौ सम्भवतः। तच्चैवम्-क्षपकश्रेणिनोपशमश्रेणिना वा सूक्ष्मसम्परायं प्रथममागतस्योत्कृष्टयोग-प्राप्त्योत्कृष्टप्रदेशबन्धः सादिः, तस्य प्रथमतया बध्यमानत्वात्। यश्च तत्र एकं द्वौ वा समयौ यावदुत्कृष्टप्रदेशबन्धं विधायानुत्कृष्टप्रदेशबन्धं विधास्यति, तस्योत्कृष्टप्रदेशबन्धोऽध्रुवः। कस्यापि जीवस्यानादिकालतः सदैव चोत्कृष्टप्रदेशबन्धाभावात्तस्यानादिध्रुवभङ्गौ न भवतः।

जघन्यप्रदेशबन्धः पुनरपर्याप्तस्य सर्वमन्दवीर्यलब्धिकस्य सप्तविधबन्धकस्य सूक्ष्मनिगोदस्य भव-प्रथमसमये भवति। तस्यैव यथोक्तविशेषणविशिष्टस्य जघन्यप्रदेशबन्धप्रायोग्यजघन्ययोगात्। जघ-न्यप्रदेशबन्धे जघन्ययोगस्य हेतुता पूर्वमुक्तैव। तस्यैव द्वितीयादिसमयेषु योगस्यासंख्येयगुणवृद्धया वर्धमानत्वादजघन्यप्रदेशबन्धो भवति। पुनः सङ्ख्यातेनासङ्ख्यातेन वा कालेन पूर्वोक्तजघन्ययोगं प्राप्तस्य तस्य जघन्यप्रदेशबन्धो भवति। पुनः तस्यैव पूर्वोक्ताजघन्ययोगं प्राप्तस्याजघन्यप्रदेश-बन्धो भवति। इत्येवं भवे भ्राम्यतां जीवानां जघन्याजघन्यप्रदेशबन्धयोः साद्यध्रुवौ भङ्गौ भवतः ॥२१७॥ अथ मोहायुषोर्जघन्यादिचतुर्विधप्रदेशबन्धे साद्यादिभङ्गान् चिन्तयति—

मोहाऊणं बंधे चउव्विहाण हविरे पएसाणं।
दोण्णि खलु साइअधुवा ओघव्व अचक्खुभवियेसु ॥२१८॥

(प्रे०) "मोहाऊणं" इत्यादि, मोहायुषोः चतुर्विधानामपि जघन्यादिप्रदेशानां बन्धे सादिरध्रुवश्चेति द्वौ भङ्गौ सम्भवतः। तद्यथा–मिथ्यादृष्टिः सम्यग्दृष्टिर्वाऽनिवृत्तिबादरान्तः सप्त-विधबन्धकाले उत्कृष्टयोगे वर्त्तमानो मोहनीयस्योत्कृष्टप्रदेशबन्धं विदधाति, पुनरनुत्कृष्टयोगं प्राप्या-नुत्कृष्टप्रदेशबन्धं करोति, पुनरुत्कृष्टम्, पुनरनुत्कृष्टमित्येवं भवे भ्रमतामसुमतां मोहस्योत्कृष्टानुत्कृष्ट-प्रदेशबन्धौ प्रत्येकं साद्यध्रुवौ भवतः। तथा जघन्याजघन्यप्रदेशबन्धौ यथा कर्मषट्कस्य सूक्ष्मनिगो-दादिषु संसरतां जन्तूनामनन्तरमेव भावितौ, तथाऽत्रापि निर्विशेषं भावनीयौ। आयुष्कस्याध्रुव-बन्धित्वादेवोत्कृष्टादिचतुर्विधोऽपि बन्धः साद्यध्रुवः एव भवति। तदेवमोघतोऽष्टानामपि मूल-प्रकृतीनां साद्यादिविकल्पाः चिन्तिताः।

अथ मार्गणास्वष्टमूलप्रकृतीनां चतुर्विधबन्धस्य साद्यादिप्रकारान् निरूपयति–'ओघव्व' इत्यादि, अचक्षुर्भव्यमार्गणयोरष्टानामपि मूलप्रकृतीनामुत्कृष्टादिचतुर्विधोऽपि प्रदेशबन्ध ओघवत्= अनन्तरोक्तसामान्यवक्तव्यतावद् भवति। तद्यथा-षण्णां मूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धः साद्या-दिचतुर्विकल्पः, शेषोत्कृष्टादित्रिविधप्रदेशबन्धः सादिरध्रुवश्चेति द्विविधः। तथा मोहायुषोश्चतुर्विधो-ऽपि प्रदेशबन्धः साद्यध्रुवः। तदुपपत्तिरपि अनन्तरोक्तरीत्या स्वयं परिभावनीया ॥२१८॥

सम्प्रति भव्यमार्गणायामपवदन् शेषासु मार्गणास्वष्टप्रकृतीनां चतुर्विधबन्धस्य साद्यादि-विकल्पान् प्ररूपयति—

**णवरं भवियम्मि धुवो ण अत्थि सेसासु साइअधुवा दो ।**
**भंगा चउव्विहे खलु पएसबंधे मुणेयव्वा ॥२१९॥**

(प्रे०)'**णवरं**' इत्यादि, नवरं भव्यमार्गणायां ध्रुवभङ्गो नास्ति, भव्यस्यावश्यमष्टानामपि कर्मणां बन्धाभावेनानुत्कृष्टप्रदेशबन्धस्य व्यवच्छेदः सुतरां जायते । '**सेसासु**' इत्यादि, शेषासु मार्गणासु अष्टानां कर्मणामुत्कृष्टादिचतुर्विधेऽपि प्रदेशबन्धे सादिरध्रुवश्चेति द्वौ भङ्गौ ज्ञातव्यौ । तच्चैवम्-मिथ्यात्वासंयमाज्ञानत्रिकाभव्यैर्विना शेषाणां सर्वासां मार्गणानां सादिसान्तत्वाच्चतुर्विधः प्रदेशबन्धोऽपि सादिसान्तः । मिथ्यात्वादिपञ्चमार्गणासु तु सूक्ष्मसम्परायगुणस्थानभावेन ज्ञानदर्शनावरणवेदनीयनामगोत्रान्तरायलक्षणानां षण्णां मूलप्रकृतीनामुत्कृष्टप्रदेशबन्धको मोहनीयवद् भवति । ततो मिथ्यात्वादिमार्गणाप्रविष्टानां जीवानां षण्णां मूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धोऽपि सादिसान्तः, उत्कृष्टजघन्याजघन्यप्रदेशबन्धास्तु ओघवद् ज्ञेयाः । तथा मोहायुषोरुत्कृष्टादिचतुर्विधप्रदेशबन्धोऽपि ओघवद् भावनीयः ॥२१९॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे चतुर्थं साद्यादिद्वारं समाप्तम् ॥

*** ओघत आदेशतश्चाष्टानां कर्मणामुत्कृष्टादिचतुर्विधप्रदेशबन्धमाश्रित्य साद्यादिभङ्गप्रदर्शकं यन्त्रकम् ***

**ओघतः**—( गाथा० २१७-२१८ )

| प्रकृति० | प्रदेशबन्ध० | भङ्गाः |
|---|---|---|
| मोहायुषी विना षट्कर्माणि | अनुत्कृष्ट० | साद्यनादिध्रुवाध्रुवाः ४ |
| ,, | उत्कृष्टजघन्याजघन्य० | साद्यध्रुवौ २ |
| मोहायुषी | चतुर्विध० | साद्यध्रुवौ २ |

**आदेशत**—( गाथा० २१८-२१९ )

| मार्गणा० | कर्म० | प्रदेशबन्ध० | भङ्गाः |
|---|---|---|---|
| अचक्षुर्भव्य० | अष्ट० | चतुर्विध० | ओघवद्→नवरं भव्ये ध्रुवभङ्गाभावः |
| शेषसर्व० | ,, | ,, | साद्यध्रुवौ |

## ॥ पञ्चमं कालद्वारम् ॥

तदेवं चतुर्थं साद्यादिद्वारं गतम् । सम्प्रति क्रमप्राप्तं पञ्चमं कालद्वारं व्याचिख्यासुरिमां गाथामाह—

**सत्तण्ह लहू समयो जेट्ठपएसस्स दुसमया परमो ।**
**इयरस्स लहू समयो मोहस्स गुरू असंखपरिअट्टा ॥२२०॥** (गीति.)

(प्रे०)अत्रेदं बोध्यम्-कालप्ररूपणा नामाष्टमूलप्रकृतीनामनन्तरद्वारे निर्दिष्टः उत्कृष्टः, अनुत्कृष्टः, जघन्यः, अजघन्य इति चतुर्विधप्रदेशबन्धो जघन्यत उत्कृष्टतश्च कियत्कालं यावद् भवतीति ज्ञापनम् । उत्कृष्टादिचतुर्विधप्रदेशबन्धश्चोत्कृष्टादिचतुर्विधयोगस्थानाधीनः । उत्कृष्टयोगस्थानादुत्कृष्टप्रदेशबन्धः अनुत्कृष्टयोगस्थानादनुत्कृष्टप्रदेशबन्धः । जघन्ययोगस्थानाद् जघन्यप्रदेशबन्धः, अजघन्ययोगस्थानादजघन्यप्रदेशबन्धः । ततोऽयं नियमो निर्गलितः,–उत्कृष्टादिचतुर्विधयोगस्थानानि यावत्कालमवतिष्ठन्ते तावत्कालमुत्कृष्टादिचतुर्विधप्रदेशबन्धो भवितुमर्हति । उत्कृष्टजघन्ययोगस्थानावस्थानकालः पूर्वं कर्मप्रकृत्युद्धृतयोगनिरूपणप्रस्तावे "चउराई जावट्ठगमित्तो" इति गाथायां निरूपितोऽपि मादृग्विस्मरणशीलानां स्मारणमुचितं मत्वा प्रस्तुतोपयोगिमात्रः स्मार्यते ।

तद्यथा–उत्कृष्टयोगस्थानानि उत्कृष्टतो द्विसमयौ यावदवतिष्ठन्ते । करणपर्याप्तजघन्ययोगस्थानानि उत्कर्षतश्चतुरः समयान् यावदवतिष्ठन्ते । सर्वजघन्ययोगस्थानानि भवप्रथमसमयवर्तीनि उत्कर्षतोऽपि समयमेकमेवातिष्ठन्ते । जघन्यतस्तु उत्कृष्टादिसर्वयोगस्थानानि समयमेकमेवात्रतिष्ठन्ते । तथोत्कृष्टयोगस्थानातिरिक्तयोगस्थानानि अनुत्कृष्टयोगस्थानानि । अतो द्वयोरुत्कृष्टयोगस्थानयोर्य उत्कृष्टोऽन्तरालकालः सोऽनुत्कृष्टयोगस्थानकालः । एवं जघन्ययोगस्थानातिरिक्तयोगस्थानानि अजघन्ययोगस्थानानि । अतो द्वयोर्जघन्ययोगस्थानयोर्य उत्कृष्टोऽन्तरालकालः सोऽजघन्ययोगस्थानकालः । अनयैव दिशाऽत्र कालप्ररूपणा भविष्यति । यत्र यो विशेषः स वक्ष्यते ।

अथ गाथार्थः प्रस्तूयते–'**सत्तण्ह**' इत्यादि, सप्तानां मूलप्रकृतीनां ज्येष्ठप्रदेशस्य, पदैकदेशेन पदसमुदायस्यापि गम्यमानत्वादुत्कृष्टप्रदेशबन्धस्य लघुः, प्रकरणवशात्कालः इति गम्यते, एवमग्रेऽपि यथास्थानं कालस्य गम्यमानत्वं बोध्यम्, जघन्यकालः एकसमयोऽस्ति, उत्कृष्टयोगस्थानस्य जघन्यत एकसमयमेवावस्थितेः । एवमग्रेऽपि जघन्यकालस्यैकसमयत्वेऽयमेव हेतुर्ज्ञेयः । '**दुसमया परमो**' इति, सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालो द्वौ समयौ भवति, तत्कारणीभूतोत्कृष्टयोगस्थानस्योत्कृष्टतो द्वौ समयौ यावदेवावस्थितेः । एवमग्रेऽप्युत्कृष्टकालस्य द्विसमयत्वेऽयमेव हेतुर्बोध्यः । "**इयरस्स लहू समयो**" इति, उत्कृष्टप्रदेशबन्धादितरस्यानुत्कृष्टप्रदेशबन्धस्य सप्तकर्माण्याश्रित्य जघन्यकाल एकसमयः, जघन्यत एकसमयं यावदेवानुत्कृष्टयोगस्थानस्यावस्थानात् । एवमग्रेऽपि अनुत्कृष्टप्रदेशबन्धस्य जघन्यकालस्यैकसामयिकत्वेऽयमेव हेतुर्बोध्यः ।

अथानुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालं निरूपयिषुरादौ मोहस्यानुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालं निरूपयति–"मोहस्स" इत्यादि, 'इयरस्स' इति पदमत्रापि सम्बध्यते, मोहनीयस्यानुत्कृष्ट-प्रदेशबन्धस्योत्कृष्टकालः 'असंख्यपुद्गलपरावर्ताः' भवति । मूले "असंख्यपरावर्ताः" इत्यत्र "ते लुग्वा" (सिद्धहेम० ३।२।१०८) इति सूत्रेण पुद्गलपदस्य लुक् । इयं भावनाऽत्र–मोहस्योत्कृष्ट-प्रदेशबन्धमुत्कृष्टयोगी संज्ञी द्वौ समयौ यावद् विदधाति । तदनन्तरं शेषसंज्ञिकायस्थितिं यावद-नुत्कृष्टप्रदेशबन्धं विदधाति । संज्ञिकायस्थितिसमाप्त्यनन्तरमसंज्ञी भवति । तत्राप्यनुत्कृष्टमेव प्रदेश-बन्धं स्वकायस्थितिं यावद् विदधाति । तत्र स्वकायस्थितिश्चासङ्ख्यपुद्गलपरावर्तप्रमाणा । अतो मोहनीयस्यानुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालोऽसङ्ख्येयपुद्गलपरावर्ता भवति ।

ननु कश्चिद् जीवः संज्ञी भूत्वा प्रकृष्टयोगं प्राप्य मोहनीयस्योत्कृष्टप्रदेशबन्धं विदधाति, ततः स्वकायस्थितिं शतपृथक्त्वसागरोपमाणि यावदनुत्कृष्टप्रदेशबन्धं विधायासंज्ञी भवति । तत्रापि स्व-कायस्थितिमसङ्ख्यपुद्गलपरावर्तान् यावदनुत्कृष्टप्रदेशबन्धं विधाय संज्ञी भवति । तत्रापि पुन-रुत्कृष्टयोगायोगात् स्वकायस्थितिं यावदनुत्कृष्टप्रदेशबन्धं विदधाति । पुनरसंज्ञी भूत्वा स्वकायस्थितिं यावदनुत्कृष्टप्रदेशबन्धं विदधाति । पुनः संज्ञी भूत्वोत्कृष्टयोगानुपलब्धेः स्वकायस्थितिं यावदनुत्कृष्ट-प्रदेशबन्धं विदधाति । पुनरसंज्ञी भूत्वाऽनुत्कृष्टप्रदेशबन्धं विदधाति । इत्येवं क्रमेण तस्य मोहनीस्या-नुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालोऽनन्तपुद्गलपरावर्ताः कथं न सम्भवेदिति चेदुच्यते, गुणितकर्मांश-लक्षणेनोत्कृष्टसत्ताया विधातुर्जीवस्योत्कृष्टप्रदेशसत्ताया उत्कृष्टान्तरमसंख्येयपुद्गलपरावर्तप्रमाण-मेवाभिहितम्, तथा गुणितकर्मांशस्वरूपे उत्कृष्टयोगोऽविनाभावी । तत उत्कृष्टयोगस्यान्तरमप्य-सङ्ख्येयपुद्गलपरावर्तप्रमाणमेव, ततश्चानुत्कृष्टप्रदेशबन्धकालोऽपि उत्कर्षतो यथोक्त एव भवति, न पुनरनन्तपुद्गलपरावर्ताः । तथा चोक्तं कषायप्राभृतचूर्णौ–मिच्छत्तस्स उक्कस्सपदेससंतकम्मि-यंतरं जहन्नुक्कस्सेण अणंतकालमसंखेज्जा पोग्गलपरियट्टा, एवं सेसाण कम्माणं णेदव्वं।।२२०।।

अथ षण्णां मूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालं दर्शयति–

**छण्हऽत्थि अणाइधुवो अणाइअधुवो य साइअधुवो य ।**
**तइओ परमो णेयो देसूणो अद्धपरिअट्टो ॥२२१॥**

(प्रे०) 'छण्ह' इत्यादि, मोहनीयायुरतिरिक्तानां षट्प्रकृतीनामनुत्कृष्टप्रदेशबन्धः "अनाद्य-नन्तः, अनादिसान्तः, सादिसान्तश्चेति त्रिविधो भवति । तत्राद्यद्विभेदयोरुत्कृष्टकालप्रमाणाभावात् तृतीयभेदस्योत्कृष्टकालमुत्तरार्धेनाह–'तइओ' इत्यादि, तृतीयस्य सादिसान्तात्मकस्यानुत्कृष्टप्रदेश-बन्धस्य परमः=उत्कृष्टकालो "देशोनार्धपुद्गलपरावर्तो" ज्ञेयः । तद्यथा–कश्चिदुपशमक उपशम-श्रेणिमवाप्योपशान्तमोहमारुह्याद्धाक्षयात्प्रतिपत्य दशमगुणस्थानकस्य पतत्प्रथमसमयादारभ्यानुत्कृष्ट-प्रदेशबन्धं विदधाति, तस्य सोऽनुत्कृष्टप्रदेशबन्धस्तावद् भवति यावद् देशोनार्धपुद्गलपरावर्त-

प्रमाणे काले व्यतीते क्षपकश्रेणिमवाप्य दशमगुणस्थानकचरमसमये बन्धविच्छेदो भवति ।

नन्वत्र भवक्षयप्रयुक्तानुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालः कथं न निर्दिष्टः ? स हि भवदुक्तकालप्रमाणादन्तर्मुहूर्त्तद्विकेनाधिकः प्राप्यते। तथाहि—यदि दशमगुणस्थानप्रथमसमये उत्कृष्टप्रदेशबन्धं विधाय द्वितीयसमयादनुत्कृष्टप्रदेशबन्धं विदधाति, पश्चाच्चोपशान्तमोहमनारुह्यैव पञ्चत्वं प्राप्य देवगतौ याति, तथा देशोनार्धपुद्गलपरावर्तप्रमाणे काले व्यतीते क्षपकश्रेणिमवाप्य दशमगुणस्थानचरमसमये बन्धविच्छेदं विदध्यादिति सूक्ष्मसम्परायोपशान्तमोहगुणस्थानयोरन्तर्मुहूर्तद्विकमधिकं प्राप्यते, इति चेदुच्यते, यो हि जीव उपशमश्रेणितो भवक्षयात्प्रतिपतति स स्वसंसारस्य परिमितत्वादनन्तकालं न परिभ्रमति इत्यतो भवदभिमतो भवक्षयप्रयुक्तानुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालो न निर्दिष्टः। नन्वत्र द्वितीयवारमुपशमश्रेण्यारूढमनुपादाय किमेवं क्षपकश्रेण्यारूढ उपात्तः ? इति चेदुच्यते, यद्यत्र द्वितीयवारमुपशमश्रेण्यारूढो गृह्यते तदोत्कृष्टकाल उक्तप्रमाणादन्तर्मुहूर्तं न्यूनः प्राप्यते, उपशमश्रेण्यारूढग्रहणेन कालस्योत्कृष्टप्रमाणे क्षपकश्रेणेः समावेशाभावात्। उपशमश्रेण्यारूढोऽपि क्षपकश्रेणिं विना मुक्तिप्राप्त्यभावेनावश्यं क्षपकश्रेण्यारूढो भविष्यति, अतो द्वितीयवारमुपशमश्रेण्यारूढस्य ग्रहणे जघन्यतोऽपि तावत्प्रमाणः कालः न्यूनः प्राप्यतेऽतो द्वितीयवारमुपशमश्रेण्यारूढमुपेक्ष्य क्षपकश्रेण्यारूढ एव गृहीतः ॥२२१॥

साम्प्रतमायुष उत्कृष्टादिप्रदेशबन्धस्य जघन्यादिकालं प्रतिपादयति—

**आउस्स लहू समयो जेट्ठपएसस्स दुसमया जेट्ठो ।**
**अणुरुपएसस्स लहू समयो परमो मुहुत्तंतो ॥२२२॥**

(प्रे०) 'आउस्स' इत्यादि, आयुःप्रकृतेरुत्कृष्टप्रदेशबन्धस्य जघन्यकाल एकसमयः, उत्कृष्टकालो द्वौ समयौ। अत्र जघन्यकाले उत्कृष्टकाले च हेतुः पूर्वमुक्त एव ज्ञातव्यः। अथोत्तरार्धेनानुत्कृष्टप्रदेशबन्धकालमाह—'अणुरुपएसस्स' इत्यादि, अनुत्कृष्टप्रदेशबन्धस्य जघन्यकाल एकसमयः, उत्कृष्टकालोऽन्तर्मुहूर्तम्। आयुर्बन्धस्य सर्वस्यापि कालस्यान्तर्मुहूर्त्तमात्रत्वादायुरनुत्कृष्टप्रदेशबन्ध उत्कृष्टतोऽप्यन्तर्मुहूर्त्तं यावदेव प्रवर्तते ॥२२२॥

साम्प्रतमादेशत उत्कृष्टानुत्कृष्टप्रदेशबन्धकालप्ररूपणां चिकीर्षुः सप्तकर्मभ्य आयुष्यल्पतरवक्तव्यत्वात्❖"सूचिकटाह" न्यायेन आदौ तावदायुष उत्कृष्टानुत्कृष्टप्रदेशबन्धकालं निर्वक्ति—

**एमेव जाणियव्वो सव्वासुं णवरि होअए समयो ।**
**आहारमीसजोगे जेट्ठपएसस्स उक्कोसो ॥२२३॥**

---

❖ यथाऽयस्कारः सूचीकटाहोभयकर्तव्यताप्रसङ्गे कटाहापेक्षया सूक्ष्माल्पतरकालेन निष्पन्ना भवतीति प्रथमं सूचीं करोति, ततः कटाहम्। कटाहो हि बृहत्तरकालेन निष्पद्यते। एवमत्रापि सप्तकर्मवक्तव्यतापेक्षयायुषो वक्तव्यता स्तोकतरत्वादल्पतरकालेन वक्तुं शक्यते इति प्रथममायुष उत्कृष्टानुत्कृष्टप्रदेशबन्धकालं प्ररूपयति।

(प्रे०) "एमेव" इत्यादि, आयुष उत्कृष्टप्रदेशबन्धस्यानुत्कृष्टप्रदेशबन्धस्य च जघन्य उत्कृष्टश्च कालः एवमेव=ओघवत्कथ्यतावद्, अनन्तरगाथायां सामान्येन यथाभिहितः तथैवेति यावद्, ज्ञातव्यः। कुत्र ? इत्याह "सव्वासु" इति, 'मार्गणासु' इति प्रकरणवशाल्लभ्यते। ओघतः कियान् कालोऽभिहित इति त्वत्र नाभिधीयते, अनन्तरार्यायामेवोक्तत्वात्। अथात्रापवदिषुराह- "णवरि" इत्यादि, णवरि विशेषताद्योतकमव्ययम्, आहारकमिश्रयोगे उत्कृष्टप्रदेशबन्धस्योत्कृष्टकाल एकसमयो भवति, स्वचरमसमये उत्कृष्टप्रदेशबन्धस्य भवनात् ॥२२३॥

सम्प्रति शेषसप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्य जघन्यादिकालं व्याख्याति—

सव्वासु मग्गणासुं जेट्ठपएसस्स आउवज्जाणं ।
हस्सो समयो णेयो उक्कोसो होइ दो समया ॥२२४॥

(प्रे०) 'सव्वासु' इत्यादि,—सर्वासु मार्गणास्वायुर्वर्जानां सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्य जघन्यकालः एकसमयो ज्ञातव्यः, उत्कृष्टकालश्च द्वौ समयौ भवति। उपपत्तिस्तु सुगमा, कालप्ररूपणाप्रारम्भे "सत्तण्ह लहू" इत्यत्र वृत्तावभिहिता ॥ २२४ ॥ इदानीमत्रापवादं दर्शयति—

णवरं जेट्ठो कालो जेट्ठपएसस्स होअए समयो ।
मिस्सतिजोगेसुं तह कम्माणाहारगेसुं च ॥२२५॥

(प्रे०) 'णवरं' इत्यादि, णवरमिति 'णवरं केवले'(सिद्ध० ८।२।१८७) इति केवलार्थद्योतकमव्ययम्, सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टः काल एकः समयो भवति। कासु मार्गणासु ? इत्याह—"मिस्सतिजोगेसु" इत्यादि, त्रयो योगाः त्रियोगाः, मिश्राश्च ते त्रियोगाश्चेति मिश्रत्रियोगाः, तेषु, "विशेषणं विशेष्येणैकार्थं कर्मधारयश्च" (सिद्धहेम० ३।१।९६) इति सूत्रेण कर्मधारयसमासः, औदारिकमिश्रे वैक्रियमिश्रे, आहारकमिश्रे चेत्यर्थः, तथा कार्मणकाययोगेऽनाहारकमार्गणायाञ्च ।

अत्रेयं भावना-त्रिमिश्रमार्गणासूत्कृष्टप्रदेशबन्धश्चरमसमय एव भवति। तथा कार्मणानाहारकमार्गणयोः संज्ञिजीवानामेकं द्वौ वा समयौ यावदवस्थितिर्भवति । तत्र यदि द्वौ समयौ यावदवस्थितिर्भवति तदा चरम एकस्मिन् समय एवोत्कृष्टप्रदेशबन्धो भवति, तत्रस्थानां जीवानामपर्याप्तत्वेन प्रतिसमयमसङ्ख्यगुणयोगवृद्धिभवनाच्चरमसमय एवोत्कृष्टयोगप्राप्तेः ॥२२५॥

एतर्हि सप्तप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्य जघन्यकालं चिन्तयति—

सव्वासु लहू समयो अगुरुपएसस्स आउवज्जाणं ।
णवरं भिन्नमुहुत्तं तिमिस्सजोगेसु विण्णेयो ॥२२६॥

(प्रे०)'सव्वासु' इत्यादि,—सर्वासु मार्गणास्वायुर्वर्जानां सप्तमूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्य जघन्यकाल एकसमयो भवति । हेतुः सुगमः । अथोत्तरार्धेनापवदति-'णवरं' इत्यादि, किन्तु

"त्रिमिश्रयोगेषु"=औदारिकमिश्रः, वैक्रियमिश्रः, आहारकमिश्रश्चेति त्रिमिश्रयोगेषु, 'भिन्नमुहूर्त्त' इति, भिन्नं च तद् मुहूर्तं चेति भिन्नमुहूर्त्तम् , अन्तर्मुहूर्त्तमित्यर्थः, विज्ञेयः । तद्यथा-एतद्मार्गणाप्रविष्टानां जीवानां चरमसमय एवोत्कृष्टप्रदेशबन्धो भवति । ततः चरमसमयात् प्राक्काले‌ऽनुत्कृष्टप्रदेशबन्धो भवति । तिसृणामपि मार्गणानां जघन्यस्यापि कालस्यान्तर्मुहूर्त्तप्रमाणत्वात् चरमसमयात् पूर्वः कालोऽन्तर्मुहूर्त्तप्रमाण एव भवति । अतोऽनुत्कृष्टप्रदेशबन्धस्य कालो जघन्यतोऽपि तावत्प्रमाणो भवति ॥२२६॥ सम्प्रति सप्तप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालं चिन्तयति—

अगुरुपएसस्स गुरू ओघव्व भवे अचक्खुभवियेसुं ।
णवरं णो चेव भवे भविये भंगो अणाइधुवो ॥२२७॥

(प्रे०) "अगुरुपएसस्स" इत्यादि, अचक्षुर्दर्शनभव्ययोः सप्तमूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकाल 'ओघवद्' भवेत् । तद्यथा-मोहनीयस्यासंख्यपुद्गलपरावर्ताः, शेषाणां षण्णामनुत्कृष्टप्रदेशबन्धोऽनादिध्रुवः, अनाद्यध्रुवः,साद्यध्रुवश्चेति त्रिविधः, तत्र तृतीयस्योत्कृष्टकालो देशोनार्धपुद्गलपरावर्तः । तदुपपत्तिस्तु जिज्ञासुना सामान्यवक्तव्यताया अवगन्तव्या, ग्रन्थविस्तरभयान्नात्र प्रपञ्च्यते ।

अथात्र योऽपवादस्तं विवक्षुराह-'णवरं' इत्यादि, केवलम् , 'नो' इति निषेधार्थेऽत्राचक्रमव्ययम् , तथा चोक्तं कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिवरैः अभिधानचिन्तामणिकोशे सामान्यकाण्डे "प्रादुराविःप्रकाशे स्यादभावे त्व नो नहि" इति, 'चेव' इति अवधारणे, नैव भवेदित्यर्थः । किं नैव भवेदित्याह-'भविये' इत्यादि, भव्यमार्गणायामनादिध्रुवभङ्गो नैव भवेद् । कुतः ? इति चेदुच्यते, भव्यस्यानागतकालेऽष्टानामपि कर्मणां बन्धव्यवच्छेदादनुत्कृष्टप्रदेशबन्धस्यापि व्यवच्छेदो भवति ॥२२७॥ अथ मार्गणान्तरेषु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालमाह—

णेयो असंखलोगा एगिंदिणिगोअपंचकायेसुं ।
सेढीअ असंखयमो भागो सुहमोघभेएसुं ॥२२८॥

(प्रे०) 'णेयो' इत्यादि, एकेन्द्रियनिगोदपृथ्व्यप्तेजोवायुवनस्पतिकायरूपसप्तौघमार्गणासु सप्तमूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालोऽसंख्येयलोका ज्ञेयः । "व्याख्यानतो विशेषार्थप्रतिपत्तिः" इति असंख्येयानां लोकानां यावन्त आकाशप्रदेशास्तावन्तः समया बोध्यः । कालतस्तु असंख्येयोत्सर्पिण्यवसर्पिणीप्रमाणो भवति । तदुपपत्तिस्त्वित्थम्-एतासु मार्गणासु सप्तमूलप्रकृतीनामुत्कृष्टप्रदेशबन्धं सप्तप्रकृतिबन्धकः पर्याप्तः उत्कृष्टयोगी बादर एकं द्वौ वा समयौ यावद् विदधाति । तदनन्तरं बादरकायस्थितिसमाप्तौ सूक्ष्मो भूत्वा सूक्ष्मकायस्थितिं यावदनुत्कृष्टप्रदेशबन्धं विदधाति । सूक्ष्मकायस्थितिश्च क्षेत्रतोऽसङ्ख्येयलोकाकाशप्रदेशप्रमाणा, कालतश्चासंख्येयोत्सर्पिण्यवसर्पिणीप्रमाणा । अतोऽनुत्कृष्टप्रदेशबन्धकालस्योत्कृष्टतोऽसंख्येयलोकाकाशप्रदेशप्रमाणता सुतरां घटामञ्चति ।

"सेढीअ" इत्यादि, 'असंख्यतमः' इत्यत्र न विद्यते सङ्ख्या इयत्ता यस्यासावसङ्ख्यः, इति नञ्बहुव्रीहिः, ततः "शतादिमासार्द्धमाससंवत्सरात्" (सिद्धहेम. ७।१।१५७) इति सूत्रेण सङ्ख्यापूरणे "तमट्" प्रत्ययः, सप्तमूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालः श्रेण्या असङ्ख्यतमो भागः=घनीकृतलोकाकाशश्रेण्या असंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्तः समया भवति । कासु मार्गणासु ? इत्याह–'सुहुमोघभेएसु" इति, सूक्ष्मा एकेन्द्रियपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायरूपा ये ओघभेदास्तेषु । सूक्ष्ममार्गणाप्रविष्टानां जीवानां तथास्वभावत एवोत्कृष्टत उक्तकालव्यतीत उत्कृष्टप्रदेशबन्धयोग्योत्कृष्टयोगयोगो भवति ॥२२८॥ सम्प्रति सप्तकर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालप्ररूपणां पिपारयिषुराह—

दुअणाणायतअभवियमिच्छत्तेसु असंखपरिअट्टा ।
सेसासु उक्कोसा सगसगकायट्ठिई णेयो ॥२२९॥

(प्रे०) 'दुअणाण' इत्यादि, मतिश्रुताज्ञानासंयमाभव्यमिथ्यात्वमार्गणासु सप्तमूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालोऽसंख्यपरावर्ताः=असंख्यपुद्गलपरावर्तप्रमाणो भवति । तद्यथाएतासु मार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धमुत्कृष्टयोगी "संज्ञी" एकं द्वौ वा समयौ यावद् विदधाति, तदनन्तरं संज्ञिकायस्थितिसमाप्तौ असंज्ञी भूत्वाऽसंज्ञिकायस्थितिं यावदनुत्कृष्टप्रदेशबन्धं विदधाति । असंज्ञिकायस्थितिश्चासङ्ख्यपुद्गलपरावर्तप्रमाणा । अतः समीचीनमेवोक्त "मसङ्ख्येयपरावर्ताः" इति । 'सेसासु' इत्यादि, शेषासु सार्धशतमार्गणासु सप्तमूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकाल उत्कृष्टा स्वकायस्थितिर्ज्ञातव्यः । अत्र स्वपदेन मार्गणा ग्राह्या । अयं कालो मार्गणाप्रविष्टस्य यस्य जीवस्य मार्गणास्थितिं यावदुत्कृष्टयोगाप्राप्तेरुत्कृष्टप्रदेशबन्धाभावेनानुत्कृष्ट एव प्रदेशबन्धो भवति तमाश्रित्य बोध्यः ।

ननु कोऽत्र विशेषः ? येन शेषासु मार्गणासु अनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालो मार्गणोत्कृष्टकायस्थितिप्रमाणोऽभिहितः, एकेन्द्रियादिमार्गणासु च तथाऽनुक्त्वा पृथगभिहितः, इति चेदुच्यते, शेषमार्गणाप्रविष्टानां केषाञ्चिद् जीवानां तथास्वाभाव्याद् मार्गणास्थितिं यावदुत्कृष्टयोगाप्राप्तिरपि सम्भवति, यतः शेषासु मार्गणासु नास्ति नियमो यत् तत्र प्रविष्टानां सर्वेषामुत्कृष्टकायस्थितिकजीवानामप्युत्कृष्टयोगप्राप्तिर्भवत्येव । अतः शेषासु मार्गणासु येषां जीवानां मार्गणास्थितिं यावदुत्कृष्टयोगाप्राप्तेरुत्कृष्टप्रदेशबन्धाभावेनानुत्कृष्ट एव प्रदेशबन्धो भवति तानाश्रित्यानुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालः प्राप्यते । एकेन्द्रियादिमार्गणासु तु तत्र प्रविष्टानामुत्कृष्टकायस्थितिकानां सर्वेषामपि जीवानां तथास्वाभाव्यादुत्कृष्टयोगप्राप्तिर्भवत्येव । अतस्तासु शेषमार्गणावदुत्कृष्टकायस्थितिप्रमाणं कालमनुक्त्वा पृथगभिहितवान् ।

शेषमार्गणास्त्वेताः—अशेषनरकतिर्यग्मनुष्यदेवभेदाः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियौ विना सर्वेन्द्रियभेदाः, पृथ्व्यप्तेजोवायुवनस्पतिनिगोदौघसूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायैर्विना सम-

सकलकायभेदाः, विश्वयोगभेदाः, निखिलवेदभेदाः, समग्रकषायभेदाः, मतिश्रुतावधिमनःपर्यव-विभङ्गज्ञानानि, असंयममन्तरा कृत्स्नसंयमभेदाः, चक्षुरवधिदर्शने, निखिललेश्याभेदाः, मिथ्यात्वमन्तरा सकलसम्यक्त्वभेदाः, संज्ञी, असंज्ञी, आहारकानाहारकभेदौ। अथात्र शेषासु सार्धशतमार्गणासूत्कृष्टकायस्थितिरभिधेया, अतः प्रसङ्गात्सर्वासु मार्गणासु कायस्थितिरभिधीयते तथा चात्र मूलप्रकृतिस्थितिबन्धे द्वितीयाधिकारे कालद्वारे प्रविष्टा उत्कृष्टकायस्थितिप्रतिपादिकागाथाः—

कायठिई उक्कोसा णिरयसुराणं विभंगणाणस्स । किण्हसुइलखइआण तेत्तीसा सागरा णेया ॥ १५२ ॥
पढमाइगणिरयाणं कमसो एगो य तिण्णि सत्त दश । सत्तरह य बावीसा तेत्तीसा सागरा णेया ॥ १५३ ॥
णेया असंखिया खलु परिअट्टा पोग्गलाण तिरियस्स । एगिंदियहरिआणं कायणपुंसगअसण्णीणं ॥ १५४ ॥
तिपणिंदियतिरियाणं तिणराणं य पलिओवमा तिण्णि । अब्भहिया पुव्वाणं कोडिपुहुत्तेण णायव्वा ॥ १५५ ॥
सव्वापज्जत्ताणं समत्तबायरणिगोअकायस्स । पज्जत्तगसुहुमाणं पणमणवयउरलमीसाणं ॥ १५६ ॥
विउवाहारदुगाणं अवगयवेअस्स चउकसायाणं । सुहुमुवसममीसाणं भिन्नमुहुत्तं मुणेयव्वा ॥ १५७ ॥
भवणस्स साहियुदही पल्लं वंतरसुरस्स विण्णेया । पलिओवममब्भहियं जोइसदेवस्स णायव्वा ॥ १५८ ॥
सोहम्माईण कमा अयरा दो साहिया दुवे सत्त । अब्भहिया सत्तय दस चउदस सत्तरह णायव्वा ॥ १५९ ॥
एत्तो एगेगऽहिया णायव्वा जाव एगतीसुदही । उवरिमगेविज्जस्स उ तेत्तीसाऽणुत्तराण भवे ॥ १६० ॥
अंगुलअसंखभागो बायरएगिंदियस्स सुहुमाणं । तह पुढवाइचउण्हं णेया लोगा असंखेज्जा ॥ १६१ ॥
बायरपज्जेगिंदियभूदगपत्तेअवाउविगलाणं । संखेज्जसहस्ससमा समत्तबेइंदियस्स संखसमा ॥ १६२ ॥
पज्जत्तगतेइंदियबायरतेऊण होइ संखेज्जा । दिवसा संखियमासा समत्तचउइंदियस्स भवे ॥ १६३ ॥
पंचिंदियचक्खूणऽहियुदहिसहस्सं तसस्स तं दुगुणं । पज्जपणिंदितसपुरिससण्णीणायरसयपुहुत्त ॥ १६४ ॥
अड्ढतइअपरिअट्टा भवे णिगोअस्स होइ मोहठिई । बायरपुढवाइचउगणिगोअपत्तेअहरिआणं ॥ १६५ ॥
देसूणसहस्ससमा बावीसुरलस्स तिसमया णेया । कम्माणाहाराणं पल्लसयपुहुत्तमित्थीए ॥ १६६ ॥
मणणाणसयमाणं समइअछेअपरिहारदेसाणं । देसूणा पुव्वाण कोडी एगा मुणेयव्वा ॥ १६७ ॥
दुअणाणायतमिच्छाण अणाइधुवा अणाइअधुवा य । साइअधुवा य तिविहा तइआ हीणद्धपरिअट्टो ॥ १६८ ॥
साहियछंसट्ठिजलही तिणाणसम्मत्तवेअगोहीसुं । दुविहाऽत्थि अणाइधुवा अणाइअधुवा अचक्खुस्स ॥ १६९ ॥
णीलाइचउण्ह कमा अयरा दस तिण्णि दोण्णि अट्ठार । भवियस्सऽणाइअधुवा तह्वा अभवियस्सऽणाइधुवा १७०
सासाणस्सावलिआ छ भवे आहारगस्स णायव्वा । अंगुलअसंखभागोत्ति भवे उक्कोसकायठिई ॥ १७१ ॥
मतान्तरेणाह—अण्णे उ भणन्ति भवे संखसहस्सवरिसा समत्ताण । बेइंदियतेइंदियचउरिंदियबायरगीणं
दो सागरा सहस्सा समत्ततसचक्खुदंसणाण भवे । सत्तरह सत्त अयरा होइ कमा णीलकाऊसुं ॥ १७२ ॥

इत्येवमत्र सामान्यावबोधायोत्कृष्टकायस्थितिप्रतिपादिका गाथा अभिहिताः। विशेषावबोधार्थिना विदुषा श्रीजगच्चन्द्रविजयमुनिपुङ्गवेन कृता वृत्तिर्निरीक्षणीया ॥२२९॥

तदेवमष्टानामपि कर्मणामोघत आदेशतश्चोत्कृष्टानुत्कृष्टप्रदेशबन्धकालचिन्ता कृता। साम्प्रतमष्टमूलप्रकृतीनां जघन्याजघन्यप्रदेशबन्धकालं व्याख्यातुकाम आदौ तावदष्टकर्मणां जघन्यप्रदेशबन्धस्यायुषश्चाजघन्यप्रदेशबन्धस्य कालमोघतः प्रतिपादयति—

**अट्ठण्ह जहण्णियरो हस्सपएसस्स होअए समयो ।**
**आउस्स मुहुत्तंतो अलहुपएसस्स इस्सियरो ॥२३०॥**

(प्रे०) 'भट्टण्ह' इत्यादि, अष्टानामपि मूलप्रकृतीनां ह्रस्वप्रदेशस्य=जघन्यप्रदेशबन्धस्य जघन्य इतरश्चोत्कृष्टः काल एकसमयो भवति, जघन्यप्रदेशबन्धयोग्यजघन्ययोगस्थानस्य जघन्यत उत्कृष्टतश्चैकसमयमेवावस्थितेः, यतः सप्तमूलप्रकृतीनां जघन्यप्रदेशबन्धस्वामी भवप्रथमसमये वर्तमानः आयुषश्च जघन्यप्रदेशबन्धस्वामी वेद्यमानस्यायुस्त्रिभागस्य प्रथमसमये वर्तमानः निगदितः। अथोत्तरार्धेनाऽऽयुषोऽजघन्यप्रदेशबन्धस्य जघन्यमुत्कृष्टश्च कालमाह–"भाउस्स" इत्यादि, आयुषः अलघुप्रदेशस्य=अजघन्यप्रदेशबन्धस्य जघन्य इतरश्च उत्कृष्टः कालः ''मुहूर्त्तान्तः''-अन्तर्मुहूर्तं भवति। मुहूर्त्तस्य अन्तः इति मुहूर्त्तान्तः, "षष्ठ्ययत्नाच्छेषे" (सिद्धहेम. ३।१।७६) इति सूत्रेण षष्ठीतत्पुरुषसमासः । मुहूर्तान्तः, अन्तर्मुहूर्तमित्येकार्थौ, यतो मुहूर्त्तस्यान्तः=मध्ये इत्यत्र यदा "षष्ठ्ययत्नाच्छेषे" इत्यनेन सूत्रेण षष्ठीतत्पुरुषः क्रियते तदा ''मुहूर्त्तान्तः'' इति भवति, यदा तु "पारेमध्येऽग्रेऽन्तः षष्ठ्या वा" (सिद्धहेम. ३।१।३०) इति सूत्रेण पूर्वपदार्थेऽव्ययीभावसमासः क्रियते तदा ''अन्तर्मुहूर्त्तम्'' इति भवति, इत्येवं समासभेदात् शब्दभेदः, शब्दार्थस्त्वेक एव ।

इयं भावनाऽत्र-यः कोऽपि जीव आयुर्जघन्यप्रदेशबन्धं विदधाति स आयुर्बन्धस्य प्रथमसमये एव विदधाति, अतो द्वितीयसमयादारभ्य चरमसमयं यावदजघन्यप्रदेशबन्धं विदधाति। आयुर्बन्धद्वितीयसमयादारभ्यान्तिमसमयं यावत् कदाऽपि जघन्यप्रदेशबन्धो न भवति । इत्येवं सर्वेऽपि जीवा आयुर्बन्धस्य द्वितीयसमयादारभ्यान्तिमसमयं यावत् सततमजघन्यमेव प्रदेशबन्धं कुर्वन्ति। आयुर्बन्धस्य द्वितीयसमयादारभ्यान्तिमसमयं यावत् सर्वोऽपि कालोऽन्तर्मुहूर्त्तप्रमाणो भवति। अत आयुरजघन्यप्रदेशबन्धकालस्य जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तप्रमाणता घटामश्चति ॥२३०॥ साम्प्रतमोघतः सप्तकर्मणामजघन्यप्रदेशबन्धस्य कालमाह—

**समयूणखुड्डगभवो हस्सो सेसाण होइ उक्कोसो**
**णेयो असंखलोगा उभ सेढीए असंखंसो ॥२३१॥**

(प्रे०) 'समयूणखुड्डगभवो हस्सो सेसाण होइ' इति, शेषाणाम्=आयुर्व्यतिरिक्तानां सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यः कालः समयन्यूनक्षुल्लकभवो भवति। अत्रेयं भावना-प्रकृतभवप्रथमसमये जघन्यप्रदेशबन्धं विधाय पुनर्जघन्यप्रदेशबन्धविधाने जघन्यतोऽपि क्षुल्लकभवस्यान्तरं भवति, तत्पूर्वं जघन्ययोगायोगात्। तद्यथा-द्वयोर्जघन्यप्रदेशबन्धयोरन्तरालेऽजघन्यप्रदेशबन्धो भवति, तथा जघन्यप्रदेशबन्धस्वामी सूक्ष्मनिगोदः प्रथमभवे प्रथमसमये जघन्यप्रदेशबन्धं विदधात्यतः प्रथमसमयं विना कृत्स्ने क्षुल्लकभवेऽजघन्यप्रदेशबन्धो भवति, द्वितीयभवे च प्रथम एव समये जघन्यप्रदेशबन्धं विदधाति । अतः सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यकालः एकसमयेन न्यूनः क्षुल्लकभवो भवति ।

'कालोऽसो णेयो असंखलोगा' इति, सप्तकर्मणामजघन्यप्रदेशबन्धस्योत्कृष्टः कालः 'असंख्यलोकाकाशप्रमाणो' ज्ञातव्यः । इयमत्र–भावना-सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी "सूक्ष्माऽपर्याप्तनिगोदो" भवति, सूक्ष्मनिगोदमार्गणाया उत्कृष्टमन्तरमसंख्यलोकाकाशप्रदेशप्रमाणं भवति, अतः कश्चिज्जीवः सकृज्जघन्यप्रदेशबन्धं विधायोत्कृष्टतोऽसंख्यलोकाकाशप्रदेशप्रमाणकाले व्यतीते पुनर्विदधाति, द्वयोर्जघन्यप्रदेशबन्धयोरन्तराले सर्वोऽपि प्रदेशबन्धो "न जघन्योऽजघन्यः" इति कृत्वाऽजघन्यो भवति, अतोऽजघन्यप्रदेशबन्धस्य यथोक्तकालस्य नानुपपत्तिः ।

अत्र मतान्तरमाह–'उअ' इत्यादि, यद्वा सप्तकर्मणामजघन्यप्रदेशबन्धस्योत्कृष्टः कालः सूचिश्रेण्या असंख्यतमे भागे यावन्तः प्रदेशास्तावत्प्रमाणो भवति । अयं कालः सूक्ष्मापर्याप्तनिगोदमाश्रित्य नोपपद्यते, अपि तु पृथ्व्याद्यन्यतमं सूक्ष्मापर्याप्तजीवमाश्रित्योपपद्यते, तद्यथा–केषाञ्चिदभिप्रायेण सूक्ष्मापर्याप्तो भवप्रथमसमये जघन्यप्रदेशबन्धं विदधातीति पूर्वं स्वामित्वद्वारे वृत्तावस्माभिः प्रदर्शितम्, भवप्रथमसमयस्थानि योगस्थानानि सर्वाण्यपि श्रेण्यसंख्यातभागप्रमाणानि सन्ति, अतः कश्चित् पृथ्व्याद्यन्यतमः सूक्ष्मापर्याप्तः सकृज्जघन्यप्रदेशबन्धं विधाय श्रेण्यसंख्यातभागप्रमाणकाले व्यतीतेऽवश्यं पुनर्विदधातीति सूक्ष्मापर्याप्तमाश्रित्य यथोक्तकाल उपपद्यते ॥२३१॥

साम्प्रतमष्टकर्मणां जघन्याजघन्यप्रदेशबन्धकालं मार्गणासु निरूपयिषुरादौ तावत्सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्य कालं गाथाद्विकेन निरूपयति—

सव्वासु जहण्णियरो हस्सपएसस्स आउवज्जाणं ।
समयो णवरं पणमणवयणावेएसु मणणाणे ॥२३२॥
संयमसामइअसुहुमछेअगपरिहारदेसमीसेसु ।
चउसमया जेट्ठो वा विउवाहारगविभंगेसु ॥२३३॥

(प्रे०)"सव्वासु" इत्यादि, सर्वासु मार्गणासु आयुरन्तरा सप्तकर्मणां जघन्यप्रदेशबन्धस्य जघन्य उत्कृष्टश्च कालः "एकसमयो" भवति, करणपर्याप्तप्रायोग्यजघन्ययोगस्थानातिरिक्तसर्वजघन्ययोगस्थानानां जघन्यत उत्कृष्टतश्चैकसमयं यावदेवावस्थानात् । अथात्रापवादमाह–'णवरं' इत्यादि, किन्तु पञ्चमनःपञ्चवचनयोगेषु, अवेदे मनःपर्यवज्ञाने, संयमौघसामायिकसूक्ष्मसम्परायछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिषु, मिश्रे चेत्येकोनविंशतिमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टः कालः "चत्वारः समयाः" भवति । अत्रेयं भावना–एतासु मार्गणासु जघन्यप्रदेशबन्धस्वामी घोलनयोगी भवति, मार्गणावर्तिसर्वजीवानां करणपर्याप्तत्वात् । करणपर्याप्तस्य जघन्ययोगस्थानान्युत्कृष्टतश्चतुःसमयान् यावदवतिष्ठन्ते इति यथोक्तकालः समुपपद्यते ।

अथ वैक्रिययोगादिमार्गणात्रिके समतान्तरं प्रकृतमेवाह–"वा विउवाहारगविभंगेसु" इति, वैक्रियाहारककाययोगयोर्विभङ्गज्ञाने च सप्तकर्मणां जघन्यप्रदेशबन्धस्योत्कृष्टकालो विक-

त्वेन "चत्वारः समयाः" भवति। वैक्रियाहारककाययोगयोर्भावनैवम्-जघन्यप्रदेशबन्धप्रायोग्यजघन्ययोगस्योत्कृष्टत एकसमयमवस्थितिर्भवतीति केचिदाहुः, केचिच्च चतुरः समयान् यावदवस्थानं भवतीति मन्यन्ते। तत्र यदि जघन्ययोगस्यैकसमयं यावदवस्थितिः स्वीक्रियते तर्हि जघन्यप्रदेशबन्धस्योत्कृष्टकाल एकसमयो भवति, यदि तु चतुरः समयान् यावत् स्वीक्रियते तर्हि चत्वारः समया भवति। अथ विभङ्गज्ञाने भावनैवम्-पूर्वं कालद्वारे विभङ्गज्ञाने जघन्यप्रदेशबन्धस्वामी भवप्रथमसमयस्थो देवो नारको वा निरूपितः, मतान्तरेण च घोलणयोगी प्रदर्शितः। तत्र येषां मते भवप्रथमसमयस्थो देवो नारको वा जघन्यप्रदेशबन्धस्वामी भवति तेषां मते जघन्यप्रदेशबन्धस्योत्कृष्टकालः एकसमयो भवति, येषां मते जघन्यप्रदेशबन्धस्वामी घोलणयोगी भवति तेषां मते जघन्यप्रदेशबन्धस्योत्कृष्टकालः चत्वारः समया भवति, घोलमानजघन्ययोगस्योत्कृष्टतश्चतुरः समयान् यावदवस्थानात् ॥२३२।२३३॥

सम्प्रति सप्तमूलप्रकृतीनामजघन्यप्रदेशबन्धस्य जघन्यकालं दिदर्शयिषुर्यासु मार्गणासु जघन्यकाल एकसमयस्ता गाथात्रिकणाह—

समयो भवे जहण्णो अलहुपएसस्स आउवज्जाणं।
तिणरपणमणवयेसुं कायतिउरलाइजोगकम्मेसुं ॥२३४॥ [गी॰ तिः]
थीणपुमावेएसुं कसायणाणचउगम्मि विब्भंगे।
सयमसामइएसुं छेए परिहारदेसेसुं ॥२३५॥
तह सुहुमसंपराये ओहिसुइलसम्मखइउवसमेसुं।
वेअगमीसेसु तहा सासणणाहारगियरेसुं ॥२३६॥

(प्र०) 'समयो' इत्यादि, आयुर्वर्जाना सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यकालः 'एकसमयो' भवति, कासु मार्गणास्वित्याह-'तिणर' इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, पञ्चमनःपञ्चवचनेषु, काययोगौघे, औदारिकवैक्रियाहारककायरूपेषु औदारिकादित्रियोगेषु, कार्मणकाये, स्त्रीनपुंसकवेदात्रेदेषु, कषायचतुष्के, ज्ञानचतुष्के, विभङ्गज्ञाने, सयमौघसामायिकछेदोपस्थापनोयपरिहारविशुद्धिदेशविरतिषु, तथा सूक्ष्मसम्पराये, अवधिदर्शने, शुक्ललेश्यायां, सम्यक्त्वौघक्षायिकोपशमक्षायोपशमिकमिश्रेषु, तथा सास्वादनसम्यक्त्वे आहारकानाहारकयोश्चेति षट्चत्वारिंशति मार्गणासु।

अत्रोपपत्तिश्चैवम्-त्रिमनुष्यमार्गणासु यदा उपशमश्रेणौ षण्णां कर्मणां बन्धविच्छेदं कृत्वा उपशान्तमोहावस्थां प्राप्य पुनः प्रतिपत्य षण्णां प्रकृतीनामेकसमयमजघन्यप्रदेशबन्धं कृत्वा पञ्चत्वमेति तदा षण्णां कर्मणामजघन्यप्रदेशबन्धस्य जघन्यकाल एकसमयो भवति। मोहनी-

यस्य तु नवमगुणस्थानकमागत्यैकसमयमजघन्यप्रदेशबन्धं कृत्वा निधनं याति तदाऽजघन्यप्रदेशबन्धस्य जघन्यकाल एकसमयः प्राप्यते । स्त्रीनपुंसकवेदाहारकमार्गणास्वपि तथैव भावनीयम् ।

काययोगौघमार्गणायां भावनैवम्—काययोगे वर्तमानः कश्चिज्जीव उपशान्तमोहगुणस्थानात् प्रतिपत्यैकसमयमजघन्यप्रदेशबन्धं विधायाऽनन्तरसमये काययोगमार्गणां विहाय मनोयोगादिमार्गणायां प्रविशति । एवं कश्चिज्जीवो दशमगुणस्थानात् प्रतिपत्य नवमगुणस्थानप्रथमसमये मोहनीयस्याऽजघन्यप्रदेशबन्धं विधायाऽनन्तरसमये काययोगमार्गणां विहाय मनोयोगादिमार्गणायां प्रविशति । इत्येवं काययोगौघे सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यकाल एकसमयः सूपपद्यते ।

मतिश्रुतावधिज्ञानावधिदर्शनशुक्ललेश्यासम्यक्त्वौघक्षायिकौपशमिकसम्यक्त्वेषु भावनैवम् कश्चिज्जीव उपशमश्रेणौ षट्कर्मणां बन्धविच्छेदं विधायोपशान्तमोहावस्थां प्राप्य पुनः प्रतिपत्य षण्णां कर्मणामेकसमयमजघन्यप्रदेशबन्धं विधाय पञ्चत्वं प्राप्य देवगतिप्रथमसमये जघन्यप्रदेशबन्ध विदधाति । एवं कश्चिज्जीवो दशमगुणस्थानात् प्रतिपत्यानिवृत्तिबादरगुणस्थाने एकसमयं मोहनीयस्याजघन्यप्रदेशबन्धं विधाय निधनं प्राप्य देवगतिप्रथमसमये जघन्यप्रदेशबन्धं विदधाति । इत्येव मतिज्ञानादिमार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यकालस्यैकसामयिकत्वमुपपद्यते । मनःपर्यवज्ञानसंयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसूक्ष्मसम्परायमिश्रमार्गणासु जघन्यप्रदेशबन्धस्वामिनः परावर्तमानयोगित्वादेकसमयं जघन्यं प्रदेशबन्धं विधायैकसमयमजघन्यं विदधाति, पुनरेकसमयं जघन्यं विदधातीति द्वयोर्जघन्यप्रदेशबन्धयोर्मध्ये एकसमयमजघन्यप्रदेशबन्धः प्राप्यते । मनःपर्यवज्ञानसंयमौघसामायिकछेदोपस्थापनीयसूक्ष्मसम्परायमार्गणासु तूपशमश्रेणिमाश्रित्याप्येकसमयो लभ्यते । पञ्चमनःपञ्चवचनौदारिकवैक्रियाहारककार्मणकाययोगविभङ्गसास्वादनानाहारकमार्गणासु स्वस्वकायस्थितेर्जघन्यत एकसमयप्रमाणत्वादेवाजघन्यप्रदेशबन्धस्य जघन्यकाल एकसमयो लभ्यते । कषायचतुष्के जघन्यकायस्थित्यादिना भावना कार्या ।

क्षायोपशमिकसम्यक्त्वे भावनैवम्—यदा द्वाविंशतिसत्कर्मजीवस्य भवप्रथमसमये जघन्यप्रदेशबन्धः, भवद्वितीयसमयेऽजघन्यप्रदेशबन्धः, भवतृतीयसमये क्षायिकसम्यक्त्वप्राप्त्या मार्गणाविच्छेदस्तदा जघन्यत एकसमयः समुपपद्यते ॥२३४।२३५।२३६॥

सम्प्रति सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यकालो यासु मार्गणास्वन्तर्मुहूर्तं ता आह—

पज्जपणिंदियतसपुमदुमीसजोगपणलेसचक्खूसु ।
भिन्नमुहुत्तं हस्सा सगकायठिई उरलमीसे ॥२३७॥

(प्रे०) 'पज्जपणिंदिय' इत्यादि, पर्याप्तपञ्चेन्द्रिये, पर्याप्तत्रसे, पुरुषवेदे, औदारिकमिश्रे उपरार्धेन वक्ष्यमाणत्वात् वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रयोगयोः, विना शुक्लां पञ्चलेश्यासु, चक्षुर्दर्शने चेत्येकादशमार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यकालः 'अन्तर्मुहूर्तं' भवति ।

अत्रेयं भावना-पर्याप्तपञ्चेन्द्रियपर्याप्तत्रसकायपुरुषवेदचक्षुर्दर्शनेषु मार्गणायाः प्रथमसमये जघन्यप्रदेशबन्धः, द्वितीयसमयादारभ्य मार्गणाजघन्यकालं यावदजघन्यप्रदेशबन्धः, मार्गणाया जघन्यकालोऽन्तर्मुहूर्त्तमिति प्रस्तुते यथोक्तकालः सम्रुपपद्यते । अथवा यदोपशमश्रेणौ नवमगुणस्थानान्ते मोहनीयस्य दशमगुणस्थानान्ते च षण्णां कर्मणां बन्धविच्छेदं कृत्वा, उपशान्तमोहावस्थां प्राप्य, अद्धाक्षयेण प्रतिपत्य, दशमगुणस्थाने षण्णां कर्मणां नवमगुणस्थाने च मोहनीयस्याजघन्यप्रदेशबन्धं प्रारभते, पुनः शीघ्रातिशीघ्रमुपशमश्रेणिं प्राप्य, मोहनीयस्य नवमगुणस्थानान्ते षण्णां कर्मणां दशमगुणस्थानान्ते च बन्धविच्छेदं विदधाति, तदा यथोक्तकालो घटामश्नति । वैक्रियमिश्राहारकमिश्रपद्मलेश्यासु मार्गणाप्रथमसमये जघन्यप्रदेशबन्धः, ततो मार्गणाकालं यावदजघन्यप्रदेशबन्धः, एतासां मार्गणानां जघन्यकालोऽप्यन्तर्मुहूर्तप्रमाण इति यथोक्तकालो घटां याति । औदारिकमिश्रकाययोगे सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्य जघन्यकालो जघन्या स्वकायस्थितिः= औदारिकमिश्रकाययोगमार्गणाकायस्थितिर्भवेत् । तस्या जघन्या कायस्थितिश्च त्रिसमयन्यूनक्षुल्लकभवप्रमाणा बोध्या ।

ननु यथाऽग्रे शेषासु मार्गणासु समयन्यूना जघन्यकायस्थितिर्दर्शयिष्यते, अत्रापि तथानुक्त्वा किमेवं सम्पूर्णा स्वजघन्यकायस्थितिरभिहिता ? इति चेदुच्यते, अत्र जघन्यकायस्थितिकजीवाः त्रिसमयान् यावद् विग्रहगतौ वर्तमाना भवन्ति । औदारिकमिश्रे विग्रहगत्यागतानां जीवानां जघन्ययोगासम्भवः । अतोऽत्र मार्गणाप्रथमसमये जघन्ययोगासम्भवः । ततश्च मार्गणाप्रथमसमयत एवाजघन्यप्रदेशबन्धो भवतीत्यत्रैकसमयन्यूनता न प्राप्यते । न च ऋजुगत्यागतानां जीवानां मार्गणाप्रथमसमये जघन्ययोगसम्भवात् तानाश्रित्यैकसमयन्यूनता प्राप्यत इति वाच्यम् , ऋजुगत्याऽऽगतानां जीवानामौदारिकमिश्रकाययोगस्य जघन्यकायस्थितिः सम्पूर्णक्षुल्लकभवप्रमाणैव । ततः तेषां भवप्रथमसमये जघन्ययोगसम्भवेऽपि अजघन्यप्रदेशबन्धस्य जघन्यकाल एकसमयन्यूनः क्षुल्लकभवः प्राप्यते न तु त्रिसमयन्यूनः । इत्येवमृजुगत्याऽऽगतान् जीवानाश्रित्य तु विग्रहगत्याऽऽगतजीवापेक्षया द्वौ समयावधिकौ भवतः । अत एवात्र ऋजुगत्याऽऽगतान् जीवाननुपेक्ष्य विग्रहगत्याऽऽगता जीवा उपात्ताः । तेषाञ्च भवप्रथमसमये जघन्ययोगाऽसम्भवात् त्रिसमयन्यूनक्षुल्लकभवप्रमाणां मार्गणाकायस्थितिं यावदजघन्यप्रदेशबन्धो भवति । ततोऽजघन्यप्रदेशबन्धकालो जघन्यतोऽपि तावानेव प्राप्यते ॥२३७॥

अथैकयार्यया शेषासु मार्गणासु सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्य जघन्यकालमभिदधाति—

**ओघव्व अणाणदुगे अयताचक्खुभविअभविमिच्छेसुं ।**
**सेसासु समयहीणा ससलहुकायट्ठिई णेयो ॥२३८॥**

(प्रे०) 'ओघव्व' इति, सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्य जघन्यकाल ओघवद्—पूर्वं सामान्येन यथाभिहितस्तथा ज्ञेयः। कासु मार्गणासु ? इत्याह–'अणाणदुगे' इत्यादि, मतिश्रुतलक्षणाज्ञानद्विके असंयमे, अचक्षुर्दर्शने, भव्याभव्ययोः, मिथ्यात्वे चेति सप्तमार्गणासु । ओघतः सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्य जघन्यकालः समयन्यूनक्षुल्लकभवोऽभिहित इति ध्येयम् । तदुपपत्तिरपि सामान्यवक्तव्यतावद् विधेया। 'सेसासु' इत्यादि, शेषासु पञ्चाधिकशतमार्गणासु सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्य जघन्यकालः समयन्यूना स्वस्वजघन्यकायस्थितिर्ज्ञेयः। अत्र स्वपदेन मार्गणा ज्ञेया।

शेषमार्गणाश्चेमाः––निखिलनरकतिर्यग्नाकिभेदाः, अपर्याप्तमनुष्यः, पर्याप्तपञ्चेन्द्रियं विनाऽष्टादशेन्द्रियभेदाः, पर्याप्तत्रसं विनैकचत्वारिंशत्कायभेदाः, संज्ञी, असंज्ञी च। अत्रेयं भावना-एतासु मार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामी भवप्रथमसमयस्थो भवति, अतो मार्गणाकायस्थितेः प्रथमभवे प्रथमसमये जघन्यप्रदेशबन्धं विधाय द्वितीयसमयादारभ्य मार्गणाजघन्यकालं यावदजघन्यप्रदेशबन्धं विदधातीति यथोक्तः काल उपपद्यते।

अथात्र शेषासु मार्गणासु जघन्यकायस्थितिर्वक्तव्या, इति प्रसङ्गात्सर्वासु मार्गणासूच्यते। तथा चात्र मूलप्रकृतिस्थितिबन्धे द्वितीयाधिकारे कालद्वारे प्रविष्टा जघन्यकायस्थितिप्रतिपादिका गाथाः—

कायठिई णायव्वा जहण्णगा दससहस्सवासाणि । णिरयपढमणिरयाणं देवभवणवंतराणं च ॥ १७४ ॥
दुइआइगणिरयाण सा पढमाइणिरयाण जा जेट्ठा । खुड्डभवो तिरियापणिंदितिरियमणुसतदपज्जाणं ॥ १७५ ॥
पज्जत्तभेअवज्जिअसेसिंदियकायभेअसण्णीणं । अमणस्स तिसमयूणो आहारिउरालमीसाण ॥ १७६ ॥
भिन्नमुहुत्तं उ सयलपज्जगजोणिणीण कायस्स । मीसदुजोगपुमाणं कषायतिगणाणजुगलाणं ॥ १७७ ॥
अण्णाणदुगस्स तहा देसायतचक्खुसव्वलेसाणं । सम्मत्तखइअवेअगउवसममीसाण मिच्छस्स ॥ १७८ ॥
पलियस्स अट्ठभागो जोइसिअस्स पलिओवमं णेया । सोहम्मसुरस्स भवे ईसाणस्सऽब्भहियपल्लं ॥ १७९ ॥
दोण्णि हवेज्जा जलही सणंकुमारस्स दोण्णि अब्भहिया। माहेंदस्स हवेज्जा सत्त भवे बम्हदेवस्स ॥ १८० ॥
लंतकदेवाईणं सा बम्हसुराइगाण जा जेट्ठा । सव्वत्थाचक्खूणं भवियाभवियाण णत्थि लहू ॥ १८१ ॥
पणमणवयजोगाण ओरालाहारविउवकम्माणं । थीणपुमावेआणं लोहविभंगोहिजुगलाणं ॥ १८२ ॥
मणणाणसंयमाणं समइअछेअपरिहारसुहमाणं । सासणऽणाहाराणं समयोत्थि जहण्णकायठिई ॥ १८३ ॥

मतान्तरेणाह–

अण्णे कोहाईणं समयो मणणाणओहिजुगलाणं । संयमपरिहाराणं भिन्नमुहुत्तं पढुव छउमत्थं ॥ १८४ ॥

सम्प्रति सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्योत्कृष्टकालं निरूपयितुमुपक्रमते—

**तिरिये एगिंदियतस्सुहमेसुं कायजोगणपुमेसुं ।**
**दुअणाणायतअणयणभवियेयरमिच्छअमणेसुं ॥२३९॥**
**कालो अजहण्णस्स पएसस्स गुरू असंखिया लोगा ।**
**अहवा असंखियमो भागो सेढीअ बोद्धव्वो ॥२४०॥**

(प्रे०) 'तिरिये' इत्यादि, तिर्यगोघे, एकेन्द्रियौघे, तस्य=एकेन्द्रियस्य सूक्ष्मे, एकेन्द्रियसूक्ष्मौघे इत्यर्थः, काययोगौघे, नपुंसके, अज्ञानद्विकासंयमाऽचक्षुर्दर्शनभव्याभव्यमिथ्यात्वासंज्ञिषु चेति त्रयोदशमार्गणासु सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्योत्कृष्टकालः असंख्यलोकाशप्रदेशप्रमाणः, यद्वा सूचिश्रेण्यसंख्यातभागप्रदेशप्रमाणः बोद्धव्यः । अत्रोपपत्तिस्तु यथा सामान्यवक्तव्यतायां कृता तथैव कर्तव्या ॥२३९।२४०॥ साम्प्रतं यासु मार्गणास्वजघन्यप्रदेशबन्धस्योत्कृष्टकालः श्रेण्यसंख्यातभागस्तासु शेषमार्गणासु च प्रतिपादयति ।

पणकायणिगोएसुं पणसुहमेसु य भवे असंखंसो ।
सेढीए सेसासुं सगसगकायट्ठिई जेट्ठा ॥२४१॥

(प्रे०) 'पणकाय' इत्यादि, पृथ्व्यप्तेजोवायुवनस्पतिकायस्वरूपपञ्चकायौघेषु, निगोदौघे, पृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायरूपेषु पञ्चसु सूक्ष्मौघेषु च सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्योत्कृष्टकालः "सूचिश्रेण्यसंख्यातभागप्रदेशप्रमाणो" भवेत् । तथाहि-द्वयोर्जघन्यप्रदेशबन्धयोरन्तरालः कालोऽजघन्यप्रदेशबन्धकालो भवति । तथैतासु मार्गणासु सकृज्जघन्यप्रदेशबन्धं विधायोत्कृष्टतः सूचिश्रेण्यसङ्ख्यभागप्रमाणकाले व्यतीते पुनर्जघन्यप्रदेशबन्धं विदधाति, पुनर्जघन्ययोगस्य तावत्कालेन प्राप्यमाणत्वात् । अतो द्वयोर्जघन्यप्रदेशबन्धयोरुत्कृष्टोऽन्तरालः कालः सूचिश्रेण्यसंख्यातभागप्रमाणः । अतोऽजघन्यप्रदेशबन्धस्योत्कृष्टकालोऽपि तावत्प्रमाणो भवति ।

'सेसासु' इत्यादि, शेषासु षट्चत्वारिंशदधिकशतमार्गणासु अजघन्यप्रदेशबन्धस्योत्कृष्टकालः "उत्कृष्टा स्वस्वकायस्थितिः" ज्ञातव्यः । अत्रेयं भावना-शेषमार्गणाप्रविष्टानां केषाञ्चिज्जीवानां तथास्वाभाव्याद् मार्गणास्थितिं यावद् जघन्ययोगायोगोऽपि सम्भवति । शेषासु मार्गणासु नास्ति नियमो यत्तत्र प्रविष्टानां जीवानां जघन्ययोगः प्राप्नोत्येव । यतो भवप्रथमसमये जघन्यप्रदेशबन्धो भवति, भवप्रथमसमयभावीनि जघन्ययोगस्थानानि श्रेण्यसंख्यातभागप्रमाणानि सन्ति । अतो यासु मार्गणासु स्वकायस्थितिः श्रेण्यसंख्यातभागतो न्यूना तासु केषाञ्चिद् जीवानां मार्गणाकायस्थितिं यावज्जघन्ययोगस्थानं न प्राप्यते । अस्ति च एतासां शेषमार्गणानां स्वकायस्थितिः श्रेण्यसंख्यभागतो न्यूना । अतः शेषासु मार्गणासु येषां जीवानां मार्गणोत्कृष्टकायस्थितिं यावज्जघन्ययोगाप्राप्त्या जघन्यप्रदेशबन्धाभावादजघन्य एव प्रदेशबन्धो भवति तानाश्रित्य यथोक्तकालो घटामटाट्यते ।

शेषमार्गणाश्चेमाः—कृत्स्ननरकमर्त्यामर्त्यभेदाः, तिर्यगोघमन्तरा तिर्यग्भेदाः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियाभ्यां विना विश्वेन्द्रियभेदाः, बादरपृथिव्यप्तेजोवायुनिगोदभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदभेदाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदभेदाः, प्रत्येकशरीरवनस्पतिकायौघपर्याप्तापर्याप्तप्रत्येकवनस्पति-

कायाः, त्रसौघपर्याप्तापर्याप्तत्रसकायाः, काययोगसामान्यं विना सकलयोगभेदाः, स्त्रीपुरुषवेदाः कषाय-चतुष्कम्, मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानानि, असंयममन्तरा सकलसंयमभेदाः, चक्षुरवधिदर्शन-भेदौ, लेश्याषट्कम्, मिथ्यात्वमृते समस्तसम्यक्त्वभेदाः, संज्ञी, आहारकानाहारकभेदौ च। मार्गणोत्कृष्टकायस्थितिश्च पूर्वं "दुमणाणा सत" इत्यत्र वृत्तौ निगदिता ॥२४१॥

साम्प्रतमायुषो जघन्यप्रदेशबन्धस्य कालं प्रतिपादयति–

**सव्वासु जहण्णियरो हस्सपएसस्स आउगस्स खणो।**
**णवरि गुरू जहि घोलणयोगी तहि अत्थि चउसमया ॥२४२॥**

"**सव्वासु**" इत्यादि,-सर्वासु मार्गणास्वायुषो जघन्यप्रदेशबन्धस्य जघन्यः इतरश्चोत्कृष्टः कालः क्षणः=एकसमयो भवति। भावना सुगमा। अथोत्तरार्धेनापवदति-"णवरि" इत्यादि, केवलं यत्र=यासु मार्गणासु जघन्यप्रदेशबन्धको घोलणयोगी=परावर्तमानयोगी स्यात् तत्र=तासु मार्गणासु जघन्यप्रदेशबन्धस्य गुरुः–उत्कृष्टः कालः चतुःसमयप्रमाणोऽस्ति। यतो घोलणयोगी हि करण-पर्याप्तो भवति। करणापर्याप्तानां जघन्ययोगस्थानान्युत्कृष्टतश्चतुःसमयान् यावदवतिष्ठन्ते।

यासु मार्गणासु आयुर्जघन्यप्रदेशबन्धको घोलणयोगी ता मार्गणा नामत इमाः–कृत्स्ननर-कामर्त्याः, सर्वपर्याप्ताः, सर्वे मीलित्वा पर्याप्ता विंशतिः, तद्यथा-पञ्चेन्द्रियतिर्यग्मनुष्यसूक्ष्मबादरैके-न्द्रियद्वित्रिचतुःपञ्चेन्द्रियसूक्ष्मपृथिव्यप्तेजोवायुनिगोदबादरपृथिव्यप्तेजोवायुनिगोदप्रत्येकवनस्पति-त्रसकायपर्याप्ताः, तिर्यग्मनुष्ययोनीमत्यौ, पञ्चमनःपञ्चवचनौदारिकवैक्रियकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानानि, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरति-संयमाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि चेति त्रिनवतिः ॥२४२॥ अथायुषोऽजघन्यप्रदेशबन्धस्य कालं गाथाद्विकेन प्रतिपाद्य प्रकृतद्वारं पारयति—

**जासु घोलणजोगी हस्सएसस्स बंधगो तासु।**
**काये आहारदुगे कोहाइकसायचउगे य ॥२४३॥**
**आउस्स लहू समयो अलहुपएसस्स होइ सेसासु।**
**णेयो भिन्नमुहूत्तं सव्वासु गुरू मुहूत्तंतो ॥२४४॥**

(प्रे०) '**जासु**' इत्यादि, यासु मार्गणासु जघन्यप्रदेशानां बन्धको घोलणयोगी भवेत् तासु मार्गणासु तथा कायोगौघे, आहारकाहारकमिश्रयोः क्रोधादिकषायचतुष्के चायुषोऽजघन्य-प्रदेशबन्धस्य जघन्यकाल एकसमयो भवति। यासु मार्गणासु जघन्यप्रदेशबन्धस्वामी घोलणयोगी तासु भावनैवम्-विवक्षितप्रथमसमये जघन्यप्रदेशबन्धः, द्वितीयसमयेऽजघन्यप्रदेशबन्धः, तृतीय-समये पुनर्जघन्यप्रदेशबन्ध इति जघन्यकाल एकसमयो भवति। काययोगौघादिसप्तमार्गणासु

भावनैवम्-मार्गणाचरमसमये आयुर्बन्धमुपक्रमतेऽजघन्यप्रदेशबन्धं च विदधातीति जघन्यकाल एकसमयो भवति । यासु मार्गणासु जघन्यप्रदेशबन्धस्वामी घोलणयोगी तास्त्रिनवतिमार्गणा अनन्तरगाथावृत्तौ प्रदर्शिता इत्यत्र नोल्लिख्यन्ते ।

**'सेसासु'** इत्यादि, शेषासु त्रिषष्टिमार्गणासु आयुषोऽजघन्यप्रदेशबन्धस्य जघन्यकालो भिन्नमुहूर्त्तम्=अन्तर्मुहूर्त्तं ज्ञेयः । अत्रेयं भावना-आयुर्बन्धस्य प्रथमसमये जघन्यप्रदेशबन्धो भवति, द्वितीयसमयादारभ्यायुर्बन्धकालं यावदजघन्यप्रदेशबन्धो भवति । अतः समयन्यूनायुर्बन्धकाल आयुर्बन्धस्याजघन्यप्रदेशबन्धस्य कालो भवति । आयुर्बन्धकालो जघन्यतोऽप्यन्तर्मुहूर्तप्रमाणो भवति । अतः शेषमार्गणास्वायुरजघन्यप्रदेशबन्धस्य जघन्यकालोऽन्तर्मुहूर्त्तप्रमाण एव भवति ।

शेषमार्गणा इमाः-तिर्यगोघतिर्यक्पञ्चेन्द्रियौघाऽपर्याप्ततिर्यक्पञ्चेन्द्रियाः, मनुष्यौघाऽपर्याप्तमनुष्यौ, पर्याप्तैर्विना त्रयोदशेन्द्रियभेदाः, द्वादशपर्याप्तैर्विना त्रिंशत्कायभेदाः, औदारिकमिश्रकाययोगः, नपुंसकवेदः, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अशुभलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी, संज्ञी आहारकश्चेति । अथान्तिमचरणेनोत्कृष्टकालमाह–**''सव्वासु'** इत्यादि, सर्वासु मार्गणासु आयुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टकालो मुहुर्त्तान्तः=अन्तर्मुहूर्तं भवति, उत्कृष्टतोऽपि आयुषोऽन्तर्मुहूर्त्तं यावदेव बध्यमानत्वात् ॥ २४३ । २४४ ॥

॥ इति श्रीप्रेमप्रभाटीकासमलंकृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे पञ्चमं कालद्वारं समाप्तम् ॥



## * अष्टकर्मणामुत्कृष्टानुत्कृष्टप्रदेशबन्धैक-

ओघतः—सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्य जघन्यः काल एकसमयः, उत्कृष्टो द्विसमयौ; अनुत्कृष्टप्रदेशबन्धस्य जघन्य एकसमयः, उत्कृष्टो मोहनीयस्यासंख्यपुद्गलपरावर्ताः, षट्कर्मणामनादिध्रुवः, अनाद्यध्रुवः, साद्यध्रुवश्चेति त्रिविधः, तत्र साद्यध्रुवः देशोनार्धपुद्गलपरावर्तप्रमाणः ।

| | | | बन्धकालस्य प्रमाणम्. | गति० | इन्द्रिय० | काय० | योग० | वेद० | कषाय० |
|---|---|---|---|---|---|---|---|---|---|
| उत्कृष्टप्रदेशबन्धस्य | आयुर्वर्जसप्तप्रकृतीनाम् | उत्कृष्टतः | एकसमयः | | | | औ.मि /वै मि आ.मि. कार्म | | |
| | | | द्वौ समयौ (ओघवत्) | सर्व. | सर्व. | सर्व. | शेष. | सर्व. | सर्व. |
| | | जघन्यतः | एकसमयः ( ओघवत् ) | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. |
| | आयुषः | उत्कृष्टतः | एकसमयः | | | | आ. मि. | | |
| | | | द्वौ समयौ (ओघवत्) | सर्व. | सर्व. | सर्व. | शेष. | सव. | सर्व. |
| | | जघन्यतः | एकसमयः (ओघवत्) | सर्व. | सर्व. | सर्व. | मर्व. | सर्व | सर्व |
| अनुत्कृष्टप्रदेशबन्धस्य | आयुर्वर्जसप्तप्रकृतीनाम् | उत्कृष्टतः | मोहनीयस्य असंख्यपुद्गलपरावर्ताः षण्णा देशोनार्धपुद्गलपरावर्त * | | | | | | |
| | | | असंख्यलोकाकाशप्रदेशतुल्य | | एके. ओ. | पृथ्व्यादिपञ्चनिगोदौ० | | | |
| | | | श्रेण्यसख्याततमभागप्रदेशतुल्यः | | सू एके. | पृथ्व्यादिपञ्चसूक्ष्म० | | | |
| | | | असंख्यपुद्गलपरावर्ताः | | | | | | |
| | | | स्वस्वकायस्थितितुल्यः | सर्व. | शेष० | शेष. | सर्व. | सर्व. | सर्व. |
| | | जघन्यतः | अन्तर्मुहूर्तम् | | | | त्रिमिश्र. | सर्व. | सर्व. |
| | | | एकसमयः (ओघवत्) | सर्व. | सर्व. | सर्व. | उक्तशेष. | सर्व. | सर्व. |
| | आयुषः | जघन्यत उत्कृष्टतश्च | एकसमयः अन्तर्मु० } ओघवत् | सर्व. | सर्व. | सर्व. | शेष. | | |

* षण्णामनुत्कृष्टप्रदेशबन्धस्य कालः अनाद्यनन्तः अनादिसान्तः सादिसान्तश्चेति त्रिविधो भवति । तत्र सादिसान्तभङ्गस्योत्कृष्टतो देशोनार्धपुद्गलपरावर्तः ।

जीवविषयककालप्रदर्शकयन्त्रम् *

आयुषः—उत्कृष्टप्रदेशबन्धस्य द्विविधोऽपि कालः सप्तकर्मवत्, अनुत्कृष्टप्रदेशबन्धस्य जघन्य एकसमयः, उत्कृष्टोऽन्तर्मुहूर्त्तप्रमाणः ( गाथा० २२०-२२२ )।

| ज्ञान० | संयम० | दर्शन० | लेश्या० | भव्य. | सम्यक्त्व० | संज्ञि० | आहा० | मार्गणासंख्या० | गाथा० |
|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | अना. | ५ | २२५ |
| सर्व. | सर्व. | सर्व. | सर्व | सर्व. | सर्व. | सर्व. | आहा. | १६५ | २२४ |
| सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | १७० | २२४ |
| | | | | | | | | १ | २२३ |
| सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | आ. | १६२ | २२३ |
| सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | आ. | १६३ | २२३ |
| | | अचक्षु० | | भव्य. ● | | | | २ | २२७ |
| | | | | | | | | ७ | २२८ |
| | | | | | | | | ६ | २२८ |
| म.अ./ श्रु. अ. | असंयमः | | | अभ. | मिथ्या. | | | ५ | २२९ |
| सर्व. | शेष० | शेष० | सर्व. | | | सर्व. | सर्व. | १५० | २२९ |
| | | | | | | | | ३ | २२६ |
| सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | १६० | २२६ |
| सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | सर्व. | आ. | १६३ | २२३ |

● अत्रानाद्यनन्तो भङ्गो न वक्तव्यः।

## * अष्टकर्मणां जघन्याजघन्य-

**ओघतः**—अष्टकर्मणां जघन्यप्रदेशबन्धस्य जघन्य उत्कृष्टश्च काल एकसमयः, आयुषोऽजघन्यप्रदेशबन्धस्य जघन्य उत्कृष्टश्चान्तर्मुहूर्तम् ( गाथा० २३० ), ।

| | | | बन्धकालप्रमाणम् | गति० | इन्द्रिय० | काय० | योग० | वेद० | कषाय० | ज्ञान० |
|---|---|---|---|---|---|---|---|---|---|---|
| सप्तकर्मणाम् | जघन्यप्रदेशबन्धस्य | उत्कृष्टतः | चत्वारः समया. | | | | पञ्चम० पञ्चव० | अवे० | | मन.प० |
| | | | एकसमयः ( ओघवत् ) | सर्व० | सर्व० | सर्व० | सर्वकाय० * | शेष० ३ | सर्व० | शेष० ६ * |
| | | जघ० | एकसमयः ( ओघवत् ) | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० |
| | अजघन्यप्रदेशबन्धस्य | जघन्यतः | एकसमयः | म० सा० म० प० मानुषी | | | त्रिमिश्र-विना सर्वे | स्त्री० नपु० अवे० | सर्व० | ज्ञान० ४ विभ० |
| | | | त्रिसमयन्यून-क्षुल्लकभवः | | | | औ० मि० | | | |
| | | | अन्तर्मुहूर्तम् | | पञ्चे० प० | त्रस० प० | आ. मि वै. मि. | पु० | | |
| | | | समयन्यून-क्षुल्लकभव. | | | | | | | म० अ० श्रु० अ० |
| | | | समयन्यूनस्व-जघन्यकायस्थितिः | शेष० ४४ | शेष ) १ : | शेष० ४१ | | | | |
| | | उत्कृष्टतः | असं० लो० यद्वा श्रे. अस.(ओघवत्) | ति० सा० | एके० सा० एके० सू० | | का. मा. | नपुं० | | म० अ० श्रु० अ० |
| | | | श्रेण्यसंख्यातभागः | | | पृथ्व्यादिपञ्च सा० पञ्चसू० निगोदौघ० | | | | |
| | | | स्वोत्कृष्टकाय० | शेष० ४६ | शेष० १७ | शेष० ३१ | शेष० १७ | शेष. ३ | सर्व० | शेष० ५ |
| आयुषः | जघन्यप्रदेशबन्धस्य | उत्कृष्टतः | चत्वारः समयाः | सर्वनरकदेव० पञ्चे.ति.प. म.प.तिर.मा. | सर्वपर्याप्त० ६ | सर्वपर्याप्त० १२ | पञ्चम० पञ्चव० औ०,वै० | स्त्री० पु० | | ज्ञान० ४ विभ० |
| | | | एकसमयः ( ओघवत् ) | शेष० ५ | शेष० १३ | शेष० ३० | शेष० ४ | नपु. | सर्व० | शेष० २ |
| | | जघ० | एकसमयः ( ओघवत् ) | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० |
| | अजघन्यप्रदेशबन्धस्य | जघन्यतः | एकसमयः | सर्वनरकदेव. पञ्चे.ति.प. म.प.तिर.मा. | सर्वपर्याप्त० ६ | सर्वपर्याप्त० १२ | औ० मि० विना सर्व. १५ | स्त्री० पु० | सर्व० | ज्ञान० ४ विभ० |
| | | | अन्तर्मुहूर्तम् ( ओघवत् ) | शेष० ५ | शेष० १३ | शेष० ३० | औ० मि० | नपुं. | | म० अ० श्रु० अ० |
| | | उत्कृ० | अन्तर्मुहूर्तम् ( ओघवत् ) | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० |

प्रदेशबन्धकालप्रदर्शकयन्त्रम् *

शेषसप्तकर्मणां जघन्यः कालः समयन्यूनक्षुल्लकभवः, उत्कृष्टोऽसङ्ख्यलोका अथवा श्रेण्यसङ्ख्यातभागः (गाथा० २३१)।

| संयम० | दर्शन० | लेश्या० | भव्य० | सम्य० | संज्ञि० | आहा० | मार्गणासंख्या | गाथा० |
|---|---|---|---|---|---|---|---|---|
| असयमं विना षट् | | | | मिश्र० | | | १६ | २३२ २३३ |
| असंयम० | सर्व० | सर्व० | सर्व० | शेष० ६ | सर्व० | सर्व० | १५१ | २३२ |
| सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | १७० | २३२ |
| असयम विना सर्व ० | अच० | शुक्ल० | | मिथ्यात्वं विना सर्व० | | सर्व० | ४६ | २३४ २३५ २३६ |
| | | | | | | | १ | २३७ |
| | चक्षु० | शेष० ५ | | | | | ११ | २३७ |
| असंयम० | अच० | | सर्व० | मिथ्या० | | | ७ | २३८ |
| | | | | | सर्व० | | १०५ | २३८ |
| असंयम० | अच० | | सर्व० | मिथ्या० | असं० | | १३ | २३९ २४० |
| | | | | | | | ११ | २४१ |
| शेष० ६ | शेष० २ | सर्व० | | शेष० ६ | सं० | सर्व० | १४६ | २४१ |
| असंयमं विना सर्व. | च० अच० | शुभ० | | मि० विना सर्व० ४ | | | ९३ | २४२ |
| असंयम० | अच० | अशुभ० | सर्व० | मिथ्या० | सर्व० | आहा० | ७० | २४२ |
| सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | १६३ | २४२ |
| असंयमं विना सर्व. | च० अच० | शुभ० | | मिथ्या० विना सर्व० ४ | | | १०० | २४३ २४४ |
| असंयम० | अच० | अशुभ० | सर्व० | मिथ्या० | सर्व० | आहा० | ६३ | २४४ |
| सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | आहा० | १६३ | २३४ |



* वैक्रियाहारककाययोगविभङ्गज्ञानमार्गणासु मतान्तरेण चत्वारः समयाः।

## ॥ षष्ठमन्तरद्वारम् ॥

तदेवं गतं कालद्वारम् । साम्प्रतं क्रमायातं षष्ठमन्तरद्वारं निरूपयितुमुपक्रमते—

**अट्ठण्ह लहुं समयो जेट्ठपएसस्स अंतरं छण्हं ।**
**गुरुमूणाद्धपरट्टो मोहाऊणं असंखपरिअट्टा ॥२४५॥** (गीतिः)

(प्रे०) अत्रेदमवगन्तव्यम्-अन्तरप्ररूपणा नाम जीवः सकृद् विवक्षितोत्कृष्टादिप्रदेशबन्धं विधाय, पुनस्तमेव बन्धं जघन्यत उत्कृष्टतश्च कियत्कालेन विदधातीति प्रतिपादनम् । अत्रान्तरं त्रिधा लभ्यते, तद्यथा-क्वचिदबन्धप्रयुक्तं, क्वचिद्विपरीतबन्धप्रयुक्तं, क्वचिच्चाबन्धविपरीतबन्धोभयप्रयुक्तम् । अत्राशेषान्तरनिरूपणमनया दिशा वक्ष्यते ।

अथ गाथार्थः प्रारभ्यते-'**अट्ठण्हं**' इत्यादि, अष्टानामपि मूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्य जघन्यमन्तरमेकसमयो भवति । तद्यथा-जीवः सकृदुत्कृष्टप्रदेशबन्धं विधाय पुनर्जघन्यतः समयान्तरेण विदधाति, तत्कारणस्योत्कृष्टयोगस्य पुनर्जघन्यतः समयान्तरेण प्राप्यमाणत्वात् । '**छण्हं**' इत्यादि, मोहनीयायुषी विना षण्णां मूलप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "देशोनार्द्धपुद्गलपरावर्तो" भवति । तथ्द्यथा-षण्णां मूलप्रकृतीनामुत्कृष्टप्रदेशबन्ध उपशमश्रेणौ क्षपकश्रेणौ वा वर्तमानस्य भवति । स चावश्यं सम्यक्त्वं प्राप्तः । सम्यक्त्वं प्राप्तस्य जीवस्योत्कृष्टतोऽपि देशोनार्धपुद्गलपरावर्तप्रमाणकाले व्यतीते दुःखदौर्गत्यजन्मादिक्लिष्टसंसाराद् निर्दुःखदौर्गत्यजन्मादिमुक्तिर्भवत्येव । मुक्तिश्च कृत्स्नकर्मक्षयाविनाभाविनी । ततः सञ्जाते कृत्स्नकर्मक्षये "मूलं नास्ति कुतः शाखा" ? इत्यन्तरस्याप्यभावः, ततश्चाधिकान्तरस्यालाभ एव । अत्र भावना त्वेवम्-कश्चिदुपशमकः सूक्ष्मसम्पराये प्रथमसमय उत्कृष्टप्रदेशबन्धं विधाय द्वितीयसमयादारभ्य देशोनार्धपुद्गलपरावर्तं यावदनुत्कृष्टप्रदेशबन्धं विदधाति । ततः क्षपकश्रेणिमवाप्य सूक्ष्मसम्पराये चरमसमय उत्कृष्टप्रदेशबन्धं विदधाति । इत्येवं षण्णां कर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमनुत्कृष्टप्रदेशबन्धकालाद् द्विसमयन्यूनान्तर्मुहूर्ताधिकाधिकं देशोनार्धपुद्गलपरावर्तप्रमाणं भवति ।

'**मोहाऊणं**' इत्यादि, मोहनीयायुषोरुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तर-"मसंख्यपुद्गलपरावर्ताः" भवति । अत्रोपपत्तिश्चैवम्—मोहनीयायुषोरुत्कृष्टप्रदेशबन्धमुत्कृष्टयोगी संज्ञी द्वौ समयौ यावद् विदधाति । तदनन्तरं स्वकायस्थितिं यावदनुत्कृष्टं प्रदेशबन्धं विदधाति । स्वकायस्थितिसमाप्तौ चासंज्ञी भवति । तत्रापि असंज्ञिकायस्थितिं यावदनुत्कृष्टप्रदेशबन्धं विदधाति । असंज्ञिकायस्थितिश्च उत्कृष्टतोऽसंख्येयपुद्गलपरावर्तप्रमाणा, ततोऽसंज्ञिकायस्थितिसमाप्तौ संज्ञी भूत्वोत्कृष्टयोगं प्राप्योत्कृष्टप्रदेशबन्धं विदधाति । इत्येवं मोहनीयायुषोरुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमसंख्यपुद्गलपरावर्तप्रमाणं भवति । ॥२४५॥ साम्प्रतमष्टप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्य जघन्योत्कृष्टान्तरे प्रतिपादयति—

अट्ठण्ह लहुं समयो अगुरुपएसस्स आउगस्स गुरुं ।
साहियतेत्तीसुदही सेसाण भवे मुहुत्तंतो ॥२४६॥

(प्रे०) "अट्ठण्ह" इत्यादि, अत्रान्तरमित्यनुवर्तते, एवमग्रेऽपि अन्तरपदाप्रयोगे ज्ञेयम् । अष्टानामपि मूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्य जघन्यान्तरमेकसमयो भवति, उत्कृष्टप्रदेशबन्धकालस्य जघन्यत एकसमयत्वाद् । तथाहि-अनुत्कृष्टप्रदेशबन्धं कुर्वन् कश्चिज्जीव उत्कृष्टयोगं प्राप्य जघन्यत एकसमयमुत्कृष्टप्रदेशबन्धं विधाय द्वितीयादिसमयेषु अनुत्कृष्टप्रदेशबन्धं विदधातीत्यनुत्कृष्टप्रदेशबन्धस्य जघन्यमन्तरमेकसमयप्रमाणं समागच्छति । 'आउगस्स' इत्यादि, "मध्यमणिन्यायेन" अगुरुप्रदेशस्येति पदमत्रापि युज्यते । आयुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "साधिकत्रयस्त्रिंशदुदधयः=पूर्वकोटित्रिभागाधिकत्रयस्त्रिंशत्सागरोपमाणि भवति । तद्यथा–सम्पूर्णपूर्वकोटयायुष्कः कश्चित्संयमी स्वायुस्त्रिभागे त्रयस्त्रिंशत्सागरोपमप्रमाणवैमानिकायुरुपार्जयति । ततो वैमानिकायुषो उपान्त्यान्तर्मुहूर्ते मनुष्यायुर्बध्नातीत्यायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तन्यूनपूर्वकोटित्रिभागाधिकत्रयस्त्रिंशत्सागरोपमाणि भवति । नरकायुष्कापेक्षयाऽपि यथासंभवं भावना विधेया । 'सेसाण भवे मुहुत्तंतो' इति, शेषाणां सप्तप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं मुहूर्तान्तः–अन्तर्मुहूर्तं भवेत् । अत्र भावना त्वेवम्-तत्रादौ मोहनीयमाश्रित्य भाव्यते । कश्चिज्जीव उपशमश्रेणावनिवृत्तिबादरसम्पराये चरमद्विसमयौ मोहस्योत्कृष्टप्रदेशबन्धं विदधाति । सूक्ष्मसम्परायोपशान्तमोहयोरबन्धः । ततः प्रतिपत्यानिवृत्तिबादरसम्परायमागत्याद्यद्विसमयावुत्कृष्टं प्रदेशबन्धं विदधाति । इति मोहस्यानुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं चतुःसमयाधिकान्तर्मुहूर्तत्रिकप्रमाणं भवति । अन्तर्मुहूर्तेऽनेकभेदसद्भावादन्तर्मुहूर्तत्रिकमप्यन्तर्मुहूर्तमेवोच्यते । एवं यथासंभवं सर्वत्र भावनीयम् । अथ षट्कर्माण्याश्रित्य भाव्यते–कश्चिदुपशमश्रेणौ सूक्ष्मसम्परायस्य चरमसमयद्विचरमसमयावुत्कृष्टप्रदेशबन्धं विदधाति । उपशान्तमोहे चाबन्धः । ततः प्रतिपत्य सूक्ष्मसम्परायमागत्याद्यद्विसमयावुत्कृष्टप्रदेशबन्धं विदधातीति षट्कर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं चतुःसमयाधिकोपशान्तमोहकालप्रमाणमन्तर्मुहूर्तं भवति ॥२४६॥

सम्प्रति सप्तप्रकृतीरधिकृत्य मार्गणास्वुत्कृष्टानुत्कृष्टप्रदेशबन्धान्तरं निरूपयितुमना आदौ तावद् यासु मार्गणासूत्कृष्टप्रदेशबन्धाऽन्तरासम्भवः ता आह—

आउगवज्जाण भवे जेट्ठपएसस्स अंतरं णेव ।
मिस्सतिजोगेसुं तह कम्मणजोगे अणाहारे ॥२४७॥

(प्रे०) "आउगवज्जाण' इत्यादि, आयुरन्तरा सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्यान्तरं नैव भवेत् । कासु मार्गणासु ? इत्याह "मिस्सतिजोगेसु" इत्यादि,-मिश्रा ये त्रयो योगाः तेषु,

औदारिकमिश्रवैक्रियमिश्राहारकमिश्रेषु इत्यर्थः, तथा कार्मणकाययोगेऽनाहारकमार्गणायाञ्च । तथाहि–अत्र तावन्नाबन्धप्रयुक्तमन्तरम्, उपशमश्रेणेरभावात् । नापि तद्विपरीतबन्धप्रयुक्तं, मार्गणा-चरमसमय एवोत्कृष्टबन्धभावात् । इत्यत्रोभयथाप्यन्तरं न प्राप्यते ॥२४७॥

एतर्हि शेषासु मार्गणासूत्कृष्टप्रदेशबन्धस्य जघन्योत्कृष्टान्तरे वक्तुं प्रक्रमते—

सेसासु लहुं समयो जेट्ठपएसस्स आउवज्जाणं ।
ओघव्व जाणियव्वं उक्कोसमचक्खुभवियेसुं ॥२४८॥

(प्रे०) "सेसासु" इत्यादि, अनन्तरवृत्तोक्तव्यतिरिक्तासु सर्वासु मार्गणासु आयुर्वर्जानाम् =आयुरन्तरा सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्य जघन्यमन्तरमेकसमयो ज्ञातव्यम् । अनुत्कृष्टप्रदेश-बन्धकालस्य जघन्यत एकसमयप्रमाणत्वात् प्रथमसमये उत्कृष्टं प्रदेशबन्धं विधाय द्वितीयसमयेऽ-नुत्कृष्टं विदधाति, तृतीये पुनरुत्कृष्टं विदधातीत्युत्कृष्टप्रदेशबन्धस्य जघन्यमन्तरमेकसमयप्रमाणं भवति । 'उक्कोस' इत्यादि, अचक्षुर्दर्शनभव्यमार्गणयोः सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्य उत्कृष्ट-मन्तर-"ओघवद्" ज्ञातव्यम् । तद्यथा-मोहनीयमन्तरा षण्णां प्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्ट-मन्तरं देशोनार्धपुद्गलपरावर्तो भवति, मोहनीयस्य तु असंख्यपुद्गलपरावर्ताः भवति । तदुपप-त्तिस्तु सामान्यवक्तव्यतायां दर्शितरीत्या स्वयमेव परिभावनीया ॥२४८॥

सम्प्रति सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं क्व पूर्वकोटिपृथक्त्वं क्व च देशोनद्वा-विंशतिसागरोपमाणि भवति तत्प्रतिपादयति—

तिपणिंदितिरिणरेसुं कोडिपुहुत्तं हवेज्ज पुव्वाणं ।
देवम्मि सागराणं बावीसा होइ देसूणा ॥२४९॥

(प्रे०) "तिपणिंदि" इत्यादि, तिर्यक्पञ्चेन्द्रियपर्याप्ततिर्यक्पञ्चेन्द्रियतिर्यग्योनिमती-रूपेषु त्रिषु तिर्यक्पञ्चेन्द्रियेषु, मनुष्यौघपर्याप्तमनुष्यमानुषीरूपेषु त्रिषु मनुष्यभेदेषु सप्तप्रकृतीना-मुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं पूर्वाणां कोटिपृथक्त्वं भवति । तद्यथा-यदा पूर्वकोटयायुष्को जीव उत्कृष्टं योगं प्राप्योत्कृष्टप्रदेशबन्धं करोति, ततोऽव्यवहितं संख्यातभवेष्वनुत्कृष्टप्रदेशबन्धं विधायो-त्कृष्टप्रदेशबन्धं विदधाति, तदोत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं पूर्वकोटिपृथक्त्वं भवति ।

ननु एतासु मार्गणासूत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं पूर्वकोटिपृथक्त्वाधिकत्रिपल्योपम-प्रमाणां स्वोत्कृष्टकायस्थितिमनुक्त्वा किमेवं पूर्वकोटिपृथक्त्वमात्रमभिहितम् ? इति चेदुच्यते, एतासु मार्गणासु पूर्वकोटिपृथक्त्वाधिकत्रिपल्योपमप्रमाणोत्कृष्टकायस्थितिर्युगलिकापेक्षयास्ति । परं युगलिकानामुत्कृष्टयोगः तथास्वाभाव्याद् न भवति । तथा चाभिहितं कर्मप्रकृतौ-"अमणाणु-त्तरगेविज्जभोगभूमिगयतइयतणुगेसु कमसो असंखगुणिओ सेसेसु य जोग उक्कोसो" । एषैव गाथाऽस्मा-

मिरत्र पूर्वं स्थानद्वारे कर्मप्रकृत्युद्धृतयोगस्थानप्ररूपणायां व्याख्याता । अतस्त्रिपल्योपमप्रमाणयुगलिकआयस्थितिं विहाय पूर्वकोटिपृथक्त्वमात्रमभिहितम् ।

'देवम्मि' इत्यादि,-देवौघमार्गणायां सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं देशन्यूनद्वाविंशतिसागरोपमाणि भवति । तच्चेत्थम्-कश्चिदच्युतदेवः पर्याप्तको भूत्वा शीघ्रमुत्कृष्टयोगवशादुत्कृष्टप्रदेशबन्धं विधाय स्वभवचरमसमय उत्कृष्टप्रदेशबन्धं विदधाति । इत्येवमत्र प्रोक्तोत्कृष्टमन्तरं प्राप्यते ।

ननु देवानामुत्कृष्टायुस्त्रयस्त्रिंशत्सागरोपमाणि भवतीत्यत्र सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं भवदुक्तरीत्या देशन्यूनत्रयस्त्रिंशत्सागरोपमाणि भवतीति चेद्, न, देवानामुक्तप्रमाणमुत्कृष्टायुरनुत्तरदेवानां भवति, तथापि "अमणाणुत्तरगेविज्ज" इत्यनन्तरोक्तकर्मप्रकृतिगाथानुसारेणानुत्तरदेवानामुत्कृष्टयोगो न भवति, अपि त्वच्युतदेवानां भवति, तेषां चोत्कृष्टायुर्द्वाविंशतिसागरोपमाणि, अतोऽत्राच्युतदेवानाश्रित्य सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं देशन्यूनद्वाविंशतिसागरोपमाण्येवोपपद्यते । ॥२४९॥

इदानीं शुक्ललेश्यायां सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं निरूपयति—

सुइलाए मोहस्स उ बावीसा सागरोवमाऽब्भहिया ।
भिन्नमुहुत्तं हवए छण्हं मोहाउवज्जाणं ॥२५०॥

(प्रे०) 'सुइलाए' इत्यादि, शुक्ललेश्यायां मोहनीयस्योत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं साधिकद्वाविंशतिसागरोपमाणि । तद्यथा-यो जीवो मनुष्यभवे स्वायुरन्तिमान्तर्मुहूर्त्ताद्यसमये शुक्ललेश्यायां मोहनीयस्योत्कृष्टप्रदेशबन्धं कुर्यात्, ततो मनुष्यायुःसमाप्तौ अच्युतदेवलोके उत्पद्यते, तत्र स्वायुरुपान्त्यसमयं यावदनुत्कृष्टप्रदेशबन्धं कुर्यात्, अन्त्यसमये चोत्कृष्टप्रदेशबन्धं कुर्यात्, तमाश्रित्येत्येवं मोहनीयस्योत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्त्ताधिकद्वाविंशतिसागरोपमाणि प्राप्यते ।

न च कश्चिज्जीवो मनुष्यभवे स्वायुरन्तिमान्तर्मुहूर्त्ताद्यसमये मोहनीयस्योत्कृष्टप्रदेशबन्धं विधाय त्रयस्त्रिंशत्सागरोपमायुष्कानुत्तरदेवेषूत्पद्येत, तत्र च स्वायुरन्तिमसमये उत्कृष्टप्रदेशबन्धं कुर्यादिति शुक्ललेश्यायां मोहनीयस्योत्कृष्टमन्तरमन्तर्मुहूर्त्ताधिकत्रयस्त्रिंशत्सागरोपमाणि प्राप्नुयादिति वाच्यम्, आप्रथमग्रैवेयकमनुत्तरं यावदुत्कृष्टयोगासम्भवाद् । तथा चोक्तं कर्मप्रकृतौ श्रीमच्छिवशर्मसूरिपादैः "अमणाणुत्तरगेविज्जभोगभूमिगयतइयतणुगेसु कमसो असंखगुणिओ सेसेसु य जोग उक्कोसो" । तथास्वभाव्यात्तैरुत्कृष्टयोगो नैव प्राप्यते इति तानाश्रित्योक्तप्रमाणमुत्कृष्टमन्तरं न भवति । न चानुत्तरदेवलोकाच्च्युत्वा मनुष्यभवे उत्कृष्टप्रदेशबन्धं कुर्यादिति प्रोक्तप्रमाणमुत्कृष्टमन्तरं प्राप्नुयादित्यपि वक्तव्यम्, तत्र तावत्पृच्छामः-स मनुष्यभवे उत्कृष्टप्रदेशबन्धमपर्याप्तावस्थायां कुर्यादुत पर्याप्तावस्थायाम् ? आद्यपक्षे तूत्कृष्टयोगाभावः, द्वितीयपक्षे तु लेश्यानां परावर्तमानत्वेन शुक्ललेश्याया एवाभावात्तस्यामुत्कृष्टप्रदेशबन्धस्यान्तरस्यासम्भवः ।

अथोत्तरार्द्धं विव्रियते-मोहायुर्वर्जानां षण्णां कर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "भिन्न-मुहुत्तं मु"=अन्तर्मुहूर्त्तं भवति । अत्रोपपत्तिस्तु "सेसेसु जोगेसु" इत्यत्र वृत्तौ उपशमावेदमार्गणयो-रुपशमश्रेणिमाश्रित्य यथा वक्ष्यते तथैव कर्तव्या ॥२५०॥ अथात्र मतान्तरं विवक्षुराह—

तिपणिंदितिरिसुरेसुं सत्तण्ह तहा तिमणुससुकासुं ।
मोहस्स बिंति अण्णे ससगुरुकायट्ठिई ऊणा ॥ २५१॥

(प्रे०) "तिपणिंदिय" इत्यादि, पञ्चेन्द्रियतिर्यक्पर्याप्तपञ्चेन्द्रियतिर्यक्तिरश्चीलक्षणेषु त्रिपञ्चेन्द्रियतिर्यग्मार्गणासु देवौघे च सप्तकर्मणां, तथा मनुष्यौघपर्याप्तमनुष्यमानुषीरूपत्रिमनुष्य-मार्गणासु, शुक्ललेश्यायां च मोहनीयस्योत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूना स्वस्वकायस्थिति-र्भवतीत्यन्ये आहुः । तदुपपत्तिश्चैवम्-तेषां मते हि युगलिकानामप्युत्कृष्टयोगः सम्भवति अतः त्रिपञ्चेन्द्रियतिर्यग्मार्गणासु प्रथमभवे उत्कृष्टयोगं प्राप्य सप्तकर्मणामुत्कृष्टप्रदेशबन्धं विदधाति । ततोऽन्तिमभवस्यान्तिमसमये पुनरुत्कृष्टप्रदेशबन्धं विदधाति । इत्येवं प्रथमभवे यावत्कालमुत्कृष्ट-योगं न प्राप्नोति तावता कालेन समयद्वयेन च न्यूना स्वोत्कृष्टकायस्थितिः सप्तकर्मणामुत्कृष्ट-प्रदेशबन्धस्योत्कृष्टमन्तरं भवति । एवमेव त्रिमनुष्यमार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धस्यो-त्कृष्टान्तरमपि बोध्यम् ।

तथा तेषां मतेऽनुत्तरदेवानामप्युत्कृष्टयोगः सम्भवति, अतोऽनुत्तरदेवमाश्रित्य देवौघमार्ग-णायां भावनैवम्-कश्चिद् देवः पर्याप्तो भूत्वा सकृदुत्कृष्टप्रदेशबन्धं विधाय पुनः स्वायुरन्तिमसमये विदधातीति यावत्कालमुत्कृष्टयोगो न प्राप्तस्तावता कालेन न्यूना स्वोत्कृष्टकायस्थितिः प्रकृतान्तरं भवति । अथ शुक्ललेश्यायां भावनैवम्-यदा मनुष्यभवेऽन्तिमान्तर्मुहूर्त्ते शुक्ललेश्यां प्राप्योत्कृष्टप्रदेश-बन्धं विदधाति, ततः पश्चात्वं प्राप्यानुत्तरदेवेषूत्पद्यते, तत्र स्वायुरन्तिमसमये पुनरुत्कृष्टप्रदेश-बन्धं विदधाति । मार्गणा तु आगामिभवेऽपि अन्तर्मुहूर्त्तं यावदवतिष्ठते । अतोऽन्तर्मुहूर्त्तन्यूना स्वोत्कृष्टकायस्थितिर्मोहनीयस्योत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं भवति ।

ननु त्रिपञ्चेन्द्रियतिर्यग्मार्गणासु यथा सप्तानामपि कर्मणामन्तरं मतान्तरेण निर्दिष्टं तथा त्रिमनुष्यमार्गणास्वपि मतान्तेरण सप्तानामपि कर्मणामन्तरं कथं न निर्दिष्टं ? मतान्तरेण मनुष्य-युगलिकानामप्युत्कृष्टयोगसम्भवादिति चेदुच्यते, नोत्कृष्टप्रदेशबन्धस्य योग एव कारणं, किन्त्वल्प-तरप्रकृतिबन्धस्यापि तत्कारणकूटे समावेशो भवति । अत एव षण्णां कर्मणामुत्कृष्टप्रदेशबन्धस्वामी सूक्ष्मसम्पराये वर्तमान उत्कृष्टयोगी भवति । युगलिकानां तु श्रेणेरभावः । अतो युगलिकभवात्पूर्वं यो जीव उपशमश्रेणिमारोहति तदपेक्षयोत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं समागच्छति ।युगलिकभवात् पूर्वः कालश्चोत्कृष्टतः पूर्वकोटिपृथक्त्वप्रमाण एव । इत्थं त्रिमनुष्यमार्गणासु षण्णां कर्मणां युग-लिकापेक्षयाप्यन्तरभेदाभावादत्र मतान्तरेण निर्दिष्टम् ॥२५१॥

इदानीं सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं क्व "असंख्यलोकाः" क्व च श्रेण्य-संख्यातभाग इति प्रतिपादयन्नाह—

णेयं असंखलोगा एगिंदिणिगोअपंचकायेसुं ।
सेढीअ असंखयमो भागो सुहुमोघभेएसुं ॥२५२॥

(प्रे०) "णेयं" इत्यादि, एकेन्द्रियनिगोदयोः पृथ्व्यप्तेजोवायुवनस्पतिरूपपञ्चकायेषु च सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरम् "असङ्ख्यलोकाः"=असङ्ख्यलोकाकाशप्रदेशप्रमाण-समयाः' भवति । एतासु मार्गणासु उत्कृष्टतो यावत्कालमनुत्कृष्टप्रदेशबन्धो भवति, तावत्कालमुत्कृष्ट-प्रदेशबन्धस्योत्कृष्टतोऽन्तरं भवति । एतासु मार्गणासूत्कृष्टतोऽनुत्कृष्टप्रदेशबन्धकालोऽसंङ्ख्यलोका-काशप्रदेशप्रमाणसमया भवति । अत उत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरमपि तावत्समया भवति । 'सेढीअ' इत्यादि, एकेन्द्रियपृथिव्यप्तेजोवायुनिगोदरूपेषु षट्सु सूक्ष्मौघभेदेषु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्ध-स्योत्कृष्टमन्तरं "श्रेणेरसङ्ख्यतमो भागः=सूचिश्रेणेरसङ्ख्यतमे भागे यावन्त आकाशप्रदेशास्ताव-त्प्रमाणसमया भवति । अत्र भावना त्वेवम्-एतासु मार्गणासूत्कृष्टतो यावत्कालमनुत्कृष्टप्रदेशबन्धो भवति, तावत्कालमुत्कृष्टप्रदेशबन्धस्योत्कृष्टतोऽन्तरं भवति । एतासु मार्गणासूत्कृष्टतोऽनुत्कृष्टप्रदेश-बन्धकालः श्रेण्यसङ्ख्यातभागाकाशप्रदेशप्रमाणसमयाः । अत उत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरमपि तावत्समया भवति ॥२५२॥

साम्प्रतं यासु मार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तं ता आह—

सेसेसुं जोगेसुं अवगयवेए कसायचउगे य ।
सुहुमुवसममीसेसुं भिन्नमुहुत्तं मुणेयव्वं ॥२५३॥

(प्रे०) "सेसेसु" इत्यादि, शेषेषु=उक्तव्यतिरिक्तेषु चतुर्दशसु पञ्चमनःपञ्चवचनकायौ-घौदारिकवैक्रियाहारककाययोगेषु, त्रिमिश्रयोगेषु कार्मणकाययोगे चान्तराभावस्य प्रतिपादनात्, अपगतवेदे, कषायचतुष्के, चकारः समुच्चयार्थः भिन्नक्रमश्च, सूक्ष्मसम्परायोपशममिश्रेषु चेति द्वाविं-शतिमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "भिन्नमुहूर्त्तम्" अन्तर्मुहूर्त्तं ज्ञातव्यम् ।

अत्रोपपत्तिश्चैवम्-पञ्चमनःपञ्चवचनकायौघौदारिककायेषु सूक्ष्मसम्परायस्य प्रथमसमये उत्कृ-ष्टयोगेन षण्णां कर्मणामुत्कृष्टप्रदेशबन्धं विधायानुत्कृष्टयोगेनानुत्कृष्टप्रदेशबन्धं तत्प्रायोग्यान्तर्मुहूर्त्तं यावद् विदधाति । ततः पुनः सूक्ष्मसम्पराय एवोत्कृष्टयोगं प्राप्योत्कृष्टप्रदेशबन्धं विदधाति । इत्येव-मेतासु मार्गणासु षण्णां कर्मणामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्त्तं प्राप्यते । तदन्तर्मुहूर्त्तं च सूक्ष्मसम्परायगुणस्थानकालतो न्यूनमिति तु प्रदर्शितभावनया सुस्पष्टं प्रतिभाति । लोभसूक्ष्म-सम्परायमार्गणयोः सूक्ष्मसम्परायस्य प्रथमसमये उत्कृष्टयोगेन षण्णां कर्मणामुत्कृष्टप्रदेशबन्धं विद-धाति । द्वितीयसमयादारभ्योपान्त्यसमयं यावदनुत्कृष्टयोगवशादनुत्कृष्टप्रदेशबन्धं विदधाति । अन्तिम-

समये च पुनरुत्कृष्टयोगं प्राप्योत्कृष्टप्रदेशबन्धं विदधाति । इत्येवमत्रापि षण्णामुत्कृष्टमन्तरमन्तर्मुहूर्तम् । परं तदन्तर्मुहूर्तं सूक्ष्मसम्परायकालतो द्विसमयन्यूनम्, प्रथमान्तिमसमयाप्रवेशात् । उपशमापगतवेदमार्गणयोरुपशमश्रेणिमारोहन् जीवः सूक्ष्मसम्परायस्य प्रथमसमये षण्णां कर्मणामुत्कृष्टप्रदेशबन्धं विदधाति । ततो द्वितीयसमयादारभ्यान्तिमसमयं यावदनुत्कृष्टप्रदेशबन्धः, उपशान्तमोहे च बन्धाभावः । ततः प्रतिपत्य सूक्ष्मसम्परायमागत्य तच्चरमसमये उत्कृष्टप्रदेशबन्धं विदधाति । इत्येवमत्र षण्णां कर्मणामुत्कृष्टमन्तरमन्तर्मुहूर्तं प्राप्यते । तदन्तर्मुहूर्तं च सूक्ष्मसम्परायकालतः सङ्ख्यातगुणमिति दर्शितरीत्या स्पष्टमाभाति ।

अत्र पर्यन्तं भावितासु सूक्ष्मसम्परायवर्जासु गाथोक्तपञ्चदशमार्गणासु मोहस्य तथा वैक्रियाहारकत्रिकषायमिश्रेषु सप्तानामपि कर्मणामुत्कृष्टप्रदेशबन्धं मार्गणाप्रथमचरमसमयोर्विदधाति । इत्युत्कृष्टमन्तरमन्तर्मुहूर्तं प्राप्यते । किन्तु तदन्तर्मुहूर्तं मार्गणाकालतो द्विसमयन्यूनमित्यालक्षितव्यम्, मार्गणाप्रथमचरमसमयाप्रवेशात् । तदेवमत्रोक्तासु द्वाविंशतिमार्गणासु सप्तकर्मणामुत्कृष्टान्तरमन्तर्मुहूर्तप्रमाणमेवेत्युपपादितम् ।

अथात्र सम्भाव्यमानाशङ्कापरिहारौ प्रदर्श्येते । ननु काययोगमार्गणायामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टकालोऽसङ्ख्यपुद्गलपरावर्तप्रमाणः, अतो मोहनीयस्योत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमसङ्ख्यपुद्गलपरावर्ताः कथं नोक्तम् ? इति चेदुच्यते, काययोगमार्गणायामुत्कृष्टप्रदेशबन्धः संज्ञिन एव भवति, तस्य च योगस्य परावर्तमानत्वात् काययोग उत्कृष्टतोऽप्यन्तर्मुहूर्तं यावदेवावतिष्ठते । अतः तत्र मोहनीयस्योत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरमपि तावदेव भवति । अन्तर्मुहूर्तात्परतो मार्गणाया विनाशेनान्तराभावात् । एतदन्तरमपि ये जीवा द्विरुत्कृष्टप्रदेशबन्धं विदधति तानाश्रित्य बोध्यम् ।

न च देवभवे काययोगे वर्तमानः कश्चिज्जीवो भवचरमसमय उत्कृष्टं प्रदेशबन्धं विधायैकेन्द्रिये उत्पद्यते । तत्र चासङ्ख्यपुद्गलपरावर्तप्रमाणैकेन्द्रियकायस्थितिं यावदनुत्कृष्टप्रदेशबन्धं विदध्यात् । ततश्च संज्ञी भूत्वोत्कृष्टयोगं प्राप्योत्कृष्टप्रदेशबन्धं कुर्यादिति तमाश्रित्य काययोगमार्गणायां मोहनीयस्योत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमसङ्ख्यपुद्गलपरावर्ताः प्राप्यत इत्यपि वाच्यम्, संज्ञिनि आगमनानन्तरमुत्कृष्टप्रदेशबन्धप्रायोग्यावस्थायाः प्राप्तेः पूर्वं काययोगमार्गणैव नष्टा भवति । ततो द्विरुत्कृष्टप्रदेशबन्धस्यासम्भवादुक्तान्तरं न प्राप्यते । पर्याप्तभवनानन्तरं संज्ञिनोऽनेकशो मनोयोगादीनां परावृत्तिर्भवति तदोत्कृष्टयोगः प्राप्यते । उत्कृष्टयोगप्राप्तेः पूर्वं तु मार्गणैव नष्टा भवति । औदारिककाययोगस्य मार्गणाकालो यद्यपि देशोनद्वाविंशतिसहस्रवर्षप्रमाणोऽस्ति, परं स त्वेकेन्द्रियापेक्षयाऽस्ति, एकेन्द्रियस्य चोत्कृष्टयोगाप्राप्तेर्नोत्कृष्टप्रदेशबन्धः । किन्तु संज्ञिन एवोत्कृष्टप्रदेशबन्धो भवति । तस्य चौदारिककाययोग उत्कृष्टतोऽन्तर्मुहूर्तमात्रप्रमाण एव । अतोऽत्राप्यन्तर्मुहूर्तादधिकमन्तरं न प्राप्यते ॥२५३॥

साम्प्रतमेकार्यया सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं निरूपयति—

**दुअणाणायतअभवियमिच्छत्तेसुं असंखपरिअट्टा।**
**सेसासुं देसूणा सगसगकायट्ठिई जेट्ठा ॥२५४॥**

(प्रे०) '**दुअणाणायत**' इत्यादि, मतिश्रुतलक्षणाज्ञानद्विकासंयमाभव्यमिथ्यात्वेषु इति पञ्चमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमसङ्ख्यपुद्गलपरावर्तप्रमाणं भवति। एतासु मार्गणासु द्वयोरुत्कृष्टप्रदेशबन्धयोरन्तराले उत्कृष्टतो यावाननुत्कृष्टप्रदेशबन्धकालः तावत्प्रमाणमुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं भवति। द्वयोरुत्कृष्टप्रदेशबन्धयोरन्तराले उत्कृष्टप्रदेशबन्धकालोऽसङ्ख्यपुद्गलपरावर्ता भवतीति तु अत्र प्रकरणे सामान्यवक्तव्यतायाम् "अट्ठण्ह लहुं समयो" इत्यत्र वृत्तौ तथा कालद्वारे सामान्यवक्तव्यतायां "सत्तण्ह लहू समयो" इत्यत्र वृत्तौ चिन्तितम्—अत एतासु मार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमपि "असङ्ख्यपुद्गलपरावर्ताः" भवति। "**सेसासु**" इत्यादि, शेषासु पञ्चदशशतमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूना सौवी सौवी उत्कृष्टा कायस्थितिर्भवति।

अत्रेयं भावना—मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानसंयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरत्यवधिदर्शनक्षायोपशमिकादिमार्गणासु मार्गणायाः प्रथमे चरमे च समय उत्कृष्टप्रदेशबन्धो भवति। अतो द्विसमयन्यूना मार्गणोत्कृष्टकायस्थितिरुत्कृष्टमन्तरं भवति। शेषनरकदेवादिमार्गणासु मार्गणाप्राप्तेरन्तर्मुहूर्तकालस्य पश्चादुत्कृष्टयोगः प्राप्यते। अतो मार्गणाप्राप्तेरन्तर्मुहूर्तानन्तरमुत्कृष्टप्रदेशबन्धं कृत्वा पुनर्मार्गणाचरमसमये विदधाति। अतोऽन्तर्मुहूर्तन्यूनमार्गणोत्कृष्टकायस्थितिरुत्कृष्टमन्तरं भवति। अत्रोत्कृष्टान्तरनिरूपणस्य प्रस्तुतत्वादुत्कृष्टा कायस्थितिरुपात्ता।

शेषमार्गणाश्चेमाः-निखिलनरकाः, देवौघं विना समदेवाः, तिर्यगोघापर्याप्तपञ्चेन्द्रियतिर्यग्भेदौ, अपर्याप्तमनुष्यः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियाभ्यां विना सप्तदशेन्द्रियभेदाः,बादरपृथिव्यप्तेजोवायुनिगोदाः, पर्याप्तबादरपृथिव्यप्तेजोवायुनिगोदप्रत्येकवनस्पतिकायत्रसाः, पर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुनिगोदाः, अपर्याप्तबादरसूक्ष्मपृथिव्यप्तेजोवायुनिगोदप्रत्येकवनस्पतिकायत्रसाः, प्रत्येकवनस्पतित्रसकायौघभेदौ चेत्येकत्रिंशत्कायभेदाः, स्त्रीपुरुषनपुंसकवेदाः, मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानानि, सूक्ष्मसम्परायासंयमौ विना पञ्च संयमभेदाः, चक्षुरवधिदर्शने, शुक्लेश्याभन्तरा पञ्चलेश्याः, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वानि, संज्ञी असंज्ञी, आहारकश्च ॥२५४॥

सम्प्रति सप्तकर्मणामनुत्कृष्टप्रदेशबन्धस्यान्तरं निरूपयितुमुपक्रमते—

**सत्तण्हं णो अंतरमगुरुपएसस्स मिस्सजोगेसुं।**
**कम्माणाहारेसुं सेसासु भवे लहुं समयो ॥२५५॥**

(प्रे०) "सत्तण्हं" इत्यादि, आयुरन्तरा सप्तप्रकृतीनामनुत्कृष्टप्रदेशबन्धस्यान्तरं न भवेत् । कासु मार्गणासु ? इत्याह-"मिस्सजोगेसु" इत्यादि, औदारिकमिश्रवैक्रियमिश्राहारकमिश्रलक्षण-त्रिमिश्रयोगेषु । अत्र मार्गणाचरमसमय एवोत्कृष्टप्रदेशबन्धो भवति, तदनन्तरं च मार्गणाया विनाशाद-नुत्कृष्टप्रदेशबन्धस्यान्तरं न प्राप्यते । "सेसासु" इत्यादि, शेषासु पञ्चषष्टिशतमार्गणासु जघन्य-मन्तरमेकसमयो भवेत् । तच्चोत्कृष्टप्रदेशबन्धप्रयुक्तं ज्ञातव्यम् । उत्कृष्टप्रदेशबन्धश्च जघन्यत एक-समयं भवति । अतो यथोक्तमन्तरमुपपद्यते ॥२५५॥

साम्प्रतं वृत्तयुग्मेन सप्तकर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं यासु मार्गणास्वन्तर्मुहूर्त्तं ता निरूपयति—

सत्तण्हं कम्माणं भिन्नमुहुत्तं हवेज्ज उक्कोसं ।
तिणरेसुं दुपणिंदियतसेसु कायम्मि गयवेए ॥२५६॥
चउणाणसंयमेसुं णयणेयरओहिसुक्कभवियेसुं ।
सम्मत्तउवसमेसुं खइए सण्णिम्मि आहारे ॥२५७॥

(प्रे०) 'सत्तण्हं' इत्यादि, सप्तानां कर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं भिन्नमुहूर्त्तम् अन्तर्मुहूर्त्तं ज्ञेयम् । कासु मार्गणासु ? इत्याह-'तिणरेसु' इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषी-रूपत्रिमनुष्येषु, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियलक्षणद्विपञ्चेन्द्रिययोः त्रसौघपर्याप्तत्रसरूपद्वित्रसयोः, काययोगौघे, अपगतवेदे, [द्वितीयवृत्तवृत्तिः] मतिश्रुतावधिमनःपर्यवलक्षणज्ञानचतुष्के, संयमौघे, चक्षुरचक्षुरवधिदर्शनेषु, शुक्ललेश्याभव्यसम्यक्त्वौघोपशमेषु, क्षायिके, संज्ञिनि आहारके चेति चतु-र्विंशतिमार्गणासु । अत्रेयं भावना-तत्रादौ काययोगे भावना क्रियते । कश्चिज्जीव उपशमश्रेणौ सूक्ष्मसम्परायचरमसमये काययोगं प्राप्यानुत्कृष्टप्रदेशबन्धं विदधाति, उपशान्तमोहे चाबन्धः, तत औदारिककाययोगचरमसमये निधनं प्राप्य देवेषूत्पद्यमानः पुनरनुत्कृष्टप्रदेशबन्धं विदधातीति तस्य श्रेण्यन्तर्गतकाययोगकालत एकसमयन्यूनमन्तर्मुहूर्त्तमन्तरं भवति । मोहनीयकर्मणो भावना-प्येवम्, नवरं सूक्ष्मसम्परायगुणस्थानके नवमगुणस्थानकमुपशान्तमोहगुणस्थानके च सूक्ष्मसंपराय-गुणस्थानकं वक्तव्यम् ।

अथ शेषासु मार्गणासु भावना क्रियते, तत्राप्यादौ मोहनीयमाश्रित्य भाव्यते-अनुत्कृष्टप्रदेश-बन्धं कुर्वन् जीव उपशमश्रेणावनिवृत्तिबादरसम्पराये चरमद्विसमयौ मोहस्योत्कृष्टप्रदेशबन्धं विदधाति । सूक्ष्मसम्परायोपशान्तमोहयोश्चाबन्धः । प्रतिपत्यानिवृत्तिबादरसम्परायमागत्याद्यद्वि-समयौ उत्कृष्टप्रदेशबन्धं विदधाति इति शेषासु मार्गणासु मोहस्यानुत्कृष्टप्रदेशबन्धस्यान्तरं चतुः-समयाधिकान्तर्मुहूर्त्तत्रिकप्रमाणं भवति ।

न च भवान् प्राक् तु त्रिनरादिमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्त्तमभिहितवान्, अत्र भावनायां तु चतुःसमयाधिकान्तर्मुहूर्तत्रिकप्रमाणं साधितवान्, अतो "वदतो व्याघातः" इति मनसि निधेयम्, यतोऽन्तर्मुहूर्त्तमसंख्यभेदभिन्नम्, अत्रोत्कृष्टमन्तरप्रमाणत्वेनास्मदभिमतान्तर्मुहूर्त्तापेक्षया प्राक् प्रदर्शितं गुणस्थानस्यान्तर्मुहूर्त्तं न्यूनम्। तदन्तर्मुहूर्त्तत्रिकं चतुःसमयाश्च मीलित्वाऽत्रास्मदभिमतमन्तर्मुहूर्त्तं भवति। अत्र चतुःसमयाधिकगुणस्थानान्तर्मुहूर्त्तत्रिकप्रमाणमन्तर्मुहूर्त्तमपेक्षितमिति भावः।

अथ षट्कर्माण्याश्रित्य भाव्यते-अनुत्कृष्टप्रदेशबन्धं कुर्वन् जीव उपशमश्रेणौ सूक्ष्मसम्पराये चरमद्विसमयौ उत्कृष्टप्रदेशबन्धं विदधाति। उपशान्तमोहे चाबन्धः। ततः प्रतिपत्य सूक्ष्मसम्परायमागत्याद्यद्विसमयौ उत्कृष्टप्रदेशबन्धं विदधाति। इति शेषासु मार्गणासु षट्कर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं चतुःसमयाधिकोपशान्तमोहकालप्रमाणमन्तर्मुहूर्त्तं भवति ॥२५६।२५७॥

सम्प्रति लोभे शेषासु मार्गणासु च सप्तकर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं निरूपयन्नाह—

**लोहे अंतमुहुत्तं मोहस्स हवेज्ज छण्ह दो समया।**
**सेसासु मग्गणासुं सत्तण्ह वि होइ दो समया ॥२५८॥**

(प्रे०) "लोहे" इत्यादि, लोभमार्गणायां मोहस्यानुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्त्तं भवति। तद्यथा-उत्कृष्टप्रदेशबन्धं कुर्वन् कश्चिज्जीवोऽनिवृत्तिबादरसम्परायस्य चरमद्विचरमसमयौ उत्कृष्टप्रदेशबन्धं विदधाति। सूक्ष्मसम्पराये चाबन्धः। सूक्ष्मसम्परायस्य चरमसमये पञ्चत्वं प्राप्यानुत्कृष्टप्रदेशबन्धं विदधातीति यथोक्तमन्तरमुपपद्यते। 'छण्ह' इत्यादि, लोभे षण्णां कर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं तु द्वौ समयौ भवति। तथोत्कृष्टप्रदेशबन्धप्रयुक्तं समागच्छति। उत्कृष्टप्रदेशबन्धश्चोत्कृष्टतो द्वौ समयौ यावदेव भवति। "सेसासु" इत्यादि, शेषासु निगदितव्यतिरिक्तासु चत्वारिंशदधिशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं द्वौ समयौ भवति। तथाहि-शेषासु मार्गणास्वनुत्कृष्टप्रदेशबन्धस्यान्तरमुत्कृष्टप्रदेशबन्धप्रयुक्तं समायाति। उत्कृष्टप्रदेशबन्धश्चोत्कृष्टतो द्वौ समयौ यावदेव भवति। शेषमार्गणाश्चेमाः–निखिलनरकनाकितिर्यग्भेदाः, अपर्याप्तमनुष्यः, समस्तैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियभेदाः, अपर्याप्तपञ्चाक्षः, त्रसौघपर्याप्तत्रसाभ्यामृते कृत्स्नकायभेदाः, पञ्चमनःपञ्चवचनौदारिकवैक्रियाहारककाययोगाः, स्त्रीपुरुषनपुंसकवेदाः, लोभमन्तरा कषायत्रिकं, अज्ञानत्रिकं, संयमसामान्यं विना षट्संयमभेदाः, विना शुक्लां पञ्चलेश्याः अभव्यः, वेदकमिश्रसास्वादनमिथ्यात्वानि, असंज्ञी च ॥२५८॥

साम्प्रतमायुष उत्कृष्टप्रदेशबन्धस्यान्तरं वक्तुं प्रक्रमते—

**आहारमीसजोगे जेट्ठपएसस्स अंतरं णत्थि।**
**आउस्स लहुं समयो सेसासुं मग्गणासु भवे ॥२५९॥**

(प्रे०) 'आहारमीसजोगे' इत्यादि, उत्तरार्धस्थं "आउस्स" इति पदं *"देहलीदीपक"-न्यायेन अत्रापि युज्यते, आहारकमिश्रयोगे आयुष उत्कृष्टप्रदेशबन्धस्यान्तरं नास्ति, मार्गणाचरमसमये उत्कृष्टप्रदेशबन्धभवनात् । अथोत्तरार्धं विव्रियते–पूर्वार्धस्थं 'जेट्ठपएसस्स' इति पदमनन्तरोक्तन्यायेनोत्तरार्धेऽपि सम्बध्यते, शेषासु द्वाषष्ट्यधिकशतमार्गणासु आयुष उत्कृष्टप्रदेशबन्धस्य जघन्यमन्तरमेकसमयो भवेत् । प्रथमसमय उत्कृष्टं प्रदेशबन्धं, द्वितीयसमयेऽनुत्कृष्टं तृतीयसमये च पुनरुत्कृष्टं विदधातीति जघन्यत एकसमयमन्तरमुपपद्यते ॥२५९॥

सम्प्रति यासु मार्गणासु देशन्यूनषण्मासा उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं ताः पूर्वार्धेनाह—

देसूणा छम्मासा गुरुं सयलणिरयदेवलेसासुं ।
तिपणिंदितिरिणरेसुं बोद्धव्वं मोहणीयव्व ॥२६०॥

(प्रे०) "देसूणा" इत्यादि, आयुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूनाः षण्मासाः" भवति । कासु मार्गणासु ? इत्याह-'सयल' इत्यादि, निखिलनरकभेदेषु, कृत्स्ननाकिभेदेषु, समस्तलेश्यासु चेति चतुश्चत्वारिंशन्मार्गणासु । तद्यथा-यो नारको नाकी वा स्वायुरन्तिमषण्मासाद्यान्तर्मुहूर्तचरमसमये आयुष उत्कृष्टप्रदेशबन्धं विधाय पुनः स्वायुरुपान्त्यान्तर्मुहूर्तचरमसमये विदधाति तस्यायुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तन्यूनाः षण्मासा भवति । एवं लेश्यास्वपि देवनारकापेक्षया भावनीयम्, तेषां लेश्यानामवस्थितत्वात् । तिर्यग्मनुष्याणां लेश्यानां परावर्तमानत्वेन तानाश्रित्याभिमतोत्कृष्टान्तरं न प्राप्यते ।

नन्वत्र पुनरायुष उत्कृष्टप्रदेशबन्ध उपान्त्यान्तर्मुहूर्तचरमसमये न वक्तव्योऽपि त्वन्तिमान्तर्मुहूर्तचरमसमये वक्तव्यः, यतो द्विसमयन्यूनषण्मासा उत्कृष्टमन्तरं प्राप्नुयादिति चेदुच्यते, आयुषोऽबाधाकालो जघन्यतोऽप्यन्तर्मुहूर्तप्रमाणोऽस्ति । अत आयुषः स्वायुरन्तिमान्तर्मुहूर्तात् पूर्वमेव बन्धो भवति । अन्यथाऽबाधाकालो नोपपद्येत । अत आयुषो बन्ध उपान्त्यान्तर्मुहूर्ते वक्तव्यः । उपान्त्यान्तर्मुहूर्तचरमसमये चोत्कृष्टप्रदेशबन्धो वक्तव्यः । अग्रेऽपि यत्रोपान्त्यान्तर्मुहूर्ते आयुषो बन्धो वक्ष्यते तत्राप्येवमेव बोध्यम् ।

अथोत्तरार्धेन मोहनीयवदायुरुत्कृष्टप्रदेशबन्धोत्कृष्टान्तरा मार्गणा प्रतिपादयति-"तिपणिंदि" इत्यादि, तिर्यक्पञ्चेन्द्रियपर्याप्ततिर्यक्पञ्चेन्द्रियतिरश्चीरूपत्रितिर्यक्पञ्चेन्द्रियेषु, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणेषु त्रिमनुष्येषु आयुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं "मोहनीयवद्" ज्ञातव्यम् । तद्यथा-एकपक्षे मोहनीयस्योत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "पूर्वकोटिपृथक्त्वम्", तच्च पूर्वं "तिपणिंदि" इत्यत्राभिहितं, वृत्तौ सूक्ष्मेक्षिकया भावितं च, तथा परपक्षे "देशन्यूना

* गृहदेहल्यां स्थितो दीपको यथा गृहस्यान्तो बहिश्च प्रकाशं करोति तथैकस्यैव शब्दस्य वाक्यस्य वोभयत्र सम्बन्धज्ञापको न्यायो देहलीदीपकसंज्ञया कीर्त्यते ।

स्वस्वोत्कृष्टकायस्थितिः," तच्च पूर्वं "णिगणिदि" इत्यत्र मतान्तरतया प्रदर्शितं, वृत्तौ लेशेन भावितमपि ॥२६०॥ अथ यासु मार्गणास्वायुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमसङ्ख्यलोका यासु च श्रेण्यसङ्ख्यातभागस्ताः प्ररूपयति—

**णेयं असंखलोगा एगिंदिणिगोअपंचकायेसु ।**
**सेढीअ असंखयमो भागो सुहमोघभेएसु ॥२६१॥**

(प्रे०) 'णेयं असंखलोगा' इत्यादि, एकेन्द्रियनिगोदपृथ्व्यप्तेजोवायुवनस्पतिकायरूपसप्तौघभेदेषु आयुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं 'असंख्यलोकाकाशप्रदेशप्रमाणसमया' भवति । एतासु मार्गणासु आयुष उत्कृष्टप्रदेशबन्धस्वामी "बादरो"ऽस्ति । ततोऽसङ्ख्यलोकाकाशप्रदेशप्रमाणां सूक्ष्मकायस्थितिं यावदुत्कृष्टप्रदेशबन्धाभावादुक्तान्तरं प्राप्यते । "सेढीअ" इत्यादि, एकेन्द्रियपृथ्व्यप्तेजोवायुनिगोदलक्षणषट्सूक्ष्मौघभेदेषु आयुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं सूचिश्रेण्या असङ्ख्याततमे भागे यावन्त आकाशप्रदेशास्तावत्प्रमाणं भवति । तथास्वामाव्याद् व्यतीते एतावति कालेऽवश्यमुत्कृष्टयोगप्राप्तिसम्भवाद् ॥२६१॥ सम्प्रति यासु मार्गणासु आयुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तं ता दर्शयति—

**भिन्नमुहुत्तं णेयं पणमणवयकायउरलजोगेसु ।**
**वेउव्वाहारेसुं कसायचउगम्मि सासाणे ॥२६२॥**

(प्रे०) "भिन्नमुहुत्तं" इत्यादि, आयुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तं भवति । कासु मार्गणासु ? इत्याह-"पणमण" इत्यादि, पञ्चमनःपञ्चवचनकाययोगौदारिककाययोगेषु, वैक्रियाहारककाययोगयोः, कषायचतुष्के, सास्वादने चेति नवदशमार्गणासु । काययोगौदारिककायाभ्यां विनैतासु मार्गणासु सकृदेवायुषो बन्धो भवति, न त्वनेकशः । अस्य ज्ञापकं त्वग्रे आयुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं द्वौ समयौ एव वक्ष्यतीति । ततोऽत्रोत्कृष्टमन्तरमबन्धप्रयुक्तं न प्राप्यते, किन्त्वनुत्कृष्टप्रदेशबन्धकालमाश्रित्य प्राप्यते । तद्यथा-आयुर्बन्धस्य प्रारम्भसमयेऽन्तिमसमये चायुरुत्कृष्टप्रदेशबन्धं विदधातीति द्विसमयन्यूनायुरुत्कृष्टबन्धकालप्रमाणमुत्कृष्टमन्तरं भवति । न चात्र काययोगौदारिककाययोः कायस्थितेरधिकत्वादबन्धप्रयुक्तमन्तरमन्तर्मुहूर्तादधिकं प्राप्नुयादित्याशङ्कितव्यम्, तयोरायुष उत्कृष्टप्रदेशबन्धः "संज्ञिनः" भवति, तस्य च योगः परावर्तमानत्वात् उत्कृष्टतोऽप्यन्तर्मुहूर्तमेवावतिष्ठते । इत्यन्तर्मुहूर्तादूर्ध्वं मार्गणाया विनाशेन द्विरायुषो बन्धाभावान्नाधिकमन्तरं प्राप्यते ॥२६२॥ एतर्हि यासु मार्गणासु आयुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूनः पूर्वकोटित्रिभागस्ताः प्ररूपयति—

**मणणाणसंयमेसुं समइअछेअपरिहारदेसेसुं ।**
**देसूणो पुव्वाणं कोडितिभागो मुणेयव्वं ॥२६३॥**

(प्रे०) 'मणणाणसंयमेसु' इत्यादि, 'भीमो भीमसेनः' इति न्यायाद् मनःपर्यवज्ञाने, संयमौघे, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिषु चेति षण्मार्गणास्वायुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूनः पूर्वकोटितृतीयभागो" ज्ञातव्यम् । तद्यथा-यदा सम्पूर्णपूर्वकोटिप्रमाणस्वोत्कृष्टायुषस्तृतीयभागस्याद्यन्तर्मुहूर्त्तप्रथमसमये उत्कृष्टप्रदेशायुर्बन्धं विधाय पुनरुपान्त्यान्तर्मुहूर्त्तसत्कचरमसमये बध्नाति, तदाऽन्तर्मुहूर्त्तन्यूनपूर्वकोटित्रिभागप्रमाणमन्तरं भवति ॥२६३॥

सम्प्रति यासु मार्गणासु आयुष उत्कृष्टमन्तरमसङ्ख्यपुद्गलपरावर्तप्रमाणं ताश्चिन्तयति—

अण्णाणदुगे अयते अचक्खुदंसणअभवियभवियेसुं ।
मिच्छत्तम्मि य णेयं असंखिया पोग्गलपरट्टा ॥२६४॥

(प्रे०) 'अण्णाणदुगे' इत्यादि, मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शनभव्याभव्येषु, मिथ्यात्वे चेति सप्तमार्गणास्वुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरम् "असङ्ख्येया पुद्गलपरावर्ता" ज्ञेयम् । कथम् ? इति चेद्, एतासु मार्गणासु स्वकायस्थितेरसंख्यपुद्गलपरावर्तेभ्योऽधिकत्वाद् । इदमुक्तं भवति-ओघत आयुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरमसंख्यपुद्गलपरावर्ता निरूपितम् । तच्च यासु मार्गणासु स्वकायस्थितिरसंख्यपुद्गलपरावर्तेभ्योऽधिका तासूपपद्यते । अस्ति चैतासु मार्गणासु स्वकायस्थितिरसंख्यपुद्गलपरावर्तेभ्योऽधिका । अतोऽत्र यथोक्तमन्तरमुपपद्यते । विशेषभावना तु सामान्यवक्तव्यतावत् स्वयमेव विभावनीया, विस्तरभयान्नात्र पुनः प्रपञ्च्यते ॥२६४॥

अथ मतान्तरप्रदर्शनपूर्वकं विभङ्गज्ञानमार्गणायामायुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं बिभणिषुराह—

विब्भंगे देसूणा जेट्ठा कायट्ठिई मुणेयव्वं ।
अण्णे उ भणन्ति भवे जेट्ठं देसूणछम्मासा ॥२६५॥

(प्रे०) "विब्भंगे" इत्यादि, विभङ्गज्ञानमार्गणायामायुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूना मार्गणाया उत्कृष्टा कायस्थितिर्ज्ञातव्यम् । तद्यथा–पूर्वकोट्यायुष्को विभङ्गज्ञानी कश्चिज्जीवो मनुष्यभवे स्वायुस्तृतीयभागस्याद्यन्तर्मुहूर्त्तप्रथमसमये उत्कृष्टयोगादायुरुत्कृष्टप्रदेशबन्धं कृत्वा सप्तमनरक उत्पद्यते । तत्र च स्वायुरुपान्त्यान्तर्मुहूर्तचरमसमय आयुरुत्कृष्टप्रदेशबन्धं विदधाति । इति किञ्चित्कालेन न्यूना विभङ्गज्ञानमार्गणोत्कृष्टकायस्थितिरायुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं भवति । अथोत्तरार्धेन मतान्तरमाह-"अण्णे उ" इत्यादि, अन्ये तु विभङ्गमार्गणायामायुष उत्कृष्टप्रदेशबन्धस्य "ज्येष्ठम्"=उत्कृष्टमन्तरं देशन्यूनषण्मासा भवेदिति भणन्ति । तैरपर्याप्तावस्थायां विभङ्गज्ञानाऽस्वीकाराद् मनुष्यतिर्यक्षु तूत्कृष्टतोऽपि अन्तर्मुहूर्त्त यावदेवाङ्गीकाराच्च मार्गणाया नाशेन निगदितोत्कृष्टमन्तरं न प्राप्यते । अपि तु यदा कोऽपि नारको देवो वा स्वायुषोऽवशिष्टेषु षण्मासेषु आद्यसमय आयुरुत्कृष्टप्रदेशबन्धं विदधाति, द्वितीयवारं चायुरुपान्त्यान्तर्मुहूर्त्तचरमसमये करोति, तदाऽन्तर्मुहूर्त्तन्यूनषण्मासा अनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं भवति ॥२६५॥

सम्प्रति पूर्वार्धेन क्षायिकमार्गणायां मतान्तरप्रदर्शनपूर्वकमायुरुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरमाह—

**खइए बावीसुदही अब्भहिया ऽण्णे उ हीणजेट्ठठिई ।**
**सेसासु देसूणा सगसगकायट्ठिई जेट्ठा ॥२६६॥**

(प्रे०) "खइए" इत्यादि, क्षायिकमार्गणायामायुष उत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं साधिकद्वाविंशतिसागरोपमा भवति । द्वयोरायुर्बन्धयोरन्तराले तावत्प्रमाणकालस्य प्राप्यमाणत्वात् । अत्र मतान्तरमाह–'अण्णे' इत्यादि, अन्ये तु क्षायिकमार्गणायामायुरुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तर "हीनज्येष्ठकायस्थितिः"=देशन्यूनस्वोत्कृष्टकायस्थितिर्भवतीत्याहुः । अस्य बीजं त्वनुत्तरदेवानामप्युत्कृष्टयोगस्य सम्भव इत्यङ्गीकरणम् । अथोत्तरार्धेनावशिष्टमार्गणासु आयुरुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं प्ररूपयति–"सेसासु" इत्यादि, निरूपितावशिष्टासु पञ्चषष्टिमार्गणास्वायुरुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूना सौवी सौवी उत्कृष्टा कायस्थितिर्भवति । अत्र भावनैवम्-प्रथमं तावदुत्कृष्टबन्धप्रायोग्ये जघन्यस्थितिके प्रथमभवे स्वायुस्त्रिभागाद्यन्तर्मुहूर्ते प्रथमसमये आयुरुत्कृष्टप्रदेशबन्धं विदधाति, द्वितीयवारं चान्तिमभवस्योपान्त्यान्तर्मुहूर्तसत्कचरमसमये विदधातीति देशेन–उत्कृष्टप्रदेशबन्धस्य द्विसमयाभ्यामन्तिमान्तर्मुहूर्तेन चाधिकेनोत्कृष्टप्रदेशबन्धप्रायोग्यजघन्यस्थितिकप्रथमभवायुर्द्विभागेन न्यूना स्वोत्कृष्टकायस्थितिरुत्कृष्टमन्तरं भवति । अत्रेदमवधेयम्-सर्वापर्याप्तमार्गणासु किञ्चिद्विशेषोऽस्ति, स स्वयमेवावगन्तव्यः ।

शेषमार्गणाश्चेमाः–तिर्यगोघापर्याप्तपञ्चेन्द्रियतिर्यग्भेदौ, अपर्याप्तमनुष्यः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियाभ्यामृते विश्वेन्द्रियभेदाः, बादरपृथ्व्यप्तेजोवायुनिगोदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदप्रत्येकवनस्पतिकायत्रसाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदप्रत्येकवनस्पतिकायत्रसाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, प्रत्येकवनस्पतित्रसकायौघभेदौ चेत्येकत्रिंशत्कायभेदाः, औदारिकमिश्रकाययोगः, स्त्रीपुरुषनपुंसकवेदाः, मतिश्रुतावधिज्ञानानि, चक्षुरवधिदर्शने, सम्यक्त्वौघक्षायोपशमिकसम्यक्त्वभेदौ, संज्ञी, असंज्ञी, आहारकश्च ॥२६६॥

तदेवमायुष उत्कृष्टप्रदेशबन्धस्यान्तरं निरूपितम् । साम्प्रतमायुषोऽनुत्कृष्टप्रदेशबन्धस्यान्तरं वक्तुमुपक्रमते—

**आहारमीसजोगे अगुरुपएसस्स अंतरं णत्थि ।**
**आउस्स लहुं समयो सेसासु मग्गणासु भवे ॥२६७॥**

(प्रे०) "आहार" इत्यादि, अत्रोत्तरार्धस्थम् "आउस्स" इति पदं "घण्टालाला"न्यायेन पूर्वार्धेऽपि सम्बध्यते, आहारकमिश्रयोग आयुषोऽनुत्कृष्टप्रदेशबन्धस्यान्तरं नास्ति । स्वचरमसमय एवो-

त्कृष्टप्रदेशबन्धस्य सम्भवात् । "आउस्स लहु" इत्यादि, शेषासु मार्गणासु आयुषोऽनुत्कृष्टप्रदेश-बन्धस्य जघन्यमन्तरमेकसमयो भवेत् । तच्चैवम्-अत्र प्रतिपक्षीभूतबन्धप्रयुक्तमन्तरं घटां याति । तत्प्रतिपक्षीभूतोत्कृष्टप्रदेशबन्धप्रायोग्योत्कृष्टयोगस्य जघन्यत एकसमयमवस्थानेनोत्कृष्टप्रदेश-बन्धो जघन्यत एकसमयं भवतीति यथोक्तमन्तरमुपपद्यते । नन्वाहारकमिश्रयोगे स्वचरमसमय एवोत्कृष्टप्रदेशबन्धो भवतीति विपरीतबन्धप्रयुक्तमन्तरं मा प्राप्नुयात्, परमबन्धप्रयुक्तमन्तरं कथं न प्राप्नुयाद् ? इति चेदुच्यते, आहारकमिश्रयोगे आयुषो बन्धः सकृदेव भवति, न त्वनेकशः । तदावेदकं त्वाकर्षद्वयान्तरस्य जघन्योऽपि काल आहारकमिश्रयोगकालाद् बृहत्तर इति । यद्याहारक-मिश्रयोगे द्विरायुर्बन्धो भवेत् तर्हि त्वाहारकमिश्रयोगस्य काल आकर्षद्वयान्तराद् बृहत्तरः स्यात् । नास्ति च बृहत्तर इति ज्ञायते आहारकमिश्रयोग द्विरायुर्बन्धो न भवतीति ॥२६७॥ इदानीमायु-षोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमाह—

**देसूणा छम्मासा उक्कोसं अंतरं मुणेयव्वं ।**
**सव्वणिरयदेवेसुं पसत्थअपसत्थलेसासुं ॥२६८॥**

(प्रे०) '**देसूणा**' इत्यादि, आयुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूनाः षण्मासा ज्ञातव्यम् । कासु मार्गणासु ? इत्याह-"**सव्वणिरय**" इत्यादि, सर्वनरकभेदेषु, प्रशस्ताप्रशस्त-लेश्याषट्के चेति चतुश्चत्वारिंशन्मार्गणासु । तद्यथा-अत्राबन्धविपरीतबन्धोभयप्रयुक्तमन्तरं प्राप्यते । तथाहि नारको देवश्च प्रथमाकर्षेण स्वायुरन्तिमषण्मासाद्यन्तर्मुहूर्ते आयुषोऽनुत्कृष्टं प्रदेशबन्धं विदधाति, परन्तु अन्तिमौ द्विसमयावुत्कृष्टं विदधाति । ततोऽबन्धः । ततो द्वितीयाकर्षेण स्वायु-रुपान्त्यान्तर्मुहूर्ते आयुर्बध्नाति । तत्र प्रारम्भद्विसमयौ उत्कृष्टं प्रदेशबन्धं विदधाति । तृतीयादि-समयेषु पुनरनुत्कृष्टं विदधातीति यथोक्तमन्तरं तत्प्रतिपक्षीभूतोत्कृष्टबन्धप्रयुक्तचतुःसमयाधिका-कर्षद्वयोत्कृष्टान्तरकालप्रमाणं भवति । एवं लेश्यास्वपि देवनारकानाश्रित्य परिभावनीयम्, तेषां लेश्यानामवस्थितत्वाद् । तिर्यग्मनुष्याणां लेश्यानां परावर्तमानत्वेन तानाश्रित्य यथोक्तमुत्कृष्ट-मन्तरं न प्राप्यते ।

ननु विबुधगतौ नरकगतौ वोत्पत्स्यमाना जीवास्तत्र यल्लेश्यायामुत्पत्स्यन्तेऽन्तर्मुहूर्तं पूर्वं तल्लेश्यायुक्ता भवन्ति । अतः पूर्वभवसत्कलेश्यायुक्तजीवोऽन्तिमान्तर्मुहूर्ताद्यभागे आयुषोऽनुत्कृष्ट-प्रदेशबन्धं कृत्वा त्रयस्त्रिंशत्सागरोपमादिस्वप्रायोग्योत्कृष्टस्थितिकोऽमरो नारको वा भवति । तत्र चोपान्त्यान्तर्मुहूर्ते पुनरायुषोऽनुत्कृष्टप्रदेशबन्धं विदधातीति लेश्यास्वायुषोऽनुत्कृष्टप्रदेशबन्धस्यो-त्कृष्टमन्तरं त्रयस्त्रिंशत्सागरोपमादिप्रमाणं कथं नोपपद्यते ? इति चेद्, शृणु, यद्यप्यमर्त्यगतौ नरक-गतौ वोत्पत्स्यमाना जीवाः प्रकृतस्वायुरन्तिमान्तर्मुहूर्ते देवनरकभवलेश्यायुक्ता भवन्ति, तथापि तत्पूर्वं तु तैरायुर्बद्धमेव । यदा च न बद्धं तदा तु देवनरकभवलेश्याया एवाभावः । यतो जीवा अन्तिमान्त-

मुहूर्तेऽनागतभवलेश्यायुक्ता भवन्ति । आयुस्तूपान्त्यान्तर्मुहूर्ते बध्नन्ति । तथा यद्यपि जीवा यस्यां लेश्यायां वर्तमाना नरकगतौ त्रिदशगतौ वोत्पद्यन्ते सा लेश्याऽऽयुर्बन्धकाले भवति, तथापि तस्या लेश्यायाः परावर्तमानत्वेन स्थैर्यं न भवति । ततो भवदुक्तरीत्या द्वयोरायुर्बन्धयोर्मध्ये एकलेश्याया अप्राप्यमाणत्वात् त्रयस्त्रिंशत्सागरोपमादिप्रमाणमुत्कृष्टमन्तरं नोपपद्यते ॥२६८॥ सम्प्रति यासु मार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धस्यान्तरं साधिकोत्कृष्टा भवस्थितिस्ताः प्ररूपयति—

सव्वेसु तिरियमणुसएगिंदियविगलपंचकायेसुं ।
असमत्तपणिंदितसेसु साहिया भवठिई जेट्ठा ॥२६९॥

(प्रे०) 'सव्वेसु' इत्यादि, सर्वतिर्यग्भेदेषु, सर्वैकेन्द्रियभेदेषु, सर्वविकलेन्द्रियभेदेषु, सर्वपृथ्व्यप्तेजोवायुवनस्पतिरूपपञ्चकायभेदेषु, अपर्याप्तपञ्चेन्द्रियेऽपर्याप्तत्रसे चेति षड्त्तरषष्टिमार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं साधिकोत्कृष्टा स्वभवस्थितिर्भवति । तद्यथा-स्वप्रायोग्योत्कृष्टस्थितिके प्रथमभवे स्वायुस्त्रिभागाद्यान्तर्मुहूर्ते आयुषोऽनुत्कृष्टप्रदेशबन्धं विधाय स्वप्रायोग्योत्कृष्टायुष्कद्वितीयभवे स्वायुरुपान्त्यान्तर्मुहूर्ते पुनरायुषोऽनुत्कृष्टप्रदेशबन्धं विदधाति । इत्येवमन्तर्मुहूर्तत्रिकन्यूनेन स्वोत्कृष्टायुस्तृतीयभागेनाधिका स्वभवोत्कृष्टस्थितिरायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं भवति । एतदन्तरमबन्धप्रयुक्तमागतं, विपरीतबन्धप्रयुक्तं चतुःसमयाधिक्यं तु यथागमं स्वयमेव परिभावनीयम् ।

अत्रेदमालक्षितव्यं संख्याविद्भः—तिर्यगोघपञ्चेन्द्रियतिर्यगोघपर्याप्तपञ्चेन्द्रियतिर्यक्तिरश्चीषु तथा मनुष्यौघपर्याप्तमनुष्यमानुषीषु प्रथमभवः पूर्वकोटिप्रमाणायुष्को ग्राह्यः, न तु त्रिपल्योपमायुष्कः, तदनन्तरं मार्गणाया विनाशात् । यतः स कायस्थितेरन्तिमो भवोऽस्ति । किन्तु द्वितीयभवस्तु त्रिपल्योपमायुष्को ग्राह्यः, ततः प्रथमभवे पूर्वकोट्यायुष्कः कश्चिज्जीवः स्वायुस्तृतीयभागाद्यान्तर्मुहूर्त आयुषोऽनुत्कृष्टं प्रदेशबन्धं विदधाति । ततः समाप्ते जीवितकाले संस्थां प्राप्य त्रिपल्योपमायुष्को युगलिको भवति । तत्र स्वायुरुपान्त्यान्तर्मुहूर्ते पुनरायुषोऽनुत्कृष्टप्रदेशबन्धं विदधातीत्यन्तर्मुहूर्तत्रिकन्यूनेन पूर्वकोटित्रिभागेनाधिकानि त्रीणि पल्योपमानि आयुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं भवति, न तु ततोऽधिकम् । विपरीतबन्धप्रयुक्ताधिकान्तरं तु स्वयमेव विभावनीयम् ।

अथात्र प्रकृतमार्गणासूत्कृष्टभवस्थितिः प्रदर्श्यते—विंशतिसङ्ख्याकसर्वाऽपर्याप्तानां द्वादशसङ्ख्याकशेषसूक्ष्माणां निगोदौघबादरनिगोदपर्याप्तनिगोदानां चान्तर्मुहूर्तम् । एकेन्द्रियौघबादरैकेन्द्रियपर्याप्तबादरैकेन्द्रियाणां पृथ्वीकायौघबादरपृथ्वीपर्याप्तबादरपृथ्वीकायानां च द्वाविंशतिवर्षसहस्राणि । अप्कायौघबादराप्पर्याप्तबादराप्कायानां सप्तवर्षसहस्राणि । तेजःकायौघबादरतेजःकायपर्याप्तबादरतेजःकायानां त्रीण्यहोरात्राणि । वायुकायौघबादरवायुपर्याप्तबादरवायुकायानां त्रीणि

वर्षसहस्राणि । वनस्पतिकायौघप्रत्येकवनस्पतिकायौघपर्याप्तप्रत्येकतरूणां दश वर्षसहस्राणि । द्वीन्द्रियौघपर्याप्तद्वीन्द्रियोर्द्वादश वर्षाणि । त्रीन्द्रियौघपर्याप्तत्रीन्द्रिययोरेकोनपञ्चाशद्दिवसाः । चतुरिन्द्रियौघपर्याप्तचतुरिन्द्रिययोः षण्मासाः । मनुष्यौघपर्याप्तमनुष्यमानुषीणां तिर्यगोघपञ्चेन्द्रियतिर्यक्पर्याप्तपञ्चेन्द्रियतिर्यक्तिर्यग्योनिमतीनां च त्रीणि पल्योपमानि । उत्कृष्टभवस्थितिरस्तीति सर्वत्र योजनीयम् । तथा च निगदितं जीवसमासे—

बावीस सत्त तिन्नि य वाससहस्साणि दस य उक्कोसा । पुढविदगानिलपत्तेयतरुसु तेऊ तिरायं च ॥

तत्र 'तेऊ तिरायं च' इति, बादरतेजःकायिकानां त्रिरात्रं=त्रीण्यहोरात्राण्युत्कृष्टा भवस्थितिरित्यर्थः । शेषं सुगमम् ।

बारस अउणप्पन्न छप्पिय वासाणि दिवसमासा य । बेइंदियाइयाणं नरतिरियाणं तिपल्लं च ॥

भावार्थस्त्वेवम्—द्वीन्द्रियस्य द्वादशवर्षाणि, त्रीन्द्रियस्यैकोनपञ्चाशद्दिवसाः, चतुरिन्द्रियस्य षण्मासाः, नरतिरश्चां त्रिपल्योपमाण्युत्कृष्टभवस्थितिः ।

उभयं साहारसव्वसुहुमाणं । अंतोमुहुत्तमाऊ सव्वापज्जत्तयाणं च ॥

"उभय"मिति, जघन्योत्कृष्टस्वरूपद्विविधमप्यायुः । "साहार" इति, साधारणाः=निगोदापरपर्यायानन्तकायवनस्पतयस्तेषां सूक्ष्मबादरभेदभिन्नानाम् । शेषं गतार्थम् । इत्येवमत्र दुर्बोधपदार्थोऽभिहितः । तथाप्यनभिज्ञातभावार्थैर्जीवसमासवृत्तिरवलोकनीया । पुनर्विशेषतो या उत्कृष्टभवस्थितिप्रतिपादिका गाथाः अस्यैव ग्रन्थस्य मूलप्रकृतिबन्धे प्रथमाधिकारान्तरद्वारे प्रतिपादिता ता अप्यत्र प्रदर्श्यन्ते—

तिरियस्स पणिदितिरियणरतप्पज्जत्तजोणिणीणं च । तिण्णि पलिओवमाइं उक्कोसा भवठिई णेया ॥ १ ॥
एगिंदियपुढवीणं होइ दुवीसा सहस्सवासाणि । एमेव होइ तेसिं बायर-बायरसमत्ताणं ॥ २ ॥
दगवाऊणं कमसो सहस्सवासाणि सत्त तिण्णि भवे । तिदिणाऽग्गिस्सेवं सिं बायरबायरसमत्ताणं ॥ ३ ॥
बेइंदियाइगाणं कमसो बारसमा अउणवण्णा । दिवसा तह छम्मासा एवं तेसिं समत्ताण ॥ ४ ॥
वासाऽत्थि सहस्सा दस वणपत्तेअवणतरसमत्ताणं । भिन्नमुहुत्तं णेया सेसाणं पंचतीसाए ॥ ५ ॥ इति

सम्प्रति यासु मार्गणास्वायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं द्वौ समयौ ता निर्वक्ति—

**विण्णेयं दो समया पंचमणवयणविउव्वजोगेसुं**
**आहारगजोगे तह कसायचउगम्मि सासाणे ॥२७०॥**

(प्रे०) "विण्णेयं दो समया" इति, आयुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "द्वौ समयौ" विज्ञेयम् । कासु मार्गणासु ? इत्याह-'पञ्च' इत्यादि, पञ्चमनःपञ्चवचनवैक्रियाहारकयोगेषु, तथा कषायचतुष्के सास्वादने चेति सप्तदशमार्गणासु । अत्रेयं भावना—एतासु मार्गणासु सकृदेवायुषो बन्धो भवति, न तु द्विः, अतोऽत्रानुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमुत्कृष्टप्रदेशबन्धप्रयुक्तं प्राप्यते, उत्कृष्टयोगस्योत्कृष्टतोऽपि द्वौ समयौ यावदेवस्थितिर्भवति, अत उत्कृष्टप्रदेश-

बन्धोऽप्युत्कृष्टतो द्वौ समयौ एव भवतीति तत्प्रयुक्तमायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं द्वौ समयौ प्राप्यते ॥२७०॥

अथ काययोगौघे औदारिककाययोगे चायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं चिन्तयति—

**देसूणतिभागाहियजेट्ठपुहविभवठिई भवे काये ।**
**उरले भवे तिभागो देसूणो जेट्ठभूभवट्ठिइए ॥२७१॥** (गीतिः)

(प्रे०) "**देसूण**" इत्यादि, देशेनोनः न्यूनः=देशोनः, "ऊनार्थपूर्वाद्यैः" ( सिद्धहेम. ३।१।६७ ) इति तृतीयातत्पुरुषसमासः, तृतीयो भागः त्रिभागः, "मयूरव्यंसकेत्यादयः" [३।१।११६] इति सूत्रेण मध्यमपदलोपिसमासः, ततो देशोनश्चासौ त्रिभागश्चेति देशोनत्रिभागः, "विशेषणं विशेष्येणैकार्थं कर्मधारयश्च" [३।१।९६] इति कर्मधारयः, देशोनत्रिभागेनाधिका देशोनत्रिभागाधिका, "ऊनार्थ-पूर्वाद्यैः [सि०३।१।६७] इति तृतीयातत्पुरुषः, भवस्य स्थितिः=भवस्थितिः, "कृति" [३।१।७७] इति षष्ठी-तत्पुरुषः, पृथिव्या भवस्थितिः=पृथिवीभवस्थितिः, "षष्ठ्ययत्नाच्छेषे" (३।१।७६) इति षष्ठीतत्पुरुषः, ततो देशोनत्रिभागाधिका च ज्येष्ठा चासौ पृथिवीभवस्थितिश्चेति देशोनत्रिभागाधिकज्येष्ठपृथिवीभव-स्थितिः, पूर्ववत् कर्मधारयसमासः, "पुम्वत् कर्मधारये" (३।२।५७ इति सूत्रेण च पुम्भावः । काययोगौघमार्गणायामायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशोनत्रिभागाधिका ज्येष्ठा पृथिवी-भवस्थितिर्भवेदित्यर्थः ।

तद्यथा-उत्कृष्टायुष्कः पृथ्वीकायो जीवः स्वायुस्तृतीयभागस्याद्यान्तर्मुहूर्तेऽनुत्कृष्टप्रदेशबन्धं विदधाति । ततः समाप्ते जीवितकाले पश्चत्वं प्राप्य पुनरुत्कृष्टायुष्कः पृथ्वीकायो भवति । तत्र च स्वायुरुपान्त्यान्तर्मुहूर्ते आयुषोऽनुत्कृष्टप्रदेशबन्धं विदधातीति यथोक्तमुत्कृष्टमन्तरमुपपद्यते ।

अत्रायं स्फुटार्थः—काययोगौघमार्गणायां प्रस्तुतमन्तरं पृथ्वीकायस्य भवति । तस्य चोत्कृष्टायु-र्द्वाविंशतिवर्षप्रमाणम् । तस्य तृतीयो भागः चतुर्मासाधिकत्रयस्त्रिंशदुत्तरत्रिशताधिकसप्तसहस्रवर्षाणि भवति । अथ स पृथ्वीकायो जीवः प्रथमं तृतीयभागस्याद्यन्तर्मुहूर्ते आयुषोऽनुत्कृष्टप्रदेशबन्धं विदधाति, द्वितीयवारं च द्वितीयोत्कृष्टस्थितिकभवस्योपान्त्येऽन्तर्मुहूर्ते विदधातीति साधिकै-कोनत्रिंशत्सहस्रवर्षप्रमाणमुत्कृष्टमन्तरं प्राप्यते ।

'**उरले**' इत्यादि, औदारिककाययोगमार्गणायामायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं "त्रिभागः"=तृतीयो भागो भवति, किंसत्कः कस्य त्रिभागः ? इत्याह—"**जेट्ठभूभवट्ठिइए**" इति, ज्येष्ठा उत्कृष्टा या भुवः-पृथिव्या भवस्य स्थितिः, तस्याः कथम्भूतस्त्रिभागः ? इत्याह-'**देसूणो**' इति, देशेन-अन्तर्मुहूर्तत्रिकरूपेण न्यूनः । अत्रेयं भावना-औदारिककायमार्गणायामुत्कृष्टमन्तरं प्रकृतभवमाश्रित्य लभ्यते, न तु द्वितीयभवमाश्रित्य, तदानीं मार्गणाया अनवस्थानात् । औदारिककाय-मार्गणायामुत्कृष्टस्थितिश्च पृथ्वीकायस्य भवति । अतो यदोत्कृष्टायुष्कः कश्चित्पृथ्वीकायः प्रथमं

स्वायुस्तृतीयभागस्याद्यान्तर्मुहूर्तेऽनुत्कृष्टं प्रदेशबन्धं विदधाति, द्वितीयवारं चोपान्त्यान्तर्मुहूर्ते विदधाति, तदौदारिककायमार्गणायामायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तत्रिकन्यून-पृथ्वीकायस्थितेस्तृतीयभागो भवति ॥२७१॥

साम्प्रतमौदारिकमिश्रे स्त्रीवेदे चायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं प्रतिपादयति—

**ओरालमीसजोगे भिन्नमुहुत्तं हवेज्ज इत्थीए ।**
**पलिओवमा उ अहिया पंचावण्णा मुणेयव्वं ॥२७२॥**

(प्रे०) "ओरालमीसजोगे" इत्यादि, औदारिकमिश्रयोगे आयुषोऽनुत्कृष्टप्रदेश-बन्धस्योत्कृष्टमन्तरं "भिन्नमुहूर्त्तं" भवति । औदारिकमिश्रयोगे आयुर्बन्धका जीवा लब्ध्यपर्याप्ता एव, तेषामुत्कृष्टायुरप्यन्तर्मुहूर्तप्रमाणमेव, अतो द्विभवप्रयुक्तं द्विरायुर्बन्धमाश्रित्यापि अन्तर्मुहूर्त-प्रमाणमेवोत्कृष्टमन्तरं भवति । 'इत्थीए' इत्यादि, स्त्रीवेदमार्गणायामायुषोऽनुत्कृष्टप्रदेशबन्धस्यो-त्कृष्टमन्तरं "साधिकाः पञ्चपञ्चाशत्पल्योपमाः" भवति । तच्चेत्थम्-पूर्वकोटयायुष्का काचिद् मानुषी तिरश्री वा स्वायुस्तृतीयभागस्याद्यान्तर्मुहूर्ते आयुषोऽनुत्कृष्टं प्रदेशबन्धं विदधाति, किन्तु चरमद्विसमयावुत्कृष्टं विदधाति । समाप्तायुष्का सा निधनं प्राप्य पञ्चपञ्चाशत्पल्योपमस्थितिका देवी भवति । तत्र च पुनः स्वायुरुपान्त्यान्तर्मुहूर्तप्रारम्भद्विसमयावुत्कृष्टं प्रदेशबन्धं विधाय तृतीयादि-समयेषु पुनरनुत्कृष्टप्रदेशबन्धं विदधातीत्यन्तर्मुहूर्तत्रिकन्यूनेनोत्कृष्टबन्धप्रयुक्तचतुःसमयाधिकेन पूर्वकोटित्रिभागेनाधिकाः पञ्चपञ्चाशत्पल्योपमाः प्रकृतमन्तरं भवति ॥२७२॥ एतर्हि यासु मार्ग-णासु आयुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूनपूर्वकोटितृतीयभागस्ताः प्राह—

**मणणाणसंयमेसुं समइअछेअपरिहारदेसेसुं ।**
**देसूणो पुव्वाणं कोडितिभागो मुणेयव्वं ॥२७३॥**

(प्रे०) "मणणाण" इत्यादि, "भीमो भीमसेनः" इति न्यायाद् मनःपर्यवज्ञाने, संयमे, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिषु चेति षण्मार्गणासु आयुषोऽनुत्कृष्टप्रदेश-बन्धस्योत्कृष्टमन्तरं देशन्यूनः पूर्वकोटितृतीयभागो ज्ञातव्यम् । तच्चैवम्-पूर्वकोटयायुष्कः संयमी प्रथमं स्वायुस्तृतीयभागस्याद्यान्तर्मुहूर्तेऽनुत्कृष्टं प्रदेशबन्धं विदधाति, चरमद्विसमयौ चोत्कृष्टं विदधाति, द्वितीयवारमुपान्त्यान्तर्मुहूर्ते प्रारम्भद्विसमयावुत्कृष्टं विधाय तृतीयादिसमयेषु पुनर-नुत्कृष्टं विदधाति । इत्येवमन्तर्मुहूर्तत्रिकन्यून उत्कृष्टबन्धप्रयुक्तचतुःसमयाधिकः पूर्वकोटित्रिभागः प्रस्तुतमन्तरं भवति ॥२७३॥

अथ विभङ्गज्ञानमार्गणायां समतान्तरमायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरमाह—

**विब्भंगे देसूणा जेट्ठा कायट्ठिई मुणेयव्वं ।**
**देसूणा छम्मासा हवएत्ति भणन्ति अण्णे उ ॥२७४॥**

(प्रे०) "विभंगे" इत्यादि, विभङ्गज्ञानमार्गणायामायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूनोत्कृष्टा स्वकायस्थितिर्ज्ञातव्यम्। अत्रोपपत्तिस्त्वेवम्–नरकमार्गणादिवदत्रापि विपरीतबन्धाबन्धोभयप्रयुक्तमन्तरं प्राप्यते। तथाहि–पूर्वकोटिजीवितकालो विभङ्गज्ञानी कश्चिद् मनुष्यस्तिर्यग् वा स्वायुस्त्रिभागस्याद्यान्तर्मुहूर्ते आयुर्बध्नाति। तत्र चरमौ द्विसमयौ विहायानुत्कृष्टं प्रदेशबन्धं करोति, चरमौ द्विसमयौ उत्कृष्टं करोति। ततोऽबन्धः। ततः स्वायुःसमाप्तौ संस्थां प्राप्य सप्तमनरके ज्येष्ठायुष्को नारको भवति। स्वायुरुपान्त्यान्तर्मुहूर्ते आयुर्बध्नाति। तत्र प्रारम्भद्विसमया उत्कृष्टं प्रदेशबन्धं विधाय तृतीयादिसमयेषु पुनरनुत्कृष्टं विदधातीति किञ्चित्कालन्यूनस्वोत्कृष्टकायस्थितिप्रमाणमन्तरमुपपद्यते।

अथ मतान्तरमाह–"देसूणा" इत्यादि, अन्ये तु विभङ्गज्ञानमार्गणायामायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूनाः षण्मासा भवतीति भणन्ति। तैरपर्याप्तावस्थायां विभङ्गज्ञानस्याभावः स्वीकृतः। ततो द्वितीयभवायुर्बन्धकालादर्वाग् मार्गणाया नाशाद् देशन्यूनस्वोत्कृष्टकायस्थितिप्रमाणमन्तरं नोपपद्यते। किन्तु यदा कश्चित् प्रेतो देवो वा स्वायुषोऽवशिष्टेषु षण्मासेषु प्रथमान्तर्मुहूर्ते आयुरनुत्कृष्टप्रदेशबन्धं विदधाति। पुनश्चोपान्त्यान्तर्मुहूर्ते विदधाति तदा किञ्चिन्न्यूनषण्मासा आयुरनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं भवति। ननु मतान्तरे पर्याप्तमनुष्यतिर्यक्सत्कं विभङ्गज्ञानमाश्रित्य देशोनपूर्वकोटितृतीयभागप्रमाणमन्तरं कथं न प्राप्यते इति चेद्, उच्यते, मतान्तरे तस्यान्तर्मुहूर्तं यावदेव सत्ता स्वीकृता ॥२७४॥

सम्प्रति पूर्वार्धेनासंज्ञिनि तथोत्तरार्धेन शेषासु मार्गणास्वायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं प्रतिपादयन्नाह––

पुव्वाणेगा कोडी अब्भहिया होअए असण्णिम्मि ।
सेसासु जाणियव्वं तेत्तीसा सागराऽब्भहिया ॥२७५॥

(प्रे०) "पुव्वाणेगा कोडी" इत्यादि, असंज्ञिमार्गणायामायुषोऽनुत्कृष्टप्रदेशबन्धस्योकृष्टमन्तरमभ्यधिका=साधिका पूर्वाणामेका कोटिर्भवति। तथाहि–पूर्वकोटयायुष्कोऽसंज्ञी स्वायुस्तृतीयभागस्याद्यान्तर्मुहूर्त आयुषोऽनुत्कृष्टप्रदेशबन्धं विदधाति चरमद्विसमयौ चोत्कृष्टं विदधाति, ततः पुनः पूर्वकोटयायुष्कोऽसंज्ञी भवति। तत्र च स्वायुरुपान्त्यान्तर्मुहूर्ते प्रारम्भद्विसमयावुत्कृष्टं प्रदेशबन्ध विधाय तृतीयादिसमयेषु पुनरनुत्कृष्टं विदधाति। इत्येवमन्तर्मुहूर्तत्रिकन्यूनेनोत्कृष्टप्रदेशबन्धप्रयुक्तचतुःसमयाधिकेन पूर्वकोटित्रिभागेनाधिका पूर्वकोटिः प्रस्तुतमन्तरं भवति। "सेसासु" इत्यादि, शेषासु त्रयोविंशतिमार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं साधिकानि त्रयस्त्रिंशत्सागरोपमाणि ज्ञातव्यम्।

तच्चैवम्–पूर्वकोटयायुष्कः कश्चिज्जीवः स्वायुस्तृतीयभागस्याद्यन्तर्मुहूर्ते आयुषोऽनुत्कृष्टं प्रदेशबन्धं विदधाति। ततः समाप्तजीवितकालः स पञ्चत्वं प्राप्य त्रयस्त्रिंशत्सागरोपमायुष्को नारको वैमानिकदेवो वा भवति। तत्र च स्वायुरुपान्त्यान्तर्मुहूर्ते पुनरायुषोऽनुत्कृष्टप्रदेशबन्धं

विदधाति । इत्येवमन्तर्मुहूर्तन्यूनेन पूर्वकोटित्रिभागेनाधिकानि त्रयस्त्रिंशत्सागरोपमाणि प्रकृतमन्तरं भवति । पूर्ववदत्राप्युत्कृष्टप्रदेशबन्धप्रयुक्तं चतुःसमयाधिक्यं ज्ञेयम् । शेषमार्गणाश्चेमाः—पञ्चेन्द्रियौघ-पर्याप्तपञ्चेन्द्रियौ, त्रसकायौघपर्याप्तत्रसकायौ, पुरुषनपुंसकवेदौ, मतिश्रुतावधिज्ञानानि, मतिश्रुता-ज्ञाने, असंयमः, दर्शनत्रिकम् , भव्याभव्यौ, सम्यक्त्वौघक्षायिकक्षायोपशमिकमिथ्यात्वानि, संज्ञी, आहारकश्च । अत्रायं विवेकः—नपुंसकवेदाज्ञानद्विकासंयमाभव्यमिथ्यात्वेषु नारकमाश्रित्य, पुरुषवेद-ज्ञानत्रिकावधिदर्शनसम्यक्त्वौघक्षायिकक्षायोपशमिकेषु देवमाश्रित्य, शेषासु नवमार्गणासु च देव-नारकद्वयमाश्रित्य प्रकृतान्तरं समागच्छति ।।२७५।।

सम्प्रति जघन्याजघन्यप्रदेशबन्धयोर्जघन्योत्कृष्टान्तरे निरूपयिषुरादौ तावदोघतो जघ-न्यप्रदेशबन्धस्य जघन्यमन्तरं प्रतिपादयति—

**अट्ठण्हं कम्माणं हस्सपएसस्स अंतरं हस्सं ।**
**एगेणं समयेणं हीणो खुड्डगभवो णेयं ।।२७६।।**

(प्रे०) "अट्ठण्हं" इत्यादि, अष्टानामपि प्रकृतीनां जघन्यप्रदेशबन्धस्य जघन्यमन्तरमेकेन समयेन हीनः=न्यूनः क्षुल्लकभवो ज्ञेयम् । तच्चेत्थम्—सूक्ष्मापर्याप्तनिगोदस्य सप्तप्रकृतीनां भव-प्रथमसमय एव तथायुषः स्वायुस्तृतीयभागस्याद्यसमय एव जघन्यप्रदेशबन्धो भवति । तत आभ-वमजघन्य एव भवति । समाप्तायुष्कः स पञ्चत्वं प्राप्य पुनः सूक्ष्मापर्याप्तनिगोदो भवति । तत्र च भवप्रथमसमये सप्तप्रकृतीनां स्वायुस्तृतीयभागस्याद्यसमये चायुषो जघन्यप्रदेशबन्धं विदधाति । इत्येवं जघन्यप्रदेशबन्धस्य जघन्यमन्तरं जघन्यप्रदेशबन्धस्य य एकः समयस्तेन न्यूनः क्षुल्लकभवो भवति ।।२७६।।

अथ पूर्वार्धेन मतान्तरनिर्देशपूर्वकं जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमुत्तरार्धेन च सप्तकर्म-णामजघन्यप्रदेशबन्धस्य जघन्यमन्तरं प्रतिपादयति—

**जेट्ठं असंखलोगा उअ सेढीए भवे असंखंसो ।**
**सत्तण्ह लहुं समयो अलहुपएसस्स विण्णेयं ।।२७७।।**

(प्रे०) "जेट्ठं असंखलोगा" इत्यादि, "अष्टानां कर्मणां जघन्यप्रदेशबन्धस्य" इत्यनु-वर्तते, अष्टानामपि कर्मणां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमसङ्ख्यलोकाकाशप्रदेशप्रमाणं भवेत् , उत—अथवा सूचिश्रेण्यसंङ्ख्यातभागप्रमाणं भवेत् । अत्रायं विवेकः—सकृद् जघन्यप्रदेशबन्धं विधाय द्वितीयवेलायामुत्कृष्टतो यावता कालेन विदधाति, तावत्कालो जघन्यप्रदेशबन्धस्योत्कृष्ट-तोऽन्तरं भवति । जघन्यप्रदेशबन्धश्चापर्याप्तस्य भवप्रथमसमयस्थस्य सूक्ष्मनिगोदस्य भवति । अन्यसर्वजीवापेक्षया तस्य जघन्ययोगवत्त्वात् । ततः स सकृद् जघन्यप्रदेशबन्धं कृत्वा द्वितीय-वेलायामुत्कृष्टतो यावता कालेन विदधाति, तावत्कालो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं भवति । तस्योत्कृष्टतो द्वितीयवेलायां जघन्यप्रदेशबन्धश्चोत्कृष्टतो यावता कालेन पुनः सूक्ष्मनिगोदो भवेत्

तावता कालेन भवति । स पुनः सूक्ष्मनिगोदोऽसङ्ख्यलोकाकाशप्रदेशप्रमाणकाले व्यतीते भवत्येव, तस्यान्तरकालस्य तावत्प्रमाणात् । तथा च निगदितं **जीवसमासे**–"बायरसुहुमनिओया हरियत्ति असंखया भवे लोगा" (२५३गाथाङ्कः)। तस्यायमर्थः–बादरसूक्ष्मनिगोदानां वनस्पतिकायसामान्यानां च स्वकायादुद्वर्त्यान्यत्रोत्पन्नानां पुनः स्वकायप्राप्तिः "असंख्यलोकाकाशप्रदेशप्रमाणकाले" व्यतीते भवति । अतो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमसङ्ख्यलोकाकाशप्रदेशप्रमाणं भवतीति समापतितम् । अथ मतान्तरेण यत् सूचिश्रेण्यसंङ्ख्यातभागप्रमाणमन्तरं प्रतिपादितं तत्तु तदा घटामटेत् यदा जघन्यप्रदेशबन्धो न केवलं निगोदसूक्ष्मस्य किन्तु पृथिव्याद्यन्यतमस्यापर्याप्तस्य भवप्रथमसमयस्थस्य सूक्ष्मस्य भवेत् । अतो मतान्तरेणाष्टकर्मणां जघन्यप्रदेशबन्धस्वामी पृथ्व्याद्यन्यतमः सूक्ष्मापर्याप्तो भवतीति मन्तव्यम् । 'सत्तण्ह' इत्यादि, सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यमन्तरमेकसमयो विज्ञेयम् । जघन्यप्रदेशबन्धस्यैकसमयमेव सम्भवात् तत्प्रयुक्तमजघन्यप्रदेशबन्धस्य जघन्यमन्तरमेकसमयप्रमाणं भवति ॥२७७॥ साम्प्रतमायुषोऽजघन्यप्रदेशबन्धस्य जघन्यम्, अष्टानां कर्मणां चाजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमाह—

**आउस्स मुहुत्तंतो सत्तण्ह गुरुं भवे मुहुत्तंतो ।**
**आउस्स जाणियव्वं तेत्तीसा सागराब्भहिया ॥२७८॥**

(प्रे०) "**आउस्स**" इत्यादि, आयुषोऽजघन्यप्रदेशबन्धस्य जघन्यमन्तरं मुहूर्तान्तः=अन्तर्मुहूर्तं भवेत् । तद्यथा–कश्चिज्जीवः सकृदायुषोऽजघन्यं प्रदेशबन्धं कृत्वा पुनर्जघन्यतो व्यतीतेऽन्तर्मुहूर्ते करोतीत्युक्तमन्तरमुपपद्यते । 'सत्तण्ह' इत्यादि, आयुष उत्तरार्धेन वक्ष्यमाणत्वाद् विनाऽऽयुः सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तं भवेत् । तद्यथा–सप्तकर्मणामजघन्यप्रदेशबन्धं विदधतो जीवस्य उपशमश्रेणौ मोहनीयस्यानिवृत्तिबादरसम्परायान्ते षण्णां कर्मणां च सूक्ष्मसम्परायान्ते बन्धविच्छेदो भवति । ततः स उपशान्तमोहमारुह्य, ततः प्रतिपत्य पुनरजघन्यप्रदेशबन्धं विदधातीत्यजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं षण्णां कर्मणामुपशान्तमोहकालप्रमाणं मोहस्यारोहत्सूक्ष्मसम्परायोपशान्तमोहपतत्सूक्ष्मसम्पराया इति गुणस्थानकत्रिककालप्रमाणमन्तर्मुहूर्तमेव भवति । एतच्च "सत्तण्हं कम्माणं" इति (गाथा० २५६-२५७) गाथायाम् "अथ शेषासु मार्गणासु भावना क्रियते" इत्यत्र वृत्तौ यथा भावितं तथैव भावयितव्यम् । नवरं तत्र यथोत्कृष्टप्रदेशबन्धप्रयुक्ताश्चतुःसमया अधिका भावितास्तथाऽत्र जघन्यप्रदेशबन्धप्रयुक्ताश्चतुःसमया अधिका न वक्तव्याः । 'आउस्स' इत्यादि, आयुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं साधिकास्त्रयस्त्रिंशत्सागरोपमा भवति । अत्र भावना तु 'अट्ठण्ह लहुं समयो' (गाथा० २४६) इत्यत्र वृत्तौ यथा कृता तथैवाविशेषेणात्रापि कर्तव्या ॥२७८॥

सम्प्रति मार्गणासु जघन्याजघन्यप्रदेशबन्धयोर्जघन्योत्कृष्टान्तरे विवक्षुरादौ तावद् यासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धस्यान्तराभावस्ता गाथाद्विकेन प्ररूपयति—

णो अंतरं चिअ भवे हस्सपएसस्स आउवज्जाणं ।
सव्वेसु णिरयमणुससुरेसु उरले विउव्वदुगे ॥२७९॥
आहारदुगे कम्मे कसायचउगम्मि असुहलेसासु ।
उवसमसासाणेसु सण्णिअणाहारगेसु च ॥२८०॥

(प्रे०) "णो" इत्यादि, नो इति निषेधे, 'चिअ' इति "णइ चेअ चिअ च अवधारणे" (सिद्धहेम० ८।२।१८४) इति सूत्रेणावधारणार्थः, प्रस्तुते भिन्नक्रमश्च । आयुर्वर्जानां सप्तकर्मणां जघन्यप्रदेशबन्धस्यान्तरं नैव भवेदित्यर्थः । कासु मार्गणासु ? इत्याह-'सव्वेसु' इत्यादि, सर्वनरकभेदेषु, सर्वमनुष्यभेदेषु सर्वदेवभेदेषु, औदारिके, वैक्रियवैक्रियमिश्रयोः, [द्वितीयवृत्तवृत्तिः] आहारकाहारकमिश्रयोः, कार्मणकाये, कषायचतुष्के, अशुभत्रिलेश्यासु, उपशमसास्वादनयोः, संज्ञिनि, अनाहारके चेति नवपञ्चाशद्मार्गणासु ।

अत्र भावना त्वेवम्-देवनारकाणां पुनर्देवनरकगतौ उत्पादाभावेन देवनारकमार्गणास्वव्यवहितं द्वितीयवेलायां जघन्यप्रदेशबन्धो न भवति । देवनरकमार्गणासु जघन्यप्रदेशबन्धो भवप्रथमसमय एव भवति । ततस्ते यदा द्वितीयवेलायां भवप्रथमसमये वर्तन्ते तदा तेषां न देवनरकमार्गणाः । यावत्कालं च देवनरकमार्गणास्तावत्काले न पुनर्जघन्यप्रदेशबन्धोऽतः तेषां जघन्यप्रदेशबन्धस्य नान्तरम् । तथा सर्वमनुष्यसंज्ञिमार्गणासु जघन्यप्रदेशबन्धोऽसंज्ञित आगतानां भवप्रथमसमये भवति । ततो यद्यपि मनुष्यो मृत्वा मनुष्यः संज्ञी च मृत्वा संज्ञी भवतीति द्वितीयभवप्रथमसमये मार्गणाऽवस्थिता भवति, तथापि स मनुष्यः संज्ञी चासंज्ञितो नागत इति जघन्यप्रदेशबन्धो न भवति । इत्थं द्विर्जघन्यप्रदेशबन्धस्यालाभाज्जघन्यप्रदेशबन्धस्यान्तराभावः । औदारिकवैक्रियमार्गणयोरपि तनुपर्याप्तिप्रथमक्षण एव जघन्यप्रदेशबन्धो भवति । ततस्तत्रस्थो जीवो यदा द्वितीयवारं तनुपर्याप्तिप्रथमक्षणस्थो भवति तदा यथासंख्यमौदारिकमिश्रमार्गणायां वैक्रियमिश्रमार्गणायां च प्रविश्यैव भवतीति मार्गणाया नाशान्न जघन्यप्रदेशबन्धस्यान्तरम् । वैक्रियमिश्रेऽसंज्ञित आगतस्य देवस्य नारकस्य वा भवप्रथमसमये एव जघन्यप्रदेशबन्धो भवति । अन्तर्मुहूर्तानन्तरं च तौ वैक्रियमार्गणायां प्रविशत इति मार्गणा नष्टा भवति, अतः तस्यां न जघन्यप्रदेशबन्धस्यान्तरम् । आहारकद्विके मार्गणाप्रारम्भकाल एव जघन्यप्रदेशबन्धो भवति । ततो द्वितीयवारं जघन्यप्रदेशबन्धाभावेनान्तरं न प्राप्यते । कार्मणकाये अनाहारके च विग्रहगतौ प्रथमसमय एव जघन्यप्रदेशबन्धो भवति । तयोः प्रत्येकं काल उत्कृष्टतोऽपि त्रिसमयप्रमाण एव इति व्यतीते समयत्रिके तयोरनवस्थानान्न जघन्यप्रदेशबन्धस्यान्तरम् । कषायचतुष्काशुभत्रिलेश्यासु मार्गणागतसूक्ष्मजीवानां भवप्रथमसमये एव जघन्यप्रदेशबन्धो भवति । मार्गणानां च परावर्तमानत्वेनान्तर्मुहूर्तानन्तरमवश्यमनवस्थानान्न जघन्यप्रदेशबन्धस्यान्तरम् । उपशमसम्यक्त्वे जघन्यप्रदेशबन्धो देवस्य भवप्रथमसमय

एव भवति । मार्गणायाः कालश्चान्तर्मुहूर्तप्रमाण एव । ततोऽन्तर्मुहूर्तानन्तरं मार्गणाया नाशात् जघन्यप्रदेशबन्धस्यान्तरम् । सास्वादने भवप्रथमसमय एव जघन्यप्रदेशबन्धो भवति, तस्य कालश्च षडावलिकाप्रमाण एव । इति व्यतीतासु षडावलिकासु तस्य नाशाद् न जघन्यप्रदेशबन्धस्यान्तरम् । 'सप्तकर्मणां जघन्यप्रदेशबन्धस्यान्तरम्' इत्यग्रेऽनुवर्तनीयम् ॥२७९।२८०॥

सम्प्रति विभङ्गज्ञानमार्गणायामन्तराभावं मतान्तरेण च जघन्यमुत्कृष्टं चान्तरं प्ररूपयन्नाह—

णो अत्थि अंतरं चिअ विभंगणाणम्मि अहव बोद्धव्वं ।
हस्सं समयो जेट्ठं हवए देसूणछम्मासा ॥२८१॥

(प्रे०) 'णो' इत्यादि–'नो' इति निषेधे, 'चिअ' इत्यवधारणार्थो भिन्नक्रमश्च । विभङ्गज्ञानमार्गणायामायुर्वर्जानां सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्यान्तरं नैव भवेदित्यर्थः । ननु किमत्र बीजम् ? इति चेदुच्यते, देवनारकाणां विभङ्गज्ञानेन सहान्यगतावुत्पादाभाव एवात्र कारणम् । तथाहि–विभङ्गज्ञानमार्गणायां जघन्यप्रदेशबन्धस्वामी भवप्रथमसमये वर्तमाना देवनारकाः । ते हि विभङ्गज्ञानेन सहान्यत्र नोत्पद्यन्ते । ततो मार्गणानाशेन देवनारकाणां तस्यां मार्गणायामव्यवहितं द्विर्भवप्रथमसमयो न प्राप्तः । अतोऽन्तरं न प्राप्यते ।

'अहवा' इत्यादि, अथवेति मतान्तरेण विभङ्गज्ञाने सप्तकर्मणां जघन्यप्रदेशबन्धस्य जघन्यमन्तरं समयो ज्ञातव्यम् । अन्येषां मते देवनारकाणामपर्याप्तावस्थायां विभङ्गज्ञानाभावः । ततश्च जघन्यप्रदेशबन्धस्वाम्यष्टविधबन्धको घोलणयोगी जीवो भवति । अतो विवक्षितप्रथमसमये जघन्यप्रदेशबन्धं विदधाति । द्वितीयसमयेऽजघन्यं प्रदेशबन्धं विधाय पुनस्तृतीयसमये जघन्यं विदधातीति जघन्यमन्तरमेकसमयो भवति । "जेट्ठं हवए" इत्यादि, विभङ्गे मतान्तरेण जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूनषण्मासा भवति । तद्यथा–स्वायुषोऽन्तिमषण्मासाद्यन्तर्मुहूर्ताद्यसमयेऽष्टविधबन्धं कुर्वन् जघन्यं प्रदेशबन्धं विधाय पुनरुपान्त्यान्तर्मुहूर्तचरमसमयेऽष्टविधबन्धं कुर्वन् जघन्यं विदधातीत्यन्तर्मुहूर्तन्यूनाः षण्मासा उत्कृष्टमन्तरं भवति । अत्र प्रथमं जघन्यान्तरस्य वक्ष्यमाणत्वेऽप्यत्र जघन्योत्कृष्टोभयान्तरोक्तिर्लाघवार्था बोध्या ॥२८१॥

साम्प्रतं यासु मार्गणासु जघन्यप्रदेशबन्धस्य जघन्यमन्तरं समयन्यूना स्वजघन्यकायस्थितिस्ता निरूपयति—

सगसगलहुकायठिई समयेणूणा हवेज्ज सव्वेसुं ।
तिरिइंदियकायेसुं चक्खुअसण्णीसु य जहण्णं ॥२८२॥

(प्रे०) "सगसग" इत्यादि, सप्तकर्मणां जघन्यप्रदेशबन्धस्य जघन्यमन्तरं समयेन न्यूना स्वस्वजघन्यकायस्थितिर्भवति । कासु मार्गणासु ? इत्याह–"सव्वेसु" इत्यादि, सर्वतिर्यक्सर्वेन्द्रिय-

कृत्स्नकाययमार्गणासु चक्षुर्दर्शनासंज्ञिमार्गणयोश्चेत्यष्टषष्टिमार्गणासु । तद्यथा–तत्तन्मार्गणाप्रायोग्य-जघन्यायुष्को जीवो भवप्रथमसमये जघन्यप्रदेशबन्धं विधाय स्वायुःसमाप्तौ पञ्चत्वं प्राप्य तस्यामेव मार्गणायां स्थितो द्वितीयभवे तत्तद्मार्गणाप्रायोग्यजघन्यायुष्के प्रथमसमये पुनर्विदधातीति यथोक्त-मन्तरमुपपद्यते । जघन्यकायस्थितिस्तु कालद्वारे प्रतिपादितैव ॥२८२॥

एतर्हि यासु मार्गणासु जघन्यप्रदेशबन्धस्य जघन्यमन्तरमोघवद् ता आह—

ओघव्व कायुरालियमीसणपुंसदुअणाणअयतेसुं
अणयणभवियेसुं तह अभवियमिच्छेसु आहारे ॥२८३॥

(प्रे०) "ओघव्व" इत्यादि, सप्तकर्मणां जघन्यप्रदेशबन्धस्य जघन्यमन्तरम् "ओघवद्" भवति । ओघे समयोनक्षुल्लकभवप्रमाणमन्तरं निरूपितमित्यवधेयम् । कासु मार्गणासु ? इत्याह– "कायुरालिय" इत्यादि, काययोगौघौदारिकमिश्रनपुंसकवेदाज्ञानद्विकाऽसंयमेसु अचक्षुर्दर्शन-भव्याभव्यमिथ्यात्वाहारकेषु चेत्येकादशमार्गणासु । अत्र भावनाऽपि यथौघवक्तव्यतायां कृता तथैव कर्तव्या ॥२८३॥

साम्प्रतमन्तर्मुहूर्तान्तरा वर्षपृथक्त्वान्तराश्च मार्गणाः प्ररूपयति—

थीपुरिसेसुं णेयं भिन्नमुहुत्तं तिणाणओहीसुं ।
सम्मत्तवेअगेसुं वासपुहुत्तं मुणेयव्वं ॥२८४॥

(प्रे०) "थीपुरिसेसु" इत्यादि स्त्रीपुरुषमार्गणयोः सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्य जघन्य-मन्तरमन्तर्मुहूर्तं ज्ञेयम् । तथाहि-तयोर्जघन्यायुरन्तर्मुहूर्तं भवति । ततोऽसंज्ञिनौ स्त्रीपुरुषौ जघन्यायुष्के प्रथमभवे प्रथमसमये जघन्यप्रदेशबन्धं कृत्वा, समाप्ते जीवितकाले पञ्चत्वं प्राप्यासंज्ञिष्वेवोत्पद्य यथासङ्ख्यं स्त्रीत्वं पुरुषत्वं च प्राप्य भवप्रथमसमये पुनर्जघन्यप्रदेशबन्धं विदधत इति यथोक्त-मन्तरमुपपद्यते । "तिणाण" इत्यादि, मतिश्रुतावधिलक्षणत्रिज्ञानावधिदर्शनेषु, सम्यक्त्वौघवेदक-सम्यक्त्वयोश्चेति षण्मार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्य जघन्यमन्तरं वर्षपृथक्त्वं भवति । तद्यथा–कश्चिज्जीवो देवभवाद् वर्षपृथक्त्वप्रमाणं मनुष्यभवं प्राप्य तत्र प्रथमसमये जघन्यप्रदेशबन्धं विदधाति, ततः स्वायुःसमाप्तौ पुनर्देवभवं प्राप्य तत्र प्रथमसमये पुनर्जघन्यप्रदेशबन्धं विदधातीति निगदितमन्तरं घटामञ्चति ॥२८४॥

साम्प्रतं तेजःपद्मलेश्ययोर्जघन्यप्रदेशबन्धस्य जघन्यमन्तरं निरूपयति—

तेऊए देवस्स व सोहम्मस्स व जहण्णकायठिई ।
समयूणा पउमाए अब्भहिया सागरा दोण्णि ॥२८५॥

(प्रे०) 'तेऊए' इत्यादि, तेजोलेश्यायां सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्य जघन्यमन्तरं देवस्य=देवसामान्यस्य समयन्यूना जघन्यकायस्थितिः, यद्वाऽभिप्रायान्तरेण सौधर्मदेवस्य जघन्य-

कायस्थितिर्ज्ञातव्यम् । 'पउमाए' इत्यादि, पद्मलेश्यायां सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्य जघन्यमन्तरम् "अभ्यधिकौ द्वौ सागरौ" पदैकदेशेन पदसमुदायस्यापि गम्यमानत्वात् सागरोपमौ ज्ञातव्यम् । तद्यथा—पद्मलेश्याया जघन्यप्रदेशबन्धो भवप्रथमसमये एव देवस्य भवति । तथा देवे पद्मलेश्याया जघन्यकायस्थितिः साधिकद्विसागरोपमौ । अतो प्रथमं देवभवे प्रथमसमये जघन्यप्रदेशबन्धो भवति, द्वितीयवारं च मनुष्यभवे प्रथमसमये भवतीति यथोक्तमन्तरमुपपद्यते ॥२८५॥

सम्प्रति सप्तकर्मणां जघन्यप्रदेशबन्धस्य जघन्यान्तरनिरूपणसमाप्तिं चिकीर्षुराह—

आणतलहुकायठिई समयूणाऽत्थि सुइलाअ समयूणा ।
चुलसीइसहस्ससमा खइए समयोऽत्थि सेसासु ॥२८६॥

(प्रे०) 'आणत' इत्यादि, शुक्ललेश्यायां सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्य जघन्यमन्तरं समयन्यूनाऽऽनतजघन्यकायस्थितिरस्ति । तच्चैवम्—शुक्ललेश्यायामानतदेवानामेव जघन्यायुष्कत्वाद् जघन्यायुष्क आनतदेवः स्वभवप्रथमसमये जघन्यप्रदेशबन्धं विधाय स्वायुःसमाप्तौ मनुष्यत्वं प्राप्य तत्र भवप्रथमसमये पुनर्जघन्यप्रदेशबन्धं विदधातीति यथोक्तमन्तरं घटते । "समयूणा" इत्यादि, क्षायिकमार्गणायां सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्य जघन्यमन्तरं समयन्यूनाः चतुरशीतिसहस्रवर्षाणि भवति । तद्यथा—कश्चित् क्षायिकसम्यग्दृष्टिः चतुरशितिसहस्रवर्षप्रमाणायुष्को नारको भवति । तत्र भवप्रथमसमये जघन्यप्रदेशबन्धं विधाय स्वायुःसमाप्तौ मनुष्यत्वमवाप्य पुनस्तत्र भवप्रथमसमये जघन्यप्रदेशबन्धं विदधातीति यथोक्तमन्तरमुपपद्यते ।

अत्रायं विवेकः-ग्रन्थकृताऽत्र क्षायिकमार्गणायां जघन्यप्रदेशबन्धस्य जघन्यमन्तरं समयन्यूनचतुरशीतिसहस्रवर्षाणि यद् ज्ञापितम् तद् यदि क्षायिकसम्यग्दृष्टेर्नरकायुः तावत्प्रमाणं स्यात् तदैवोपपद्यते नान्यथा । इत्यर्थापत्तितोऽयं नियमो निर्गलति यद् क्षायिकसम्यग्दृष्टेर्नरकायुर्जघन्यतोऽपि चतुरशीतिसहस्रवर्षाण्येव भवेत् । "समयोऽत्थि सेसासु" इति, शेषासु प्रतिपादितव्यतिरिक्तासु नवदशमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्य जघन्यमन्तरमेकसमयो भवति । तथाहि—एतासु मार्गणासु जघन्यप्रदेशबन्धस्वामिनः परावर्तमानयोगित्वेन जघन्यं प्रदेशबन्धं विधायैकसमयमजघन्यं विदधाति । तदनन्तरं पुनर्जघन्यं विदधातीत्यतः सूक्तमेव "समयोऽस्ति शेषासु" इति । शेषमार्गणाश्चेमाः-पञ्चमनःपञ्चवचनावेदमिश्रमनःपर्यवज्ञानानि, असंयममन्तरा षट्संयमभेदाः ॥२८६॥

साम्प्रतं सप्तकर्मणां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं निरूपयितुं प्रस्तुते—

तिरिये एगिंदियतस्सुहमेसुं कायजोगणपुमेसुं ।
दुअणाणायत अणयणभवियेयरमिच्छअमणेसुं ॥२८७॥

जेट्ठं असंखलोगा उअ सेढीए असंखभागोऽत्थि ।
तिपणिंदितिरिक्खेसुं कोडिपुहुत्तं उ पुव्वाणं ॥२८८॥

(प्रे०) 'तिरिये' इत्यादि, तिर्यगोघे, एकेन्द्रियौघे, तस्य=एकेन्द्रियस्य सूक्ष्मे, एकेन्द्रियसूक्ष्मौघे इत्यर्थः, काययोगौघे, नपुंसके मतिश्रुतलक्षणाज्ञानद्विकासंयमाचक्षुर्दर्शनभव्याभव्यमिथ्यात्वासंज्ञिषु चेति त्रयोदशमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरम्-"असङ्ख्यलोकाकाशप्रदेशप्रमाणं" यद्वा "सूचिश्रेण्यसङ्ख्यातभागप्रदेशप्रमाणम्" अस्ति । तथाहि- एतासु मार्गणासु जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमजघन्यप्रदेशबन्धोत्कृष्टकालप्रयुक्तमस्ति । अजघन्यप्रदेशबन्धोत्कृष्टकालश्चासङ्ख्यलोकाकाशप्रदेशप्रमाणो यद्वा मतान्तरेण सूचिश्रेण्यसङ्ख्यातभागप्रदेशप्रमाणः । अतो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमपि तावत्प्रमाणमेव भवति ।

अथोत्तरार्धेन त्रिपञ्चेन्द्रियतिर्यग्मार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमाह—'तिपणिंदि' इत्यादि, पञ्चेन्द्रियतिर्यगोघपर्याप्तपञ्चेन्द्रियतिर्यक्तिर्यग्योनिमतीस्वरूपत्रिपञ्चेन्द्रियतिर्यग्मार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं पूर्वकोटिपृथक्त्वं भवति । तच्चैवम्-अत्र जघन्यप्रदेशबन्धोऽसंज्ञिपञ्चेन्द्रियस्य भवप्रथमसमये भवति । तस्य चोत्कृष्टा कायस्थितिः पूर्वकोटिपृथक्त्वप्रमाणाऽस्ति । अतोऽसंज्ञी प्रथमं स्वकायस्थितेः प्रथमभवे प्रथमसमये जघन्यप्रदेशबन्धं विधाय पुनरन्तिमभवे प्रथमसमये जघन्यं विदधातीति यथोक्तमन्तरमुपपद्यते ॥२८७।२८८॥ सम्प्रति सप्तकर्मणां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं यासु मार्गणासु श्रेण्यसंख्यातभागप्रमाणं यासु चान्तर्मुहूर्तप्रमाणं ता निर्वक्ति—

पणकायणिगोएसुं पणसुहमेसु य भवे असंखंसो ।
सेढीअ मुहुत्तंतो बोद्धव्वं पणमणवयेसुं ॥२८९॥

(प्रे०) 'पणकाय' इत्यादि, पृथिव्यप्तेजोवायुवनस्पतिस्वरूपपञ्चकायौघेषु, निगोदौघे, तेषां पृथिव्यप्तेजोवायुसाधारणवनस्पतिकायानां पञ्चसूक्ष्मौघभेदेषु च सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं सूचिश्रेण्यसङ्ख्यातभागप्रमाणं भवेत् । तथाहि-एतासु मार्गणासु जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमजघन्यप्रदेशबन्धोत्कृष्टकालप्रयुक्तं भवति । अजघन्यप्रदेशबन्धस्योत्कृष्टकालः सूचिश्रेण्यसंख्यातभागप्रमाण इति कालद्वारे प्ररूपितम् । अतो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमपि तावत्प्रमाणं भवति । 'मुहुत्तंतो' इत्यादि, पञ्चमनःपञ्चवचनेषु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तं बोद्धव्यम् । तद्यथा—एतासु मार्गणासु जघन्यप्रदेशबन्धमष्टविधबन्धकः परावर्तमानयोगी विदधाति, तस्मादायुर्बन्धस्य प्रथमसमये जघन्यप्रदेशबन्धं विधाय पुनरायुर्बन्धस्यान्तिमसमये विदधातीति यथोक्तमुत्कृष्टमन्तरं घटामटति ॥२८९॥

सम्प्रति यासु मार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं देशोनपूर्वकोटित्रिभागस्ता विभणिषुराह—

**मणणाणसंयमेसुं समइअछेअपरिहारदेसेसुं ।**
**देसूणो पुव्वाणं कोडितिभागो मुणेयव्वं ॥२९०॥**

(प्रे०) 'मणणाण' इत्यादि, मनःपर्यवज्ञानसंयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिषु सप्तकर्मणां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूनः पूर्वकोटितृतीयभागो" ज्ञातव्यम् । तच्चैवम्—एतासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धमष्टविधबन्धको घोलणयोगी करोति । अष्टविधबन्धकश्चायुर्बन्धकाल एव भवति । आयुश्च स्वायुस्तृतीयभागात्पूर्वं न बन्धमायाति । अतः पूर्वकोटयायुष्कः कश्चिज्जीवः स्वायुस्त्रिभागाद्यान्तर्मुहूर्ते आयुर्बध्नाति, तत्र प्रथमसमये जघन्यप्रदेशबन्धं विदधाति । ततः पुनर्द्वितीयाकर्षेणोपान्त्यान्तर्मुहूर्ते आयुर्बध्नाति, उपान्त्यान्तर्मुहूर्तान्ते च जघन्यप्रदेशबन्धं विदधाति । इत्येवं समयद्वयाधिकान्तर्मुहूर्तन्यूनपूर्वकोटित्रिभागप्रमाणं जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमुपपत्तिं याति ॥२९०॥

अथ शेषासु मार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं निर्वक्ति—

**देसूणा उक्कोसा सगसगकायट्ठिई मुणेयव्वं ।**
**सेसासुं सत्तण्हं हस्सपएसस्स उक्कोसं ॥२९१॥**

(प्रे०) "देसूणा" इत्यादि, तत्र 'सेसासु' इति, 'णो अंतरं चिअ भवे हस्सपएसस्स आउवज्जाणं' इति गाथा(२७९-२८०)द्वये प्रतिषिद्धप्रकृतान्तरा निरयगत्योघाद्येकोनषष्टिमार्गणास्तथा 'णो अत्थि अंतरं चिअ विभंगणाणम्मि अहव बोद्धव्वं । हस्सं समयो जेट्ठं हवए देसूणछम्मासा (गा० २८१) इत्यनेन विभङ्गज्ञानमार्गणायां मतेनैकेन प्रस्तुतान्तरस्य प्रतिषिद्धत्वादन्येन मतेनाऽपि लाघवार्थमुत्कृष्टान्तरस्याप्यभिहितत्वाच्च तां विभङ्गज्ञानमार्गणां तथा 'तिरिये एगिंदिये'त्यादिगाथाचतुष्टयेना(गाथा० २८७-२९०)ऽभिहितप्रस्तुतान्तरास्तिर्यग्गत्योघादित्रिचत्वारिंशन्मार्गणाश्च विहाय शेषास्वपर्याप्ततिर्यक्पञ्चेन्द्रियादिसप्तषष्टिमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं देशन्यूनोत्कृष्टा स्वस्वकायस्थितिर्ज्ञातव्यम् । तथाहि-अपर्याप्ततिर्यक्पञ्चेन्द्रियादिमार्गणासु कायस्थितेः प्रथमभवे प्रथमसमये सप्तप्रकृतीनां जघन्यप्रदेशबन्धं विधाय पुनः कायस्थितेरन्तिमभवे प्रथमसमये विदधातीति जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं समयाधिकचरमभवन्यूनस्वोत्कृष्टकायस्थितिप्रमाणं भवति । उत्कृष्टकायस्थितिश्च कालद्वारेऽभिहितैव ।

शेषमार्गणाश्चेमाः—तिर्यक्पञ्चेन्द्रियापर्याप्तः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियौ वर्जयित्वा निखिलैकेन्द्रियभेदाः, बादरपृथ्व्यप्तेजोवायुनिगोदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदप्रत्येकवनस्पतिकायत्रसाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदप्रत्येकवन-

स्पतिकायत्रसाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, प्रत्येकवनस्पतिकायत्रसकायौघभेदौ चेत्येक-त्रिंशत्कायभेदाः, औदारिकमिश्रभेदः, स्त्रीपुरुषावेदाः, मतिश्रुतावधिज्ञानानि, सूक्ष्मसम्परायभेदः, चक्षुरवधिदर्शनभेदौ, शुभलेश्यात्रिकम्, सम्यक्त्वौघक्षायिकक्षायोपशमिकमिश्रभेदाः, आहारकश्च । विभङ्गज्ञानस्योत्कृष्टान्तरं तु जघन्यान्तरनिरूपणप्रस्तावे निरूपितमिति न विस्मर्तव्यं धीधनैः ।

अत्रायं विशेषोऽवगन्तव्यः सूक्ष्मदर्शिभिः—मतिश्रुतावधिज्ञानसम्यक्त्वौघक्षायोपशमिकावधि-दर्शनेषु भावनैवं विधेया-मनुष्यभवे चरमान्तर्मुहूर्ते जीवस्तत्तन्मार्गणान्वितो भवति । ततो निधनं प्राप्यानन्तरभवे प्रथमसमये जघन्यप्रदेशबन्धं विदधाति । तदनन्तरमजघन्यप्रदेशबन्धं विद-धाति । ततो मार्गणाकायस्थितेरन्तिमान्तर्मुहूर्तेऽवशिष्टे पञ्चत्वं प्राप्यानन्तरभवे प्रथमसमये पुन-र्जघन्यप्रदेशबन्धं विदधातीत्यन्तर्मुहूर्तद्विकन्यूनस्वोत्कृष्टकायस्थितिः प्रस्तुतमन्तरं भवति । क्षायिके पुनरेवं विभावनीयम्-मनुष्यभवे क्षायिकमार्गणान्वितो भवति । ततः स्वायुःसमाप्तौ मृत्युमित्य त्रय-स्त्रिंशत्सागरोपमायुष्केषु देवेषूत्पद्यते । तत्र भवप्रथमसमये जघन्यं प्रदेशबन्धं विधायाजघन्यं विद-धाति । ततः क्रमेण कालक्षयाद् मनुष्यतयोत्पद्यते । तत्र भवप्रथमसमये पुनर्जघन्यं विदधातीति समयन्यूनत्रयस्त्रिंशत्सागरोपमाणि प्रस्तुतमन्तरं भवति । शुभलेश्यात्रिके पुनरेवं विभावनीयम्-कश्चि-ज्जीवः मनुष्यभवे चरमान्तर्मुहूर्ते विवक्षितलेश्यां प्राप्यायुःक्षयान्निधनं प्राप्य स्वप्रायोग्योत्कृष्टा-युष्को देवो भवति । तत्र भवप्रथमसमये जघन्यं प्रदेशबन्धं विधायाऽजघन्यं विदधाति । ततो जीवितकालनाशात् तल्लेश्यान्वित एव मनुष्यतयोत्पद्यते । तत्र च भवप्रथमसमये पुनर्जघन्यं प्रदेश-बन्धं विदधातीति द्व्यन्तर्मुहूर्तन्यूनस्वोत्कृष्टकायस्थितिः प्रकृतमन्तरं भवति । सूक्ष्मसम्पराये मिश्रे च भवप्रथमसमये जघन्यप्रदेशबन्धो न वक्तव्यः । अपि तु मार्गणायाः प्रथमे चरमे च समये वक्तव्यः । अतो जघन्यप्रदेशबन्धप्रयुक्तद्विसमयन्यूनस्वोत्कृष्टकायस्थितिप्रमाणमन्तरं भवति ॥२९१॥

साम्प्रतं सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्य जघन्योत्कृष्टान्तरे निरूपयितुं प्रचिक्रंसुराह—

**सव्वणिरयदेवेसुं अपज्जमणुसे विउव्वियदुगम्मि ।**
**आहारदुगे उरले कम्माणाहारगेसुं च ॥२९२**
**णो अत्थि अंतरं खलु अलहुपएसस्स आउवज्जाणं ।**
**तिणरेसु मुहुत्तंतो हस्सं समयोऽत्थि सेसासुं ॥२९३॥**

(प्रे०) '**सव्वणिरय**' इत्यादि, सर्वनरकभेदेषु, निखिलनाकिभेदेषु, अपर्याप्तमनुष्ये, वैक्रियवैक्रियमिश्रयोः, आहारकाहारकमिश्रयोः, औदारिके, कार्मणानाहारकयोश्चेति षड्चत्वारिं-शन्मार्गणास्वायुर्वर्जानां सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्यान्तरं न भवति । तथाहि—अन्तरं हि त्रिविधं प्राप्यते, क्वचिद् विपरीतबन्धप्रयुक्तं, क्वचिच्चाबन्धप्रयुक्तम्, क्वचिच्च विपरीतबन्धा-बन्धोभयप्रयुक्तम् । तत्र नाद्यम्, अजघन्यप्रदेशबन्धविपरीतस्य जघन्यप्रदेशबन्धस्य क्वचिद् भव-

प्रथमसमय एव भवनाद् क्वचिच्च मार्गणाप्रथमसमये भवनाद्। नापि द्वैतीयीकम्, एतासु मार्गणासूपशमश्रेणेरभावाद्, तत्तूपशमश्रेणिमाश्रित्य प्राप्यते। अतस्तृतीयमपि न प्राप्यते, तस्य प्रथमद्वितीयाऽन्तरस्वरूपत्वाद्। नन्वौदारिककाययोगमार्गणायामुपशमश्रेणिरस्त्येव, तत्कथं तस्यामबन्धप्रयुक्तमन्तरं नाभिधीयते? इति चेद्, सत्यम्, औदारिककाययोगे उपशमश्रेणेः सत्त्वेऽप्यबन्धप्रयुक्तमन्तरं न प्राप्यते, यतो बन्धोत्तरकालभावी अबन्धो मार्गणामध्यकाले न विरमत्यपि तु मार्गणाचरमसमयं यावद् भवति। संज्ञिन औदारिककाययोगकालापेक्षयोपशान्तमोहगुणस्थानस्य कालस्य बृहत्तरत्वाद्। इत्येवं पुनरजघन्यप्रदेशबन्धात् पूर्वमेव मार्गणाया नाशात्रावन्धप्रयुक्तमप्यन्तरं प्राप्यते।

साम्प्रतमुत्तरार्धेन सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यमन्तरं चिन्तयति–"**तिणरेसु**" इत्यादि, अपर्याप्तमृते त्रिमनुष्यमार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यमन्तरम् "अन्तमुहूर्त्त" भवति। तथाहि-जघन्यप्रदेशबन्धस्वाम्यसंज्ञित आगतो भवप्रथमसमयस्थो जीवो भवति। त्रिमनुष्यमार्गणास्थाश्च जीवा यदि पुनर्मनुष्येषूत्पद्यन्ते तदा ते नासंज्ञित आगताः, इति तेषां जघन्यप्रदेशबन्धो न भवति। अतः त्रिमनुष्यमार्गणासु प्रतिपक्षबन्धप्रयुक्तमन्तरं न प्राप्यते। अतोऽबन्धप्रयुक्तमन्तरमानेतव्यम्। तच्चैवम्–अजघन्यप्रदेशबन्धं कुर्वन् जीवोऽनिवृत्तिबादरसम्परायचरमसमये मोहनीयस्य, सूक्ष्मसम्परायान्तिमसमये च षण्णां कर्मणां बन्धविच्छेदं करोति। तत उपशान्तमोहमारुह्य तत्कालक्षयाच्च प्रतिपत्य पुनः सूक्ष्मसम्पराये पतदाद्यसमये षण्णां कर्मणामनिवृत्तिबादरसम्पराये च पतत्प्रथमसमये मोहनीयस्याजघन्यप्रदेशबन्धं विदधाति। इत्येवं त्रिमनुष्यमार्गणासु मोहनीयस्य द्विसूक्ष्मसम्पराययोरुपशान्तमोहस्य च यो कालस्तावत्प्रमाणं, षण्णां कर्मणां चोपशान्तमोहकालप्रमाणमजघन्यप्रदेशबन्धस्य जघन्यमन्तरं भवति।

"**समयोऽत्थि सेसासु**" इति, 'हस्सं' इति पदं "क्रमरुकमणि"न्यायेनाऽत्रापि सम्बध्यते। शेषासु भणितव्यतिरिक्तास्वेकविंशतिशतमार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धस्य जघन्यमन्तरम् 'एकसमयो' भवति। तद्यथा-पञ्चमनःपञ्चवचनावेदमनःपर्यवसंयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायदेशविरतिमिश्रेत्येकोनविंशतिमार्गणासु जघन्यप्रदेशबन्धं "परावर्तमानयोगी" विदधाति। अतो विवक्षितप्रथमसमयेऽजघन्यप्रदेशबन्धं विदधाति, द्वितीयसमये, जघन्यप्रदेशबन्धं विधाय पुनस्तृतीये समयेऽजघन्यप्रदेशबन्धं विदधातीति जघन्यमन्तरमेकसमयो भवति। विभङ्गज्ञाने तु "परावर्तमानयोगी भवप्रथमसमयस्थो वा" जघन्यप्रदेशबन्धं विदधातीति जघन्यमन्तरमेकसमय उपपद्यते। संज्ञिमार्गणायामुपशमश्रेणौ मोहनीयस्य सूक्ष्मसम्पराये प्रथमसमये षण्णां कर्मणां चोपशान्तमोहे प्रथमसमयेऽबन्धं विधाय द्वितीयसमये पञ्चत्वं प्राप्य देवभवे पुनरजघन्यप्रदेशबन्धं विदधातीति जघन्यमन्तरमेकसमयो भवति। भावितव्यतिरिक्तासु मार्गणासु "भवप्रथमसमयस्थो" जघन्यप्रदेशबन्धस्वामी भवति। अतो गतभवचरमसमयेऽजघन्यं प्रदेशबन्धं

विदधाति । ततस्तस्यामेव मार्गणायां स्थितो नञ्यमनस्य प्रथमसमये जघन्यं प्रदेशबन्धं विधाय द्वितीयसमयेऽजघन्यं प्रदेशबन्धं विदधातीति जघन्यमन्तरमेकसमयो घटामश्चति ।

शेषमार्गणाश्चेमाः—निखिलतिर्यग्गतिभेदाः, न्यक्षेन्द्रियभेदाः, कृत्स्नकायभेदाः, पञ्चमनःपञ्चवचनकाययोगौघौदारिकमिश्रकाययोगेषु, समस्तवेदभेदाः, कषायचतुष्कं, ज्ञानचतुष्कम्, अज्ञानत्रिकं, निखिलसंयमभेदाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, समस्तसम्यक्त्वभेदाः, संज्ञी, असंज्ञी, आहारकश्च । अत्रायं विशेषः—ज्ञानत्रिकादौ संज्ञिवदपि परिभावनीयम् ॥२९२।२९३॥

सम्प्रति सप्तकर्मणामजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं निरूपयितुमुपचिक्रंसुरादौ तावद्यासु मार्गणासूत्कृष्टमन्तर–"मन्तर्मुहूर्त्तं" ताः सार्धवृत्तेन निरूपयति—

तिमणुस्सदुपंचिंदियतसकायावेअणाणचउगेसुं ।
संयमतिदरिसणेसुं सुक्कभवियसम्मखइएसु ॥२९४॥
उवसमसण्णीसु तहा आहारम्मि परमं मुहुत्तंतो ।

(प्रे०) "तिमणुस्स" इत्यादि, अपर्याप्तमन्तरा त्रिमनुष्यमार्गणासु, विनाऽपर्याप्तं द्विपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसयोः, काययोगौघे, अवेदे, मतिश्रुतावधिमनःपर्यवलक्षणे ज्ञानचतुष्के, संयमौघे, दर्शनत्रिके, शुक्ललेश्यायां, भव्ये, सम्यक्त्वौघक्षायिकोपशमसंज्ञिषु, आहारके चेति चतुर्विंशतिमार्गणासु सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरम् "अन्तर्मुहूर्त्तं" भवति । अत्रोपपत्तिश्चैवम्—काययोगमार्गणायामनुत्कृष्टप्रदेशबन्धस्योत्कृष्टमन्तरं यथा भावितं तथैवात्रापि भावनीयम् । अपगतवेदेऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरवद् भावनीयं, नवरं चतुःसमयस्थाने मोहनीयमाश्रित्याष्टौ समया अधिका वक्तव्याः ।

नन्वत्र किं बीजमिति चेदुच्यते, अवेदे सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामी सप्तविधबन्धको घोलणयोगी भवति । घोलणयोगी च करणपर्याप्त एव । करणपर्याप्तस्य जघन्ययोगस्थानान्युत्कृष्टतश्चतुःसमयान् यावदवतिष्ठन्ते । ततोऽजघन्यप्रदेशबन्धं कुर्वन् कश्चिज्जीव उपशमश्रेणावनिवृत्तिबादरसम्परायेऽन्तिमचतुःसमयेषु मोहनीयस्य जघन्यप्रदेशबन्धं विदधाति । सूक्ष्मसम्परायोपशांतमोहयोश्चाबन्धः । ततः प्रतिपत्यानिवृत्तिबादरसम्परायमागत्य पतत्प्रारम्भचतुःसमयेषु पुनर्मोहनीयस्य जघन्यप्रदेशबन्धं विदधातीत्यष्टसमयाधिकं यथोक्तप्रमाणमन्तरमुपपद्यते । तथा षट्कर्माण्याश्रित्य यच्चतुःसमयानामाधिक्यं निगदितं तदत्र न वक्तव्यम्, यतो जघन्यप्रदेशबन्धस्वामी सप्तविधबन्धको भवति । सूक्ष्मसम्पराये षट्प्रकृतयो बध्यन्ते । अतस्तत्र तेषां जघन्यप्रदेशबन्धाभावेन तत्प्रयुक्ताधिक्यं न प्राप्यते । शेषासु त्रिमनुष्यादिमार्गणास्वपि यथा मनुष्यत्रिकेऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरं भावितं तथा भावनीयम् । नवरं सप्तापि कर्माण्याश्रित्य यच्चतुःसमयानामाधिक्यं भणितं तदत्र न वक्तव्यम् ।

नन्वत्र को हेतुरिति चेदुच्यते, त्रिमनुष्यादिमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धकाले विद्भवप्रथमसमयस्थो भवतीत्युपशमश्रेणौ जघन्यप्रदेशबन्धाभावेन तत्प्रयुक्तमाधिक्यं न प्राप्यते जघन्यत्रिमनुष्यादिषु जघन्यप्रदेशबन्धस्वामी भवप्रथमसमयस्थोऽस्त्यतस्तास्वष्टसमयानामाधिक्यं न प्रा किन्तु संयमौघमनःपर्यवमार्गणयोर्जघन्यप्रदेशबन्धस्वामी घोलणयोगी भवति । अत उपशमश्रेणावार हतोऽन्तिमचतुःसमयानवरोहतश्च बन्धप्रारम्भचतुःसमयान् जघन्यप्रदेशबन्धो भवेदिति तयोः सप्तप्रकृतीराश्रित्याष्टसमयानामाधिक्यं वक्तव्यमिति चेद्, त्वदुक्तिः सत्या, परं भो महानुभाव ! जघन्यप्रदेशबन्धस्वामी यथा जघन्ययोगी परावर्तमानयोगी च भवति तथाऽष्टप्रकृतिबन्धक एव भवतीति कथं विस्मृतम् । अत्र तु सूक्ष्मसम्पराये षडनिवृत्तिबादरसम्पराये च सप्त प्रकृतयो बध्यन्ते, न त्वष्टौ । अतो जघन्यप्रदेशबन्धाभावेन तत्प्रयुक्तमष्टसमयानामाधिक्यं नोपपद्यते ॥२९४॥

एतर्हि यासु मार्गणासु सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं चतुःसमयास्ता लोभमार्गणां च सार्धवृत्तेन निरूपयति—

पणमणवयजोगेसुं समइअछेअपरिहारेसुं ॥२९५॥
देससुहममीसेसुं समया चत्तारि होअए लोहे ।
मोहस्स मुहुत्तंतो समयो सेसाण छण्ह भवे ॥२९६॥

(प्रे०) "पणमण" इत्यादि, पञ्चमनःपञ्चवचनरूपदशयोगेषु, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसूक्ष्मसम्परायेषु, मिश्रे चेति षोडशमार्गणासु सप्तप्रकृतीनामजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं चत्वारः समया भवति । अत्रोपपत्तिमीमांसा त्वेवम्–अत्राबन्धप्रयुक्तमन्तरं नायाति । यतः सामायिकादिषण्मार्गणासूपशान्तमोहगुणस्थानस्याभावोऽस्ति । पञ्चमनःपञ्चवचनेषु च यद्यप्युपशान्तमोहगुणस्थानसद्भावः, तथाप्युपशान्तमोहगुणस्थानस्य कालतस्तेषां कालो न्यूनतरः । ततः पुनरजघन्यप्रदेशबन्धप्रारम्भं यावत्तेषामनवस्थानादबन्धप्रयुक्तमन्तरं न प्राप्यते । अतोऽत्राजघन्यप्रतिपक्षजघन्यप्रदेशबन्धप्रयुक्तमन्तरमानेतव्यम् । एतासु मार्गणासु जघन्यप्रदेशबन्धस्वामी परावर्तमानजघन्ययोगी भवति । परावर्तमानयोगी च करणपर्याप्त एव । करणपर्याप्तस्य जघन्ययोगस्थानान्युत्कृष्टतश्चतुःसमयान् यावदवतिष्ठन्ते । ततो विवक्षितसमयेऽजघन्यप्रदेशबन्धं कृत्वा चतुःसमयान् यावज्जघन्यं विदधाति, ततश्च पुनरजघन्यं विदधातीति यथोक्तमन्तरं घटामटाट्यते ।

'लोहे' इत्यादि, लोभमार्गणायां मोहनीयस्याजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "मुहूर्त्तान्तः" अन्तर्मुहूर्तं भवति । तथैवम्–उपशमश्रेणावनिवृत्तिबादरसम्परायचरमसमयेऽजघन्यं प्रदेशबन्धं विदधाति । सूक्ष्मसम्पराये त्वबन्धः । ततः सूक्ष्मसम्परायचरमसमये दिष्टान्तं प्राप्य देवेषूत्पद्यमानोऽजघन्यं विदधातीति समयोनसूक्ष्मसम्परायगुणस्थानकालप्रमाणमन्तर्मुहूर्तमन्तरं भवति । "समयो" इत्यादि, लोभे षण्णां कर्मणामजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरम् "एकसमयो" भवेत् । अत्र हि

...युक्तमन्तरं प्राप्यते, उपशान्तमोहे लोभस्याभावात् । किन्तु विपरीतबन्धप्रयुक्तं प्राप्यते । ...जघन्यप्रदेशबन्धश्च भवप्रथमसमय एव भवति, भवप्रथमसमयवर्तिनः सर्वजघन्ययोगस्थान-...त्कृष्टतोऽप्येकसमयं यावदेवावस्थानात् । अतः षण्णां कर्म्मणामजघन्यप्रदेशबन्धस्योत्कृष्टमन्तर-मप्येकसमय एव भवति ॥२९५।२९६॥

सम्प्रति सप्तकर्मणामजघन्यप्रदेशबन्धस्योत्कृष्टान्तरनिरूपणस्य समाप्तिं चिकीर्षुराह—

**विब्भंगे सत्तण्हं समयो अहवा हवेज्ज चउसमया ।**
**सेसासु मग्गणासुं एगो समयो मुणेयव्वं ॥२९७॥**

(प्रे०) 'विब्भंगे' इत्यादि, विभङ्गज्ञाने सप्तकर्मणामजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरम् "एकसमयः" यद्वा "चत्वारः समयाः" भवति । येषां मते भवप्रथमसमये विभङ्गज्ञानस्य सद्भावात् जघन्यप्रदेशबन्धो भवप्रथमसमये भवति तेषां मते एकसमयो येषां च मते भवप्रथमसमये विभङ्ग-ज्ञानस्यासद्भावात् जघन्यप्रदेशबन्धः परावर्तमानयोगे भवति तेषां मते चत्वारः समयाः प्रकृ-तान्तरं भवति । अत्रेयं भावना-विभङ्गज्ञानान्वितः कश्चिन्मनुष्यः स्वायुरन्तिमसमयेऽजघन्यप्रदेश-बन्धं विधाय पञ्चत्वं प्राप्य, नरके देवलोके वा उत्पद्य, प्रथमसमये जघन्यप्रदेशबन्धं करोतीति प्रतिपक्षजघन्यप्रदेशबन्धप्रयुक्तं प्रकृतान्तरमेकसमयो भवति । चतुःसमयोपपत्तिस्तु अनन्तरगा-थायां मनोयोगादिमार्गणासु यथा कृता तथा विधेया ।

"सेसासु" इत्यादि, शेषासु व्याख्यातव्यतिरिक्तासु द्व्यशीतिमार्गणासु सप्तकर्मणामजघन्य-प्रदेशबन्धस्योत्कृष्टमन्तरम् "एकसमयो" ज्ञातव्यम् । शेषासु मार्गणासु सूक्ष्मसम्परायोपशान्तमोह-गुणस्थानप्राप्त्यभावादबन्धप्रयुक्तमन्तरं नायाति, किन्तु तत्प्रतिपक्षबन्धप्रयुक्तं समायाति । तत्प्रतिपक्षजघन्यप्रदेशबन्धश्च भवप्रथमसमय एव भवतीति सूक्तम् "एगो समयो मुणेयव्वं" इति । शेषमार्गणाश्चेमाः—सर्वतिर्यग्भेदाः पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियाभ्यामृते सकलेन्द्रियभेदाः, त्रसौघ-पर्याप्तत्रसाभ्यां विना कृतस्नकायभेदाः, औदारिकमिश्रकाययोगः, वेदत्रिकं, लोभमन्तरा कषाय-त्रिकं, मतिश्रुताज्ञाने, असंयमः, विहाय शुक्लां लेश्यापञ्चकम्, अभव्यः, क्षायोपशमिकसास्वादन-मिथ्यात्वानि, असंज्ञी च ॥२९७॥ साम्प्रतमायुषो जघन्यप्रदेशबन्धस्य जघन्योत्कृष्टान्तरे निरू-पयितुमुपचिक्रंसुरादौ तावद्यासु मार्गणासु जघन्यप्रदेशबन्धस्यान्तराभावस्ताः प्रतिपादयति—

**आहारदुगे चउसुं कोहाईसुं तिअसुहलेसासुं ।**
**णो अंतरं खलु भवे हस्सपएसस्स आउस्स ॥२९८॥**

(प्रे०) "आहारदुगे" इत्यादि, आहारकाहारकमिश्रकाययोगरूपाहारकद्विके, चतुर्षु क्रोधा-दिकषायेषु, अशुभलेश्यात्रिके चेति नव मार्गणासु 'णो' इत्यादि, 'खलु' वाक्यालङ्कारे, आयुषो

जघन्यप्रदेशबन्धस्यान्तरं न भवेत्, सकृदायुषो जघन्यप्रदेशबन्धं विधाय पुनर्परवर्ति काले विद्ध्यात्तावत्कालं मार्गणाया अनवस्थानात् ॥२९८॥ अथैकवृत्तेनायुषो जघन्यप्रदेशबन्धस्य जघन्यमन्तरं निरूपयति—

सामी जहिं खलु भवे घोलणयोगी तहिं लहुं समयो।
सेसासु मग्गणासुं समयूणो होइ खुड्डभवो ॥२९९॥

(प्रे०) 'सामी' इत्यादि, "खलु" इति वाक्यालङ्कारे, यस्यां मार्गणायामायुषो जघन्यप्रदेशबन्धस्वामी घोलणयोगी=परावर्तमानयोगी भवेत् तस्यां मार्गणायामायुषो जघन्यप्रदेशबन्धस्य जघन्यमन्तरं समयो भवति। तथाहि–विवक्षितप्रथमसमये जघन्यं प्रदेशबन्धं विदधाति। द्वितीयसमयेऽजघन्यं विधाय पुनस्तृतीयसमये जघन्यं विदधातीति यथोक्तमन्तरं घटामटति। अथ यासु मार्गणास्वायुषो जघन्यप्रदेशबन्धस्वामी घोलणयोगी ता नामग्रहं प्रदर्श्यन्ते–[३९]निखिलनाकिनरकभेदाः, [४]पर्याप्ततिर्यक्पञ्चेन्द्रियतिरश्चीपर्याप्तमनुष्यमानुष्यः, [६]इन्द्रियमार्गणायाः षट् पर्याप्तभेदाः, [१२]कायमार्गणाया द्वादशपर्याप्तभेदाः, [१२]पञ्चमनःपञ्चवचनौदारिकवैक्रियकाययोगाः, [२]स्त्रीपुरुषवेदौ, [४]मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानानि, [६]संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिदेशविरतयः, [२]चक्षुरवधिदर्शने [३]प्रशस्तलेश्यात्रिकं, [४]सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि चेति त्रिनवतिः।

"सेसासु" इत्यादि, शेषासु भणितव्यतिरिक्तासु एकषष्टिमार्गणास्वायुषो जघन्यप्रदेशबन्धस्य जघन्यमन्तरम् "एकसमयन्यूनः क्षुल्लकभवो" भवति। अत्रेयं भावना–शेषासु मार्गणासु जघन्यप्रदेशबन्धं स्वायुस्तृतीयभागप्रथमसमयस्थोऽपर्याप्तजीवो विदधाति। अतः प्रथमभवे स्वायुस्तृतीयभागप्रथमसमये जघन्यप्रदेबन्धं विधाय, परभवत्वं प्राप्य, पुनर्लब्ध्यपर्याप्तो भवति। तत्र च पुनः स्वायुस्तृतीयभागप्रथमक्षणे जघन्यप्रदेशबन्धं विदधातीति यथोक्तमन्तरं घटते। शेषमार्गणाश्चेमाः- [३]तिर्यगोघतिर्यक्पञ्चेन्द्रियौघाऽपर्याप्ततिर्यक्पञ्चेन्द्रियाः, [२]मनुष्यौघापर्याप्तमनुष्यौ, पर्याप्तैर्विना [१३]त्रयोदशेन्द्रियभेदाः, द्वादशपर्याप्तैर्विना [३०]त्रिंशत्कायभेदाः, [२]काययोगसामान्यौदारिकमिश्रकायौ, [१]नपुंसकवेदः, [२]मतिश्रुताज्ञाने, [१]असंयमः, [१]अचक्षुर्दर्शनम्, [२]भव्याभव्यौ, [१]मिथ्यात्वम्, [१]असंज्ञी, [१]संज्ञी [१]आहारकश्चेति ॥२९९॥ अथायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं प्रतिपिपादयिषुरादौ तावद्यासु मार्गणासु देशन्यूनषण्मासप्रमाणमन्तरं ताः प्ररूपयति—

देसूणा छम्मासा उक्कोसं अंतरं मुणेयव्वं।
सव्वणिरयदेवेसुं तीसु पसत्थासु लेसासु ॥३००॥

(प्रे०) 'देसूणा' इत्यादि, आयुषो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूनाः षण्मासा" भवति। कासु मार्गणासु? इत्याह–'सव्वणिरय' इत्यादि, सर्वेषु नरकभेदेषु, सर्वेषु देवभेदेषु,

शुभलेश्यात्रिके चेत्येकचत्वारिंशन्मार्गणासु। तद्यथा—नारको नाकी वा स्वायुषोऽवशिष्टषण्मासाद्यसमय आयुषो जघन्यप्रदेशबन्धं विधाय द्वितीयाकर्षेण स्वायुरुत्कर्षान्त्यान्तर्मुहूर्तान्त्यसमये पुनर्विदधातीत्यन्तर्मुहूर्तन्यूनषण्मासप्रमाणमन्तरमुपपद्यते। लेश्यात्रिकेऽपि देवानाश्रित्यैवमेव परिभावनीयम्॥३००॥

सम्प्रति यासु मार्गणास्वायुषो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरमसङ्ख्यलोका मतान्तरेण च श्रेण्यसङ्ख्यातभागास्ताः सार्धगाथया निरूपयति—

तिरिये एगिंदियतस्सुहमेसुं कायजोगणपुमेसुं।
दुअणाणायतअणयणभवियेयरमिच्छअमणेसुं ॥३०१॥
लोगा असंखिया उअ असंखभागो हवेज्ज सेढीए।
तिपणिंदितिरिणरेसुं कोडिपुहुत्तं तु पुव्वाणं ॥३०२॥

(प्रे०) 'तिरिये' इत्यादि, तिर्यगोघे, एकेन्द्रियौघे, तस्य=एकेन्द्रियस्य सूक्ष्मे, एकेन्द्रियसूक्ष्मौघ इत्यर्थः, काययोगौघे, नपुंसके, मतिश्रुतलक्षणाज्ञानद्विकासंयमाचक्षुर्दर्शनभव्याभव्यमिथ्यात्वासंज्ञिषु चेति त्रयोदशमार्गणास्वायुषो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरम् "असंख्यलोकाकाशप्रदेशप्रमाणसमयाः" यद्वा "सूचिश्रेण्यसङ्ख्यातभागप्रदेशप्रमाणसमयाः" भवति। अत्र भावना तु "तिरिये एगिंदिये" इत्यत्र सप्तकर्मणां जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं यथा भावितं तथा कर्तव्या।

इदानीमुत्तरार्धेन यासु मार्गणास्वायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं पूर्वकोटिपृथक्त्वं ताः प्रतिपादयति–'तिपणिंदि' इत्यादि, पञ्चेन्द्रियतिर्यगोघपर्याप्तपञ्चेन्द्रियतिर्यक्तिर्यग्योनिमतीस्वरूपत्रिपञ्चेन्द्रियतिर्यग्मार्गणासु, मनुष्यौघे चायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "पूर्वकोटिपृथक्त्वं" भवति। तद्यथा—तिर्यगोघेऽपर्याप्तोऽसंज्ञी पर्याप्तपञ्चेन्द्रियतिर्यक्तिरश्च्योः पर्याप्तोऽसंज्ञी, मनुष्यौघे चापर्याप्तो मनुष्यो जघन्यप्रदेशबन्धं विदधाति। ते हि स्वकायस्थितेः प्रथमभवे जघन्यप्रदेशबन्धं विधाय पुनः स्वकायस्थितेरन्तिमभवे जघन्यप्रदेशबन्धं विदधतीति यथोक्तान्तरं सूपपद्यते। न च तिर्यग्मनुष्याणामुत्कृष्टकायस्थितिः पूर्वकोटिपृथक्त्वाधिकत्रिपल्योपमप्रमाणाऽस्ति। अतः कायस्थितेः प्रथमभवे आयुषो जघन्यं प्रदेशबन्धं विधाय पुनरन्तिमभवे विदधतीति देशन्यूनपूर्वकोटिपृथक्त्वाधिकत्रिपल्योपमप्रमाणमन्तरमुपपद्यत इति वाच्यम्, प्रोक्तोत्कृष्टकायस्थितिस्तु युगलिकानाश्रित्यास्ति। युगलिकभवश्च कायस्थितेरन्तिम एव। तत्र चायुर्जघन्यप्रदेशबन्ध एव न भवति, असंज्ञिनां तद्बन्धकत्वेन जघन्ययोगाप्राप्तेः। अतस्तेषां कायस्थितिं विहायैवान्तरं वक्तव्यमिति यथोक्तमेवान्तरं भवति नाधिकम्॥३०१।३०२॥

सम्प्रति यासु मार्गणास्वायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं श्रेण्यसंङ्ख्यातभागो यासु चान्तर्मुहूर्तं ताः प्रतिपादयति—

सेढिअसंखियभागो पणकायणिगोअपंचसुहमेसुं ।
पणमणवयउरलविउव्वसासाणेसुं मुहुत्तंतो ॥३०३॥

(प्रे०) 'सेढअसंखियभागो' इत्यादि, पृथिव्यप्तेजोवायुवनस्पतिलक्षणपञ्चकायौघेषु, निगोदौघे, पञ्चसूक्ष्मेषु—सूक्ष्मसन्कौघभेदाः षडेव, परमेकेन्द्रियसूक्ष्मे पूर्वमुक्तत्वात् पृथ्व्यप्तेजोवायुनिगोदलक्षणपञ्चसूक्ष्मेषु, इत्येकादशमार्गणास्वायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "श्रेण्यसङ्ख्यतमे भागे यावन्त आकाशप्रदेशास्तावन्तः समयाः" भवति । अत्र भावना तु "पणकायणीगोएसु"-इतिगाथाया वृत्तौ सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्योत्कृष्टान्तरस्य यथा कृता तथैव कर्तव्या ।

'पणमण' इत्यादि, पञ्चमनःपञ्चवचनौदारिकवैक्रियसास्वादनेष्वायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरम् "अन्तर्मुहूर्त्तं" भवति । एतासु मार्गणासु सकृदेवायुषो बन्धो भवति, न त्वनेकशः । तदावेदकं तु प्रकृतिबन्धेऽन्तरप्ररूपणायामन्तरस्य प्रतिषेधो विहित इति । अतोऽत्रोत्कृष्टमन्तरमबन्धप्रयुक्तं न प्राप्यते किन्तु तत्प्रतिपक्षबन्धप्रयुक्तं लभ्यते । तद्यथा-आयुर्बन्धस्य प्रारम्भसमये आयुषो जघन्यप्रदेशबन्धो भवति, द्वितीयादिसमयेषु चाजघन्यप्रदेशबन्धो भवति, पुनरन्तिमसमये जघन्यप्रदेशबन्धो भवतीति द्विसमयन्यूनायुर्बन्धकालप्रमाणमन्तर्मुहूर्त्तमायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं घटामञ्चति । नवरमौदारिककाययोगमार्गणायामबन्धप्रयुक्तमन्तरमप्यानेतव्यम् । यतस्तस्यामाकर्षद्वयप्रयुक्तमप्यन्तरमस्ति, अनेकश आयुर्बन्धस्य सद्भावात् । न च यद्यत्राकर्षद्वयप्रयुक्तमन्तरमानेतव्यमस्ति तदा देशोनपृथ्वीभवोत्कृष्टस्थितित्रिभागप्रमाणमन्तरं लभ्यते इत्यारेकणीयम्, उक्तमन्तरं तु यदि जघन्यप्रदेशबन्धस्वामी बादरपृथ्वीकायः स्यात्तदैवोपपद्यते, परमत्र तु जघन्यप्रदेशबन्धस्वामी सूक्ष्मः पर्याप्तोऽस्ति, तस्य चायुरुत्कृष्टतोऽप्यन्तर्मुहूर्तमात्रप्रमाणमेव भवति । ततः प्रस्तुतमन्तरमपि सुतरामन्तर्मुहूर्तप्रमाणमेव भवेद् ॥३०३॥

एतर्हि यासु मार्गणास्वायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं देशोनपूर्वकोटित्रिभागस्ता आह—

मणणाणसंयमेसुं समइअछेअपरिहारदेसेसुं ।
देसूणो पुव्वाणं कोडितिभागो मुणेयव्वं ॥२०४॥

(प्रे०) 'मणणाण' इत्यादि, पदैकदेशे पदसमुदायोपचाराद् मनःपर्यवज्ञाने, संयमे, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिष्वायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूनपूर्वकोटितृतीयभागो" ज्ञातव्यम् । तथाहि-स्वायुस्तृतीयभागात्पूर्वमायुर्बन्धो न भवति । अतः स्वायुस्तृतीयभागस्याद्यान्तर्मुहूर्त्ते आयुर्बध्नाति । तथैतासु मार्गणासु घोलणयोगेन आयुर्जघन्यप्रदेशबन्धस्वामित्वाद्यान्तर्मुहूर्त्तप्रथमसमये जघन्यप्रदेशबन्धं विदधाति । ततः पुनर्द्वितीयाकर्षेण स्वायुरुपान्त्यान्तर्मुहूर्ते आयुर्बध्नाति । उपान्त्यान्तर्मुहूर्त्तचरमसमये च जघन्यप्रदेशबन्धं विदधातीति द्विसमयाधिकान्तर्मुहूर्त्तन्यूनपूर्वकोटितृतीयभागप्रमाणमन्तरं भवति ॥३०४॥

सम्प्रति विभङ्गज्ञाने सवतन्तरमायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं निर्वक्ति—

विब्भंगे देसूणा जेट्ठा कायट्ठिई मुणेयव्वं ।
देसूणा छम्मासा हवएत्ति भणन्ति अण्णे उ ॥३०५॥

(प्रे०) 'विब्भंगे' इत्यादि, विभङ्गज्ञानमार्गणायामायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूना सौवी ज्येष्ठा=गुर्वी कायस्थितिः" ज्ञातव्यम् । तद्यथा-पूर्वकोट्यायुष्कः कश्चिद् विभङ्गज्ञानी स्वायुस्तृतीयभागस्याद्यान्तर्मुहूर्ते प्रथमसमये आयुषो जघन्यप्रदेशबन्धं विदधाति । स्वजीवितकालसमाप्तौ च सप्तमनरकं याति । तत्र च स्वायुरुपान्त्यान्तर्मुहूर्तचरमसमये पुनरायुषो जघन्यप्रदेशबन्धं विदधातीति किञ्चित्कालन्यूनयथोक्तान्तरस्य सूपपत्तिः । अथोत्तरार्धेन पक्षान्तरमाह—"देसूणो" इत्यादि, अन्ये तु विभङ्गज्ञानमार्गणायामायुषो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूनषण्मासाः" भवतीति भणन्ति । अस्य बीजं तु अपर्याप्तावस्थायां विभङ्गज्ञानस्यानङ्गीकरणम् । तेषां मतेऽपर्याप्तावस्थायां विभङ्गज्ञानाभावाद् द्वितीयायुर्बन्धकाले मार्गणाया नाशेन यथोक्तमन्तरं नोपपद्यते । किन्तु यदा कश्चिन्नारको देवो वा स्वायुरन्तिमषण्मासानां प्रथमान्तर्मुहूर्ते प्रथमसमय आयुषो जघन्यं प्रदेशबन्धं विदधाति । द्वितीयाकर्षेण पुनरुपान्त्यान्तर्मुहूर्ते आयुर्बध्नाति, तथा उपान्त्यान्तर्मुहूर्तचरमसमये जघन्यप्रदेशबन्धं विदधाति तदाऽऽयुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "द्विसमयाधिकान्तर्मुहूर्तन्यूनषण्मासाः" घटां याति ॥३०५॥

सम्प्रति शेषासु मार्गणास्वायुर्जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं निरूपयन्नाह—

देसूणा उक्कोसा सगसगकायट्ठिई मुणेयव्वं ।
मग्गणपणसट्ठीए सेसाए अंतरं जेट्ठं ॥३०६॥

(प्रे०) "देसूणा" इत्यादि, शेषायां मार्गणापञ्चषष्टौ, शेषासु पञ्चषष्टिमार्गणास्वित्यर्थः, आयुषो जघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूना ज्येष्ठा स्वस्वकायस्थितिः" ज्ञातव्यम् । अत्रोपपत्तिस्त्वेवम्-तत्रादौ पर्याप्तमार्गणासु स्त्री-पुरुषचक्षुर्दर्शनमार्गणासु च प्रदर्श्यते-तथाहि कश्चिज्जीवः स्वकायस्थितेः स्वप्रायोग्यजघन्यायुष्के प्रथमभवे स्वायुस्त्रिभागाद्यान्तर्मुहूर्तप्रथमसमये जघन्यं प्रदेशबन्धं विदधाति । ततः कायस्थितेरुपान्त्यान्तर्मुहूर्तसत्कचरमसमये पुनर्जघन्यं विदधातीति स्वप्रायोग्यजघन्यायुषो द्विस्त्रिभागेन जघन्याबाधाकालेन जघन्यप्रदेशबन्धप्रयुक्तद्विसमयेन च न्यूना स्वोत्कृष्टकायस्थितिः प्रकृतमन्तरं भवति । अथापर्याप्तमार्गणासु, ओघमार्गणासु, औदारिकमिश्रे, संज्ञिनि, आहारके चैवं परिभावनीयम्-कश्चिज्जीवः स्वकायस्थितेः क्षुल्लकभवप्रमाणायुष्के प्रथमभवे स्वायुस्त्रिभागाद्यान्तर्मुहूर्ते प्रथमसमये जघन्यप्रदेशबन्धं विदधाति । ततः स्वकायस्थितेरन्तिमभवे क्षुल्लकभवप्रमाणायुष्के स्वायुस्त्रिभागाद्यान्तर्मुहूर्तप्रथमसमये पुनर्जघन्यप्रदेशबन्धं विदधातीति देशेन=

एकसमयाधिकक्षुल्लकभवप्रमाणेन न्यूना स्वोत्कृष्टकायस्थितिः प्रस्तुतमन्तरं भवति । मतिज्ञानादि-मार्गणासु तु सूक्ष्मरीत्या स्वबुद्धिरेव व्यापारणीया । शेषमार्गणाश्चेमाः—तिर्यक्पञ्चेन्द्रियापर्याप्तः, पर्याप्तनरापर्याप्तनरमानुष्यः, एकेन्द्रियौघैकेन्द्रियसूक्ष्मौ विना सकलेन्द्रियभेदाः, पञ्चकायौघनिगोद-पञ्चकायसूक्ष्मैर्विना कृत्स्नकायभेदाः, औदारिकमिश्रकाययोगः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिज्ञानानि, चक्षुरवधिदर्शने, सम्यक्त्वौघक्षायिकवेदकानि, संज्ञी, आहारकश्च ॥३०६॥

अथायुषोऽजघन्यप्रदेशबन्धस्य जघन्यमुत्कृष्टं चान्तरं वक्तुं प्रक्रमते । तत्रादौ जघन्यमन्तरं व्याचिख्यासुराह—

णंतरमलहुपएसस्साउस्साहारदुगकसायेसुं ।
जहि घोलणयोगी तह समयो लहुमण्णहिं मुहुत्तंतो ॥३०७॥(गीतिः)

(प्रे०) "आहारदुगे" इत्यादि, आहारकाहारकमिश्ररूपाहारकद्विके चतुष्कषायेषु चायुषोऽजघन्यप्रदेशबन्धस्य जघन्यत उत्कृष्टतश्चान्तरं नास्ति । ''णंतरम्'' इत्यत्र "लुक्' (सिद्धहेम० ८।१।१०) इति सूत्रेण नकारस्थस्याकारस्य लुक् । नन्वत्रान्तराभावे किं बीजम् ? इति चेदुच्यते, अत्रायुर्बन्धप्रथमसमये एव जघन्यप्रदेशबन्धो भवतीति विपरीतबन्धप्रयुक्तमन्तरं न प्राप्यते, नाप्यबन्धप्रयुक्तमन्तरं प्राप्यते, द्विरायुर्बन्धस्याभावात् । तत्र हेतुस्तु मार्गणाकालादाकर्षद्वयान्तरस्य जघन्यस्यापि कालस्य बृहत्तरतैव ।

'जहि' इत्यादि, यस्यां मार्गणायामायुर्जघन्यप्रदेशबन्धस्वामी घोलणयोगी तस्यामायुरजघन्यप्रदेशबन्धस्य जघन्यमन्तरं "समयो" भवेत् । कथम् ? इति चेदुच्यते, अत्र तद्विपरीतबन्धप्रयुक्तमन्तरमानेतव्यम् । तद्विपरीतजघन्यप्रदेशबन्धश्च जघन्यत एकसमयमेव भवति । जघन्यप्रदेशबन्धप्रायोग्यजघन्ययोगस्य जघन्यत एकसमयमेवावस्थानात् । यासु मार्गणास्वायुर्जघन्यप्रदेशबन्धस्वामी घोलणयोगी ता इमाः—[38]अशेषनरकामर्त्यभेदाः, [4]पर्याप्ततिर्यक्पञ्चेन्द्रियतिरश्चीपर्याप्तमनुष्यमानुष्यः, इन्द्रियमार्गणायाः [6]षट्पर्याप्तभेदाः, कायमार्गणाया[12] द्वादशपर्याप्तभेदाः, [12]पञ्चमनःपञ्चवचनौदारिकवैक्रियकाययोगाः, [2]स्त्रीपुरुषवेदौ, [5]मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानानि, [5]संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरत्यः [2]चक्षुरवधिदर्शने, [3]प्रशस्तलेश्यात्रिकं, [4]सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि चेति त्रिनवतिः । 'अण्णहिं' इत्यादि, अन्यत्र भणितव्यतिरिक्तासु चतुःषष्टिमार्गणास्वायुषोऽजघन्यप्रदेशबन्धस्य जघन्यमन्तरम् 'अन्तर्मुहूर्त' भवति । अत्रोपपत्तिरेवम्-शेषासु मार्गणासु प्रस्तुतमन्तरमबन्धप्रयुक्तमानेतव्यम् । अतस्तत्तन्मार्गणास्था जीवा यदा जघन्यान्तरेणाकर्षद्वयेनायुरजघन्यप्रदेशबन्धं विदधति तदा यथोक्तमन्तरमुपपद्यते । शेषमार्गणाश्चेमाः—[3]तिर्यगोघतिर्यक्पञ्चेन्द्रियौघापर्याप्ततिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघाऽपर्याप्तमनुष्यौ, पर्याप्तैर्विना [13]त्रयोदशेन्द्रियभेदाः, द्वादशपर्याप्तैर्विना [30]त्रिंशत्कायभेदाः, [2]काय-

योगसामान्यौदारिकमिश्रकायौ, ¹नपुंसकवेदः, ²मतिश्रुताज्ञाने, ¹असंयमः, अचक्षुर्दर्शनम्, ³अप्रशस्तलेश्यात्रिकं, ²भव्याभव्यौ, ¹मिथ्यात्वम्, असंज्ञी, ¹संज्ञी, ²आहारकश्च ॥३०७॥

साम्प्रतमायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं निरूपयितुं प्रचिकं सुरादौ तावद्यासु मार्गणासु "देशन्यूनषण्मासाः" अन्तरं ताः प्रतिपादयति—

देसूणा छम्मासा उक्कोसं अंतरं मुणेयव्वं ।
सव्वणिरयदेवेसुं पसत्थअपसत्थलेसासुं ॥३०८॥

(प्रे०) "**देसूणा**" इत्यादि, आयुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूनाः षण्मासाः" ज्ञातव्यम् । कासु मार्गणासु ? इत्याह—'**सव्वणिरय**' इत्यादि, सर्वनरकभेदेषु समामर्त्यभेदेषु, प्रशस्ताप्रशस्तलेश्याषट्के चेति चतुश्चत्वारिंशन्मार्गणासु । अत्र भावना त्वायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरस्य "देसूणा छम्मासा" इति गाथाया वृत्तौ यथा कृता तथा कर्तव्या । नवरं तत्र यथोक्तमन्तरं तत्प्रतिपक्षीभूतोत्कृष्टप्रदेशबन्धप्रयुक्तचतुःसमयाधिकाकर्षद्वयोत्कृष्टान्तरकालप्रमाणं भवतीति निगदितम् । परमत्र तु तत्प्रतिपक्षीभूतजघन्यप्रदेशबन्धप्रयुक्ताष्टसमयाधिकाकर्षद्वयोत्कृष्टान्तरकालप्रमाणं भवतीति वक्तव्यम् । यतो जघन्ययोगस्थानानामुत्कृष्टतः चतुःसमयान् यावदवस्थानाद् जघन्यप्रदेशबन्धोऽप्युत्कृष्टतः चतुःसमयान् यावद् भवति । नवरं कृष्णनीलकापोतलेश्यासु प्रतिपक्षबन्धप्रयुक्ताष्टसमया अधिका न वक्तव्याः । नारकाणां कृष्णादिलेश्याप्रायोग्यजघन्ययोगासम्भवाद् ॥३०८॥

सम्प्रति यासु मार्गणास्वायुरजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "साधिका ज्येष्ठभवस्थितिः" ता निरूपयति—

सव्वेसुं तिरियमणुसएगिंदियविगलपंचकायेसुं ।
असमत्तपणिंदितसेसु साहिया भवठिई जेट्ठा ॥३०९॥

(प्रे०) "**सव्वेसु**" इत्यादि, सर्वतिर्यग्भेदेषु, सर्वमनुष्यभेदेषु, सर्वैकेन्द्रियभेदेषु, सर्वविकलेन्द्रियभेदेषु, सर्वपृथिव्यप्तेजोवायुवनस्पतिकायरूपपञ्चकायभेदेषु, अपर्याप्तपञ्चेन्द्रिये, अपर्याप्तत्रसे चेति षडुत्तरषष्टिमार्गणास्वायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "साधिका ज्येष्ठा स्वभवस्थितिः" भवति । अत्र भावना तु "सव्वेसुं तिरिय" इति गाथाया वृत्तावायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरस्य यथा कृता तथा कर्तव्या । भवस्थितिरपि तत्रोक्तास्तीति पुनरुक्तिभयान्नात्रोल्लिख्यते, जिज्ञासुना तत्रतोऽवसेया । नवरं यासु मार्गणास्वायुर्जघन्यप्रदेशबन्धस्वामी घोलणयोगी तासु जघन्यप्रदेशबन्धप्रयुक्ताष्टसमया अधिका वक्तव्याः, ता मार्गणाश्चेमाः—पर्याप्तमनुष्यमानुष्यौ, पर्याप्तसूक्ष्मबादरैकेन्द्रियौ पर्याप्तद्वित्रिचतुरिन्द्रियाः, एकादशकायपर्याप्तभेदाश्चेत्यष्टादशमार्गणाः । अत्रैवमवधेयम्-पर्याप्ततिर्यक्पञ्चेन्द्रियतिरश्च्योर्जघन्यप्रदेशबन्धप्रयुक्ताष्टसमया अधिका न प्राप्य-

न्ते। यतोऽनयोर्जघन्यप्रदेशबन्धस्वामी न केवलं घोलणयोगी, किन्त्वसंज्ञी घोलणयोगी भवति । अत्र तु यं जीवमाश्रित्योत्कृष्टमन्तरं समागच्छति स जीवः संज्ञी विद्यते । तस्य च मार्गणाप्रायोग्य-जघन्ययोगाभावेन जघन्यप्रदेशबन्धाभावः । अतो विपरीतजघन्यप्रदेशबन्धप्रयुक्ता अष्टसमया अधिका न प्राप्यन्ते ॥३०९॥

एतर्हि यासु मार्गणास्वायुरजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "चतुःसमयाः" ताः प्ररूपयति—

**पणमणवयजोगेसु ं वेउव्वियकायजोगम्मि ।**
**सासायणम्मि समया चत्तारो अंतरं णेयं ॥३१०॥** (उपगीतिः)

(प्रे०) "पणमण" इत्यादि, पञ्चमनःपञ्चवचनवैक्रियकायरूपैकादशयोगेषु, सास्वादने चेति द्वादशमार्गणास्वायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "चतुःसमयाः" विज्ञेयम् । अत्रापि भावना "विण्णेयं दो समया" इति गाथाया वृत्तावायुरनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरस्य यथा कृता तथा कर्तव्या । नवरं तत्र द्वौ समयावन्तरमुक्तमत्र तु जघन्यप्रदेशबन्ध उत्कृष्टतः चतुःसमयान् यावद् भवत्यतः चतुःसमया अन्तरं वक्तव्यम् ॥३१०॥

सम्प्रति काययोगौघौदारिककाययोगयोरायुषोऽजघन्यप्रदेशबन्धोत्कृष्टमन्तरं निरूपयति—

**देसूणतिभागाहियजेट्ठपुहविभवठिई भवे काये ।**
**उरले भवे तिभागो देसूणो जेट्ठभूभवठिईए ॥३११॥** (गीतिः)

(प्रे०) "देसूण" इत्यादि, काययोगौघमार्गणायामायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशोनत्रिभागेनाधिका ज्येष्ठा पृथिवीभवस्थितिः" भवति । अत्र भावना तु "देसूणतिभागा" इति गाथाया वृत्तावायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरस्य यथा कृता तथा कर्तव्या । 'उरले' इत्यादि, औदारिककाययोगमार्गणायामायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरम् "उत्कृष्टायाः पृथिवी-कायस्थितेर्देशन्यूनः तृतीयभागो" भवेत् । अत्रापि भावना 'देसूणतिभागा' इत्यत्र वृत्तावायुषो-ऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरस्य यथा कृता तथा कर्तव्या । अपि च तत्र यथोत्कृष्टबन्धप्रयुक्त-चतुःसमया अधिका न प्राप्यन्ते, तथाऽत्रापि जघन्यप्रदेशबन्धप्रयुक्ताष्टसमया अधिका न प्राप्यन्ते ॥३११॥ साम्प्रतमौदारिकमिश्रे स्त्रीवेदे चायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं भावयति—

**ओरालमीसजोगे भिन्नमुहुत्तं हवेज्ज इत्थीए ।**
**पलिओवमा उ अहिया पंचावण्णा मुणेयव्वं ॥३१२॥**

(प्रे०) "ओरालमीसजोगे" इत्यादि, औदारिकमिश्रमार्गणायामायुषोऽजघन्यप्रदेश-बन्धस्योत्कृष्टमन्तरम् "अन्तर्मुहूर्तं" भवति । अत्र भावना तु "ओरालमीसजोगे" इति गाथाया वृत्तावायुषोऽनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरस्य यथा कृता तथैवाविशेषेण कर्तव्या । "इत्थीए"

इत्यादि; स्त्रीमार्गणामायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "साधिकाः पञ्चपञ्चाशत्पल्योपमा" भवति । अत्रापि 'ओरालमीसजोगे' इत्यत्र यथा भावितं तथा भावनीयम् । नवरं तत्रोत्कृष्टबन्धप्रयुक्तचतुःसमया अधिकाः प्ररूपिताः; अत्र तु जघन्यबन्धप्रयुक्तमाधिक्यं न ज्ञेयम् । यतः स्त्रीवेदेऽसंज्ञी जघन्यप्रदेशबन्धस्वामी भवति । अत्र तु यं जीवमाश्रित्योत्कृष्टमन्तरं प्राप्यते स तु संज्ञी । अतो जघन्यप्रदेशबन्धप्रयुक्तमन्तरं न प्राप्यते ॥३१२॥

इदानीं यासु मार्गणास्वायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूनः पूर्वकोटित्रिभागः" ताः प्रतिपादयति—

मणणाणसंयमेसुं समइअछेअपरिहारदेसेसु ।
देसूणो पुव्वाणं कोडितिभागो मुणेयव्वं ॥३१३॥

(प्रे०) "मणणाण" इत्यादि, मनःपर्यवज्ञानसंयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिष्वायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "पूर्वकोटितृतीयभागो" ज्ञातव्यम् । अत्र भावना तु "मणणाणसंयमेसु" इत्यत्र वृत्तावायुरनुत्कृष्टप्रदेशबन्धस्योत्कृष्टान्तरस्य यथा कृता तथा कर्तव्या । नवरं तत्रोत्कृष्टबन्धप्रयुक्तचतुःसमया अधिका निरूपिताः, अत्र तु जघन्यबन्धप्रयुक्ताष्टसमया अधिका वक्तव्याः ॥३१३॥

इदानीं मतान्तरप्रदर्शनपूर्वकं विभङ्गज्ञानमार्गणायामायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं प्रतिपादयितुकाम आह—

विब्भंगे देसूणा जेट्ठा कायट्ठिई मुणेयव्वं ।
देसूणा छम्मासा हवएत्ति भणन्ति अण्णे उ ॥३१४॥

(प्रे०) "विब्भंगे" इत्यादि, विभङ्गज्ञानमार्गणायामायुरजघन्यप्रदेशबन्धस्योत्कृष्टमन्तरं "देशन्यूना स्वकायस्थितिः" ज्ञातव्यम् । अत्रेयं भावना—पूर्वकोट्यायुष्कः कश्चिद् विभङ्गज्ञानी स्वायुस्तृतीयभागाद्यन्तर्मुहूर्तेऽजघन्यप्रदेशबन्धं कुर्वन्नायुर्बध्नाति । अन्तिमचतुःसमयेषु जघन्यप्रदेशबन्धं विदधाति । ततः समाप्ते जीवितकाले सप्तमं नरकं याति । तत्र स्वायुरुपान्त्यान्तर्मुहूर्ते आयुर्बध्नाति । तत्र प्रथमेषु चतुःसमयेषु जघन्यप्रदेशबन्धं विधाय पञ्चमादिसमयेष्वजघन्यप्रदेशबन्धं विदधातीति विभङ्गज्ञाने देशोना स्वोत्कृष्टकायस्थितिरायुषोऽजघन्यप्रदेशबन्धस्यान्तरं भवति ।

अथ मतान्तरमाह—'देसूणा' इत्यादि, अन्ये तु विभङ्गज्ञानमार्गणायामायुषोऽजघन्यप्रदेशबन्धस्योत्कृष्टान्तरं "देशन्यूनषण्मासाः" भवतीति भणन्ति । इयमत्र भावना—अन्येऽपर्याप्तावस्थायां विभङ्गज्ञानाभावं मन्यन्ते । अतः पूर्वोक्तरीत्या मनुष्यं तिर्यञ्चं वाश्रित्य प्रकृतान्तरं नोपपद्यते, अपि तु देवं नारकं वाश्रित्य । तद्यथा—कश्चिन्नारको देवो वा स्वायुरन्तिमषण्मासाद्यान्तर्मुहूर्ते आयुर्बध्नाति । तत्रान्तिमेषु चतुःसमयेषु जघन्यप्रदेशबन्धं विदधाति । ततो द्वितीयाकर्षेण पुनः स्वायुरुपान्त्या-

किञ्च द्वित्रिचतुरादयोऽपि प्राप्यन्ते इति समापतितम् । ततो यदोत्कृष्टप्रदेशबन्धकानां जीवाना-मत्यन्ताभावोऽर्थाद् यदोत्कृष्टप्रदेशबन्धका जीवाः सर्वथा न प्राप्यन्ते तदा 'सर्वाऽबन्धकाः' इति चतुर्थो भङ्गः सम्भवति । तथा कदाचिदेकस्योत्कृष्टप्रदेशबन्धकस्य प्राप्यमाणत्वाद् यदैको जीव उत्कृष्टप्रदेशबन्धं विदधाति तदा सुतरामनेके जीवा अबन्धकाः सन्ति, यतो यदा येऽनुत्कृष्टप्रदेश-बन्धकास्ते एव जीवा उत्कृष्टप्रदेशाबन्धका भवन्ति । अष्टकर्मणामन्यतमस्य कर्मणोऽनुत्कृष्टप्रदेशस्य बन्धकाश्च प्रतिसमयमनन्ता जीवाः प्राप्यन्ते । इत्येवं 'एकबन्धक एवानेकाबन्धकाः' इति षष्ठो भङ्गो-ऽपि सूपपादो भवति । एवं कदाचिदनेकेषामप्युत्कृष्टप्रदेशबन्धकानां प्राप्यमाणत्वाद् यदाऽनेके जीवा उत्कृष्टप्रदेशबन्धकास्तदा षष्ठभङ्गोपपादनोक्तहेतुना सुतरामनेके जीवा उत्कृष्टप्रदेशाबन्धकाः सन्ति । इति 'अनेकबन्धकानेकाबन्धक'स्वरूपोऽष्टमभङ्गोऽपि घटामटति । नन्वत्र प्रथमादिभङ्गाः कथं न सम्भवन्ति ? इति चेद् , उच्यते, प्रतिसमयमष्टकर्मणामन्यतमस्य कर्मणोऽनुत्कृष्टप्रदेशस्य बन्धका जीवा अनन्ताः प्राप्यन्ते; ततः प्रथमादिभङ्गानां लक्षणं न घटतेऽतः प्रथमादिभङ्गा न सम्भवन्ति ।

अथोत्तरार्धं विव्रियते—'अणुक्कपएसस्स' इत्यादि, अष्टकर्मणामित्यत्रापि सम्बध्यते । अष्ट-कर्मणामनुत्कृष्टप्रदेशस्य 'तृतीयसप्तमाष्टमविकल्पाः सन्ति । 'सर्वबन्धकाः' इति तृतीयः, 'अनेकबन्धका एकाबन्धक एव' इति सप्तमः, 'अनेकबन्धकानेकाबन्धकाः' इत्यष्टम इति त्रयो भङ्गाः सम्भवन्ती-त्यर्थः । अत्रायं भङ्गभावनाभङ्गः—उत्कृष्टप्रदेशभङ्गोपपादने निगदितसिद्धान्तेनोत्कृष्टप्रदेशस्य सर्वे जीवा अबन्धका बहुकालं प्राप्यन्ते । तथाऽत्रोत्कृष्टप्रदेशस्याबन्धका जीवास्त एव गृह्यन्ते येऽनुत्कृष्ट-प्रदेशस्य बन्धकाः स्युः । ततश्चार्थात्समापतितं यत् सर्वे जीवा यावत्कालमुत्कृष्टप्रदेशस्याबन्धकास्ताव-त्कालमनुत्कृष्टप्रदेशस्य बन्धकाः । अर्थाद् यदोत्कृष्टप्रदेशस्य चतुर्थभङ्गः सम्भवति तदाऽनुत्कृष्टस्य तृतीयो भङ्गो निराबाधं सम्भवति । उत्कृष्टप्रदेशस्य चतुर्थभङ्गस्तूपपादित एव, ततोऽष्टकर्मणामनु-त्कृष्टप्रदेशस्य 'सर्वबन्धकाः' इति तृतीयो भङ्गः सुतरां घटते । तथा यदाऽनेकेषु य एक एव जीव उत्कृष्टप्रदेशं बध्नाति तदानीमेव स एव जीवोऽनुत्कृष्टस्याबन्धक इति एकोऽबन्धकः प्राप्यते । तदन्ये चानुत्कृष्टप्रदेशबन्धका इति 'अनेकबन्धकाः' अपि प्राप्यन्ते । 'अनेकबन्धका एकाबन्धक एव' इति सप्तमो भङ्गोऽपि संघटते । अथ यदाऽष्टकर्मणामुत्कृष्टप्रदेशबन्धका अनेके तदाऽनुत्कृष्टप्रदेश-बन्धका अप्यनेके भवन्ति, अष्टकर्मणामन्यतमस्य कर्मणोऽनुत्कृष्टप्रदेशबन्धकानामनन्तानां जीवानां प्रतिसमयं प्राप्यमाणत्वात् । एवं यदोत्कृष्टप्रदेशाबन्धका अनेके भवन्ति तदाऽनुत्कृष्टप्रदेशबन्धका अप्यनेके भवन्ति, अनुत्कृष्टप्रदेशबन्धकानामेवोत्कृष्टप्रदेशाबन्धकत्वेन ग्रहीतुं शक्यत्वात् । ततश्च यदोत्कृष्टप्रदेशस्याष्टमो भङ्गः सम्भवति, तदाऽनुत्कृष्टस्यापि स एव भङ्गः सम्भवति, उभयोरपि भङ्गयोः परस्परं सापेक्षत्वात् । उत्कृष्टप्रदेशस्याष्टमो भङ्गस्तु सूपपादित एव ततः 'अनेकबन्धकानेका-बन्धकाः' इत्यष्टमभङ्गोऽपि सूपपादो भवति । प्रथमादिभङ्गासम्भावना भावना तूत्कृष्टप्रदेशे यथा कृता तथा कर्तव्या ॥३२१॥

अथ सप्तकर्मणामुत्कृष्टानुत्कृष्टप्रदेशभङ्गविचयं मार्गणासु चिचिन्तयिषुरादौ तावद्यासु मार्गणास्वष्टावपि भङ्गाः सम्भवन्ति ता नामग्राहं प्राह—

असमत्तणरे विक्रियमीसे आहारदुगअवेएसुं ।
तह सुहुमुवसमसासणमीसेसुं अत्थि अडभंगा ॥३३२॥

(प्रे०) 'असमत्त' इत्यादि, अपर्याप्तमनुष्ये, वैक्रियमिश्रकाययोगे, आहारकाहारकमिश्रलक्षणे आहारकद्विके, अवेदे, 'तह' इत्यादि, तथा सूक्ष्मसम्पराये, उपशमे, सास्वादने मिश्रे चेति नवमार्गणासु आयुर्वर्जानां सप्तकर्मणामुत्कृष्टस्येतरस्यानुत्कृष्टस्य च प्रदेशस्य 'अष्टौ भङ्गाः' भवन्तीत्यर्थः। एतासां मार्गणानां सान्तरत्वादष्टावपि भङ्गाः सम्भवन्ति। सान्तरासु हि मार्गणासु कदाचिदेक एव जीवः स्यात्, स च कदाचिद् विवक्षितप्रदेशस्य बन्धकोऽपि स्यात्, कदाचिच्चाबन्धकोऽपि स्यात्, कदाचिद् द्वावेव स्याताम्, तौ कदाचिद् विवक्षितप्रदेशस्य बन्धकौ स्यातां, कदाचिच्चाबन्धकौ, एवं कदाचित् तयोरेको विवक्षितप्रदेशस्य बन्धकः स्यात्, एकश्चाबन्धकः स्यात्। अत एतासु मार्गणासु यदैक एव जीवः स्यात्, स च सप्तकर्मणामुत्कृष्टप्रदेशस्य बन्धकः स्यात्, तदा सप्तकर्मणामुत्कृष्टप्रदेशस्य प्रथमो भङ्गः, यदा चाबन्धकः तदा द्वितीयो भङ्गः। यदा चानेके जीवाः स्युः ते च सर्वे सप्तकर्मणामुत्कृष्टप्रदेशस्य बन्धकाः स्युः तदा तृतीयो भङ्गः, यदा च ते सर्वेऽबन्धकाः स्युः तदा चतुर्थो भङ्गः। यदा द्वावेव जीवौ स्याताम्, तयोरेको बन्धक एकश्चाबन्धकः स्यात् तदा पञ्चमो भङ्गः। यदा चानेके जीवाः स्युः तेष्वेक एव बन्धकः स्यात् तदा षष्ठो भङ्गः, यदा चैकोऽबन्धकः स्यात् तदा सप्तमो भङ्गः, यदा च केचिद् बन्धकाः केचिच्चाबन्धकाः स्युस्तदाऽष्टमो भङ्गः। एवमेवानुत्कृष्टप्रदेशस्याष्टौ भङ्गा अपि परिभावनीयाः। यतो यदोत्कृष्टानुत्कृष्टप्रदेशयोरन्यतरस्याष्टौ भङ्गाः प्राप्यन्ते तदा द्वितीयस्यापि अष्टौ प्राप्यन्ते।

तद्यथा—यदोत्कृष्टप्रदेशस्य प्रथमो भङ्गस्तदाऽनुत्कृष्टप्रदेशस्य द्वितीयो भङ्गः सम्भवति। यतोऽनुत्कृष्टप्रदेशबन्धकानामत्यन्ताभावे सति यदैक एव जीव उत्कृष्टप्रदेशबन्धकस्तदोत्कृष्टप्रदेशस्य प्रथमो भङ्गः सम्भवति। यश्च तदानीमुत्कृष्टप्रदेशबन्धकः सोऽनुत्कृष्टप्रदेशाबन्धको भवति, एकस्यैव जीवस्य विरुद्धप्रदेशबन्धयोरेककालावच्छेदेनाभवनात्। बन्धाभावे च नितरां बन्धकस्याभावः। अतः सिद्धं यदोत्कृष्टप्रदेशस्य प्रथमो भङ्गस्तदाऽनुत्कृष्टप्रदेशस्य द्वितीयो भङ्ग इति। एवं यदाऽनुत्कृष्टप्रदेशस्य प्रथमो भङ्गस्तदोत्कृष्टप्रदेशस्य द्वितीयो भङ्गः सम्भवति। यत उत्कृष्टप्रदेशबन्धकानामत्यान्ताभावे सति यदैक एव जीवोऽनुत्कृष्टप्रदेशबन्धकस्तदा प्रथमो भङ्गः सम्भवति। यश्च तदानीमनुत्कृष्टप्रदेशबन्धकः सोऽनन्तरोक्तहेतुनोत्कृष्टप्रदेशाबन्धको भवतीति सिद्धं यदाऽनुत्कृष्टप्रदेशस्य प्रथमो भङ्गस्तदोत्कृष्टप्रदेशस्य द्वितीयो भङ्गः। एवं यदोत्कृष्टप्रदेशस्य तृतीयो भङ्गस्तदाऽनुत्कृष्टप्रदेशस्य चतुर्थो भङ्गः सम्भवति। यतोऽनुत्कृष्टप्रदेशबन्धकानामत्यन्ताभावे सति यदोत्कृष्टप्रदेशबन्धका जीवा अनेके

भवन्ति तदोत्कृष्टप्रदेशस्य तृतीयो भङ्गः सम्भवति । ये च तदानीमुत्कृष्टप्रदेशबन्धकास्तेऽनुत्कृष्ट-प्रदेशाबन्धका भवन्तीति सिद्धं यदोत्कृष्टप्रदेशस्य तृतीयो भङ्गस्तदाऽनुत्कृष्टप्रदेशस्य चतुर्थो भङ्गः । एवं यदाऽनुत्कृष्टप्रदेशस्य तृतीयो भङ्गस्तदोत्कृष्टप्रदेशस्य चतुर्थो भङ्गः सम्भवति । तद्यथा-उत्कृष्ट-प्रदेशबन्धकानामत्यन्ताभावे सति यदाऽनुत्कृष्टप्रदेशबन्धका जीवा अनेके भवन्ति तदाऽनुत्कृष्टप्रदेश-स्य तृतीयो भङ्गः सम्भवति । ये च तदानीमनुत्कृष्टप्रदेशबन्धकास्ते उत्कृष्टप्रदेशाबन्धका भवन्तीति सिद्धं यदाऽनुत्कृष्टप्रदेशस्य तृतीयो भङ्गस्तदोत्कृष्टप्रदेशस्य चतुर्थो भङ्गः । अथ यदोत्कृष्टप्रदेशस्य पञ्चमो भङ्गस्तदाऽनुत्कृष्टप्रदेशस्यापि पञ्चमो भङ्गः सम्भवति। तद्यथा–यदा विवक्षितकर्मणो बन्धक-त्वेन द्वावेव जीवौ स्याताम् । तयोरन्यतर उत्कृष्टप्रदेशस्य बन्धकः स्यादन्यतरश्चाबन्धकस्तदोत्कृष्ट-प्रदेशस्य पञ्चमो भङ्गः सम्भवति । तत्र यो जीव उत्कृष्टप्रदेशबन्धकः सोऽनुत्कृष्टप्रदेशाबन्धकः, यश्चोत्कृष्टप्रदेशाबन्धकः सोऽनुत्कृष्टप्रदेशबन्धकः, अनुत्कृष्टप्रदेशबन्धकस्यैवोत्कृष्टप्रदेशाबन्धक-त्वेन स्वीकृतत्वात्, इति सिद्धं यदोत्कृष्टप्रदेशस्य पञ्चमो भङ्गस्तदाऽनुत्कृष्टप्रदेशस्यापि पञ्चमो भङ्गः सम्भवति । इत्येवमनयोः पञ्चमभङ्गस्य समव्याप्तत्वं सिद्धं भवति । एवं यदोत्कृष्टप्रदेशस्य षष्ठो भङ्गस्तदाऽनुत्कृष्टप्रदेशस्य सप्तमो भङ्गः सम्भवति । एवं यदाऽनुत्कृष्टप्रदेशस्य षष्ठो भङ्गस्त-दोत्कृष्टप्रदेशस्य सप्तमो भङ्गः सम्भवति । एवमष्टमभङ्गस्य समव्याप्तत्वादेकस्याष्टमो भङ्गस्तदा तत्प्रतिपक्षस्याप्यष्टमः सम्भवति । सुगमत्वादेतत् स्वयमेव परिभावनीयम् ॥३३२॥

अथ शेषसर्वमार्गणासु प्रस्तुतभङ्गविचयं दिदर्शयिषुर्गाथाद्वयमाह—

**जेट्ठियरपएसाणं आउगवज्जाण अट्ठमो भंगो ।**
**सव्वेसुं एगिंदियणिगोअभेएसु सेससुहमेसुं ॥३३३॥ (गीतिः)**
**बायरअपज्जपुहवाइचउगपत्तेअवणवणोहेसुं ।**
**सयमुज्झो परिहारे छेए ओघव्व सेसासुं ॥३३४॥**

(प्रे०) **'जेट्ठियर'** इत्यादि, आयुर्वर्जानां सप्तकर्मणामुत्कृष्टप्रदेशस्यानुत्कृष्टप्रदेशस्य च 'अनेके बन्धका अनेकेऽबन्धकाः' इत्येवंलक्षणोऽष्टमो भङ्गः सम्भवति । कासु मार्गणासु ? इत्याह– **'सव्वेसु'** इत्यादि, सर्वेषु–सप्तसु एकेन्द्रियभेदेषु, सर्वेषु–सप्तसु निगोदभेदेषु, शेषसूक्ष्मेषु, शेषाः एकेन्द्रियनिगोदयोः सर्वभेदेषूक्तत्वात्तत्सूक्ष्मभेदव्यतिरिक्ता ये पृथ्व्यप्तेजोवायुकायानां सूक्ष्मौघ-भेदाः, सूक्ष्मापर्याप्तभेदाः, सूक्ष्मपर्याप्तभेदाश्च तेषु. **'बायर'** इत्यादि, बादरा अपर्याप्ता ये पृथ्व्यादयः पृथिव्यप्तेजोवायवस्तेषां चतुष्के पृथ्व्यादीनां चतुर्णां बादरापर्याप्तभेदेषु इत्यर्थः, अपर्याप्तप्रत्येकवनस्पति-काये वनस्पतिकायौघे चेति द्वात्रिंशन्मार्गणासु । अत्रायं हेतुः–एतासु मार्गणासु जघन्यतोऽपि कासु-चिदसंख्यलोकप्रमाणाः कासुचिदनन्ता उत्कृष्टप्रदेशबन्धयोग्या जीवाः सर्वदैव प्राप्यन्ते । यासु च मार्गणासु तावत्प्रमाणा जीवाः सर्वदैव प्राप्यन्ते तासु मार्गणासूत्कृष्टप्रदेशबन्धका जीवा जघन्यतो-

ऽप्यनेके एव प्राप्यन्त इति सामान्यवक्तव्यतायां युक्त्या प्रतिपादितम् । अत एतासु मार्गणास्वनेके जीवाः प्रतिसमयं सप्तकर्मणामुत्कृष्टप्रदेशबन्धकत्वेन प्राप्यन्ते । यदोत्कृष्टप्रदेशबन्धका जीवा अनेके भवन्ति तदा सुतरामनेके जीवा अनुत्कृष्टप्रदेशबन्धकाः सन्तीत्यपि सामान्यवक्तव्यताया-मुपपादितम् । अत उत्कृष्टप्रदेशस्यानेकेऽबन्धका अपि प्राप्यन्ते । अत एतासु मार्गणासु सप्त-कर्मणामुत्कृष्टप्रदेशस्याष्टम एव भङ्गः सम्भवति, न तु प्रथमादिः, एकबन्धकादीनामप्राप्यमाण-त्वात् । यासु मार्गणासूत्कृष्टप्रदेशस्याष्टम एव भङ्गः सम्भवति तास्वनुत्कृष्टस्याप्यष्टम एव भङ्गः सम्भवति, उभयोरष्टमभङ्गस्य समव्याप्तत्वात् । अत उत्कृष्टस्य प्रदेशस्याष्टमभङ्गे उपपादितेऽनुत्कृष्ट-प्रदेशस्याप्युपपादित एव । '**सयमुज्झो परिहारे छेए**' इति, परिहारविशुद्धिकसंयममार्गणायां छेदोप-स्थापनसंयममार्गणायां चाऽऽयुर्वर्जसप्तानामुत्कृष्टानुत्कृष्टद्विविधप्रदेशस्य बन्धकाबन्धकनिष्ठभङ्ग-विचयः स्वयमेवोह्यः,मार्गणाद्वयस्य सान्तरत्वेऽपि जघन्यपदं सम्भाव्यमानबन्धकपरिमाणविषये भग-वत्यादिभिन्नभिन्नग्रन्थेषु नानाविधपाठलाभात्तत्तत्पाठानुरोधेन यथासम्भवं भङ्गाः स्वयमेवाऽभ्यूह्याः, अत्र च बहुवक्तव्यम् , परं **बन्धविधानमूलप्रकृतिस्थितिबन्धसन्दर्भे**द्वितीयाधिकारभङ्गविचय-द्वारे 'असमत्तणरे' इत्यादि (२८२–२८३–२८४) गाथात्रयवृत्तौ **श्रीजगच्चन्द्रमुनिपुङ्गवेन** विस्त-रेण प्रपञ्चितत्वान्नात्र प्रपञ्च्यते, इत्यतो विस्तरतो जिज्ञासुना तत्रत्या प्रेमप्रभावृत्तिरवलोकनीयेति ।

'**ओघव्व सेसासु**' इति, शेषासु भणितेतरासु सप्तविंशतिशतमार्गणासु भङ्गाः ओघवद्= सामान्यवक्तव्यतायां यावन्तः प्रतिपादितास्तावन्तो भवन्ति । तद्यथा–उत्कृष्टप्रदेशस्य 'चतुर्थषष्ठा-ष्टमाः' इति त्रयो भङ्गाः । तत्र 'सर्वाबन्धकाः' इति चतुर्थः, 'एकबन्धक एवानेकाबन्धकाः' इति षष्ठः, अनेकबन्धकानेकाबन्धकाः' इत्यष्टमो भङ्गः । अनुत्कृष्टस्य "तृतीयसप्तमाष्टमाः" भङ्गाः । तत्र 'सर्वबन्धकाः' इति तृतीयः, 'अनेकबन्धका एकाबन्धक एव' इति सप्तमः, 'अनेकबन्धकानेका-बन्धकाः' इत्यष्टमो भङ्गः । भङ्गोपपत्तिभङ्गोऽपि सामान्यवक्तव्यतावद् ज्ञातव्यः ।

शेषमार्गणाश्चेमाः-अपर्याप्तमनुष्यमन्तराऽशेषगतिभेदाः, अशेषविकलेन्द्रियपञ्चेन्द्रियभेदाः, पृथ्व्यप्तेजोवायुसामान्यभेदाः, बादरपृथ्व्यप्तेजोवायुभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुभेदाः, प्रत्येक-वनस्पतिकायौघपर्याप्तप्रत्येकवनस्पतिकायभेदौ, त्रसौघपर्याप्तापर्याप्तत्रसभेदाः, वैक्रियमिश्राहारकद्विके विना निखिलयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, निखिलज्ञानमार्गणाभेदाः, संयमौघसामायिक-देशविरत्यसंयमाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, सम्यक्त्वौघवेदकक्षायिकमिथ्यात्वानि, संज्ञी, असंज्ञी, आहारकानाहारकौ च ॥३३३।३३४॥

साम्प्रतमायुष उत्कृष्टानुत्कृष्टप्रदेशभङ्गविचयं प्रति विपादयिषुरादौ तावद्यासु मार्गणासु सर्वे-ऽपि भङ्गाः सम्भवन्ति ता अर्धचतुर्थवृत्तैः प्रतिपादयति—

सव्वेसुं खलु णारगपणिंदितिरियणरदेवभेएसुं ।
सव्वेसुं विगलिंदियपणिंदितसकायभेएसुं ॥३३५॥

बायरपज्जपुहविआइचउगपत्तेअपणमणवयेसुं ।
विउवाहारदुगपुरिसथीचउणाणेसु विब्भंगे ॥२२६॥
संयमसमइअछेअपरिहारदेसोहिचक्खुतेऊसुं ।
पम्हसुइलसम्मखइअवेअगसासाणसण्णीसुं ॥२२७॥
आउस्स पएसाणं उक्कोसियराण हुन्ति भंगाऽट्ठ ।

(प्रे०) 'सव्वेसु' इत्यादि, नारकादिपदानां समस्तत्वात् 'सर्वेषु' इति पदं प्रतिपदं सम्बध्यते, सर्वेषु नरकभेदेषु, सर्वेषु चतुःसंख्याकेषु पञ्चेन्द्रियतिर्यग्भेदेषु, सर्वेषु मनुष्यभेदेषु, सर्वेषु देवभेदेषु, 'सव्वेसु' इत्यादि, अत्रापि 'सर्वेषु' इति पदं विकलेन्द्रियादित्रिपदेषु युज्यते, सर्वेषु विकलेन्द्रियभेदेषु, सर्वेषु पञ्चेन्द्रियभेदेषु, सर्वेषु त्रसकायभेदेषु, [द्वितीयवृत्तवृत्तिः] 'बायर' इत्यादि, बादरपर्याप्तं यत् पृथ्व्यादिचतुष्कं तस्मिन्, पृथ्व्यादिचतुर्णां बादरपर्याप्तभेदेषु इत्यर्थः, 'पत्तेअ' इत्यादि, पदैकदेशेन पदसमुदायस्यापि गम्यमानत्वात् पर्याप्तप्रत्येकवनस्पतिकाये, पञ्चमनःपञ्चवचन-योगेषु, वैक्रियकाययोगे, आहारकाहारकमिश्रलक्षणाहारकद्विके, पुरुषस्त्रीवेदयोः, मतिश्रुतावधिमनः-पर्यवलक्षणचतुर्ज्ञानेषु, विभङ्गज्ञाने, [तृतीयार्यावृत्तिः] 'संयम' इत्यादि, संयमौघसामायिकछेदोपस्था-पनीयपरिहारविशुद्धिदेशविरतिषु, चक्षुरवधिदर्शने, तेजःपद्मशुक्ललेश्यासु, सम्यक्त्वौघक्षायिकवेदक-सास्वादनसम्यक्त्वेषु, संज्ञिनि चेत्येकोत्तरशतमार्गणासु, [चतुर्थगाथावृत्तिः] 'आउस्स' इत्यादि, आयुष उत्कृष्टस्येतरस्यानुत्कृष्टस्य प्रदेशस्य 'अष्टौ भङ्गा' भवन्ति ।

अत्रेयं भावना–यासु मार्गणासु असंख्यलोकाकाशप्रमाणान्न्यूनप्रमाणा जीवास्तास्वायुर्बन्धः सान्तरो भवति । अत्र निगदितनरकादिमार्गणासु जीवा असंख्यलोकाकाशप्रमाणादपकृष्टप्रमाणाः, अत आयुर्बन्धः सान्तरः । यासु मार्गणास्वायुर्बन्धः सान्तरस्तासु कदाचिदेक एव जीव आयुर्बन्धं विदध्यात् । ततो यदा स एक एव जीव आयुरुत्कृष्टप्रदेशबन्धं कुर्यात् तदोत्कृष्टप्रदेशस्य प्रथमो भङ्गः, अनुत्कृष्टप्रदेशस्य द्वितीयो भङ्गः । यदा चायुरनुत्कृष्टप्रदेशबन्धं कुर्यात् तदाऽनुत्कृष्टप्रदेशस्य प्रथमो भङ्गः, उत्कृष्टप्रदेशस्य द्वितीयो भङ्गः । अथ यद्यनेके जीवा आयुर्बन्धं कुर्युस्तर्हि ते सर्वेऽपि यदाऽऽयुष उत्कृष्टप्रदेशबन्धं कुर्युस्तदोत्कृष्टप्रदेशस्य तृतीयो भङ्गः, अनुत्कृष्टप्रदेशस्य चतुर्थो भङ्गः । यदा चानुत्कृष्टप्रदेशबन्धं विदध्युस्तदाऽनुत्कृष्टप्रदेशस्य तृतीयो भङ्गः, उत्कृष्टप्रदेशस्य चतुर्थो भङ्गः । यदि च द्वौ जीवावेवायुर्बन्धं कुर्यातां तर्हि यदा तयोरन्यतर आयुष उत्कृष्टप्रदेशबन्धं कुर्याद् द्वितीयश्चानुत्कृष्टप्रदेशबन्धं कुर्यात् तदोत्कृष्टप्रदेशस्यानुत्कृष्टप्रदेशस्य च पञ्चमो भङ्गः । अथ च यद्यनेके जीवा आयुर्बन्धं कुर्युः, तेष्वेक एवोत्कृष्टप्रदेशबन्धं कुर्यात् तदन्ये चानुत्कृष्टप्रदेशबन्धं कुर्युस्तदोत्कृष्टप्रदेशस्य षष्ठो भङ्गः, अनुत्कृष्टप्रदेशस्य च सप्तमो भङ्गः, यदि चानेके उत्कृष्टप्रदेशबन्धं कुर्युरेक एव चानुत्कृष्टप्रदेशबन्धं कुर्यात् तर्हि उत्कृष्टप्रदेशस्य सप्तमो भङ्गः, अनुत्कृष्टस्य च

षष्ठो भङ्गः। अथानेकेऽप्यायुषो बन्धकेषु केचिदुत्कृष्टप्रदेशबन्धं कुर्युः केचिच्चानुत्कृष्टप्रदेशबन्धं कुर्युस्तदोत्कृष्टानुत्कृष्टोभयप्रदेशयोरप्यष्टमभङ्गः सम्भवेत् ॥३३५।३३६।३३७॥

सम्प्रति यासु मार्गणास्वायुरुत्कृष्टानुत्कृष्टप्रदेशयोरष्टमो भङ्गस्तासु तथा शेषमार्गणासु सातिदेशं भङ्गनिरूपणमाह—

**सव्वेसु एगिंदियणिगोअभेएसु सेससुहमेसु ॥३३८॥** (गीतिः)
**बायरअपजपुहवाइचउगपत्तेअवणवणोहेसु ।**
**भंगोऽत्थि अट्ठमो खलु ओघव्व हवन्ति सेसासु ॥३३९॥**

(प्रे०) **'सव्वेसु'** इत्यादि, सर्वेषु सप्तसंख्याकैकेन्द्रियभेदेषु, सर्वेषु सप्तसंख्याकनिगोदभेदेषु, **'सेससुहमेसु'** इति, एकेन्द्रियनिगोदयोः सर्वभेदेषूक्तत्वादेकेन्द्रियनिगोदयोः सूक्ष्मभेदेभ्योऽतिरिक्तेषु पृथ्व्यप्तेजोवायूनां सूक्ष्मौघभेदाः, सूक्ष्मपर्याप्तभेदाः सूक्ष्मापर्याप्तभेदाश्चेति द्वादशसूक्ष्मेषु, बादराणामपर्याप्तानां पृथिव्यादीनां-पृथ्व्यप्तेजोवायूनां चतुष्कम्, अपर्याप्तप्रत्येकवनस्पतिकाये वनस्पतिकायसामान्ये चेति द्वात्रिंशद्मार्गणास्वायुष उत्कृष्टप्रदेशस्यानुत्कृष्टप्रदेशस्य च **'भंगोऽत्थि'** इत्यादि, खलुशब्दोऽवधारणार्थः, अष्टम एव भङ्गोऽस्ति।

**अत्रेयं भङ्गोपपत्तिरीतिः**—एतासु मार्गणासु सप्तप्रकृतीनामुत्कृष्टानुत्कृष्टप्रदेशयोरष्टमभङ्गस्योपपत्तौ यो राद्धान्तो निगदितः सोऽत्र स्मर्तव्यः, तस्यात्रापि सम्बध्यमानत्वात्। तथाहि-यासु मार्गणासूत्कृष्टप्रदेशबन्धप्रायोग्या जीवा असंख्यलोकाकाशप्रदेशप्रमाणा यद्वाऽनन्तास्तासु मार्गणासु आयुरुत्कृष्टप्रदेशबन्धका जीवाः सर्वदैवानेके एव प्राप्यन्ते। एतासु मार्गणासु कासुचिदसंख्यलोकाकाशप्रदेशप्रमाणाः कासुचिच्चानन्ता जीवाः प्राप्यन्ते। तत एतासु मार्गणास्वायुरुत्कृष्टप्रदेशबन्धका जीवा अप्यनेक एव प्राप्यन्ते। ततो ये जीवा उत्कृष्टप्रदेशबन्धकास्तेऽनुत्कृष्टप्रदेशाबन्धकाः, येऽनुत्कृष्टप्रदेशबन्धकास्त उत्कृष्टप्रदेशाबन्धका इत्येवमुत्कृष्टानुत्कृष्टोभयोरपि प्रदेशयोः 'अनेकबन्धकानेकाबन्धकाः' इत्यष्टम एव भङ्गः सिध्यति, एकबन्धकादीनां कदाचिदप्यप्राप्यमाणत्वात् प्रथमादयो भङ्गा न सिध्यन्ति। **'ओघव्व हवन्ति सेसासु'** इति, शेषासु निगदितेतरासु त्रिंशन्मार्गणास्वायुष उत्कृष्टप्रदेशस्यानुत्कृष्टप्रदेशस्य च भङ्गाः 'ओघवद्' भवन्ति। तद्यथा-उत्कृष्टप्रदेशस्य 'चतुर्थषष्ठाष्टमाः' इति त्रयो भङ्गाः। तत्र 'सर्वाबन्धकाः' इति चतुर्थः, 'एकबन्धक एवानेकेऽबन्धकाः' इति षष्ठः, 'अनेकबन्धकानेकाबन्धकाः' इत्यष्टमो भङ्गः। अनुत्कृष्टप्रदेशस्य 'तृतीयसप्तमाष्टमाः' इति त्रयो भङ्गाः। तत्र 'सर्वबन्धकाः' इति तृतीयः, 'अनेकबन्धका एकाबन्धकः' इति सप्तमः, 'अनेकबन्धकानेकाबन्धकाः' इत्यष्टमो भङ्गः। तदुपपत्तिरपि सामान्यवक्तव्यतया एव ज्ञेया।

शेषमार्गणाश्चेमाः-तिर्यगोघः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुप्रत्येकवनस्पतिकायौघाः काययोगौघौदारिकद्विके, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्च ॥३३८।३३९॥

साम्प्रतमष्टकर्मणां जघन्याजघन्यप्रदेशभङ्गविचयनिरूपणमुपचिकीर्षुरादौ तावदर्धवृत्तेन सामान्यवक्तव्यतामभिदधाति—

**अट्ठण्ह पएसाणं हस्सियराणऽट्ठमो चिअ विगप्पो ।**

(प्रे०) 'अट्ठण्ह' इत्यादि, अष्टानामपि कर्मणां जघन्यप्रदेशस्येतरस्य चाजघन्यप्रदेशस्याष्टम एव भङ्गो भवेत् । अत्रायं हेतुः-अष्टानामपि कर्मणां जघन्यप्रदेशबन्धस्वामी सूक्ष्मापर्याप्तनिगोदोऽस्ति । सूक्ष्मापर्याप्तनिगोदाश्च प्रतिसमयमष्टानामपि कर्मणां जघन्यप्रदेशस्याजघन्यप्रदेशस्य च बन्धं कुर्वन्तोऽनन्ताः प्राप्यन्ते । तत्र ये जघन्यप्रदेशबन्धकास्तेऽजघन्यप्रदेशाबन्धकाः, येऽजघन्यप्रदेशबन्धकास्ते जघन्यप्रदेशाबन्धकाः, इत्यनेकबन्धकानेकाबन्धकानामेव प्राप्यमाणत्वात् 'अनेकबन्धका अनेकाबन्धकाः' इत्यष्टम एव भङ्गः सम्भवति । अष्टकर्मणां जघन्याजघन्यप्रदेशबन्धकानामेकादीनामप्राप्यमाणत्वादन्यप्रथमादयो भङ्गा न सम्भवन्ति ।

सम्प्रति मार्गणासु सप्तकर्मणां जघन्याजघन्यप्रदेशभङ्गविचयमभिधातुकामो यासु मार्गणासु 'सव्वेसु एगिंदिय' इत्यादिसार्धगाथया सप्तकर्मणामुत्कृष्टानुत्कृष्टप्रदेशयोरष्टमो भङ्गो निरूपितस्तासु सप्तकर्मणां जघन्याजघन्यप्रदेशयोरप्यष्टमभङ्गस्य 'सेसासु' इत्यादिनाऽग्रेऽतिदिश्यमानत्वात् तदतिरिक्तासु यासु मार्गणास्वष्टम एव भङ्गस्ता गाथत्रिकेण निरूपयति—

**तिरियगईए चउसु पुहवीआईसु कायेसु ॥३४०॥**
**बायरपुहवाइचउसु पत्तेअवणम्मि कायजोगम्मि ।**
**उरलदुगकम्मणेसु णपुंसगे चउकसायेसु ॥३४१॥**
**अण्णाणदुगे अयते अचक्खुअपसत्थलेसभवियेसु ।**
**अभवियमिच्छत्तेसु असण्णिआहारगियरेसु ॥३४२॥**
**हस्सियरपएसाणं आउगवज्जाण अट्ठमो भंगो ।**

(प्रे०) 'तिरियगईए' इत्यादि, तिर्यग्गतिसामान्ये, चतुर्षु पृथिव्यप्तेजोवायुस्वरूपेषु पृथिव्यादिकायौघेषु, 'बायर' इत्यादि, बादरा ये पृथिव्यादयश्चत्वारस्तेषु, बादरपृथिवीबादराब्बादरतेजोबादरवायुषु इत्यर्थः, प्रत्येकवनस्पतिकायौघे, काययोगौघे, औदारिकौदारिकमिश्रलक्षणौदारिकद्विके, कार्मणकाये, नपुंसकवेदे, चतुष्कषायेषु, 'अण्णाणदुगे' इत्यादि, मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अप्रशस्तलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिनि, आहारके, इतरे चानाहारके इति द्वात्रिंशन्मार्गणास्वायुर्वर्जानां सप्तकर्मणां जघन्यप्रदेशस्येतरस्याजघन्यप्रदेशस्य 'अट्ठमो' भङ्गो भवति ।

अत्रेयं भङ्गभावना-यासु मार्गणासु जीवा असंख्यलोकाकाशप्रदेशप्रमाणा यद्वा ततोऽप्यधिकाः प्राप्यन्ते तासु मार्गणासु सप्तकर्मणां जघन्याजघन्यप्रदेशबन्धं कुर्वाणा अनेके जीवाः सदैव प्राप्यन्ते। एतासु च मार्गणासु कासुचिदसंख्यलोकाकाशप्रदेशप्रमाणाः कासुचिच्चानन्ता जीवाः प्राप्यन्ते। इत्येतासु मार्गणासु प्रतिसमयं सप्तकर्मणां जघन्याजघन्यप्रदेशबन्धं कुर्वाणा अनेके जीवा लभ्यन्ते। तत्र ये जघन्यप्रदेशबन्धकास्तेऽजघन्यप्रदेशाबन्धका येऽजघन्यप्रदेशबन्धकास्ते जघन्यप्रदेशाबन्धका इत्योघवदत्राप्यनेकबन्धकानेकाबन्धकानामेव लभ्यमानत्वाद् 'अनेकबन्धका अनेकाबन्धकाः' इत्यष्टम एव भङ्गो घटां याति, न तु प्रथमादिः, एकबन्धकादीनामलभ्यमानत्वाद् ॥३४०।३४१।३४२॥

सम्प्रति शेषमार्गणासु सप्तकर्मणां जघन्याजघन्यप्रदेशभङ्गविचयमतिदिशति—

## सेसासु हवन्ति कमा उक्कोसेयरपएसव्व ॥३४३॥

(प्रे०) 'सेसासु' इत्यादि, शेषासु निरूपितेतरासु अष्टात्रिंशन्मार्गणासु सप्तकर्मणां जघन्यप्रदेशस्याजघन्यप्रदेशस्य च भङ्गाः क्रमशः=यथासंख्यम् 'उत्कृष्टेतरप्रदेशवत्', सप्तकर्मणामिति प्रकरणाल्लभ्यते, सप्तकर्मणामुत्कृष्टप्रदेशवत् तदितरानुत्कृष्टप्रदेशवद् भवन्तीत्यर्थः। अत्र 'तस्य' [सिद्धहेम ७।१।५४] इत्यनेन सूत्रेण इवार्थे 'वत्' प्रत्ययः। तस्य प्राकृतवशाद् 'वतेर्व्वः [८।२।१५१] इति सूत्रेण 'व्व' इति द्विरुक्तो व आदेशः। ततोऽयमर्थः-शेषासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशस्य भङ्गाः सप्तकर्मणामुत्कृष्टप्रदेशस्य यथा प्रदर्शितास्तथा भवन्ति, एवमजघन्यप्रदेशस्यानुत्कृष्टप्रदेशस्य यथा प्रदर्शितास्तथा भवन्ति। तद्यथा-'असमत्तणरे' इत्यादिवृत्तेन निरूपितासु अपर्याप्तमनुष्ये, वैक्रियमिश्रकाययोगे, आहारकद्विके, अवेदे, सूक्ष्मसम्पराये उपशमसास्वादनमिश्रेषु चेत्येवं नवमार्गणासु 'अष्टौ' भङ्गाः सम्भवन्ति।

अत्रेयं युक्तिः-सान्तरासु मार्गणासु सप्तकर्मणां बन्धकः कदाचिदेक एव जीवः स्यात्, स च कदाचिद् जघन्यप्रदेशबन्धं कुर्यात् कदाचिच्चाजघन्यप्रदेशबन्धं कुर्यात्। ततो यदा जघन्यप्रदेशबन्धं कुर्यात् तदा जघन्यप्रदेशस्य प्रथमो भङ्गः, अजघन्यप्रदेशस्य च द्वितीयो भङ्गः। यदा चाजघन्यप्रदेशबन्धं कुर्यात् तदाऽजघन्यप्रदेशस्य प्रथमो भङ्गः, जघन्यप्रदेशस्य च द्वितीयो भङ्गः। अथ कदाचिदनेके जीवाः सप्तकर्मणां बन्धकाः स्युः, ते सर्वेऽपि कदाचिद् जघन्यप्रदेशबन्धं कुर्युः कदाचिच्चाजघन्यप्रदेशबन्धं कुर्युः। ततो यदा जघन्यप्रदेशबन्धं कुर्युस्तदा जघन्यप्रदेशस्य तृतीयो भङ्गः, अजघन्यप्रदेशस्य च चतुर्थो भङ्गः। यदा चाजघन्यप्रदेशबन्धं कुर्युस्तदाऽजघन्यप्रदेशस्य तृतीयो भङ्गः जघन्यप्रदेशस्य च चतुर्थो भङ्गः। कदाचिद् द्वावेव जीवौ सप्तकर्मणां बन्धकौ स्याताम्, ततो यदि तयोरेको जघन्यप्रदेशबन्धं कुर्यादेकश्चाजघन्यप्रदेशबन्धं कुर्यात् तर्हि जघन्याजघन्योभयप्रदेशयोः पञ्चमो भङ्गः स्यात्। अथानेकेषु सप्तकर्मणां बन्धकेषु यद्येक एव जीवो जघन्यप्रदेशबन्धं कुर्यात् तदन्ये चाजघन्यप्रदेशबन्धं कुर्युस्तर्हि जघन्यप्रदेशस्य

षष्ठो भङ्गः, अजघन्यप्रदेशस्य च सप्तमो भङ्गः । तथा यद्यनेके जीवा जघन्यप्रदेशबन्धं कुर्युरेक एव चाजघन्यप्रदेशबन्धं कुर्यात् तर्हि जघन्यप्रदेशस्य सप्तमः, अजघन्यप्रदेशस्य च षष्ठो भङ्गः । यदि च जघन्याजघन्योभयविधस्यापि प्रदेशस्यानेके बन्धकाः स्युस्तर्हि तदुभययोरप्यष्टमो भङ्गः सम्भवेत् । एता नवापि मार्गणाः सान्तराः सन्ति । ततश्च निगदितरीत्याष्टावपि भङ्गाः सूपपादा भवन्ति । छेदोपस्थापनपरिहारविशुद्धिकयोस्तु 'सयमुवसो परिहारे छेए' इत्यत्र व्याख्योक्तनीत्या सम्भवद्भङ्गाः स्वयमूह्याः ।

अथ 'सव्वेसु एगिंदिय' इत्यादिसार्धार्यया प्रतिपादितासु सर्वैकेन्द्रियभेदेषु, सर्वनिगोदप्रकारेषु, पृथिव्यप्तेजोवायूनां सूक्ष्मौघभेदेषु, सूक्ष्मापर्याप्तभेदेषु, सूक्ष्मपर्याप्तभेदेषु, बादरापर्याप्तभेदेषु, अपर्याप्तप्रत्येकवनस्पतिकाये वनस्पतिकायौघे चेति द्वात्रिंशन्मार्गणासु 'अष्टम' एव भङ्गः सम्भवति । अत्रोपपत्तिः प्रदर्श्यते—यासु मार्गणासु जीवा असंख्यलोकाकाशप्रदेशप्रमाणा यद्वा ततोऽप्यधिकास्तासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशस्याजघन्यप्रदेशस्य च बन्धका जीवाः सदैवानेके एव प्राप्यन्ते । अथैतासु मार्गणासु कासुचिदसंख्यलोकाकाशप्रदेशप्रमाणाः कासुचिच्चानन्ता जीवाः प्राप्यन्ते । ततः सप्तकर्मणां जघन्यप्रदेशस्याजघन्यप्रदेशस्य च बन्धकत्वेन सदैवानेके एव जीवाः प्राप्यन्ते । तत्र ये जघन्यप्रदेशबन्धकास्तेऽजघन्यप्रदेशाप्रबन्धकाः, ये चाजघन्यप्रदेशबन्धकास्ते जघन्यप्रदेशाबन्धकाः । इत्येवमेतासु मार्गणासु जघन्याजघन्योभयप्रदेशयोः 'अनेकबन्धकानेकाबन्धकाः' इत्यष्टमभङ्गस्यैव लक्षणस्य प्रवेशादष्टम एव भङ्गः सम्भवति, न तु प्रथमादिरपि । अत्रेदमवधेयम्-पूर्वमपि द्वात्रिंशद्मार्गणास्वष्टम एव भङ्गो निगदितः, इति सर्वासां मीलनेन चतुःषष्टिमार्गणास्वष्टम एव भङ्गः । नन्वत्र समानभङ्गा अपि मार्गणा एकत्रानुक्त्वा किमेवं पृथगभिहिताः ? इति चेद्, उच्यते, अत्र हि ग्रन्थकारः सर्वमपि निरूपणं यथालाघवं करोति । ततो यद्यत्राष्टमभङ्गानां सर्वासामपि मार्गणानामेकत्रोक्तये तिर्यगोघादिमार्गणावत् सर्वैकेन्द्रियादिमार्गणा अपि नामग्राहं प्रदर्शयेत् तर्हि गौरवः स्यात् । शक्यातिदेशानामतिदेशे तु लाघवः । अतः सर्वैकेन्द्रियादिमार्गणाः तिर्यगोघादिमार्गणाभिः सहानभिधायातिदिष्टवान् । तिर्यगोघादिमार्गणानां तु अशक्यातिदेशत्वात् ता नातिदिष्टवान् ।

अथ 'ओघव्व हवन्ति सेसासु' इत्यत्र शेषतया प्ररूपितासु तिर्यगोघापर्याप्तमनुष्यौ विना निखिलगतिभेदेषु, अशेषविकलेन्द्रियपञ्चेन्द्रियभेदेषु, पर्याप्तबादरपृथिव्यप्तेजोवायुभेदेषु, पर्याप्तप्रत्येकवनस्पतिकाये, त्रसत्रिके, पञ्चमनःपञ्चवचनवैक्रियकाययोगेषु, स्त्रीपुरुषवेदयोः, मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानेषु, संयमौघसामायिकदेशविरतिषु, चक्षुरचक्षुर्दर्शनयोः, प्रशस्तलेश्यात्रिके, सम्यक्त्वौघक्षायिकवेदकसम्यक्त्वेषु, संज्ञिनि चेति पञ्चनवतिमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशस्य 'चतुर्थषष्ठाष्टमाः' इति त्रयो भङ्गाः अजघन्यप्रदेशस्य च 'तृतीयसप्तमाष्टमाः' इति त्रयो भङ्गाः सम्भवन्ति ।

अत्रेयं भावनासरणी—यासु मार्गणासु जीवा असंख्यलोकाकाशप्रदेशेभ्यो न्यूनास्तासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धका जीवाः सर्वदैव प्राप्यन्त इति न नियमः। कदाचिन्नापि प्राप्यन्ते। यदा च प्राप्यन्ते तदा कदाचिदेकः, कदाचिद् द्वौ, कदाचिच्चानेके प्राप्यन्ते। अथैतासु मार्गणासु जीवा असंख्यलोकाकाशप्रदेशेभ्यो न्यूनाः। ततः सप्तकर्मणां जघन्यप्रदेशबन्धकाः कदाचित् सर्वथा न प्राप्यन्ते, कदाचिदेक एव, कदाचिद् द्वावेव, कदाचिच्चानेके प्राप्यन्ते। ततो यदा जघन्यप्रदेशबन्धकानामत्यन्ताभावस्तदा 'सर्वाबन्धकाः' इति चतुर्थो भङ्गः सम्भवति। यदा चैक एव जीवो जघन्यप्रदेशबन्धकत्वेन प्राप्यते तदा सुतरामनेके जीवा जघन्यप्रदेशाबन्धकत्वेन प्राप्यन्ते। यतो येऽजघन्यप्रदेशबन्धकास्त एव जघन्यप्रदेशाबन्धका भवन्ति। एतासु मार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धं प्रतिसमयमनेके जीवाः कुर्वन्ति। इत्येवमेतासु मार्गणासु जघन्यप्रदेशस्य 'एक एव बन्धकोऽनेकेऽबन्धकाः' इति षष्ठभङ्गलक्षणस्य प्राप्यमाणत्वात् षष्ठोऽपि भङ्गः सम्भवति। यदाऽनेके जीवाः सप्तकर्मणां जघन्यप्रदेशबन्धं कुर्युस्तदाऽनेकेऽजघन्यप्रदेशबन्धकाः प्राप्यन्ते। अतः 'अनेकबन्धकानेकाबन्धकाः' इत्यष्टमभङ्गोऽपि घटामटाट्यते।

अथ जघन्यप्रदेशस्य चतुर्थषष्ठाष्टमभङ्गेषूपपादितेष्वजघन्यप्रदेशस्य तृतीयसप्तमाष्टमभङ्गाः सूपपादीभवन्ति, यतोऽत्रेयं व्याप्तिः—यदा जघन्यप्रदेशस्य चतुर्थो भङ्गस्तदाऽजघन्यप्रदेशस्य तृतीयो भङ्गोऽवश्यं सम्भवति। जघन्यप्रदेशस्य चतुर्थभङ्गस्याजघन्यप्रदेशतृतीयभङ्गाविनाभावित्वात्। यतो जघन्यप्रदेशस्य चतुर्थभङ्गः 'सर्वाबन्धकाः' इति, अजघन्यप्रदेशस्य च तृतीयभङ्गः 'सर्वबन्धकाः' इति। अथात्राबन्धकास्तत्प्रतिपक्षप्रदेशबन्धका एव ग्रहीतुं शक्यन्ते, न तु ये केचिदिति प्रागुक्तमेव। ततो यदा मार्गणास्थाः सर्वे जीवा अजघन्यप्रदेशबन्धं कुर्युस्तदैव जघन्यप्रदेशस्य 'सर्वाबन्धकाः' भवन्ति। इत्येवं यदा जघन्यप्रदेशस्य 'सर्वेऽबन्धकाः' सन्ति तदाऽजघन्यप्रदेशस्य 'सर्वे बन्धकाः' सन्त्येव। एवं यदा जघन्यप्रदेशस्य षष्ठो भङ्गस्तदाऽजघन्यप्रदेशस्य सप्तमो भङ्गोऽवश्यं भवति। जघन्यप्रदेशषष्ठभङ्गस्याजघन्यप्रदेशसप्तमभङ्गस्य च समव्याप्तत्वात्। तथाहि—जघन्यप्रदेशस्य षष्ठो भङ्गः 'एकबन्धकानेकाबन्धकाः' इति, अजघन्यप्रदेशस्य च सप्तमो भङ्गः 'अनेकबन्धका एकाबन्धकः' इति। ततो निगदिताबन्धकग्रहणनियमेन यदाऽजघन्यप्रदेशस्यानेके बन्धकाः स्युस्तदैव जघन्यप्रदेशस्यानेकेऽबन्धकाः स्युः। तथा यदैक एव जीवो जघन्यप्रदेशबन्धं कुर्यात् तदैवाजघन्यप्रदेशस्यैकोऽबन्धकः स्यात्। इत्येवं द्वयोः परस्परं सापेक्षत्वात् समव्याप्तत्वम्। ततो यदा जघन्यप्रदेशस्य 'एकबन्धकोऽनेकेऽबन्धकाः' इति षष्ठो भङ्गोऽस्ति तदाऽजघन्यप्रदेशस्य 'अनेकबन्धका एकोऽबन्धकः' इति सप्तमभङ्गोऽस्त्येव। एवमेवोभयोरष्टमभङ्गस्य समव्याप्तत्वं स्वयमेव परिभावनीयम् ॥३४३॥

अथैकयैव गाथयाऽऽयुषो जघन्याजघन्यप्रदेशबन्धभङ्गविषयं सातिदेशं निरूपयति—

**जहि अत्थि पएसाणं जेट्ठियराणाउगस्स भंगाऽट्ठ।**
**तहि से हस्सियराणं ते चिअ ओघव्व सेसासुं ॥३४४॥**

(प्रे०) **'जहि अत्थि'** इत्यादि, यत्र=यासु मार्गणासु आयुष उत्कृष्टप्रदेशस्येतरस्यानुत्कृष्टप्रदेशस्याष्टौ भङ्गाः सन्ति, तत्र=तासु मार्गणासु तस्य=आयुषो यथासंख्यं जघन्यप्रदेशस्याजघन्यप्रदेशस्यापि, **'ते चिअ'** इति, तेऽष्टावेव भङ्गाः सन्ति। यासु मार्गणासु 'सव्वेसु खलु णारग' इत्यादिसार्धत्रिवृत्तैरुत्कृष्टानुत्कृष्टप्रदेशयोरष्टौ भङ्गास्ता मार्गणा इमाः—सर्वनरकभेदाः, चत्वारः पञ्चेन्द्रियतिर्यग्भेदाः, सर्वमनुष्यभेदाः, सर्वदेवभेदाः, सर्वविकलेन्द्रियभेदाः, सर्वपञ्चेन्द्रियभेदाः, सर्वत्रसकायभेदाः, पृथ्व्यादीनां चतुर्णां बादरपर्याप्तभेदाः, पर्याप्तप्रत्येकवनस्पतिकायः, पञ्चमनःपञ्चवचनानि, वैक्रियाहारकाहारकमिश्रकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानानि, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि, संज्ञी चेत्येकोत्तरशतम्। अत्र भावनाऽप्युत्कृष्टानुत्कृष्टप्रदेशयोरष्टभङ्गवत् कर्तव्या। नवरमुत्कृष्टस्थाने जघन्येति अनुत्कृष्टस्थाने चाऽजघन्येति वक्तव्यम्।

**'ओघव्व सेसासु'** इति, शेषासु जघन्याजघन्यप्रदेशयोर्भङ्गविचय ओघवदस्ति। ओघवक्तव्यतायामष्टानामपि कर्मणां जघन्याजघन्यप्रदेशयोरष्टमो भङ्गः प्ररूपितः ततः शेषासु मार्गणास्वायुषो जघन्याजघन्यप्रदेशयोरष्टमो भङ्गः सम्भवति। अत्र भावनाऽपि सामान्यवक्तव्यतावत् कर्तव्या। शेषमार्गणाश्चेमाः—तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, पृथिव्यप्तेजोवायुकायौघाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायौघाः सूक्ष्मपर्याप्तपृथिव्यप्तेजोवायवः, सूक्ष्मापर्याप्तपृथिव्यप्तेजोवायवः, बादरपृथिव्यप्तेजोवायवः, बादरापर्याप्तपृथ्व्यप्तेजोवायवः, वनस्पतिकायौघः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ, काययोगौघौदारिकद्विके, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्च ॥३४४॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धेऽष्टमं भङ्गविचयद्वारं समाप्तम् ॥



## * अष्टकर्मणामुत्कृष्टानुत्कृष्टजघन्याजघन्य-

भङ्गकाः—एको बन्धकः, (२) एकोऽबन्धकः,卐 (३) सर्वे बन्धकाः, (४) सर्वेऽबन्धकाः, (५) एको बन्धक एकोऽबन्धकः, (६) एको बन्धकोऽनेकेऽबन्धकाः, (७) अनेके बन्धका एकोऽबन्धकः, (८) अनेके बन्धका अनेकेऽबन्धकाः (गाथा० ३२८-३२९)।

| | | भङ्गा | गति० | इन्द्रिय० | काय० | योग० |
|---|---|---|---|---|---|---|
| सप्तकर्मणाम् | उत्कृष्टानुत्कृष्टप्रदेशबन्धकाः | अष्टौ भङ्गाः | अप. म. | | | वै मि./आहारकद्विक. |
| | | अष्टम एव भङ्गः | | सर्वेकेन्द्रिय० | सर्वनिगोद. पृथ्व्यप्तेजोवायूनां बादरापर्याप्तपृथिव्यप्तेजोवायुषु सर्वसूक्ष्मभेदेषु अप. प्रत्येकवन / वन. सा. | |
| | | उत्कृष्टप्रदेशस्य चतुर्थषष्ठाष्टमाः अनुत्कृष्टप्रदेशस्य तृतीयसप्तमाष्टमाः | शेष सर्व० (४६) | शेष सर्व० (१२) | शेष सर्व० (१७) | शेष सर्व० (१५) |
| आयुषः | | अष्टौ भङ्गाः | तिर्यगोघमन्तरा सर्व० | सर्वविकलेन्द्रिय. सर्वपञ्चेन्द्रिय० | सर्वत्रस /बादरपर्याप्तपृथिव्यप्तेजोवायु.प.प्रत्येकवन० | पञ्चमनःपञ्चवचन. वै./आहारकद्विक० |
| | | अष्टम एव भङ्गः | | सर्वेकेन्द्रिय० | सर्वनिगोद /पृथ्व्यप्तेजोवायूनांसूक्ष्मभेदेषु. बादरापर्याप्तपृथ्व्यप्तेजोवायुषु अप. प्र. व./वन. सा. | |
| | | उत्कृष्टप्रदेशस्य चतुर्थषष्ठाष्टमाः अनुत्कृष्टप्रदेशस्य तृतीयसप्तमाष्टमा भङ्गाः | तिर्यगोघ० | | पृ.सा./बा.पृ प्रत्येकवन.सा. अ.सा /बा.अ. ते सा./बा.ते. वा सा /बा.वा. | काययोगोघ० औदारिकद्विक० |
| सप्तकर्मणाम् | जघन्याजघन्यप्रदेशबन्धकाः | (ओघवत्)अष्टम एव भङ्गः. | तिर्यगोघ० | सर्वेकेन्द्रिय० | सर्वत्रसबादरपर्याप्तपृथ्व्यप्तेजोवायुप्रत्येकवनस्पतिभिः विनासर्वकायभेदेषु | काययोगोघ० औदारिकद्विक /का (४) |
| | | अष्टौ भङ्गाः | अप. म. | | | वैक्रियमिश्र० आहारकद्विक० |
| | | जघन्यप्रदेशस्य चतुर्थषष्ठाष्टमाः अजघन्यप्रदेशस्य तृतीयसप्तमाष्टमाः | शेष सर्व० (४५) | शेष सर्व० (१२) | शेष सर्व० (८) | शेष सर्व० (११) |
| आयुषः | | अष्टौ भङ्गाः | तिर्यगोघमृते सर्व० | सर्वविकलेन्द्रिय० सर्वपञ्चेन्द्रिय० | सर्वत्रस. बादरपर्याप्तपृथिव्यप्तेजोवायुप्रत्येकवनस्पतिकाय० | पञ्चमन पञ्चवचन० वै./आहारकद्विक० |
| | | (ओघवत्)अष्टम एव भङ्गः | तिर्यगोघ० | सर्वेकेन्द्रिय० | शेष सर्व० (३४) | काययोगोघ० औदारिकद्विक० |

卐 अथाबन्धका जीवास्ते ग्राह्या ये तत्प्रतिपक्षप्रदेशबन्धकाः न तु सर्वथाऽबन्धकाः (गाथा० ३३०)।

## प्रदेशबन्धभङ्गविचयप्रदर्शकयन्त्रकम् *

ओघतः—अष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धस्य चतुर्थषष्ठाष्टमभङ्गास्तथाऽनुत्कृष्टप्रदेशबन्धस्य तृतीयसप्तमाष्टमभङ्गाः। संभवन्ति ( गाथा० ३३१ ) । अष्टानामपि कर्मणा जघन्यस्याजघन्यस्य च प्रदेशबन्धस्याष्टमो भङ्ग संभवति (गाथा०३४०)।

| वेद० | कषाय० | ज्ञान० | संयम० | दर्शन० | लेश्या० | भव्य० | सम्य० | संज्ञि० | आहा० | मार्गणा संख्य० | गाथा० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अवे. | | | छेद. परि. सूक्ष्म०/* | | | | उ.।सा.।मि. | | | ११ | ३३२ |
| | | | | | | | | | | ३२ | ३३३ ३३४ |
| शेष-सर्व० (३) | सर्व०(४) | सर्व० | शेषसर्व.(४) | सर्व०(३) | सर्व. (६) | सर्व. (२) | शेषसर्व० (४) | सर्व. (२) | स (२) | १२७ | ३३४ |
| पु /स्त्री | | म.।श्रु./अ. मन।प.।वि. | सं.सा.।सा । छे ।प.।दे. | अव./च. | ते./प /शु. | | स. सा. क्षा. वे. सास्वा. | सं० | | १०१ | ३३५-३३८ |
| | | | | | | | | | | ३२ | ३३८-३३९ |
| नपुं. | सर्व० | मतिश्रुता-ज्ञान० | असंयम० | अच० | कृ./नी./का. | सर्व. | मिथ्यात्व. | असं. | आहा. | ३० | ३३६ |
| नपुं. | सर्व० | मतिश्रुता-ज्ञान.(२) | असंयम. (१) | अच.(१) | कृ /नी./ का.(३) | सर्व. (२) | मिथ्यात्व० (१) | अस. (४) | सर्व. (२) | ६४ | ३४०-३४३ |
| अवे. | | | छे./प./सू./ * | | | | उ.।सा ।मि. | | | ११ | ३४३ |
| शेष-सर्व० (२) | | शेषसर्व० (५) | शेषसर्व.(३) | शेषसर्व. (२) | ते./प./शु. (३) | | स.सा.।क्षा।वे. (३) | सं० (१) | | ६५ | ३४३ |
| पु / स्त्री. | | म./श्रु.।अ. मनःप.।वि. | सं सा./सा./ छे./प /दे. | अव./च. | ते./प./शु | | स.सा.।क्षा । वे. सास्वा. | सं० | | १०१ | ३४४ |
| नपुं. | सर्व० | मतिश्रुता-ज्ञान० | असंयम० | अच. | कृ./नी.।का. | सर्व. | मिथ्यात्व. | असं. | आहा. | ६२ | ३४४ |

* छेदोपस्थापनीयपरिहारविशुद्धिसंयमयोः सप्तकर्मणां भङ्गविचयः स्वयं ज्ञातव्यः।

## ॥ नवमं भागद्वारम् ॥

गतं भङ्गविचयद्वारम् । इदानीं क्रमिकं नवमं भागद्वारं प्रतुष्टूषुरादौ तावदष्टकर्मणामुत्कृष्टप्रदेशबन्धकानां भागस्यौघवक्तव्यतामाह—

**भागो उ अणंतयमो जेट्ठपएसस्स बंधगा णेया ।**
**अट्ठण्ह अणंतंसा अगुरुपएसस्स विण्णेया ॥३४५॥**

(प्रे०) भागप्ररूपणा नाम यदा विवक्षितकर्मण उत्कृष्टप्रदेशबन्धका जीवा उत्कृष्टपदे वर्तन्ते तदा विवक्षितकर्मणो बन्धकेषु सर्वजीवेषु विवक्षितकर्मण उत्कृष्टप्रदेशबन्धका अनुत्कृष्टप्रदेशबन्धकाश्च जीवाः प्रत्येकं कतिषु भागेषु वर्तन्ते, एवं यदा विवक्षितकर्मणो जघन्यप्रदेशबन्धका जीवा उत्कृष्टपदे वर्तन्ते तदा विवक्षितकर्मणो बन्धकेषु सर्वजीवेषु विवक्षितकर्मणो जघन्यप्रदेशबन्धकः अजघन्यप्रदेशबन्धकाश्च जीवाः प्रत्येकं कतिषु भागेषु वर्तन्ते इति प्रतिपादनम् । तदेवाह–'भागो उ' इत्यादि, उत्तरार्धस्थम् "अष्टानाम्" इति पदं काकाक्षिगोलकन्यायेन अत्रापि सम्बध्यते, ततोऽयमर्थः–अष्टानां कर्मणामुत्कृष्टप्रदेशबन्धका जीवा अनन्ततमो भागो ज्ञेयाः । "अनन्ततमः" इत्यत्र "शतादिमासार्धमाससंवत्सरात्" [सिद्धहेम० ७।१।१५७] इति सूत्रेण "संख्यापूरणे तमट्" प्रत्ययः । सकषायप्रदेशबन्धकानां जीवानां समाना अनन्ता भागाः क्रियन्ते । तेष्वेकोऽनन्ततमो भाग उत्कृष्टप्रदेशबन्धकानां जीवानां भवति ।

तद्यथा–ज्ञानावरणीयस्योत्कृष्टप्रदेशबन्धका जीवाः सूक्ष्मसम्परायस्था एव । ते च संख्याता एवेति परिमाणद्वारे सप्रमाणं निरूपयिष्यते । ततः प्रतिसमयं ज्ञानावरणीयस्य प्रदेशबन्धं विदधतां जीवानामनन्तसंख्योत्कृष्टप्रदेशबन्धं कुर्वतां जीवानां संख्यातसंख्यया भाजयितव्या, भाजितायां च तस्यां यावती लब्धिः समागच्छति तावतिथो भागो ज्ञानावरणीयस्योत्कृष्टप्रदेशबन्धकानां भवति । संख्यातसंख्ययाऽनन्तसंख्यायां विभाजितायां "अनन्तसंख्या" लब्धिः समागच्छति । ततो ज्ञानावरणीयस्य बन्धकेषु सर्वजीवेषु ज्ञानावरणीयोत्कृष्टप्रदेशबन्धकानामनन्ततमो भागो भवति । ज्ञानावरणीयोत्कृष्टप्रदेशबन्धका जीवा अनन्ततमे भागे वर्तन्ते इति यावत् । एवं मोहनीयायुषी विना दर्शनावरणीयादिपञ्चकर्मणामुत्कृष्टप्रदेशबन्धकेष्वपि परिभावनीयम्, बन्धकानां सारूप्यात् ।

तथा मोहनीयायुषोरुत्कृष्टप्रदेशबन्धकाः पर्याप्ताः संज्ञिजीवाः । ते चोत्कृष्टतोऽसंख्याता इत्यग्रे परिमाणद्वारेऽभिधास्यते । ततो मोहनीयायुषोः प्रदेशबन्धं कुर्वतां जीवानामनन्तसंख्योत्कृष्टप्रदेशबन्धं विदधतां जीवानामसंख्यातसंख्यया भाजयितव्या, भाजितायां च तस्यां "अनन्तसंख्या" लब्धिः समागच्छति । ततश्च मोहनीयायुषोर्बन्धकेषु सर्वजीवेषु मोहनीयायुषोरुत्कृष्टप्रदेशबन्धका जीवा अनन्ततमे भागे वर्तन्ते इति सिद्धम् । तदेवाऽसत्कल्पनया प्रदर्श्यते–अत्रासत्कल्पनायामेकतः प्रारभ्य षोडश यावत् संख्या संख्यातसंख्या, सप्तदशतः प्रारभ्यैकसहस्रं यावत् संख्या असंख्यातसंख्या,

ततः परा सर्वाऽपि संख्या अनन्तसंख्या कल्प्यते । अथ ज्ञानावरणीयस्य बन्धकाः "एककोटिः" (१००००००००) इत्यनन्ताः कल्प्यन्ते । ज्ञानावरणीयस्योत्कृष्टप्रदेशबन्धकाश्च 'दश' (१०) इति संख्याताः कल्प्यन्ते । ततो ज्ञानावरणीयबन्धकानाम् "एककोटिः" (१००००००००) इत्यनन्तसंख्यायां ज्ञानावरणीयस्योत्कृष्टप्रदेशबन्धकानां "दश" (१०) इति संख्यातसंख्यया विभाजितायां "दशलक्षाणि" (१००००००) इत्यनन्तसंख्या लब्धिः समागच्छति । ततो ज्ञानावरणीयस्योत्कृष्टप्रदेशबन्धका जीवा ज्ञानावरणीयस्य बन्धकेषु सर्वजीवेषु "दशलक्षतमरूपेऽनन्ततमे" भागे वर्तन्ते । एवं दर्शनावरणीयादिपञ्चकर्मणामुत्कृष्टप्रदेशबन्धकानामपि भागः परिभावनीयः । तथा मोहनीयायुषोर्बन्धकाः "एककोटिः" (१००००००००) इत्यनन्ताः कल्प्यन्ते । मोहनीयायुषोरुत्कृष्टप्रदेशबन्धकाश्च "शतम्" (१००) इत्यसंख्याताः कल्प्यन्ते । ततो मोहनीयायुषोर्बन्धकानाम् "एककोटिः" (१००००००००) इत्यनन्तसंख्यायां तयोरुत्कृष्टप्रदेशबन्धकानां "शतम्" (१००) इत्यसंख्यातसंख्यया विभाजितायाम् "एकलक्षम्" (१०००००) इत्यनन्तसंख्या भागफलं समागच्छति । अतो मोहनीयायुषोरुत्कृष्टप्रदेशबन्धका जीवा मोहनीयायुषोर्बन्धकेषु सर्वजीवेषु "लक्षतमरूपेऽनन्ततमे" भागे वर्तन्ते । अग्रेऽपि भागप्ररूपणां यावदनयैवासत्कल्पनया भागाः प्रदर्शयिष्यन्तेऽतो विपश्चिद्भिर्भागप्ररूपणां यावदेषाऽसत्कल्पना मनसि सम्यगवधारणीया । एवमत्र सत्कल्पनया संख्यातसंख्ययाऽसंख्यातसंख्यया वाऽनन्तसंख्यायां विभाजितायामनन्तसंख्यैव भागफलं समागच्छति । यतः संख्यातसंख्याऽसंख्यातसंख्या चानन्तसंख्याया अनन्ततमो भागो भवति । ततश्च ज्ञानावरणीयादिषट्कर्मणां मोहनीयायुषोश्चोत्कृष्टप्रदेशबन्धका जीवाः बन्धकसर्वजीवानामनन्ततमे भागे वर्तन्ते इति सुतरां सिद्धम् । नवरं ज्ञानावरणीयादिषट्कर्मणामुत्कृष्टप्रदेशबन्धकेभ्यो मोहनीयायुषोरुत्कृष्टप्रदेशबन्धका अधिका ज्ञेयाः ।

अथोत्तरार्धं विव्रियते—"अट्ठण्ह" इत्यादि, पूर्वार्धस्थं बन्धकाः इति पदमत्रापि सम्बध्यते, अष्टानां कर्मणामनुत्कृष्टप्रदेशबन्धका अनन्ता भागा विज्ञेयाः । उत्कृष्टप्रदेशबन्धकानामेकमनन्ततमं भागं विहाय शेषाः सर्वेऽपि भागा अनुत्कृष्टप्रदेशबन्धकानां भवन्तीति हेतोः । अनन्तस्यानन्तभेदत्वाद् भागफलादेकभागस्य विश्लेषे कृतेऽपि अनन्ता एव भागा भवन्ति । पूर्वमसत्कल्पनया षट्कर्मणामुत्कृष्टप्रदेशबन्धकानां भागार्थं कृते भागहरे "दशलक्षाणि" (१००००००) इत्यनन्तसंख्या लब्धिः समागच्छतीति परिभावितम् । अतो दशलक्षतममेकं भागं विश्लिष्य नवनवत्युत्तरनवशताधिकनवनवतिसहस्रोत्तरनवलक्षाणि भागा ज्ञानावरणीयादिषट्कर्मणामनुत्कृष्टप्रदेशबन्धकानां भवन्ति । ते च दर्शितासत्कल्पनया अनन्ता एव । एवं मोहनीयायुषोरुत्कृष्टप्रदेशबन्धकानां भागार्थं कृते भागहरे "लक्षम्" (१०००००) इत्यनन्तसंख्या भागफलं समागच्छति । अतो लक्षतममेकं भागं विश्लिष्य शेषाः सर्वे "नवनवत्यधिकनवशतोत्तरनवनवतिसहस्राणि" भागा मोहनीयायुषोरनुत्कृष्टप्रदेशबन्धकानां भवन्ति ॥३४५॥

अथादेशतः सप्तकर्मणामुत्कृष्टप्रदेशस्यानुत्कृष्टप्रदेशस्य च बन्धकानां भागप्ररूपणां कर्तुमिच्छुरादौ तावद्यासु मार्गणासूत्कृष्टप्रदेशबन्धकानामेकोऽनन्ततमो भागस्ता गाथाद्विकेनाह—

सत्तण्ह अणंतंसो जेट्ठपएसस्स तिरियकायेसुं ।
उरलदुगकम्मणेसुं णपुंसगे चउकसायेसुं ॥३४६॥
अण्णाणदुगे अयते अचक्खुदंसणतिअसुहलेसासुं ।
भवियेयरमिच्छेसुं असण्णिआहारगियरेसुं ॥३४७॥

(प्रे०) 'सत्तण्ह' इत्यादि, अत्र 'बन्धकाः' इत्यनुवर्तते, आयुरन्तरा सप्तकर्मणामुत्कृष्टप्रदेशबन्धका "अनन्ततमो" भागो भवन्ति । कासु मार्गणासु ? इत्याह 'तिरिय' इत्यादि, तिर्यगोघे, काययोगौघे, औदारिकद्विके, कार्मणकाये, नपुंसकवेदे, कषायचतुष्के, [द्वितीयार्धवृत्तिः] मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, तिसृष्वप्रशस्तलेश्यासु, भव्ये, तदितरेऽभव्ये, मिथ्यात्वे, असंज्ञिनि, आहारकानाहारकयोश्चेति त्रयोविंशतिमार्गणासु । अत्रेदं बीजम्–एतासु मार्गणासु सप्तप्रकृतीनां बन्धका जीवा अनन्ताः सन्ति । तत्रोत्कृष्टप्रदेशबन्धकाः काययोगौघादिषु कतिपयमार्गणासु षण्णां कर्मणां संख्याताः मोहनीयस्य चाऽसंख्याताः, तिर्यगोघादिषु कतिपयमार्गणासु सप्तानामपि कर्मणामसंख्याताः सन्ति । ततः संख्यातेनाऽसंख्यातेन वा राशिनाऽनन्तसंख्यायां विभाजितायामनन्तसंख्या लब्धिः समागच्छति । ततः सप्तकर्मणामुत्कृष्टप्रदेशबन्धका अनन्ततमो भागो भवति । सामान्यवक्तव्यतायां यथाऽसत्कल्पनया परिभावितं यथासंभवं तथैवात्रापि परिभावनीयम् ॥३४६।३४७॥

साम्प्रतं यासु मार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धकानां संख्याततमो यासु चासंख्याततमो भागस्ताः सार्धवृत्तेन निरूपयति—

पज्जमणुसमणुसीसुं सव्वत्थाहारदुगअवेएसुं ।
मणणाणसंयमेसुं समइअछेअपरिहारसुहुमेसुं ॥३४८॥(गीतिः)
होअन्ति संखभागो असंखभागो हवन्ति सेमासुं ॥

(प्रे०) 'पज्जमणुस' इत्यादि, पर्याप्तमनुष्ये, मानुष्याम्, सर्वार्थे इति पदैकदेशेन पदसमुदायस्यापि गम्यमानत्वात् सर्वार्थसिद्धे, देवमार्गणायामनुत्तरदेवभेदेषु योऽन्तिमः सर्वार्थसिद्धदेवभेदस्तस्मिन्नित्यर्थः, आहारकाहारकमिश्रलक्षणाहारकद्विके, अवेदे, मनःपर्यवज्ञाने, संयमौघे, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायेषु चेति द्वादशमार्गणासु 'होअन्ति संखभागो' इति, सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धकाः संख्यातभागः, मध्यमपदलोपिसमासात् 'संख्याततमो' भागो भवन्ति । तथाहि–एतासु मार्गणासु जीवानां संख्यातत्वात् सप्तकर्मणां बन्धका अपि संख्याता एव । तत्राप्युत्कृष्टप्रदेशबन्धकास्तु ततोऽपि न्यूनाः संख्याताः । ततोऽल्पसंख्यातसंख्ययाऽधिकायां

संख्यातसंख्यायां विभाजितायां संख्यातराशिरेव लब्धिः समागच्छति, नासंख्यातराशिः, नाप्यनन्तराशिः। तत एतासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां जीवानां संख्याततमो भागोऽस्ति।

असत्कल्पनया यथा—सप्तकर्मणां बन्धकाः 'द्वादश' कल्प्यन्ते। तेषामुत्कृष्टप्रदेशबन्धकाश्च 'त्रयः' कल्प्यन्ते। ततः त्रिसंख्यया द्वादशसंख्यायां विभाजितायां लब्धिः "चत्वारि" समागच्छति। ततः सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः तेषां बन्धकेषु सर्वजीवेषु "चतुर्थरूपे संख्याततमे" भागे वर्तन्ते ॥३४८॥

"असंखभागो हवन्ति सेसासु" इति, शेषासु निगदितवर्जितासु पञ्चत्रिंशदधिकशतमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धका जीवा असंख्यभागः, अत्रापि मध्यमपदलोपिसमासात् "असंख्याततमो भागो" भवन्ति। तथाहि—शेषासु मार्गणासु सप्तप्रकृतीनां बन्धका जीवा एकेन्द्रियादिषु कासुचिदनन्ताः नरकादिषु कासुचिच्चासंख्याताः सन्ति। तत्र यासु बन्धका जीवा अनन्तास्तासूत्कृष्टप्रदेशबन्धका बन्धकसर्वजीवेभ्यो न्यूनप्रमाणा अनन्ताः सन्ति। यासु बन्धकाः सर्वजीवा असंख्यातास्तासूत्कृष्टप्रदेशबन्धका बन्धकसर्वजीवेभ्यो न्यूनप्रमाणा असंख्याताः सन्ति। अतो न्यूनानन्तसंख्यया बृहदनन्तसंख्यायां, न्यूनासंख्यातसंख्यया च बृहदसंख्यातसंख्यायां विभाजितायां भागफलमसंख्यातसंख्या प्राप्यते। अतः सर्वासु शेषमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धका जीवाः सप्तप्रकृतीनां बन्धकेषु सर्वजीवेषु "असंख्याततमे" भागे वर्तन्ते।

असत्कल्पनयैवं परिभावनीयम्—अत्र सप्तदशतः प्रभृति सहस्रं यावदसंख्यातत्वं कल्पितम्। एकेन्द्रियादिकतिपयमार्गणासु सप्तकर्मणां बन्धका जीवा "एककोटिः" (१०००००००) इत्यनन्ताः कल्प्यन्ते। सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाश्च "शतसहस्राणि (१०००००) इत्यनन्ताः कल्प्यन्ते। ततः सप्तकर्मणां बन्धकानां जीवानाम् "एककोटिः" (१०००००००) इत्यनन्तसंख्यायां सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां 'शतसहस्राणि' इत्यनन्तसंख्यया विभाजितायां लब्धिः 'एकशतम्' (१००) इत्यसंख्यसंख्या समागच्छति। तत एकेन्द्रियादिमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवाः सप्तकर्मणां बन्धकेषु सर्वजीवेषु शततमरूपेऽसंख्याततमे भागे वर्तन्ते। एवं नरकादिमार्गणासु सप्तकर्मणां बन्धका जीवाः "अष्टशतानि" (८००) इत्यसंख्याताः कल्प्यन्ते। सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाश्च "विंशतिः" (२०) इत्यसंख्याताः कल्प्यन्ते। ततः "अष्टशतानि" (८००) इत्यसंख्यातसंख्यायां "विंशतिः' (२०) इत्यसंख्यातसंख्यया विभाजितायां लब्धिः 'चत्वारिंशद्" (४०) इत्यसंख्यातसंख्या समागच्छति। अतो नरकादिमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवाः सप्तकर्मणां बन्धकेषु सर्वजीवेषु चत्वारिंशद्रूपेऽसंख्याततमे भागे वर्तन्ते।

शेषमार्गणाश्चेमाः—सर्वनरकभेदाः, तिर्यगोघं विना सर्वतिर्यग्भेदाः, मनुष्यौघापर्याप्तमनुष्यौ, सर्वार्थसिद्धवन्तरा निखिलदेवभेदाः, कृत्स्नेन्द्रियभेदाः, सप्तकायभेदाः, पञ्चमनःपञ्चवचनवैक्रिय-

वैक्रियमिश्रकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, शुभत्रिलेश्याः, मिथ्यात्वमन्तरा सर्वस्तसम्यक्त्वमार्गणाः संज्ञी चेति पञ्चत्रिंशदधिकशतं शेषमार्गणाः।

अथोत्तरार्धेन सर्वमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां भागं चिन्तयति—

## सव्वासु सेसभागा अगुरुपएसस्स विण्णेया ॥३४९॥

(प्रे०) 'सव्वासु' इत्यादि, 'सप्तानाम्' इति 'बन्धकाः' इति चानुवर्तते, सर्वमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः शेषभागाः=उत्कृष्टप्रदेशबन्धकानामेकं भागं विहाय शेषसर्वभागा विज्ञेयाः । इदमुक्तं भवति—"सत्तण्ह अणंतंसो" इत्यादिगाथाद्विकेन निरूपितासु त्रयोविंशतिमार्गणासु भागहरे भागफलत्वेन प्राप्तेष्वनन्तभागेषूत्कृष्टप्रदेशबन्धकानामेकमनन्ततमं भागं विहाय शेषाः सर्वेऽनन्तभागा अनुत्कृष्टप्रदेशबन्धकानां भवन्ति । एवं "पज्जमणुस" इत्यत्र निरूपितासु द्वादशमार्गणासूत्कृष्टप्रदेशबन्धकानामेकं संख्याततमं भागमन्तरा शेषाः सर्वे संख्याता भागा अनुत्कृष्टप्रदेशबन्धकानां भवन्ति । एवं "असंखभागो हवन्ति सेसासु" इत्यत्र शेषत्वेन निरूपितासु सर्वनारकादिपञ्चत्रिंशदधिकशतमार्गणासूत्कृष्टप्रदेशबन्धकानामेकमसंख्याततमं भागं विना शेषा अशेषा असंख्यातभागा अनुत्कृष्टप्रदेशबन्धकानां भवन्ति ।

असत्कल्पनया चैवम्—"सत्तण्ह अणंतसो" इत्यत्रासत्कल्पनया भावना ओघवद् विधेयेत्यतिदिष्टम् । अतः सामान्यवक्तव्यतानुसारेण काययोगौघादिषु कतिपयमार्गणासु षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकानां भागार्थं भागहरे कृते भागफलत्वेन दशलक्षाणि प्राप्यन्ते । अतो दशलक्षतममेकं भागं विहाय शेषा नवनवत्यधिकनवशतोत्तरनवनवतिसहस्राधिकनवलक्षाणि" भागाः षण्णां कर्मणामनुत्कृष्टप्रदेशबन्धकानां भवन्ति । तथा काययोगादिषु मोहनीयस्य तिर्यगोघादिषु च सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां भागार्थं भागहरे कृते भागफलत्वेन लक्षं प्राप्यते । अतो लक्षतममेकं भागमन्तरा शेषा "नवनवत्यधिकनवशतोत्तरनवनवतिसहस्राणि" भागा अनुत्कृष्टप्रदेशबन्धकानां भवन्ति । एवं "पज्जमणुसमणुसीसु" इत्यत्र पर्याप्तमनुष्यादिमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाश्चतुर्थे भागे वर्तन्ते इति परिभावितम् । अतः चतुर्थमेकं भागं विहाय शेषेषु "त्रिषु भागेषु" सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका वर्तन्ते । एवं "असंखभागो हवन्ति सेसासु" इत्यत्र नरकादिमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः चत्वारिंशे भागे वर्तन्ते इति परिभावितम् । अतः चत्वारिंशमेकं भागं विना शेषेषु "नवत्रिंशत्सु भागेषु" सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका वर्तन्ते । तथैकेन्द्रियप्रमुखमार्गणासूत्कृष्टप्रदेशबन्धकाः शततमे भागे वर्तन्ते इति परिभावितम् । अतः शततममेकं भागमृते शेषेषु "नवनवतिभागेषु" सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका वर्तन्ते इति । ननु पूर्वं भङ्गप्ररूपणायां तिर्यगोघादिमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशस्य कदाचित् "सर्वबन्धकाः" इति तृतीयो भङ्गः सम्भवतीति निरूपितम् । अतोऽत्र तिर्यगोघादिमार्गणासु सप्तप्रकृ-

तीनामनुत्कृष्टप्रदेशबन्धकाः शेषभागेषु वर्तन्ते इति यथा निरूपितं तथा "सर्वभागेषु" वर्तन्ते इत्यपि निरूपणीयमिति चेद्, उच्यते, भो महानुभाव ! भागनिरूपणव्याख्या किं विस्मृता ? तत्र हि निगदितं यद् "भागप्ररूपणा नाम यदा विवक्षितकर्मण उत्कृष्टप्रदेशबन्धका जीवा उत्कृष्टपदे वर्तन्ते तदा विवक्षितकर्मणो बन्धकेषु सर्वजीवेषु विवक्षितकर्मण उत्कृष्टप्रदेशबन्धका अनुत्कृष्टप्रदेशबन्धकाश्च जीवाः प्रत्येकं कतिषु भागेषु वर्तन्ते इति प्रतिपादनम्" । ततो यदा विवक्षितकर्मणोऽनुत्कृष्टप्रदेशबन्धकाः सर्वे जीवाः सन्ति तदोत्कृष्टप्रदेशबन्धकानामभावेनोत्कृष्टप्रदेशबन्धकानामुत्कृष्टपदेऽवर्तमानत्वाद् भागप्ररूपणायाः कुतोऽवकाशः ? ततोऽत्र तिर्यगोघादिमार्गणास्वनुत्कृष्टप्रदेशबन्धकानां कदाचित् सर्वभागेषु सत्त्वेऽपि सर्वभागेषु वर्तन्ते इति न निरूपितम् ॥३४९॥

अथायुषो बन्धकानां भागं विभावयिषुरादौ तावद्यासु मार्गणास्वायुरुत्कृष्टप्रदेशबन्धकानामनन्ततमो भागस्ता गाथाद्विकेन प्ररूपयति—

आउस्स अणंतंसो जेट्ठपएसस्स तिरियकायेसुं ।
उरलउरलमीसेसुं णपुंसगे चउकसायेसुं ॥३५०॥
अण्णाणदुगे अयते अचक्खुदंसणतिअसुहलेसासुं ।
भवियेयरमिच्छेसुं असण्णिआहारगेसुं च ॥३५१॥

(प्रे०) 'आउस्स' इत्यादि, अत्र "बन्धकाः" इत्यनुवर्तते । आयुष उत्कृष्टप्रदेशबन्धका जीवा आयुर्बन्धकसर्वजीवापेक्षया एकोऽनन्ततमो भागः सन्ति, अर्थादनन्ततमे भागे वर्तन्ते । कासु मार्गणासु ? इत्याह—'तिरिय' इत्यादि, तिर्यगोघे, काययोगसामान्ये, औदारिकौदारिकमिश्रयोः, नपुंसकवेदे, कषायचतुष्के, [द्वितीयार्यावृत्तिः] मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अशुभलेश्यात्रिके, भव्ये, तदितरेऽभव्ये, मिथ्यात्वे, असंज्ञिनि, आहारके चेत्येकविंशतिमार्गणासु ।

अत्रेयं भावना—एतासु मार्गणास्वायुषो बन्धका जीवा अनन्ताः सन्ति । परमुत्कृष्टप्रदेशबन्धकास्तु औदारिकमिश्रेऽपर्याप्तसंज्ञिनः, असंज्ञिनि पर्याप्तासंज्ञिपञ्चेन्द्रियाः शेषासु च नवदशमार्गणासु पर्याप्तसंज्ञिजीवा इति "असंख्याता" एव सन्ति । ततोऽसंख्यातसंख्ययाऽनन्तसंख्यायां विभाजितायां "अनन्तसंख्या" लब्धिः समागच्छति । तत आयुरुत्कृष्टप्रदेशबन्धका जीवा अनन्ततमे भागे वर्तन्ते । अत्रासत्कल्पनया भावना तु सामान्यवक्तव्यतायामायुःप्रकृतिमाश्रित्य यथा कृता तथा कर्तव्या ॥३५०।३५१॥

साम्प्रतं कासु मार्गणास्वायुरुत्कृष्टप्रदेशबन्धका जीवाः संख्यातभागः कासु चासंख्यातभागः इति सार्धसूत्रेण निरूपयति—

पज्जमणुसमणुसीसुं आहारदुगाणताइदेवेसुं ।
मणणाणसंयमसमइअछेअपरिहारसुक्खइएसुं ॥३५२॥ (गीतिः)

## होअन्ति संखभागो असंखभागो हवन्ति सेसासु ।

(प्रे०) 'पज्जमणुस' इत्यादि, पर्याप्तमनुष्यमानुष्योः, आहारकाहारकमिश्रलक्षणाहारकद्विके, आनतादिदेवेषु–नवमे आनतदेवलोके, दशमे प्राणतदेवलोके, एकादशे आरणदेवलोके, द्वादशेऽच्युतदेवलोके, नवसु ग्रैवेयकेषु, पञ्चसु अनुत्तरेषु चेत्यानतादिदेवानामष्टादशभेदेषु, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिषु, शुक्ललेश्यायां क्षायिकसम्यक्त्वे चेति नवविंशतिमार्गणासु "होअन्ति संखभागो" इति, आयुर्बन्धकसर्वजीवापेक्षयाऽऽयुरुत्कृष्टप्रदेशबन्धका जीवाः संख्याततमभागो भवन्ति, संख्याततमे भागे वर्तन्ते इत्यर्थः ।

कथम् ? इति चेद् , उच्यते, एतासु मार्गणासु पर्याप्तमनुष्यादिषु कासुचिद् मार्गणासु जीवा एव संख्याताः, आनतादिषु कासुचिद् मार्गणासु जीवानामसंख्यातत्वेऽप्यायुषो बन्धकाः परिमाणद्वारे वक्ष्यमाणयुक्त्या संख्याता एव । तत एतासु सर्वासु मार्गणासु आयुरुत्कृष्टप्रदेशबन्धकाः संख्याता एवेति सुतरां सिद्धं भवति । नवरमुत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धकाः संख्यातगुणा भवन्ति । ततो लघुसंख्यातसंख्यया बृहत्संख्यातसंख्यायां विभाजितायां संख्यातसंख्यैव लब्धिः समागच्छति । अत्रासत्कल्पनया भावना "पज्जमणुसमणुसीसु" इत्यत्र सप्तकर्माण्याश्रित्य यथा कृता तथा कर्तव्या ॥२५२॥

"असंखभागो हवन्ति सेसासु" इति, निगदितेतरासु त्रयोदशशतमार्गणासु आयुरुत्कृष्टप्रदेशबन्धका आयुर्बन्धकसर्वजीवापेक्षया "असंख्याततमभागः" भवन्ति । अत्रेयं भावना–शेषासु मार्गणासु आयुषो बन्धका नरकादिषु कतिपयमार्गणासु मार्गणास्थानां जीवानामसंख्यातत्वेनासंख्याताः, एकेन्द्रियादिषु कतिपयमार्गणासु मार्गणास्थानां जीवानामनन्तत्वेनानन्ताः सन्ति । तथा यासु मार्गणासु आयुषो बन्धका असंख्यातास्तासु आयुरुत्कृष्टप्रदेशबन्धका अप्यसंख्याताः सन्ति । नवरमायुषो बन्धकेभ्योऽसंख्यातभागमात्राः । एवं यासु मार्गणासु आयुषो बन्धका अनन्तास्तासु आयुरुत्कृष्टप्रदेशबन्धका अप्यायुषो बन्धकेभ्योऽसंख्यातभागमात्रा अनन्ताः सन्ति । ततोऽत्र द्वौ भागहारौ कर्तव्यौ । तत्रैकस्तावद् बृहदनन्तभाज्यराशिरल्पानन्तभाजकराशिश्चेति । द्वितीयस्तु बृहदसंख्यातभाज्यराशिरल्पासंख्यातभाजकराशिश्चेति । द्वयोरपि भागहारयोर्लब्धिस्तु असंख्यातराशिरेव समागच्छति । ततः शेषासु मार्गणासु आयुरुत्कृष्टप्रदेशबन्धका आयुर्बन्धकसर्वजीवानामसंख्याततमे भागे वर्तन्ते । पूर्वम् "असंखभागो हवन्ति सेसासु" इत्यत्र सप्तकर्माण्याश्रित्यासत्कल्पनया यथा परिभावितं तथैवात्रापि परिभावनीयम् । शेषमार्गणाश्चेमाः–निखिलनरकभेदाः, तिर्यगोघमन्तरा चत्वारः तिर्यग्भेदाः, मनुष्यौघापर्याप्तमनुष्यौ, आनतप्रमुखाष्टादशभेदैर्विना शेषा द्वादशदेवभेदाः, सर्वेन्द्रियभेदाः, कृत्स्नकायभेदाः, पञ्चमनःपञ्चवचनवैक्रियकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघवेदकसास्वादनानि, संज्ञी चेति त्रयोदशोत्तरशतं शेषमार्गणाः ।

अथोत्तरार्धेन सर्वमार्गणासु आयुरनुत्कृष्टप्रदेशबन्धकानां भागप्ररूपणां चिकीर्षुराह—

**सव्वासु सेसभागा अगुरुपएसस्स विण्णेया ॥३५३॥**

(प्रे०) 'सव्वासु' इत्यादि, "आयुष" इति "बन्धकाः" इति चानुवर्तते, सर्वासु त्रिषष्ट्यधिकशतमार्गणासु आयुरनुत्कृष्टप्रदेशबन्धका जीवाः शेषभागाः=आयुरुत्कृष्टप्रदेशबन्धकानामेकमनन्ततमादिभागमन्तरा शेषाः सर्वेऽपि भागा विज्ञेयाः। अर्थादायुरुत्कृष्टप्रदेशबन्धकानामेकमनन्ततमादिभागं त्यक्त्वा शेषाः निखिला अनन्तादयो भागा आयुरनुत्कृष्टप्रदेशबन्धकानां भवन्ति। असत्कल्पनया भावना तु पूर्वं "सव्वासु सेसभागा अगुरुपएसस्स विण्णेया" इत्यत्र मोहनीयस्यानुत्कृष्टप्रदेशबन्धकानां भागार्थं यथा कृता तथा विधेया। नवरं तत्रानतादिदेवभेदेषु, शुक्ललेश्यायां क्षायिकसम्यक्त्वे च मोहनीयस्यानुत्कृष्टप्रदेशबन्धका एकात्रचत्वारिंशद्भागेषु वर्तन्ते इत्युक्तम्, परमत्र तु तासु मार्गणासु त्रिषु भागेषु वर्तन्ते इति वक्तव्यम् ॥३५३॥

सम्प्रति जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च भागं प्रतिपिपादयिषुरादौ तावदष्टकर्मसु सामान्यवक्तव्यतामाह—

**भागो असंखियतमो हस्सपएसस्स बंधगाऽट्ठण्हं।**
**अण्णस्स बंधगा खलु णेया भागा असंखेज्जा ॥३५४॥**

(प्रे०) 'भागो' इत्यादि, अष्टकर्मणां जघन्यप्रदेशबन्धकाः "असंख्यतमः"=असंख्याततमो भागो ज्ञेयाः। नन्वयं कथमुपपद्यते इति चेद्, उच्यते, सप्तकर्मणां जघन्यप्रदेशबन्धका भवप्रथमसमयस्थाः सूक्ष्मापर्याप्तनिगोदजीवास्तथा आयुःकर्मणो जघन्यप्रदेशबन्धकाः स्वायुस्त्रिभागप्रथमसमयस्थाः सूक्ष्मापर्याप्तनिगोदजीवाः सन्ति। ते द्विविधा अपि जीवा अनन्तपरिमाणाः सन्ति। नवरं तत्तत्कर्मणो बन्धकेभ्यो जीवेभ्यस्तत्तत्कर्मणो जघन्यप्रदेशबन्धकास्ते द्विविधा अपि जीवा न्यूनपरिमाणाः सन्ति। ततो लघ्वनन्तसंख्यया बृहदनन्तसंख्यायां विभाजितायां भागफलम् "असंख्यातसंख्यैव" लभ्यते। ततोऽष्टकर्मणां जघन्यप्रदेशबन्धकाः "असंख्याततमे" भागे वर्तन्ते, न संख्याततमे, नाप्यनन्ततमे। अत्रासत्कल्पना तु पूर्वम् "असंखभागो हवन्ति सेसासु" इत्यत्रैकेन्द्रियादिमार्गणासु यथा कृता तथा कर्तव्या।

'अण्णस्स' इत्यादि, पूर्वार्धेनाष्टकर्मणां जघन्यप्रदेशबन्धकाः कतिथे भागे वर्तन्ते इत्युक्तमतो जघन्यप्रदेशादन्यस्य अष्टकर्मणामजघन्यप्रदेशस्य बन्धकाः, खलुशब्दो वाक्यालङ्कारे, "असंख्येयाः" भागा ज्ञेयाः। तथाहि–पूर्वार्धे कृते भागहरे "असंख्याता" भागफलं समागतम्। तस्माद् भागफलाद् जघन्यप्रदेशबन्धकानामेकमसंख्याततमं भागं विश्लिष्य यावन्तो भागा अवतिष्ठन्ते ते सर्वेऽप्यजघन्यप्रदेशबन्धकानां भवन्ति। भागफलादेकस्यासंख्याततमभागस्य विश्लेषे कृतेऽपि शेषभागा "असंख्याता एव" अवतिष्ठन्ते, असंख्यातस्यासंख्यातभेदभिन्नत्वाद्। अतोऽष्टकर्मणाम-

जघन्यप्रदेशबन्धका जीवा असंख्यातेषु भागेषु वर्तन्ते इति सिद्धम् । अत्रासत्कल्पनया पूर्वं "सव्वासु सेसभागा अणुक्कस्सस्स विण्णेया" इत्यत्रैकेन्द्रियादिमार्गणासु भावितरीत्या नवनवतिभागेषु वर्तन्ते ॥२५४॥

साम्प्रतं मार्गणासु सप्तकर्मणां जघन्याजघन्यप्रदेशबन्धकानां भागप्ररूपणां चिकीर्षुरादौ तावद्यासु मार्गणासु जघन्यप्रदेशबन्धकाः "संख्याततमे भागे" वर्तन्ते ताः सार्धवृत्तेन निरूपयति—

पज्जमणुसमणुसीसुं सव्वत्थाहारदुगअवेएसुं ।
मणणाणसंयमेसुं समइअछेअपरिहारसुहुमेसुं ॥२५५॥ [गीतिः]
होअन्ति संखभागो हस्सपएसस्स आउवज्जाणं ।

(प्रे०) "पज्जमणुस" इत्यादि, पर्याप्तमनुष्यमानुष्योः, सर्वार्थसिद्धदेवे, आहारकाहारकमिश्रलक्षणाहारकद्विके, अवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायेषु चेति द्वादशमार्गणासु "होअन्ति संखभागो" इत्यादि, "बन्धकाः" इत्यनुवर्तते, आयुर्वर्जानां ज्ञानावरणीयादिसप्तकर्मणां जघन्यप्रदेशबन्धकाः संख्याततमो भागो भवन्ति । सप्तकर्मणां बन्धकेषु सर्वजीवेषु सप्तकर्मणां जघन्यप्रदेशबन्धका जीवाः संख्याततमे भागे वर्तन्ते इत्यर्थः । अत्र भावना तु सुगमा । पूर्वमेतासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां संख्याततमो भागो यथोपपादितस्तथात्राप्युपपादनीयः । एवमसत्कल्पनया भावनाऽपि सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां भागनिरूपणे यथा कृता तथैव कर्तव्या ॥२५५॥

अथोत्तरार्धेन शेषासु सप्तकर्मणां जघन्यप्रदेशबन्धकानां तथा सर्वासु मार्गणास्वजघन्यप्रदेशबन्धकानां भागं चिन्तयति—

सेसासु असंखंसो सव्वह इयरस्स सेसंसा ॥२५६॥

(प्रे०) "सेसासु" इत्यादि; अनन्तरोक्तव्यतिरिक्तासु अष्टपञ्चाशदधिकशतमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकाः असंख्याततमे भागे वर्तन्ते इत्यर्थः । कस्माद् ? इति चेद् , उच्यते, शेषमार्गणाप्रविष्टासु नरकादिमार्गणासु जीवा असंख्याताः, तिर्यगोघादिमार्गणासु चानन्ताः सन्ति । तत्र यासु मार्गणासु जीवा असंख्यातास्तासु जघन्यप्रदेशबन्धका अप्यसंख्याता एव । यासु चानन्ता जीवास्तासु जघन्यप्रदेशबन्धका अप्यनन्ता एव । नवरं जघन्यप्रदेशबन्धकानामसंख्यातत्वमनन्तत्वं च मार्गणास्थानां जीवानामसंख्यातत्वादनन्तत्वाच्च न्यूनतरं बोध्यम् । कनीयोऽनन्तसंख्यया महदनन्तसंख्यायां भाजितायां तथाल्पीयोऽसंख्यातसंख्यया बृहदसंख्यातसंख्यायां विभाजितायां भागफलत्वेनासंख्यातसंख्यैवागच्छति । ततः शेषासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धका जीवाः सप्तकर्मणां बन्धकेषु सर्वजीवेषु "असंख्याततमे भागे" वर्तन्ते ।

नन्वत्र को विशेषः ? येन तिर्यगोघादिमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः "अनन्ततमे भागे" वर्तन्ते इत्युक्तम्, अत्र च जघन्यप्रदेशबन्धका असंख्याततमे भागे वर्तन्ते इत्युक्तमिति चेद्, शृणु, तिर्यगोघादिमार्गणासु कासुचिदुत्कृष्टप्रदेशबन्धस्वामिनः संज्ञिनः सन्ति । ते चोत्कृष्टतोऽप्यसंख्याता एव । कासुचिच्च सूक्ष्मसम्परायस्था जीवाः सन्ति । ते चोत्कृष्टतोऽपि संख्याता एव । ततस्तिर्यगोघादिमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धकानामसंख्यातानां कासुचिच्च षण्णामुत्कृष्टप्रदेशबन्धकानां संख्यातानां च प्राप्यमाणत्वात् क्रमशोऽसंख्याततसंख्यया संख्याततसंख्यया च मार्गणास्थानां जीवानामनन्तसंख्यायां विभाजितायां भागफलत्वेनानन्तसंख्याऽऽगच्छतीति तिर्यगोघादिमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धकानामनन्ततमभागत्वमुपपद्यते । परन्तु जघन्यप्रदेशबन्धस्वामिनस्तु अपर्याप्तसूक्ष्मनिगोदाः सन्ति । ते च जघन्यप्रदेशबन्धकत्वेन सदैवानन्ता एव प्राप्यन्ते । ततोऽत्र भावितरीत्या तिर्यगोघादिमार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धकानामसंख्याततमभागत्वमेवोपपद्यते । शेषमार्गणाश्चेमाः—पर्याप्तमनुष्यमानुषीसर्वार्थसिद्धदेवैर्विना निखिलगतिभेदाः, समेन्द्रियभेदाः, कृत्स्नकायभेदाः, आहारकद्विकमन्तरा सर्वयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, मनःपर्यवज्ञानं विना निखिलज्ञानमार्गणाभेदाः, देशविरत्यसंयमौ, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, निखिलसम्यक्त्वमार्गणाभेदाः, द्वौ संज्ञिमार्गणाभेदौ, द्वौ आहारकमार्गणाभेदौ च । "सव्वह इयरस्स सेसंसा" इति । सर्वासु मार्गणासु अजघन्यप्रदेशबन्धकाः शेषा भागाः, सन्तीत्युपस्कारः । तद्यथा—पर्याप्तमनुष्यादिद्वादशमार्गणासु जघन्यप्रदेशबन्धकानामेकं संख्याततमं भागं विहाय शेषाः संख्यातभागा अजघन्यप्रदेशबन्धकानां भवन्ति । तथा नरकौघप्रमुखाष्टपञ्चाशदधिकशतमार्गणासु जघन्यप्रदेशबन्धकानामेकमसंख्याततमं भागमन्तरा शेषा असंख्याता भागा अजघन्यप्रदेशबन्धकानां सन्ति । असत्कल्पनया भावना तु सुगमत्वात् पूर्वदर्शितदिशा स्वयमेव विधेया ॥३५६॥

साम्प्रतमायुषो जघन्याजघन्यप्रदेशबन्धकानां भागप्ररूपणां प्रचिकंसुरादौ तावद्यासु मार्गणासु जघन्यप्रदेशबन्धकाः "संख्याततमे" भागे वर्तन्ते ताः सार्धवृत्तेन प्रतिपादयति—

**पज्जमणुसमणुसीसुं आहारदुगाणताइदेवेसुं ।**
**मणणाणसंयमसमइअछेअपरिहारसुक्कखइएसुं ॥२५७॥ (गीतिः)**
**आउस्स संखभागो हस्सपएसस्स बंधगा णेया ॥**

(प्रे०) 'पज्जमणुस' इत्यादि, पर्याप्तमनुष्यमानुष्योः, आहारकद्विके, आनताद्यष्टादशदेवेषु, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिषु, शुक्ललेश्यायां, क्षायिकसम्यक्त्वे चेत्येकात्रिंशन्मार्गणासु आयुषो जघन्यप्रदेशबन्धकाः संख्याततमो भागो ज्ञेयाः, संख्याततमे भागे वर्तन्ते इति यावद् । अत्र भावना पूर्वं "पज्जमणुसीसु" इत्यत्रायुरुत्कृष्टप्रदेशबन्धकानां भागप्ररूपणायां यथा कृता तथा कर्तव्या ॥३५७॥

अथोत्तरार्धेन शेषासु मार्गणासु जघन्यप्रदेशबन्धकानां तथा सर्वासु मार्गणास्वजघन्यप्रदेश-बन्धकानां भागं विचिन्त्य प्रकृतप्ररूपणां पारयति—

**सेसासु असंखंसो सव्वेह इयरस्स सेसंसा ॥३५८॥**

(प्रे०) '**सेसासु**' इत्यादि, अनन्तरोक्तेतरासु चतुस्त्रिंशदधिकशतमार्गणासु आयुषो जघन्य-प्रदेशबन्धका 'असंख्याततमो भागो' भवन्ति। अत्र भागभावना तु पूर्वं "असखभागो हवन्ति सेसासु" इत्यत्रायुरुत्कृष्टप्रदेशबन्धकानां भागस्योपपत्तौ यथा कृता तथा कर्तव्या। नवरं तत्र तिर्यगोघप्रमु-खैकविंशतिमार्गणासु भावना न कृताऽत्र तु तास्वपि कर्तव्या। नन्वत्र को विशेषः ? येन तिर्यगो-घादिमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकानामनन्ततमभागत्वमुपपद्यते, आयुर्जघन्यप्रदेशबन्धकानाञ्चा-संख्याततमभागत्वमुपपद्यते इति चेद्, उच्यते, तिर्यगोघादिमार्गणासु जीवा अनन्ताः सन्ति। तथा-ऽऽयुरुत्कृष्टप्रदेशबन्धकाः असंख्याताः सन्ति, संज्ञिजीवानामायुरुत्कृष्टप्रदेशबन्धस्वामित्वाद्। ततो-ऽसंख्यातसंख्ययाऽनन्तसंख्यायां विभाजितायां भागफलमनन्तसंख्या लभ्यते। अतः तिर्यगोघादि-मार्गणासु आयुरुत्कृष्टप्रदेशबन्धकानामनन्ततमभागत्वमुपपद्यते। अथायुषो जघन्यप्रदेशबन्धकास्तु अनन्ताः सन्ति, सूक्ष्मनिगोदानामप्यायुर्जघन्यप्रदेशबन्धस्वामित्वाद्। ततोऽल्पीयसनन्तसंख्यया बृहदनन्तसंख्यायां विभाजितायां लब्धिरसंख्यातसंख्या प्राप्यते। ततस्तिर्यगोघादिमार्गणासु आयुषो जघन्यप्रदेशबन्धकानामसंख्याततमभागत्वमुपपद्यते।

शेषमार्गणाश्चेमाः—निखिलनरकभेदाः, समस्ततिर्यग्गतिभेदाः, मनुष्यौघाऽपर्याप्तमनुष्यौ, देव-सामान्यभवनपतिव्यन्तरज्योतिष्कसौधर्मेशानसनत्कुमारमाहेन्द्रब्रह्मलान्तकमहाशुक्रसहस्रारूपा द्वादश-देवभेदाः, अशेषेन्द्रियभेदाः, कृत्स्नकायभेदाः, पञ्चमनःपञ्चवचनकायसामान्यौदारिकद्विकवैक्रिय-काययोगाः, वेदत्रिकं, कषायचतुष्कं, मतिश्रुतावधिज्ञानानि, मतिश्रुताज्ञाने, विभङ्गज्ञानम्, देश-विरत्यसंयमौ, दर्शनत्रिकं, कृष्णनीलकापोततेजःपद्मलेश्याः, भव्याभव्यौ, सम्यक्त्वौघवेदकसास्वा-दनमिथ्यात्वानि, संज्ञी, असंज्ञी आहारकश्च। '**सव्वेह इयरस्स सेसंसा**' इति, सर्वासु मार्ग-णासु आयुरजघन्यप्रदेशबन्धकानां शेषभागाः, सन्तीत्युपस्कारः। तद्यथा—पर्याप्तमनुष्यादिनवविंशति-मार्गणासु जघन्यप्रदेशबन्धकानामेकं संख्याततमं भागं विहाय शेषाः संख्यातभागा अजघन्यप्रदेश-बन्धकानां भवन्ति। तथा शेषासु चतुस्त्रिंशदधिकशतमार्गणासु जघन्यप्रदेशबन्धकानामेकासंख्याततमं भागं विहाय शेषा असंख्यातभागा अजघन्यप्रदेशबन्धकानां भवन्ति ॥३५८॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे नवमं भागद्वारं समाप्तम् ॥



ओघतः—अष्टकर्मणामुत्कृष्टप्रदेशबन्धका अनन्ततमे भागे, अनुत्कृष्टप्रदेशबन्धका अनन्तेषु भागेषु वर्तन्ते (गाथा० ३४५)। अष्टकर्मणां जघन्यप्रदेशबन्धका असंख्याततमे भागे, अजघन्यप्रदेशबन्धका असंख्यातेषु भागेषु वर्तन्ते ( गाथा० ३५४ )।

| | | | गति० | इंद्रिय. | काय० | योग० | वेद० | कषाय. | ज्ञान० | संयम० | दर्शन. | लेश्या. | भव्य. | सम्य० | संज्ञि० | आहा. | मा.सं. | गाथा. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| उत्कृष्टानुत्कृष्टप्रदेशबन्धकभागाः | सप्तकर्माणि | उत्कृष्टप्रदेशबन्धका अनन्ततमे भागे वर्तन्ते, अनुत्कृष्टप्रदेशबन्धका अनन्तेषु भागेषु वर्तन्ते । | तिर्यगोघ | | | का.सा.। औ.द्विक. कार्मण. | नपुं. | सर्व. | मतिश्रुता-ज्ञान. | असंयम० | अचक्षु | कृ.।नी. का. | सर्व. | मिथ्या-त्व. | असं. | सर्व. | २३ | ३४६ ३४७ |
| | | उत्कृष्टप्रदेशबन्धकाः संख्याततमे भागे वर्तन्ते, अनुत्कृष्टप्रदेशबन्धकाः संख्यातेषु भागेषु वर्तन्ते । | प.म.,मानुषी सर्वार्थ | | | आहारक-द्विक. २ | अवेद. | | मनःपर्यव. | स सा ।सा छे ।प । सूक्ष्म. | | | | | | | १२ | ३४८ ३४९ |
| | | उत्कृष्टप्रदेशबन्धकाः असंख्याततमे भागे वर्तन्ते, अनुत्कृष्टप्रदेशबन्धका असंख्यातेषु भागेषु वर्तन्ते । | शेष. ४३ | सर्व. | सर्व. | शेष. १२ | स्त्री. पुरुष. | | मतिश्रुता-वधि० विभङ्ग. | देशविर० | चक्षुर-वधि. | ते.।प.। शु. | | शेष० | सं० | | १३५ | ३४९ |
| | आयुः | उत्कृष्टप्रदेशबन्धकाः अनन्ततमे भागे वर्तन्ते, अनुत्कृष्टप्रदेशबन्धका अनन्तेषु भागेषु वर्तन्ते । | तिर्यगोघ० | | | का. सा. औ. द्विक. | नपुं. | सर्व. | मतिश्रुता-ज्ञान० | असंयम | अचक्षु. | कृ.।नी. का. | सर्व. | मिथ्या त्व० | असं. | आहा. | २१ | ३५० ३५१ |
| | | उत्कृष्टप्रदेशबन्धकाः संख्याततमे भागे वर्तन्ते, अनुत्कृष्टप्रदेशबन्धकाः संख्यातेषु भागेषु वर्तन्ते । | प.म.मा. आनतादि दे व० | | | आहारक-द्विक० | | | मनःपर्यव. | सं.सा.।सा. छे.।प. | | शुक्ल. | | क्षायि-क० | | | २१ | ३५२ ३५३ |
| | | उत्कृष्टप्रदेशबन्धकाः असंख्याततमे भागे वर्तन्ते, अनुत्कृष्टप्रदेशबन्धका असंख्यातेषु भागेषु वर्तन्ते । | शेष० २७ | सर्व. | सर्व. | पञ्चमन:-पञ्चवचन-वैक्रिय० | स्त्री. पुरुष. | | मतिश्रुता-वधि. विभङ्ग. | देशविर० | च० अच० | ते.।प. | | सं.सा.। वे. सास्वा. | सं० | | ११३ | ३५४ |
| जघन्याजघन्यप्रदेशबन्धकभागाः | सप्तकर्माणि | जघन्यप्रदेशबन्धकाः संख्याततमे भागे वर्तन्ते, अजघन्यप्रदेशबन्धकाः संख्यातेषु भागेषु वर्तन्ते । | पर्या.म.। मानुषी. सर्वार्थ. | | | आहारक-द्विक० | अवेद. | | मनःपर्यव. | सं.सा.।सा। छे।प.। सूक्ष्म० | | | | | | | १२ | ३५५ ३५६ |
| | | जघन्यप्रदेशबन्धका असंख्याततमे भागे वर्तन्ते, अजघन्यप्रदेशबन्धका असंख्यातेषु भागेषु वर्तन्ते । | शेषसर्व. | सर्व. | सर्व. | शेषसर्व. | शेष० | सर्व. | शेषसर्व० | देशाविरत्य संयम० | सर्व. | सर्व० | सर्व. | सर्व. | सर्व. | सर्व. | १५८ | ३५६ |
| | आयुः | जघन्यप्रदेशबन्धकाः संख्याततमे भागे वर्तन्ते, अजघन्यप्रदेशबन्धकाः संख्यातेषु भागेषु वर्तन्ते । | प म.।मा. आनतादि-दे व० | | | आहारक-द्विक. | | | मनःपर्यव. | सं.सा.।सा. छे.।प. | | शुक्ल. | | क्षायि-क. | | | २१ | ३५७ ३५८ |
| | | जघन्यप्रदेशबन्धका असंख्यतमे भागे वर्तन्ते, अजघन्यप्रदेशबन्धका असंख्यातेषु भागेषु वर्तन्ते । | शेषसर्व. | सर्व. | सर्व. | शेषसर्व. | सर्व. | सर्व. | शेषसर्व. | देशविरत्य संयम० | सर्व. | शेष० | सर्व. | शेष० | सर्व. | आहा. | १३४ | ३५८ |

## ॥ दशमं परिमाणद्वारम् ॥

तदेवं भागप्ररूपणा कृता । भागप्ररूपणायां तत्तत्कर्मण उत्कृष्टादिप्रदेशबन्धका जीवाः कतिषु भागेषु वर्तन्त इति प्रतिपादितम्, तत्प्रतिपादनं च तत्तत्कर्मण उत्कृष्टादिप्रदेशबन्धका जीवाः कियत्परिमाणाः सन्तीति प्रतिपादनेन सुज्ञातं भवति । अत इदानीं भागप्ररूपणायां हेतुत्वात् क्रमप्राप्तत्वाच्च दशमं परिमाणद्वारं वक्तुं प्रस्तुते—

मोहाऊण असंखा जेट्ठपएसस्स बंधगा णेया ।
सेसाणं संखेज्जा इयरस्सऽट्ठण्हवि अणंता ॥३५९॥

(प्रे०) "मोहाऊण" इत्यादि, मोहनीयायुःकर्मणोरुत्कृष्टप्रदेशबन्धका असंख्याता ज्ञेयाः । अत्रेदं बीजम्–यद्यपि मोहनीयायुःकर्मणोर्बन्धका जीवा अनन्ताः सन्ति, तथापि तयोरुत्कृष्टप्रदेशबन्धका असंख्याता एव, यतः तयोरुत्कृष्टप्रदेशबन्धका संज्ञिजीवा एवेति पूर्वं बन्धस्वामित्वप्ररूपणायां प्ररूपितम्, संज्ञिजीवाश्चोत्कृष्टतोऽपि प्रतरासंख्यातभागप्रमाणाः सन्ति । तत्राप्युत्कृष्टप्रदेशबन्धकास्तु असंख्यातभागमात्रा एव, न तु सर्वेऽपि । अतः मोहनीयायुःकर्मणोरुत्कृष्टप्रदेशबन्धकानामसंख्यातत्वमुपपद्यते ।

*'सेसाणं'* इत्यादि, शेषाणां मोहनीयायुर्व्यतिरिक्तानां ज्ञानावरणीयादीनां षट्कर्मणामुत्कृष्टप्रदेशबन्धकाः संख्याता ज्ञेयाः । अत्रायं हेतुः–यद्यपि षण्णां कर्मणां बन्धकत्वेनानन्ता जीवाः प्राप्यन्ते तथापि तेषामुत्कृष्टप्रदेशबन्धकत्वेन संख्याता एव प्राप्यन्ते । यतः षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकाः सूक्ष्मसम्परायगुणस्थानवर्तिनो जीवा एव, ते चोत्कृष्टतोऽपि शतपृथक्त्वादधिका न प्राप्यन्ते । तथा चोक्तं देवेन्द्रपूज्य–देवेन्द्रसूरिपादैः षडशीतिकर्मग्रन्थवृत्तौ अल्पबहुत्वद्वारे–"संयमद्वारे सर्वस्तोकाः सूक्ष्मसम्परायवर्तिनः, शतपृथक्त्वमात्रात्" । अतः षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकाः शतपृथक्त्वादधिका न प्राप्यन्त इति सुतरां सिद्धम् । ततश्च षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकाः "संख्याताः" सन्तीत्यपि सुतरां घटामञ्चति ।

"इयरस्स" इत्यादि, अष्टानामपि कर्मणामितरस्य–उत्कृष्टप्रदेशादितरस्यानुत्कृष्टप्रदेशस्य बन्धकाः "अनन्ता" ज्ञेयाः । यतो यदा केऽपि जीवा उत्कृष्टप्रदेशबन्धं न कुर्वन्ति तदा सर्वेऽपि जीवा अनुत्कृष्टमेव प्रदेशबन्धं कुर्वन्ति । यद्वा यदा जीवा उत्कृष्टप्रदेशबन्धं विदधति तदाप्यनुत्कृष्टप्रदेशबन्धका जीवा अनन्ता एव प्राप्यन्ते । यतोऽनन्तरोक्तहेतुना मोहनीयायुषोरुत्कृष्टप्रदेशबन्धका जीवा असंख्याताः शेषषट्कर्मणां च संख्याताः । ततस्तत्तत्कर्मणो बन्धकानां जीवानामनन्तसंख्यात उत्कृष्टप्रदेशबन्धकानामसंख्यातसंख्यायां संख्यातसंख्यायां च विश्लिष्टायामनन्तसंख्यैवावशिष्यते ॥३५९॥

तदेवमोघतः परिमाणप्ररूपणा कृता । अथ मार्गणासूत्कृष्टादिप्रदेशबन्धकानां जीवानां परिमाणं वक्तुमुपक्रमते । तत्रादौ यासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवाः संख्यातास्ता यासु चानन्तास्ता गाथाद्विकेन प्रतिपादयति—

तिमणुससव्वत्थाहारदुगअवेअमणपज्जवेसु च ।
संयमसामइएसु छेए परिहारसुहमेसु ॥३६०॥
संखाउगवज्जाणं जेट्ठपएसस्स बंधगाऽणंता ।
सव्वेसु एगिंदियणिगोअभेएसु वणकाये ॥३६१॥

(प्रे०) **"तिमणुस"** इत्यादि, अपर्याप्तमनुष्यमन्तरा मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, सर्वार्थसिद्धाभिधान्तिमदेवभेदे, आहारकाहारकमिश्रलक्षणाहारकद्विके, अपगतवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमेषु चेति त्रयोदशमार्गणासु, (द्वितीयवृत्तवृत्तिः) **"संखा"** इत्यादि, आयुर्वर्जानां ज्ञानावरणीयादिसप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवाः "संख्याताः" भवन्ति । अत्रेयं भावना–एतासु मार्गणासु सर्वे जीवा अपि संख्याता एव, तत उत्कृष्टप्रदेशबन्धकाः सुतरां संख्याता एव भवन्ति ।

यद्यपि मनुष्यौघमार्गणायां "उक्कोसपए असंखिज्जा असंखिज्जाहिं उसप्पिणीओसप्पिणीहिं अवहीरंति कालओ खित्तओ उक्कोसपए रूवपक्खित्तेहिं मणूसेहिं सेढी अवहीरइ, असंखेज्जाहिं अवसप्पिणीहिं उसप्पिणीहिं कालओ, खित्तओ अंगुलपढमवग्गमूलं तइअवग्गमूलपडुप्पन्नं" इति **अनुयोगद्वारसूत्रवचनाद्** मनुष्या उत्कृष्टत असंख्येया भवन्ति, तथाप्यत्रोत्कृष्टप्रदेशबन्धकानां परिमाणस्य प्रस्तुतत्वादुत्कृष्टप्रदेशबन्धप्रायोग्या मनुष्यास्तु संख्याता एव । यतः षण्णां कर्मणामुत्कृष्टप्रदेशबन्धस्वामिनः सूक्ष्मसम्परायवर्तिनः, ते च संख्याता एवेत्यनन्तरगाथयामेवोक्तम् । तथा मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामिनस्तु पर्याप्तमनुष्याः, पर्याप्तमनुष्याश्च संख्याता एव । तथा चोक्तं **श्रीश्यामाचार्यपादैः श्रीप्रज्ञापनोपाङ्गे**–"सव्वत्थोवा गब्भवक्कंतिया मणुसा, मणुसीओ संखिज्जगुणाओ" इति । तत्र **श्रीमलयगिरिसूरिपादैः** प्रणीता तट्टीका चैवम्–सर्वस्तोका गर्भव्युत्क्रान्तिकमनुष्याः, संख्येयकोटीकोटीप्रमाणत्वाद् ।तेभ्यो मानुष्यो-मनुजस्त्रियः संख्येयगुणाः, सप्तविंशतिगुणत्वाद्" । अथानुयोगद्वारे यद् मनुष्याणामसंख्यातत्वं प्रतिपादितं तत्तु मनुष्यसामान्यापेक्षया । इत्येवं मनुष्यौघमार्गणायामुत्कृष्टप्रदेशबन्धका जीवाः संख्याता एवेति सिद्धम् ।

अथ "अपयट्ठाणो सव्वट्ठ, जंबूदीवो इमं लक्खं" इति **श्रीचन्द्रसूरिपादविरचितबृहत्संग्रहणीग्रन्थवचनात्** सर्वार्थसिद्धविमानस्य लक्षयोजनमात्रत्वात् तत्रस्था देवा संख्याता एवेति सुतरां सिद्धं भवति ।

तथा पर्याप्तमनुष्याणां संख्यातत्वे सिद्धे आहारकादिमार्गणासु जीवानां संख्यातत्वं सुतरां सिद्धं, आहारकादिमार्गणासु पर्याप्तमनुष्याणामेव सम्भवात् , अत्रोऽत्र न प्रमाणापेक्षा, तथापि नियतसंख्यावबोधार्थं पूर्वमहर्षिप्रणीतशास्त्रेषु निरूपितं प्रमाणमभिधीयते । तत्राहारकद्विके—

"जइ हुंति जहण्णेणं एक्को दो तिण्णि पञ्च व हवन्ति । उक्कोसेणं जुगवं पुहुत्तमेत्तं सहस्साणं" ॥
इति वचनात् जघन्यत एक उत्कृष्टतश्च सहस्रपृथक्त्वमात्रा जीवा भवन्ति । अत्र "आहारगाइं" इति पूर्वगाथातः सम्बध्यते ।

अवेदमार्गणायां सकषायप्रदेशबन्धस्य प्रस्तुतत्वात् सकषाया अपगतवेदा जीवा गृह्यन्ते । सकषाया अपगतवेदा जीवाश्च श्रेणावेव प्राप्यन्ते । श्रेणौ च जीवाः शतपृथक्त्वमात्रा एव भवन्ति । तथा चोक्तं श्रीचन्द्रर्षिपादैः पञ्चसंग्रहे द्रव्यप्रमाणे—

"एगाइं चउपन्ना समगं उवसामगा य उवसंता । अद्धं पडुच सेढीए होंति सव्वे वि संखेज्जा" ॥

अत्र स्वोपज्ञवृत्तावेवमभिहितम्—"यद्यपि संख्येयाः सामान्येनोऽभिहिताः, तथापि शतानि, न सहस्राणि, न लक्षाः । तत्रैव क्षपकाणां प्रमाणमेवमुक्तं—

"खवगा खीणाऽजोगी एगाई जाव होंति अट्ठसयं । अद्धाए सयपुहुत्त कोडिपुहुत्तं सजोगीओ" ॥
इत्येवमवेदमार्गणायां जीवाः शतपृथक्त्वप्रमाणा एवेति सिद्धम् ।

मनःपर्यवज्ञानमार्गणायां "ज्ञानद्वारे मनोज्ञानिनो मनःपर्यायज्ञानिनः शेषज्ञान्यपेक्षया स्तोकाः, तद्धि गर्भजमनुष्याणां तत्रापि संयतानामप्रमत्तानां विविधामर्षौषध्यादिलब्धियुक्तानामुत्पद्यते । उक्तं च-
"तं संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमओ" इत्यादि । ते च स्तोका एव संख्यातत्वात्" इति देवेन्द्रसूरिविरचितचतुर्थकर्मग्रन्थवृत्तेर्वचनात् सुतरां जीवानां संख्यातत्वं सिद्ध्यति । तत्रैव "संयमद्वारे सर्वस्तोकाः सूक्ष्मसम्परायसंयमिनः शतपृथक्त्वमात्रसंभवात् । तेभ्यः परिहारविशुद्धिकाः संख्यातगुणाः, सहस्रपृथक्त्वसंभवात् । तेभ्योऽपि यथाख्यातचारित्रिणः संख्यातगुणाः, कोटिपृथक्त्वेन प्राप्यमाणत्वादिति । तेभ्यो यथाख्यातचारित्रिभ्यश्छेदोपस्थापनचारित्रिणः संख्येयगुणाः, कोटीशतपृथक्त्वेन लभ्यमानत्वात् । तेभ्योऽपि सामायिकसंयमिनः संख्येयगुणाः कोटिसहस्रपृथक्त्वेन प्राप्यमाणत्वाद्" । इत्युक्तत्वात् सामायिके, छेदोपस्थापनीये, परिहारविशुद्धौ, सूक्ष्मसम्पराये च यथासंख्यं कोटीसहस्रपृथक्त्वप्रमाणाः, कोटीशतपृथक्त्वप्रमाणाः, सहस्रपृथक्त्वप्रमाणाः, शतपृथक्त्वप्रमाणाश्च जीवाः प्राप्यन्ते । इत्यलं विस्तरेण ।

अथ प्रस्तुतं व्याख्यायते—"अणंता" इति, "आयुर्वर्जानां ज्येष्ठप्रदेशस्य बन्धकाः" इति पदानि "डमरुकमणि" न्यायेन अत्रापि सम्बध्यते । ततोऽयमर्थः—आयुर्वर्जा सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवा "अनन्ताः" भवन्ति । कासु मार्गणासु ? इत्याह—"सव्वेसु" इत्यादि, सर्वेष्वेकेन्द्रियौघादिसप्तैकेन्द्रियभेदेषु, सर्वेषु निगोदौघादिसप्तनिगोदभेदेषु वनस्पतिकायसामान्ये चेति पञ्चदशमार्गणासु । "यासु मार्गणासूत्कृष्टप्रदेशबन्धप्रायोग्या जीवा निगोदा अपि तासु प्रतिसमय-

मनन्ता जीवा उत्कृष्टप्रदेशबन्धकत्वेन प्राप्यन्ते" इति व्याप्तिः । सन्ति चैतासु मार्गणासूत्कृष्टप्रदेशबन्धका निगोदा अपि ॥३६०।३६१॥

सम्प्रति यासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धस्वामिनः "ओघवक्तव्यतावत्" यासु चासंख्यातास्ता गाथाद्विकेनाह—

ओघव्व जाणियव्वा दुपणिंदितसेसु पणमणवयेसुं ।
कायउरलजोगेसुं लोहम्मि तिणाणओहीसुं ॥३६२॥
णयणेयरसुइलासुं भविये सम्मत्तखइउवसमेसुं ।
सण्णिम्मि तहाहारे सेसासु असंखिया णेया ॥३६३॥

(प्रे०) "ओघव्व" इत्यादि, सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धकाः "ओघवत्"=सामान्यवक्तव्यतायां यस्य कर्मणो यावत्परिमाणाः प्रतिपादितास्तस्य तावत्परिमाणा ज्ञातव्याः । कासु मार्गणासु ? इत्याह-"दुपणिंदि" इत्यादि, अपर्याप्तमृते द्विपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसलक्षणत्रसद्विके, पञ्चमनःपञ्चवचनेषु, काययोगसामान्यौदारिककाययोगयोः, लोभकषाये, मनःपर्यवज्ञाने निरूपितत्वाद् मतिश्रुतावधिलक्षणज्ञानत्रिके, अवधिदर्शने, (द्वितीयवृत्तवृत्तिः) 'णयणेयर' इत्यादि,– चक्षुर्दर्शने, तदितरे चाचक्षुर्दर्शने, शुक्लेश्यायां, भव्ये, सम्यक्त्वौघक्षायिकोपशमसम्यक्त्वेषु, संज्ञिनि, तथा समुच्चये, आहारके चेति त्रिंशति मार्गणासु ।

सामान्यवक्तव्यतायां परिमाणनिरूपणमेवम्-मोहायुषोरुत्कृष्टप्रदेशबन्धका जीवा "असंख्याताः" ज्ञानावरणीयादीनां षण्णां कर्मणामुत्कृष्टप्रदेशबन्धका जीवाः "संख्याताः" सन्ति । अतोऽत्र निगदितमार्गणात्रिंशति मोहनीयस्योत्कृष्टप्रदेशबन्धका जीवा असंख्याताः, षण्णां ज्ञानावरणीयादिकर्मणामुत्कृष्टप्रदेशबन्धका जीवाः संख्याता भवन्ति । अत्रायं हेतुः–एतासु मार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामिनः उत्कृष्टयोगिसंज्ञिनः । संज्ञिनश्च असंख्याताः सन्तीति सामान्यवक्तव्यतायां निरूपितम् । अथ "यासु मार्गणासु यस्य कर्मण उत्कृष्टप्रदेशबन्धप्रायोग्या जीवा असंख्यातास्तासु मार्गणासु तस्य कर्मण उत्कृष्टप्रदेशबन्धका जीवाः कदाचिदसंख्याता अपि प्राप्यन्ते" इति व्याप्तिः । तत एतासु मार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धका जीवा असंख्याता भवन्तीति सिद्धम् । परन्तूत्कृष्टप्रदेशबन्धप्रायोग्यजीवानामपेक्षया तु ते "असंख्यातभागमात्रा" एव । उत्कृष्टप्रदेशबन्धप्रायोग्याणां सर्वेषां जीवानामुत्कृष्टयोगस्यायोगात् । अत्र युक्तिस्तु सामान्यवक्तव्यतायां प्रतिपादितैव । अथैतासु मार्गणासु ज्ञानावरणीयादिषट्कर्मणामुत्कृष्टप्रदेशबन्धस्वामिनः सूक्ष्मसम्परायगुणस्थानवर्तिनो जीवाः । ते च संख्याता एवेति प्रागसकृत् प्रतिपादितम् । तत एतासु मार्गणासु षण्णां कर्मणामुत्कृष्टप्रदेशबन्धका जीवाः "संख्याता" भवन्तीत्यपि सिद्धम् ।

सम्प्रति वृत्तचरमचरणेन शेषासु मार्गणास्वुत्कृष्टप्रदेशबन्धकानां परिमाणमाह–"**सेसासु असंखिया णेया**" इति, निरूपितान्यासु द्वादशशतमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः "असंख्याताः" ज्ञेयाः। शेषमार्गणा इमाः–सर्वनरकतिर्यग्भेदाः, सर्वार्थसिद्धमन्तराऽशेषदेवभेदाः, अपर्याप्तमनुष्यः, सर्वविकलेन्द्रियभेदाः, अपर्याप्तपञ्चेन्द्रियः, सप्तनिगोदभेदवनस्पतिकायौघत्रसौघ-पर्याप्तत्रसैर्विना शेषद्वात्रिंशत्कायभेदाः, औदारिकमिश्रवैक्रियद्विककार्मणकाययोगाः, वेदत्रिकं, क्रोध-मानमायालक्षणत्रिकषायाः, अज्ञानत्रिकं, देशविरत्यसंयमौ, विना शुक्लां पञ्चलेश्याः, अभव्यः, वेदक-सास्वादनमिश्रमिथ्यात्वानि, असंज्ञी अनाहारकश्चेति शेषमार्गणाः।

**अत्रेयं भावना**–शेषासु मार्गणास्वुत्कृष्टप्रदेशबन्धप्रायोग्या जीवा असंख्याताः सन्ति ततः प्रागुक्तव्याप्त्योत्कृष्टप्रदेशबन्धका अप्यसंख्याताः प्राप्यन्ते। शेषमार्गणाप्रविष्टासु कासुचिद् मार्गणासु जीवानामानन्त्येऽप्युत्कृष्टप्रदेशबन्धप्रायोग्यजीवानां तु सर्वासु मार्गणासु असंख्यातत्वमेव। तद्यथा–निखिलतिर्यग्भेदाः, अपर्याप्तपञ्चेन्द्रियापर्याप्तत्रसौ, कार्मणकायः, वेदत्रिकं, विना लोभं कषायत्रिकं, मतिश्रुताज्ञाने, असंयमः, अशुभलेश्यात्रिकम्, अभव्यः, मिथ्यात्वम्, अनाहारकः, औदारिकमिश्र-श्चेति चतुर्विंशतिमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी संज्ञी भवति। संज्ञिनश्चासंख्याता इत्यनेकशः प्राग् निरूपितम्। अपर्याप्तमनुष्यमार्गणायां जीवानामसंख्यातत्वादुत्कृष्टप्रदेशबन्धका अप्यसंख्याता एव। वैक्रिये तथा वैक्रियमिश्रे सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी देवो नारको वा भवति। देवा नारकाश्च प्रत्येकमसंख्याता इति तु सुप्रसिद्धं, तथाप्यसंख्यातस्यासंख्यातभेद-भिन्नत्वाद् यदि देवनारकाः कियत्प्रमाणाः? इति जिज्ञासा भवेत् तर्हि तत्शान्त्यै **श्रीश्यामा-चार्यपादविरचितप्रज्ञापनोपाङ्गगते** तृतीयेऽल्पबहुत्वद्वारे निरूपितः सटीकमहादण्डको विलोक-नीयः। असंज्ञिनि सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामी "पर्याप्तपञ्चेन्द्रियो" भवति। पर्याप्ता असंज्ञि-पञ्चेन्द्रियास्त्वसंख्याता एव। तथा चोक्तं **श्रीमच्चन्द्रर्षिप्रणीतपञ्चसंग्रहे** द्रव्यप्रमाणे——........ "असन्निणो अवहरंति। अंगुलसखासंखपएसभइयं पुढो पयरं॥" पृथ्व्यप्तेजोवायुकायौघमार्गणासु सप्त-प्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामिनो यथासंख्यं पर्याप्तबादरपृथ्व्यप्तेजोवायवः। तेऽपि प्रत्येकमसंख्याता एव। तथा च भणितं **श्रीचन्द्रर्षिभिः पञ्चसंग्रहे** द्रव्यप्रमाणे—

पत्तेयपज्जवणकाइया उ पयरं हरंति लोगस्स। अंगुलअसंखभागेण भाइय भूदगतणू य ॥१॥
आवलिवग्गो अनन्तरावलीय गुणियो हु बायरा तेऊ। वाऊ य लोगसंखं सेसतिगमसंखिया लोगा ॥२॥

अनभिज्ञातार्थेन स्वोपज्ञतट्टीकाऽवलोकनीया। नारकाणां देवानां च सर्वभेदेषु सप्तप्रकृति-सत्कोत्कृष्टप्रदेशबन्धप्रायोग्याः सप्तप्रकृतिबन्धकपर्याप्ताः यथासंख्यं नारका देवाश्च भवन्ति। ते चासंख्याता एवेति सुप्रतीतमेव। विभङ्गज्ञाने देशविरतौ तेजःपद्मलेश्ययोः, वेदकसास्वादनसम्य-क्त्वयोः, मिश्रे च संज्ञिनामेव लाभादसंख्यातत्वं सुतरां सिद्धम्। द्वित्रिचतुरिन्द्रियौघमार्गणासु पर्या-प्तद्वित्रिचतुरिन्द्रियमार्गणासु च सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धप्रायोग्या जीवा यथासंख्यं पर्याप्तद्वित्रिचतु-

रिन्द्रिया भवन्ति । अपर्याप्तद्वित्रिचतुरिन्द्रियमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धप्रायोग्या अपर्याप्तद्वित्रिचतुरिन्द्रिया भवन्ति । पर्याप्तद्वित्रिचतुरिन्द्रिया अपर्याप्तद्वित्रिचतुरिन्द्रियाश्च प्रत्येकमसंख्याताः । तथा चोक्तं—

"पज्जत्तापज्जत्ता बितिचउअसण्णिणो अवहरंति । अंगुलसंखासंखप्पएसभइयं पुढो पयरं ॥"

अथावशिष्टासु सूक्ष्मपृथ्वीकायाद्योघमार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामिनः पर्याप्तसूक्ष्मपृथ्वीकायादयः । अपर्याप्तपृथ्वीकायादिषु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामिनोऽपर्याप्तपृथ्वीकायादयः । पर्याप्तपृथ्वीकायादयोऽपर्याप्तपृथ्वीकायादयश्च प्रत्येकमसंख्याता एव । अत्र प्रमाणं त्वत्रैव बादरपृथ्व्यादीनामसंख्यातत्वस्य प्रमाणार्थं प्रतिपादितं "पत्तेयपज्जवणकाइया उ" इत्यादिगाथाद्विकमिति ॥३६२।३६३॥

अनन्तरगाथायां "सेसासु असंखिया णेया" इत्यनेन शेषमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवा असंख्याता भवन्तीति निरूपितम् । परमग्रेऽनेकजीवविषयककालद्वारे "यासु मार्गणासूत्कृष्टप्रदेशबन्धप्रायोग्या जीवा असंख्यलोकाकाशप्रदेशप्रमाणा यद्वाऽनन्तास्तास्वष्टकर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः सर्वाद्धा भवति" इत्यादिव्याप्तीनामावश्यकता, अतः कासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धप्रायोग्या जीवा असंख्यलोकाकाशप्रदेशप्रमाणा भवन्तीति प्रतिपादनायेमामार्यामाह—

**तत्थ वि असंखलोगा पुढवाइचउण्ह सव्वसुहमेसु ।**
**बायरअसमत्तेसु य अपज्जपत्तेअवणकाये ॥३६४॥**

(प्रे०) "तत्थ" इत्यादि, अनन्तरगाथायां शेषासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवा असंख्याता भवन्तीति यन्निरूपितं तत्र पृथ्व्यादीनां चतुर्णां सर्वसूक्ष्मेषु, सूक्ष्मपृथिव्यप्तेजोवायुकायेषु, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायेषु, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायेषु चेत्यर्थः, 'बायरअसमत्तेसु' इति, 'पुढवाइचउण्ह' इति पदमत्रापि सम्बध्यते, अपर्याप्तबादरपृथिव्यप्तेजोवायुकायेषु, अपर्याप्तप्रत्येकवनस्पतिकाये चेति सप्तदशमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवा असंख्यलोकानां यावन्तः प्रदेशास्तावत्प्रमाणा असंख्याता भवन्ति । सामर्थ्याच्च शेषास्वनन्तरगाथावृत्तिनिरूपितासु शेषमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवा असंख्यलोकाकाशप्रदेशेभ्यो न्यूना असंख्याता भवन्ति ॥३६४॥

साम्प्रतं मार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां परिमाणमभिधित्सुरादौ तावद्यासु मार्गणास्वनुत्कृष्टप्रदेशबन्धका "अनन्ताः" ताः सार्धगाथाद्विकेन प्ररूपयति—

**तिरिये सव्वेगिंदियणिगोअभेअवणकायजोगेसु ।**
**उरलदुगकम्मणेसु णपुंसगे चउकसायेसु ॥३६५॥**

अण्णाणदुगे अयते अचक्खुदंसणतिअसुहलेसासु ।
भवियेयरमिच्छेसुं असण्णिआहारगियरेसुं ॥३६६॥
होज्जाउगवज्जाणं अगुरुपएसस्स बंधगाऽणंता ।

(प्रे०) "**तिरिये**" इत्यादि, तिर्यक्सामान्ये, सर्वैकेन्द्रियभेदेषु, सर्वनिगोदभेदेषु, "**वण**" इति, वनस्पतिकायसामान्ये, काययोगसामान्ये, औदारिकौदारिकमिश्रलक्षणौदारिकद्विके, कार्मणकाये, नपुंसकवेदे, चतुष्कषायेषु, (द्वितीयार्यावृत्तिः) मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अशुभलेश्यात्रिके, भव्ये, इतरे चाभव्ये; मिथ्यात्वे, असंज्ञिनि, आहारके, इतरेऽनाहारके चेति मार्गणानामष्टात्रिंशति (तृतीयार्यापूर्वार्धवृत्तिः) आयुर्वर्जानां सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका "अनन्ताः" भवन्ति । यतो यासु निगोदजीवा अपि प्रविष्टा भवन्ति तासु प्रतिसमयमनन्ता जीवा अनुत्कृष्टप्रदेशबन्धकत्वेन प्राप्यन्त इति व्याप्तिः ॥३६५।३६६॥

सम्प्रति यासु मार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका जीवाः "संख्याताः" यासु चासंख्याताः" ताः सार्धगाथया प्रतिपादयति—

पज्जमणुसमणुसीसुं सव्वत्थाहारदुगअवेएसुं ॥३६७॥(गीतिः)
मणणाणसंयमेसुं समइअछेअपरिहारसुहमेसुं ।
संखेज्जा विण्णेया सेसासु असंखिया णेया ॥३६८॥

(प्रे०) '**पज्जमणुस**' इत्यादि, पर्याप्तमनुष्यमानुष्योः, सर्वार्थसिद्धे, आहारकाहारकमिश्रलक्षणाहारकद्विके, अपगतवेदे, मनःपर्यवज्ञाने, संयमसामान्ये, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायेषु चेति द्वादशमार्गणास्वनुत्कृष्टप्रदेशबन्धकाः "संख्याता" विज्ञेयाः । अत्र बीजमेतासां मार्गणानां संख्यातजीवत्वम् । अत्रैतासां मार्गणानां संख्यातजीवत्वं कथमित्यनुयोगस्यानवकाशः, उत्कृष्टप्रदेशबन्धकानां परिमाणप्ररूपणायां सप्रमाणं निरूपितत्वात् ।

सम्प्रति चरमचरणेन शेषासु मार्गणासु निरूपयति-"**सेसासु असंखिया णेया**" इति, शेषासु विंशत्युत्तरशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका "असंख्याता" ज्ञेयाः । शेषमार्गणाश्चेमाः-सर्वनरकभेदाः, तिर्यक्पञ्चेन्द्रियचतुष्कं, मनुष्यौघापर्याप्तमनुष्यौ, सर्वार्थसिद्धमन्तरा समामर्त्यभेदाः, समस्तविकलेन्द्रियपञ्चेन्द्रियभेदाः, निगोदसप्तकं वनस्पतिकायसामान्यं च विहाय चतुस्त्रिंशत्कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियवैक्रियमिश्रकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट् सम्यक्त्वमार्गणाभेदाः, संज्ञी च । अत्र हेतुस्तु शेषासु मार्गणासु जीवा असंख्याताः सन्तीति । तत्रापि विशेषपरिमाणजिज्ञासुना प्रज्ञापनादिग्रन्था अवलोकनीयाः ॥३६७।३६८॥

प्रस्तुतगाथायां "सेसासु असंखिया णेया" इत्यनेन शेषमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका जीवा असंख्याता भवन्तीति निरूपितम् । इदानीं कासु मार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धप्रायोग्या जीवा असंख्यलोकाकाशप्रदेशप्रमाणा भवन्तीति प्ररूपयिषुरिमां गीतिमाह—

तहि पुहवाइचउण्हं बायरपज्जत्तवज्जभेएसुं ।
पत्तेअवणम्मि तहा तदपज्जत्ते असंखलोगसमा ॥३६९॥ (गीतिः)

(प्रे०) 'तहि' इति, अनन्तरगाथायां शेषासु मार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका जीवा असंख्याता भवन्तीति यन्निरूपितं तत्र, "पुहवाइचउण्हं" इत्यादि, बादरपर्याप्तान् विहाय पृथिव्यादीनां चतुर्णां सर्वभेदेषु, पृथ्व्यप्तेजोवायुकायौघभेदेषु सूक्ष्मपृथिव्यप्तेजोवायुकायेषु, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायेषु, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायेषु, बादरपृथ्व्यप्तेजोवायुकायेषु, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायेष्वित्यर्थः, 'पत्तेअवणम्मि' इत्यादि, प्रत्येकवनस्पतिकायौघेऽपर्याप्तप्रत्येकवनस्पतिकाये चेति षड्विंशतिमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका जीवाः'असंखलोगसमा' इति, असंख्यलोकानां यावन्तः प्रदेशास्तावत्प्रमाणा असंख्याता भवन्ति ॥३६९॥ तदेवं सप्तकर्मणामुत्कृष्टानुत्कृष्टप्रदेशबन्धकानां परिमाणमभिहितम् । अथायुष उत्कृष्टानुत्कृष्टप्रदेशबन्धकानां परिमाणं प्रचिकटयिषुरादौ तावद्यासु मार्गणास्वायुरुत्कृष्टप्रदेशबन्धकाः "संख्याताः" ता गाथाद्विकेन प्रतिपादयति—

आउस्स संखिया खलु जेट्ठपएसस्स बंधगा मणुसे ।
पज्जमणुसमणुसीसुं देवेसुं आणताईसुं ॥३७०॥
आहारदुगम्मि तहा मणपज्जवणाणसंयमेसु तहा ।
सामाइअछेएसुं परिहारे सुक्कखइएसुं ॥३७१॥

(प्रे०) 'आउस्स' इत्यादि,–आयुष उत्कृष्टप्रदेशबन्धकाः संख्याता एव, भवन्तीत्यध्याहारः । कासु मार्गणासु ? इत्याह–"मणुसे" इत्यादि,–मनुष्यौघे, पर्याप्तमनुष्यमानुष्योः, आनताद्यष्टादशदेवेषु, आहारकद्विके, तथा समुच्चये, मनःपर्यवज्ञाने, संयमौघे, तथा समुच्चये, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमेषु, शुक्ललेश्यायां, क्षायिकसम्यक्त्वे चेति त्रिंशन्मार्गणासु । इयमत्र भावना–"द्विमनुष्याहारकद्विकसर्वार्थसिद्धमनःपर्यवज्ञानसंयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमा" इति दशमार्गणासु तु सर्वजीवानामपि संख्यातत्वादायुषो बन्धका एव संख्याता भवन्ति । ततश्चायुरुत्कृष्टप्रदेशबन्धकाः सुतरां संख्याता एव भवन्ति । मनुष्यौघे तु जीवानामसंख्यातत्वेऽपि आयुष उत्कृष्टप्रदेशबन्धकाः संख्याता एव । पर्याप्तानां मनुष्याणामेव तद्बन्धकत्वात् । तथा आनतादिनवदशमार्गणासु जीवानामसंख्यातत्वेऽप्यायुषो बन्धकास्तु

संख्याता एव । तद्यथा-आनतादिदेवानां गर्भजसंख्येयवर्षायुष्कमनुष्येष्वेवोपपातो भवति । तथा चाह भगवान् श्रीश्यामाचार्यः प्रज्ञापनोपाङ्गस्योपपातोद्वर्तनाभिधानषष्ठपदे-"आणय जाव अणुत्तरोववाइया देवा एवं चेव, नवरं नो तिरिक्खजोणिएसु उववज्जंति मणुस्सेसु पज्जत्तसंखेज्जवासाउय-कम्मभूमिगगब्भवक्कंतियमणुसेसु उववज्जंति"। पर्याप्तमनुष्यास्तु संख्याता एव । तत आनतादिष्वा-युषो बन्धकाः संख्याता एव । ततश्चायुष उत्कृष्टप्रदेशबन्धकाः संख्याता एवेति सुतरां सिद्धं भवति ।

अथ शुक्ललेश्यायामायुषो बन्धकानां संख्यातत्वं परिभाव्यते-शुक्ललेश्या पञ्चेन्द्रियतिर्यग्म-नुष्यानतादिदेवानामेव भवति, नारकेषु सहस्रारपर्यन्तेषु देवेषु च तस्या अभावात् । तत्र मनुष्यास्तु संख्याता एव । शुक्ललेश्यायां वर्तमानाः तिर्यञ्च आयुर्नैव बध्नन्ति । शुक्ललेश्यायां वर्तमानानां तिरश्चां देवद्विकस्यैव बन्धसत्त्वात् तथा तिर्यञ्चो यल्लेश्यायां देवायुर्बध्नन्ति तल्लेश्याकदेवेषूत्पद्यन्ते इति नियमात् शुक्ललेश्यायां परिणतास्तिर्यञ्चो देवायुर्नैव बध्नन्ति । यतो यदि शुक्ललेश्यायां परि-णतास्तिर्यञ्चो देवायुर्बध्नीयुस्तदाऽऽनतादिदेवेषूत्पद्येरन् , न चोत्पद्यन्ते, पञ्चेन्द्रियतिर्यङ्मात्रस्य सह-स्रारं यावदेवोत्पादसंभवात् । तथा चोक्तं श्रीचन्द्रसूरिभिः स्वनिर्मितबृहत्संग्रहण्याम्-"जा सहसारो पंचिंदियतिरिय" इति । ततः शुक्ललेश्यायां वर्तमानास्तिर्यञ्चो देवायुर्नैव बध्नन्तीति । ततश्च शुक्ललेश्यायां वर्तमानाः पञ्चेन्द्रियतिर्यञ्च आयुर्नैव बध्नन्तीति समापतितम् , देवनारकान् विहाय तस्यां देवायुषो व्यतिरिक्तायुषो बन्धस्याभावात् । अथ शुक्ललेश्यायां परिणता आनतादयो देवा अपि मनुष्यायुरेव बध्नन्ति । तथा चाहुः श्रीचन्द्रसूरीश्वराः-"आणयपमुहा चविउं मणुएसु चेव गच्छन्ति" इति । मनुष्याणां च संख्यातत्वेन संख्याता एवानतादयो देवा आयुर्बध्नन्ति । इत्येवं शुक्ललेश्यायामायुषो बन्धकाः संख्याता एवेति सिद्धम् । इदं तु बोध्यम्-आसहस्रारान्तं पद्मलेश्या एव इत्यभिप्रायेण शुक्ललेश्यामार्गणायामायुर्बन्धकानां संख्यातत्वम् विज्ञेयम् ।

साम्प्रतं क्षायिकमार्गणायामायुषो बन्धकानां संख्यातत्वं चिन्त्यते । तथाहि-क्षायिक-सम्यग्दृष्टिजीवाः चतुर्ष्वपि गतिषु भवन्ति । तत्र मनुष्यगतौ सर्वे जीवाः संख्याता एव, ततः संख्याता एव क्षायिकसम्यग्दृष्टय आयुर्बध्नन्ति । तथा नरकादित्रिगतिषु क्षायिकसम्यग्दृष्टीनाम-संख्यातत्वेऽपि आयुषो बन्धकास्तु संख्याता एव । तद्यथा-नरकादुद्वृत्ताः क्षायिकसम्यग्दृष्टयो जीवा मनुष्येष्वेवोत्पद्यन्ते । सम्यग्दृष्टिनारका देवगतौ तथाभवस्वाभाव्यात् तिर्यग्गतौ च गुण-प्रत्ययान्नोत्पद्यन्ते । मनुष्याणां च संख्यातत्वाद् नरकगतौ संख्याता एव क्षायिकसम्यग्दृष्टय आयुर्बध्नन्ति । एवं देवेष्वपि भावनीयम् । अथ तिर्यग्गतेरुद्वृत्ताः क्षायिकसम्यग्दृष्टिजीवा देवेषूत्प-द्यन्ते । तत्र देवानामसंख्यातत्वेऽपि क्षायिकसम्यग्दृष्टितिरश्चां संख्यातत्वाद् यद्वा तुल्यायव्यय-नियमाद् देवायुषो बन्धकाः क्षायिकसम्यग्दृष्टितिर्यञ्चः संख्याता एव ।

इदमुक्तं भवति-श्रीभगवतीग्रन्थाभिप्रायेण सर्वेऽपि युग्मितिर्यञ्चः संख्याता एव । तथा चोक्तं श्रीभगवत्यां चतुर्विंशतितमशतकद्वितीयोद्देशकस्य वृत्तौ श्रीमदभयदेवसूरिपादैः-

"संखेज्जा उववज्जंति असंख्यातवर्षायुस्तिरश्चामसंख्यातानां कदाचिदप्यभावात्" इति (सूत्रं ६९८)। ततो यदि श्रीमदभयदेवसूरिवचनमेतत्समाश्रित्य युगलिकतिर्यञ्चः संख्याताः स्वीक्रियन्ते तदा तु तिरश्चामेव संख्यातत्वात् संख्याता एव क्षायिकसम्यग्दृष्टय आयुर्बध्नन्ति। अथ यदि

संखेज्जा च मणुस्सेसु खीणमोहा सहस्ससो णियमा सेसासु खीणमोहा गदीसु णियमा असंखेज्जा ॥

इति वचनं कक्षीक्रियते तदाऽपि तुल्यायव्ययनियममाश्रित्य संख्याता एव क्षायिकसम्यग्दृष्टितिर्यञ्च आयुर्बध्नन्ति।

अयं भावः—नव्यं क्षायिकसम्यग्दर्शनं मनुष्यगतावेव ज्ञायते। ततस्तिर्यग्गतौ नव्यक्षायिकसम्यग्दर्शनस्याभावात् तत्र वर्तमानाः क्षायिकसम्यग्दृष्टितिर्यञ्चो गत्यन्तरागता एव भवन्ति। अथ नारकदेवगतित उद्वृत्ताः क्षायिकसम्यग्दृष्टिजीवा मनुष्येष्वेव गच्छन्ति, देवनारकाणां क्षायिकसम्यक्त्वभाजामशुभगतावुत्पादाभावात् स्वगतौ पुनरनुत्पादाच्च मनुष्यद्विकस्यैव बन्धसत्त्वात्। ततस्तिर्यग्गतौ क्षायिकसम्यग्दृष्टिजीवा मनुष्यगतित एवागच्छन्ति। मनुष्याणां च संख्यातत्वात् संख्याता एव क्षायिकसम्यग्दृष्टयो जीवाः तिर्यग्गतावागच्छन्ति। ततस्तिर्यग्गतौ एकस्मिन् समये गत्यन्तरादागमनरूप आयः संख्यातानामेव क्षायिकसम्यक्त्वभाजां भवति। अथ "विवक्षितगतौ यावतानामायो भवति तावतानामेव गत्यन्तरगमनरूपो व्ययो भवति, न न्यूनाधिकानाम्" इति पूर्वमहर्षिप्रणीतशास्त्राणां सूक्ष्मेक्षिकयाऽवलोकनेन ज्ञायते। ततस्तिर्यग्गतौ संख्यातानां क्षायिकसम्यग्दर्शनिनामायाद् व्ययोऽपि संख्यातानामेव भवति। ततश्च तिर्यग्गतावपि संख्याता एव क्षायिकसम्यग्दृष्टय आयुर्बध्नन्तीति सिद्धम्। अथ क्षायिकसम्यग्दृष्टिदेवाः स्वभवादुद्वृत्ता मनुष्येष्वेवोत्पद्यन्ते इति प्रमाणेन युक्त्या चानन्तरमेव निगदितम्। ततो मनुष्याणां संख्यातत्वाद् देवगतावपि संख्याता एव क्षायिकसम्यग्दर्शनवन्त आयुषो बन्धका भवन्ति। इत्येवं चतुर्ष्वपि गतिष्वायुषो बन्धकानां क्षायिकसम्यक्त्वभाजां संख्यातत्वादायुरुत्कृष्टप्रदेशबन्धका अपि संख्याता एवेति सिद्धं भवति ॥२७०।२७१॥

सम्प्रति यासु मार्गणास्वायुष उत्कृष्टप्रदेशबन्धका अनन्ता यासु चासंख्यातास्ता निरूपयति—

**सव्वेसु एगिंदियणिगोअभेएसु तह वणोघम्मि।**
**होएइरे अणंता सेसासु असंखिया णेया ॥२७२॥**

(प्रे०) 'सव्वेसु' इत्यादि, सर्वेषु सप्तसंख्याकेष्वेकेन्द्रियभेदेषु, सर्वेषु सप्तनिगोदभेदेषु, तथा वनस्पतिकायसामान्ये इति पञ्चदशमार्गणासु "होएइरे अणंता" इति, आयुष उत्कृष्टप्रदेशबन्धका "अनन्ता" भवन्ति। अत्र हेतुः सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामनन्तपरिमाणनिरूपणे यः प्रदर्शितः स एवावगन्तव्यः। अथ शेषासु मार्गणासु प्राह—'सेसासु असंखिया णेया' इति, शेषासु निरूपितव्यतिरिक्तासु अष्टादशाधिकशतमार्गणास्वायुष उत्कृष्टप्रदेशबन्धका "असंख्याताः ज्ञेयाः।

शेषमार्गणा इमाः—कृत्स्ननरकभेदाः, समस्ततिर्यग्भेदाः, अपर्याप्तमनुष्यः, देवौघभवनपति-व्यन्तरज्योतिष्कसौधर्मायष्टदेवभेदाः, निखिलद्वित्रिचतुःपञ्चेन्द्रियभेदाः, वनस्पतिकायौघसप्त-निगोदभेदैर्विना चतुस्त्रिंशत्कायभेदाः, पञ्चमनःपञ्चवचनकाययोगसामान्यौदारिकद्विकवैक्रियकाय-भेदाः, वेदत्रिकं, कषायचतुष्कं, मतिश्रुतावधिज्ञानानि, अज्ञानत्रिकं, देशविरत्यसंयमौ, दर्शनत्रिकं, विना शुक्लां पञ्च लेश्याः, भव्याभव्यौ, सम्यक्त्वौघवेदकसास्वादनमिथ्यात्वानि, संज्ञी, असंज्ञी, आहारकश्च ।

इयमत्र भावना—शेषमार्गणा असंख्यातजीवा अनन्तजीवाश्चेति द्विधा विभज्यन्ते । तत्र नरकौघादित्रिन्यूनशतमार्गणा असंख्यातजीवाः, तिर्यगोघाद्येकविंशतिमार्गणा अनन्तजीवाः । अथा-संख्यातजीवासु मार्गणासु जीवानामेवासंख्यातत्वेनायुषो बन्धकानामसंख्यातत्वादायुरुत्कृष्टप्रदेश-बन्धकाः सुतरामसंख्याता एव भवन्ति । तथाऽनन्तजीवासु मार्गणासु जीवानामानन्त्यादायुषो बन्धकानामनन्तत्वेऽप्यायुरुत्कृष्टप्रदेशबन्धकास्तु असंख्याता एव भवन्ति । तद्यथा—असंज्ञिमार्गणां विना विंशतिमार्गणास्वायुरुत्कृष्टप्रदेशबन्धस्वामिनः संज्ञिजीवाः, असंज्ञिमार्गणायां च पञ्चेन्द्रियाः । संज्ञिनः पञ्चेन्द्रियाश्च प्रत्येकमसंख्याता एव । ततोऽनन्तजीवमार्गणास्वपि आयुरुत्कृष्टप्रदेशबन्धका असंख्याता एव भवन्ति ॥३७२॥

साम्प्रतं मार्गणास्वायुरनुत्कृष्टप्रदेशबन्धकानां परिमाणं गाथाद्विकेन निर्वक्ति—

पज्जमणुसमणुसीसुं आहारदुगाणताइदेवेसुं ।
मणणाणसंयमसमइअछेअपरिहारसुक्कखइएसुं ॥३७३॥ (गीतिः)
संखेज्जाउस्स मुणह अगुरुपएसस्स हुन्ति सेसासुं ।
तावइआ सत्तण्हं अगुरुपएसस्स जावइआ ॥३७४॥

(प्रे०) "पज्ज" इत्यादि, पर्याप्तमनुष्यमानुष्योः, आहारकद्विके, आनताद्यष्टादशदेव-भेदेषु, मनःपर्यवज्ञाने, संयमौघे सामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमेषु, शुक्ललेश्यायां क्षायिकसम्यक्त्वे चेत्येकोनत्रिंशन्मार्गणासु, "संखेज्जा" इत्यादि,—आयुषोऽनुत्कृष्टप्रदेशबन्धकाः संख्याता जानीत । मुणह इत्यत्र "ज्ञो जाणमुणौ" (सिद्धहेम० ८।४।७) इत्यनेन ज्ञाधातोः 'मुण' इत्यादेशः । इयमत्र भावना—पर्याप्तमनुष्यादिषु जीवा एव संख्याताः, आनतादिषु जीवानामसंख्यात-त्वेऽपि प्राग्भावितरीत्याऽऽयुषो बन्धकाः संख्याता एव । तत एतासु मार्गणास्वायुरनुत्कृष्टप्रदेश-बन्धकाः संख्याता एव भवन्ति ।

सम्प्रति शेषासु मार्गणास्वतिदिशति—"हुन्ति सेसासु" इत्यादि, शेषासु चतुस्त्रिंशदधिक-शतमार्गणास्वायुरनुत्कृष्टप्रदेशबन्धकाः तावन्तो भवन्ति, तावद्यावतोः सापेक्षत्वादाह—'सत्तण्हं अगुरुपएसस्स जावइआ' इति, सप्तानां कर्मणामनुत्कृष्टप्रदेशबन्धका यावन्तो भवन्ति तावन्त

आयुरनुत्कृष्टप्रदेशबन्धका भवन्तीत्यर्थः। तद्यथा–तिर्यगोघे, सर्वैकेन्द्रियभेदेषु, निगोदसप्तके, वनस्पतिकायौघे, काययोगौघौदारिकद्विककार्मणकाययोगेषु, नपुंसकवेदे, कषायचतुष्के, मतिश्रुताज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अशुभलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिनि, आहारकानाहारकयोश्चेत्यष्टात्रिंशद्मार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः अनन्ताः इति "तिरिये सव्वेगिंदिय" इत्यादिना निरूपितम्। अत एतासु मार्गणास्वायुरनुत्कृष्टप्रदेशबन्धका अपि "अनन्ताः" भवन्ति। नवरं कार्मणकाययोगानाहारकयोर्न वक्तव्यं, तयोरायुषोऽबध्यमानत्वात्। हेतुरपि तत्र यथा प्रदर्शितस्तथाऽत्रापि ज्ञेयः। तथा शेषासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः "असंख्याता" इति "सेसासु असंखिया णेया" इत्यनेन निरूपितम्। अतोऽत्रापि शेषासु अष्टनवतिमार्गणासु आयुरनुत्कृष्टप्रदेशबन्धका अपि "असंख्याता" भवन्ति। यद्यपि तत्र शेषासु विंशत्युत्तरशतमार्गणासु निरूपितं तथाप्यत्र तु अष्टनवतिमार्गणासु बोध्यम्, एकाद्विंशतिमार्गणासु निरूपितत्वात् त्रिमार्गणासु चायुषोऽबध्यमानत्वात्।

शेषाष्टनवतिमार्गणाश्चेमाः–[७]निखिलनरकभेदाः, [४]चतुस्तिर्यक्पञ्चेन्द्रियभेदाः, [२]मनुष्यौघापर्याप्तमानुष्यौ, [१२]देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्माद्यष्टवैमानिकदेवभेदाः, [१३]निखिलविकलेन्द्रियपञ्चेन्द्रियभेदाः, वनस्पतिकायौघनिगोदसप्तके विना [३४]चतुस्त्रिंशत्कायभेदाः, [११]पञ्चमनःपञ्चवचनवैक्रियकाययोगाः, [२]स्त्रीपुरुषवेदौ, [४]मतिश्रुतावधिविभङ्गज्ञानानि, [१]देशविरतिः, [२]चक्षुरवधिदर्शने, [२]तेजःपद्मलेश्ये, [३]सम्यक्त्वौघवेदकसास्वादनसम्यक्त्वानि, [१]संज्ञी। अत्र हेतुरपि तत्र यः शेषासु मार्गणासु जीवा असंख्याताः सन्तीति निगदितः स एव ज्ञेयः ॥३७३।३७४॥

तदेवमष्टानामपि कर्मणामुत्कृष्टानुत्कृष्टप्रदेशबन्धकानां परिमाणमभिहितम्। अथाष्टानामपि कर्मणां जघन्याजघन्यप्रदेशबन्धकानां परिमाणं वक्तुमुपक्रममाण आह—

**हस्सियरपएसाणं अट्ठण्ह हवन्ति बंधगाऽणंता।**
**सप्पाउग्गाणं खलु अगुरुपएसव्व सव्वासु ॥३७५॥**

(प्रे०) आदौ पूर्वार्धेन सामान्यवक्तव्यतामाह–'**हस्सियर**' इत्यादि, अष्टकर्मणां जघन्यप्रदेशानामितरप्रदेशानामजघन्यप्रदेशानां बन्धका 'अनन्ताः' भवन्ति। अत्रायं हेतुः–अष्टानामपि कर्मणां जघन्यप्रदेशबन्धस्वामिनः सूक्ष्मापर्याप्तनिगोदाः, ते च प्रतिसमयमनन्ता अजघन्याजघन्यप्रदेशबन्धं कुर्वन्तः प्राप्यन्ते। अत एव वक्ष्यमाणनानाजीवाश्रितकालद्वारे तानाश्रित्याष्टानामपि कर्मणां जघन्याजघन्यप्रदेशबन्धकानां कालः सर्वाद्धा वक्ष्यते। अथोत्तरार्धेन सर्वासु मार्गणास्वतिदिशन्नाह–'**सप्पाउग्गाणं खलु**' इत्यादि–खलुशब्दो पादपूरणार्थः, अष्टकर्मणां मध्ये स्वप्रायोग्याणां षडादिकर्मणां जघन्यप्रदेशबन्धका अजघन्यप्रदेशबन्धकाश्च प्रत्येकं अगुरुप्रदेशवत्–षडादिकर्मणामनुत्कृष्टप्रदेशबन्धका यावत्प्रमाणा निरूपितास्तावत्परिमाणा भवन्ति।

तद्यथा-तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, वनस्पतिकायौघः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम् , अप्रशस्त-लेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी, आहारक इति षट्त्रिंशद्मार्गणासु स्वप्रायोग्याणामष्टानामपि कार्मणानाहारकयोश्च सप्तानां कर्मणामनुत्कृष्टप्रदेशबन्धकाः "अनन्ता" भवन्ति, अतो जघन्यप्रदेशबन्धका अजघन्यप्रदेशबन्धकाश्च प्रत्येकमनन्ता भवन्ति । पर्याप्तमनुष्यमानुष्यौ, सर्वार्थ-सिद्धम् , आहारकद्विकं, मनःपर्यवज्ञानम् , संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमा इति दशमार्गणासु अष्टानामपि, अवेदे सप्तानां, सूक्ष्मसम्पराये षण्णाम् , आनतादयश्चत्वारो वैमानिकदेवाः, नवग्रैवेयकदेवाः, विजयवैजयन्तजयन्तापराजितलक्षणाश्चत्वारोऽनुत्तरदेवभेदाः, शुक्ल-लेश्या क्षायिकसम्यक्त्वं चेत्येकोनविंशतिमार्गणास्वायुषोऽनुत्कृष्टप्रदेशबन्धकाः "संख्याताः" भवन्ति, अतो जघन्यप्रदेशबन्धका अजघन्यप्रदेशबन्धका अपि "संख्याताः" भवन्ति । अथ सप्तकर्म-वक्तव्यतायां विंशत्यधिकशतमार्गणा आयुर्वक्तव्यतायां चाष्टनवतिमार्गणा अवशिष्टाः । तत्रायुर्वक्तव्य-तायामष्टनवतिमार्गणास्वायुरनुत्कृष्टप्रदेशबन्धका 'असंख्याता' भवन्ति, अत आयुर्जघन्याजघन्यप्रदेश-बन्धका अपि 'असंख्याताः' भवन्ति । तथा सप्तकर्मवक्तव्यतायां विंशत्युत्तरशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका "असंख्याताः" भवन्ति, अतो जघन्याजघन्यप्रदेशबन्धका अपि 'असंख्याताः' भवन्ति ॥३७५॥

अथ "सप्पाउग्गाणं खलु अगुरुपएसत्व सव्वासु" इत्यनेन कृतमतिदेशमानतादिविंशति-मार्गणास्वपवदति—

**णवराणताइगेसुं देवेसुं सुक्कखइउवसमेसुं ।**
**सत्तण्हं संखेज्जा हस्सपएसस्स विण्णेया ॥३७६॥**

(प्रे०) "णवर" इति केवलार्थमव्ययम् , तदुक्तं-"णवरं केवले" (सिद्धहेम० ८।२।१८७)। "आणताइगेसुं देवेसु" इति, आनतादय एव आनतादिकाः, "स्वार्थे कश्च वा" (सिद्धहेम० ८।२।१६४) इति सूत्रेण स्वार्थे कः, आनतादिसप्तदशदेवभेदेषु इत्यर्थः, । "सुक्क" इत्यादि,-शुक्ल-लेश्यायां, क्षायिकसम्यक्त्वे उपशमसम्यक्त्वे चेति विंशतिमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकाः "संख्याता" ज्ञेयाः । अत्रेयं भावना-आनतादिसप्तदशविधदेवमार्गणासु सप्तकर्मणां जघन्यप्रदेश-बन्धस्वामी भवप्रथमक्षणस्थो देवो भवति । तासु भवप्रथमक्षणस्था देवाश्च संख्याता एव, युगपत् संख्यातानामेव देवानामुत्पद्यमानत्वात् । कथमेतदवसीयते ? इति चेद् , गर्भजसंख्येयवर्षायुष्क-मनुष्याणामेवानतादिदेवतयोत्पद्यमानत्वात् । यतो वैमानिकदेवेषु गर्भजनरास्तिर्यञ्चश्चोत्पद्यन्ते । तत्र तिर्यञ्चः सहस्रारपर्यन्तमुत्पद्यन्ते इति प्राग् निरूपितम् , असंख्येयवर्षायुष्का नरा अपि द्वितीय-देवलोकं यावदेव गच्छन्ति । तथा चाहुः श्रीमच्चन्द्रर्षिपुङ्गवा बृहत्संग्रहण्याम्–

नरतिरिअसंखजीवी, सव्वे नियमेण जंति देवेसु । नियआउयसमहीणाउएसु ईसाण अंतेसु ॥

ततो गर्भजसङ्ख्येयवर्षायुष्कनरा एवावशिष्टाः । इत्येवमानतादिदेवमार्गणासु देवानामसंख्यातत्वेऽपि सप्तकर्मणां जघन्यप्रदेशबन्धकाः संख्याता एव भवन्ति । तथा शुक्ललेश्यायां सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी भवप्रथमसमयस्थो मर्त्योऽमर्त्यो वा भवति । तत्र मनुष्यास्तु सर्वेऽपि संख्याता एव । विबुधा अपि प्राग्भावितनीत्या शुक्ललेश्यायां भवप्रथमसमये वर्तमानाः संख्याता एव । ततः शुक्ललेश्यायां सप्तकर्मणां जघन्यप्रदेशबन्धकाः संख्याता एव भवन्ति । क्षायिकसम्यक्त्वमार्गणायां भवप्रथमसमयस्थाः संख्याता एव, अतो जघन्यप्रदेशबन्धका अपि संख्याता एव । अथोपशमसम्यक्त्वे सप्तकर्मणां जघन्यप्रदेशबन्धस्वामी भवप्रथमसमयस्थो नाकी भवति । उपशमसम्यक्त्वे वर्तमाना भवप्रथमसमयस्थाः त्रिदशाः संख्याता एव । यत उपशमश्रेणौ निधनं प्राप्ता मनुष्यजीवा एव देवतयोत्पद्य भवप्रथमसमय उपशमसम्यक्त्वे वर्तमाना भवन्ति । तत उपशमसम्यक्त्वेऽपि सप्तकर्मणां जघन्यप्रदेशबन्धकाः संख्याता एव भवन्ति ।

**अत्रायं निष्कर्षः**—जघन्याजघन्यप्रदेशबन्धकानां परिमाणवक्तव्यतायां वृत्तौ निगदितासु तिर्यगोघप्रमुखाष्टात्रिंशति मार्गणासु स्वप्रायोग्याणां कर्मणां, जघन्याजघन्यप्रदेशबन्धकाः "अनन्ताः" भवन्ति । पर्याप्तमनुष्यादिद्वादशमार्गणासु स्वप्रायोग्याणां कर्मणाम् , आनताद्येकोनविंशतिमार्गणासु आयुषो जघन्याजघन्यप्रदेशबन्धकाः, आनतादिविंशतिमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकाः "संख्याताः" भवन्ति । आनतादिविंशतिमार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धकाः शेषासु शतमार्गणासु स्वप्रायोग्याणां कर्मणां जघन्याजघन्यप्रदेशबन्धकाः असंख्याता भवन्ति । शेषशतमार्गणा इमाः—निखिलनरकभेदाः, समस्ततिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघादिसहस्रारान्ता द्वादशदेवभेदाः, अशेषद्वित्रिचतुःपञ्चेन्द्रियभेदाः, निगोदसप्तकवनस्पतिकायौ विना चतुस्त्रिंशत्कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियद्विकानि, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघवेदकसास्वादनमिश्रलक्षणाश्चत्वारो सम्यक्त्वभेदाः, संज्ञी च ॥३७६॥

॥इति श्रीप्रेमप्रभाटीकासमलंकृते बन्धविधानेऽमूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे दशमं परिमाणद्वारं समाप्तम्॥



ओघतः—मोहायुषोरुत्कृष्टप्रदेशबन्धका असंख्याताः, षट्कर्मणामुत्कृष्टप्रदेशबन्धकाः संख्याताः । अष्टकर्मणामनुत्कृष्टप्रदेश-

| | | | गति० | इन्द्रिय० | काय० | योग० |
|---|---|---|---|---|---|---|
| सप्तकर्मणाम् | उत्कृष्टप्रदेशबन्धकाः | संख्याताः | अपर्याप्तं विना त्रिनर० । सर्वार्थं० | | | आहारकद्विक० |
| | | अनन्ताः | | सर्वैकेन्द्रिय० | सर्वनिगोद० वन० सा० | |
| | | ओघवत् { मोहस्य संख्याताः षट्कर्मणां संख्याताः | | पञ्चे.सा./प.पञ्चे० | त्रसोघपर्याप्तत्रस. | पञ्चमनःपञ्चवचन० का.सा /औदारिक० |
| | | असंख्याताः | शेषसर्व० (४३) | सर्वविकलेन्द्रिय० अपर्याप्तपञ्चेन्द्रिय० | शेषसर्व. (३२)* | औदा.मि./कार्मण० वैक्रियद्विक० |
| | अनुत्कृष्टप्रदेशबन्धकाः | अनन्ताः | तिर्यगोघ० | सर्वैकेन्द्रिय० | सर्वनिगोद० वन० सा० | का.सा./औदारिक-द्विक कार्मण० |
| | | संख्याताः | प० म०/मानुषी० सर्वार्थं० | | | आहारकद्विक० |
| | | असंख्याताः | शेषसर्व० (४३) | सर्वद्वित्रिचतुःपञ्चेन्द्रिय० | शेषसर्व. (३४)+ | पञ्चमनःपञ्चवचन० वैक्रियद्विक० |
| आयुषः | उत्कृष्टप्रदेशबन्धकाः | संख्याताः | अपर्याप्त विना त्रिनर०आनतादि० | | | आहारकद्विक० |
| | | अनन्ताः | | सर्वैकेन्द्रिय० | सर्वनिगोद० वन० सा० | |
| | | असंख्याताः | शेषसर्व० (२६) | सर्वद्वित्रिचतुःपञ्चेन्द्रिय० | शेषसर्व० (३४) * | शेषसर्व० (१४) |
| | अनुत्कृष्टप्रदेशबन्धकाः | संख्याताः | पर्या०म०/मानुषी० आनतादि० (१८) | | | आहारकद्विक० |
| | | अनन्ताः | तिर्यगोघ० | सर्वैकेन्द्रिय० | सर्वनिगोद० वन० सा० | का० सा०/ औदारिकद्विक० |
| | | असंख्याताः | शेषसर्व० (२६) | सर्वद्वित्रिचतुःपञ्चेन्द्रिय० | शेषसर्व० (३४) + | शेषसर्व० (११) |
| अष्टकर्मणां जघन्याजघन्यप्रदेशबन्धकाः | | स्वप्रायोग्याणां कर्मणां जघन्याजघन्यप्रदेशबन्धका अनन्ताः । | तिर्यगोघ० | सर्वैकेन्द्रिय० | सर्वनिगोद० वन० सा० | का सा./औदारिकद्विक०/कार्मण० |
| | | स्वप्रायोग्यकर्मणां जघन्याजघन्यप्रदेशबन्धका संख्याताः । | पर्या०म०/मानुषी० सर्वार्थं० | | | आहारकद्विक० |
| | | आयुषो जघन्याजघन्यप्रदेशबन्धकाः संख्याताः | आनतादि० (१७ | | | |
| | | सप्तकर्मणां जघन्यप्रदेशबन्धकाः संख्याताः | आनतादि० (१७) | | | |
| | | सप्तकर्मणामजघन्यप्रदेशबन्धकाः असंख्याताः | आनतादि० (१७ | | | |
| | | स्वप्रायोग्यकर्मणां जघन्याजघन्यप्रदेशबन्धका असंख्याताः | शेषसर्व० (२६) | सर्वद्वित्रिचतुःपञ्चेन्द्रिय० | शेषसर्व० (३४) + | शेषसर्व० (१२) |

* पञ्चतेजोवायुकायानां सर्वसूक्ष्मबादरापर्याप्तभेदेषु अपर्याप्तप्रत्येकवनस्पतिकाये चोत्कृष्टप्रदेशबन्धका असंख्येयलोकप्रदेशतुल्या ज्ञेयाः ( गाथा० ३६४ ) ।

बन्धका अनन्ताः ( गाथा० ३५९ ) । अष्टकर्मणां जघन्याजघन्यप्रदेशबन्धका अनन्ता गाथा० ३७५ ) ।

| वेद० | कषाय० | ज्ञान० | संयम० | दर्शन० | लेश्या० | भव्य० | सम्य० | संज्ञि० | आहा. | मार्गणा-संख्या | गाथा. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अवेद० | | मन:पर्यव | स सा./स ./छे /प /सूक्ष्म. | | | | | | | १३ | ३६० ३६१ |
| | | | | | | | | | | १५ | ३६१ |
| | लोभे | मतिश्रुताव'ध० | | सर्व० | शुक्ल० | भव्य० | स.सा.।क्षा.। उप० | स० | आहा | ३० | ३६२ ३६३ |
| वेद-त्रिके | शेषसर्व ३ | अज्ञानत्रिके | देशविरत्य-संयम० | | शेषसर्व० | अभव्य. | शेषसर्व० | असं. | अना. | ११२ | ३६३ |
| नपुं० | सर्व० | मतिश्रुता-ज्ञान० | असं० | अच. | कृ.।नी.।का. | सर्व० | मिथ्या० | असं. | सर्व० | ३८ | ३६५ ३६६ |
| अवे० | | मन प० | सं सा./सा./छे /प /सूक्ष्म | | | | | | | १२ | ३६७ ३६८ |
| स्त्री. पुरुष. | | शेषसर्व | देशविरति० | चक्षुर-वधि. | ते.।प.।शु. | | शेषसर्व० | सं० | | १२० | ३६८ |
| | | मन प० | स सा./सा०/छे./प. | | शुक्ल० | | क्षायिक० | | | ३० | ३७० ३७१ |
| | | | | | | | | | | १५ | ३७२ |
| वेद-त्रिक | सर्व० | शेषसर्व. | दे०/असं० | सर्व. | शुक्लामृते सर्व० | सर्व० | क्षायिकमृते शेषसर्व०४ | सर्व० | आहा. | ११८ | ३७२ |
| | | मन प० | स.सा./सा./छे./प. | | शुक्ल० | | क्षायिक० | | | २१ | ३७३ ३७४ |
| नपुं. | सर्व० | मतिश्रुता-ज्ञान० | असं० | अच० | कृ.।नी.।का. | सर्व० | मिथ्या० | असं० | आहा. | ३६ | ३७४ |
| स्त्री. पुरुष | | शेषसर्व० | देशविरति० | चक्षुर-वधि | ते ।प. | | शेषसर्व०३ | सं० | | ९८ | ३७४ |
| नपुं. | सर्व० | मतिश्रुता ज्ञान० | असं० | अच. | कृ ।नी.।का. | सर्व० | मिथ्या० | अस. | सर्व० | ३८ | ३७५ |
| अवे० | | मन प० | सं सा /सा./छे./प. सूक्ष्म० | | | | | | | १२ | ३७५ |
| | | | | | शुक्ल० | | क्षायिक० | | | १९ | ३७५ |
| | | | | | शुक्ल० | | क्षायिक० उप० | | | २० | ३७५ |
| | | | | | शुक्ल० | | क्षायिक० उप० | | | २० | ३७५ |
| स्त्री. पुरुष | | शेषसर्व. | देशविरति० | चक्षुर-वधि. | ते. प. | | शेषसर्व०४ | सं० | | १०० | ३७५ |

+ पृथ्व्यप्तेजोवायुकायानां सर्वोषबादरोबबादरापर्याप्तसर्वसूक्ष्मभेदेषु तथा प्रत्येकवनस्पतिकायस्य चोभापर्याप्तभेदयोरनुत्कृष्ट-प्रदेशबन्धका असंख्येयलोकप्रदेशतुल्या ज्ञेयाः ( गाथा० ३६६ ) ।

## ॥ एकादशं क्षेत्रद्वारम् ॥

गतं परिमाणद्वारम्। अथोत्कृष्टादिप्रदेशबन्धका जीवा वर्तमानकाले यद्वा कस्मिँश्चित्समये उत्कृष्टतो लोकाकाशस्य कतिषु भागेषु वर्तन्ते इत्येकादशं क्षेत्रद्वारं निरूपयितुमुपचिक्रंसुरादौ तावदुत्कृष्टानुत्कृष्टप्रदेशबन्धकानां क्षेत्रस्यौघवक्तव्यतामाह—

**लोगासंखियभागे जेट्ठपएसस्स बंधगाऽट्ठण्हं।**
**होअंति बंधगा खलु अगुरुपएसस्स सव्वजगे ॥३७७॥**

(प्रे०) "लोगासंखियभागे" इत्यादि, अष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धका लोकासंख्यभागे–लोकस्य असंख्यतमो भागो लोकासंख्यभागः, तस्मिन्, लोकस्यैकासंख्याततमे भागे भवन्तीत्यर्थः। इयमत्र भावना–षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकाः सूक्ष्मसम्परायस्थाः, मोहनीयायुषोरुत्कृष्टप्रदेशबन्धकाः पर्याप्तसंज्ञिनो जीवाः सन्ति। अथ प्रज्ञापनादिषु पञ्चेन्द्रियमात्रस्य क्षेत्रं स्वस्थानादिना लोकस्यासंख्याततमो भागो निरूपितम्। तद्यथा–कहि णं भंते पंचिंदियाण पज्जत्तापज्जत्तगाणं ठाणा प०, गोयमा! उड्ढलोयस्स तदेक्कदेसभाए, अहोलोयस्स तदेक्कदेसभाए, तिरियलोए अगडेसु, तलाएसु, नंदीसु, दहेसु, वावीसु, पुक्खरिणीसु, दीहियासु, गुंजालियासु, सरेसु, सरपंतियासु, सरसरपंतियासु, बिलेसु, बिलपंतियासु, उज्झरेसु, निज्झरेसु, चिल्ललेसु, पल्ललेसु, वप्पिणेसु, दीवेसु, समुद्देसु, सव्वेसु चेव जलासएसु, जलठाणेसु, एत्थ णं पंचिंदियाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएण लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे (सू० ४१)। इत्येवं यदि पञ्चेन्द्रियमात्रस्य क्षेत्रं लोकासंख्याततमो भागोऽस्ति तर्हि उत्कृष्टप्रदेशबन्धकानां पर्याप्तसंज्ञिनां तु सुतरां लोकासंख्याततमभागो सिद्धिमुपयाति। न च "चतुर्थे लोकपूरणमष्टमे संहारः" इति वचनात् समुद्घातगतः सयोगिकेवली सर्वलोकव्यापी भवति, सयोगिकेवलिनश्च वेदनीयस्य बन्धोऽपि भवतीति वेदनीयकर्मणो बन्धकाः सर्वलोकव्यापिनो भवन्तीति वाच्यम्, अत्र सकषायप्रदेशबन्धस्यैव प्रस्तुतत्वात्। सकषायप्रदेशबन्धश्च सूक्ष्मसम्परायं यावदेव भवति। अतः सयोगिकेवलिबन्धोऽत्र न विवक्षितः।

अथोत्तरार्धं विव्रियते–"होअंति" इत्यादि, "अट्ठण्हं" इति पदमत्रापि सम्बध्यते। अष्टानामपि कर्मणामनुत्कृष्टप्रदेशबन्धकाः सर्वजगति-सकललोके भवन्ति। यतोऽष्टानामपि कर्मणामनुत्कृष्टप्रदेशबन्धं सकषायाः सर्वेऽपि जीवाः कुर्वन्ति। सकषायसर्वजीवेषु सूक्ष्मजीवानामपि समावेशः। पर्याप्तापर्याप्तभेदभिन्नाः प्रत्येकं सूक्ष्मजीवाः "सुहुमा उ सव्वलोए" इति वचनप्रामाण्यात् समुद्घातेन स्वस्थानेन च सर्वलोकव्यापिनो भवन्ति। अत्यन्तसूक्ष्मत्वादस्माकं चर्मचक्षुषां दृष्टिपथं नावतरन्ति। केवलवेदसां केवलज्ञानदृष्टिपथमवतरन्त्येव ॥३७७॥

साम्प्रतमादेशतः सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां क्षेत्रं प्ररूपयिषुरादौ तावद्यासु मार्गणासु क्षेत्रं संपूर्णविश्वं ता गाथाद्विकेन भणति—

होअन्ति सव्वलोगे जेट्ठपएसस्स आउवज्जाणं ।
कम्माण बंधगा खलु एगिंदियसव्वभेएसुं ॥३७८॥
पुढवाईण चउण्हं सव्वसुहमबायरासमत्तेसुं ।
वणसव्वणिगोएसुं अपज्जपत्तेअवणकाये ॥३७९॥

(प्रे०) 'अत्रेदमवगन्तव्यं विपश्चिद्भिः—यासु मार्गणासूत्कृष्टादिप्रदेशबन्धकाः सूक्ष्मजीवास्तासु यथासम्भवं स्वस्थानादिभिः सर्वलोकः, यासु मार्गणासु बादरापर्याप्ता यद्वा बादरपर्याप्तनिगोदास्तासु यथासम्भवमुपपातसमुद्घाताभ्यां सर्वलोकः, यासु पर्याप्तबादरवायुकायास्तासु यथासम्भवं स्वस्थानादिना देशोनलोकः, यासु चोक्तव्यतिरिक्ता जीवास्तासु यथासम्भवं स्वस्थानादिना लोकासंख्यातत‌मभागः क्षेत्रमुत्कृष्टादिप्रदेशबन्धकानां भवति । एतच्च सामान्येनाभिहितम् , विशेषतस्तु यथास्थानमग्रे स्फुटीकरिष्यामः ।

अथ गाथार्थः—"होअन्ति" इत्यादि,—आयुर्वर्जानां सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः "सर्वलोके" भवन्ति । कासु मार्गणासु ? इत्याह—"एगिंदिय" इत्यादि, एकेन्द्रियाणां सर्वभेदेषु, पृथ्व्यादीनां चतुर्णां पृथिव्यप्तेजोवायूनां सर्वसूक्ष्मेषु, पृथ्व्यादीनां चतुर्णां बादरापर्याप्तेषु च, वनेति वनस्पतिकायौघे, सर्वेषु सप्तसंख्याकेषु निगोदेषु, अपर्याप्तप्रत्येकवनस्पतिकाये चेति द्वात्रिंशन्मार्गणासु ।

अयमत्र भावनापथः—एकेन्द्रियौघबादरपर्याप्तबादरैकेन्द्रियेषु पर्याप्तबादरनिगोदा अपि, निगोदौघबादरपर्याप्तबादरनिगोदेषु वनस्पतिकायौघे च पर्याप्तबादरनिगोदाः, अपर्याप्तबादरैकेन्द्रियेऽपर्याप्तबादरनिगोदा अपि, अपर्याप्तबादरनिगोदेऽपर्याप्तबादरनिगोदाः सप्तकर्मणामुत्कृष्टप्रदेशबन्धका भवन्ति । पर्याप्तापर्याप्तबादरनिगोदाश्च प्रत्येकं समुद्घातेन सर्वलोकव्यापिनो भवन्ति । तथा चाह श्रीप्रज्ञापनायां भगवान् श्यामाचार्यः—"एत्थ णं बादरवणस्सइकाइयाणं पज्जत्तगाणं ठाणा प०, उववाएणं सव्वलोए, समुग्घाएणं सव्वलोए, सट्ठाणेणं लोयस्स असंखेज्जइभागे । कहि णं भंते बादरवणस्सइकाइयाणं अपज्जत्तगाणं ठाणा प० ? गोयमा ! जत्थेव बादरवणस्सइकाइयाणं पज्जत्तगाणं ठाणा तत्थेव बादरवणस्सइकाइयाणं अपज्जत्तगाणं ठाणा प०, उववाएणं सव्वलोए, समुग्घाएणं सव्वलोए, सट्ठाणेणं लोयस्स असंखेज्जइभागेइति" इत्येवमेकेन्द्रियौघादिनवमार्गणासु पर्याप्तापर्याप्तबादरनिगोदानाश्रित्य सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां "सर्वलोकः" क्षेत्रं प्राप्यते ।

ननु निगदितप्रज्ञापनावचनात् पर्याप्ता अपर्याप्ताश्च बादरवनस्पतिकायिकाः प्रत्येकं स्वस्थानेन लोकस्यासंख्यतमभागेऽपि वर्तन्तेऽत उक्तनवमार्गणासु क्षेत्रं लोकस्यासंख्याततमभागोऽपि किं न निरूप्यते ? इति चेद् , न, अभिप्रायापरिज्ञानाद् , यद्यपि मार्गणासूत्कृष्टप्रदेशबन्धकानां जीवानां क्षेत्रं त्रिधा प्राप्यते, तद्यथा—स्वोत्पत्तिस्थानात्मकेन स्वस्थानेन, मारणान्तिकसमुद्घातलक्षणेन समुद्घातेन, उत्पादेन च, तथाप्यत्र तु त्रिप्रकारमध्ये येन केनापि प्रकारेण प्राप्यमाणमुत्कृष्टमेव

क्षेत्रं निरूप्यते । उक्तत्रमार्गणासूत्कृष्टक्षेत्रं समुद्घातेन सर्वलोकः प्राप्यत इति स एव निरूप्यते । स्वस्थानेन प्राप्यमाणस्य लोकासंख्याततमभागमात्रस्य क्षेत्रस्य तूत्कृष्टत्वाभावान्न निरूप्यते । एवमग्रेऽपि बोध्यम् । तथा सूक्ष्माष्टादशभेदेषु यथासम्भवं पर्याप्तापर्याप्तसूक्ष्माः, बादरापर्याप्त-पृथ्व्यादिचतुर्भेदेषु अपर्याप्तप्रत्येकवनस्पतिकाये च यथासम्भवं बादरापर्याप्तपृथ्व्यादयः सप्तकर्मणा-मुत्कृष्टप्रदेशबन्धका भवन्ति । पर्याप्तापर्याप्तसूक्ष्मा बादरापर्याप्तपृथ्व्यादयश्च प्रत्येकं सर्वलोके भवन्ति । तथा चोक्तं जीवसमासे—

"तिरिएगिंदिय सुहुमा सव्वे तह बायरा अपज्जत्ता । सव्वे वि सव्वलोए सेसा उ असंखभागम्मि"

अस्याक्षरगमनिका चैवम्—तिर्यञ्चः पृथिव्यप्तेजोवायुवनस्पत्येकेन्द्रियलक्षणाः सूक्ष्माः सर्वे तथा बादरापर्याप्ताः पृथिव्यप्तेजोवायुवनस्पत्येकेन्द्रियाः प्रत्येकं सर्वेऽपि सर्वस्मिन् लोके वर्तन्ते । शेषाः पर्याप्तबादरवायुकायं विना बादरपर्याप्तपृथ्व्यादयो लोकस्यासंख्याततमे भागे वर्तन्ते । विस्तरार्थिना तु तट्टीकैवावलोकनीया । इत्येवं सूक्ष्मैकेन्द्रियौघादित्रयोविंशतिमार्गणासु सूक्ष्मान् बादरापर्याप्तां-श्चाश्रित्य सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां क्षेत्रं "सर्वलोकः" प्राप्यते । तत्र सूक्ष्मजीवानाश्रित्य स्वस्थानसमुद्घाताभ्यां बादरापर्याप्तानाश्रित्य च समुद्घातेन सर्वलोकः क्षेत्रं प्राप्यते । इत्येवमत्र द्वात्रिंशन्मार्गणासु सप्तप्रकृतीनामुत्कृष्टप्रदेशबन्धकानां सर्वलोकः क्षेत्रं भावितम् ॥३७८।३७९॥

साम्प्रतं सप्तकर्मणामुत्कृष्टप्रदेशबन्धका यासु बहवोऽसंख्यातभागा यासु चासंख्याततमो भागस्ता निरूपयति—

होअन्ति वाउकाये बायरवाउम्मि तस्स पज्जत्ते ।
हीणजगे सेसासु लोगस्स असंखभागम्मि ॥३८०॥

(प्रे०) "होअंति" इत्यादि, वायुकायौघे, बादरवायुकाये, तस्य बादरवायुकायस्य पर्याप्ते, पर्याप्तबादरवायुकाये इत्यर्थः, सप्तकर्मणामुत्कृष्टप्रदेशबन्धका हीनजगति-असंख्याततमेन भागेन न्यूने लोके वर्तन्ते । तथाहि—उक्तत्रिमार्गणासु पर्याप्तबादरवायुकायः सप्तकर्मणामुत्कृष्टप्रदेश-बन्धस्वामी भवति । पर्याप्तबादरवायुकायाश्च स्वस्थानादिना लोकस्यानेकेष्वसंख्येयभागेषु वर्तन्ते, तथा चोक्तं प्रज्ञापनायाम्—"एत्थ णं बादरवाउकाइयाणं पज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जेसु भागेसु, समुग्घाएणं लोयस्स असंखेज्जेसु भागेसु, सट्ठाणेणं लोयस्स असंखेज्जेसु भागेसु"।

'सेसासु' इत्यादि,—उक्तव्यतिरिक्तासु पञ्चत्रिंशदधिकशतमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेश-बन्धका "लोकस्यासंख्याततमे भागे' वर्तन्ते । शेषमार्गणा इमाः—समस्तगतिभेदाः, कृत्स्नद्वित्रि-चतुःपञ्चेन्द्रियाः, पृथ्व्यप्तेजःकायाः, बादरपृथ्व्यप्तेजःकायाः, बादरपर्याप्तपृथ्व्यप्तेजःकायाः, प्रत्येकवनस्पतिकायौघपर्याप्तप्रत्येकवनस्पतिकायौ, त्रसत्रिकं चेति चतुर्दशकायमार्गणाभेदाः, शेष-सर्वमार्गणानां सर्वभेदाः।

अत्रेयं भावना–द्वित्रिचतुरिन्द्रियसर्वभेदेषु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका यथासम्भवं पर्याप्ता अपर्याप्ता वा यथासंख्यं द्वित्रिचतुरिन्द्रिया भवन्ति । तथा त्रसत्रिकमन्तरा पृथ्वीकायौघाद्येकादशकायमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः पर्याप्तबादरपृथ्व्यादय एव भवन्ति । अथ पर्याप्तापर्याप्तद्वित्रिचतुरिन्द्रियाः पर्याप्तबादरपृथ्व्यादयश्च प्रत्येकं स्वस्थानादिना लोकासंख्याततमे भाग एव वर्तन्ते इति प्रज्ञापनायामभिहितम् । तद्यथा–"···············एत्थ णं बेइंदियाणं पज्जत्तापज्जत्तगाणं ठाणा प०, उववाएणं लोगस्स असंखेज्जइभागे, समुग्घाएणं लोगस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे । ··········एत्थ णं तेइंदियाणं पज्जत्तापज्जत्तगाणं ठाणा प० उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे । ···············एत्थ णं चउरिंदियाणं पज्जत्तापज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे । ···············एत्थ णं बायरपुढवीकाइयाणं पज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे । ···············एत्थ णं बायरआउकाइयाणं पज्जत्तगाणं ठाणा प०, उववाएणं लोगस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे । ···············एत्थ णं बायरतेउकाइयाणं पज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे" । पर्याप्तप्रत्येकवनस्पतिकायिकाः पर्याप्तपृथ्व्यादिवदसंख्यलोकाकाशप्रदेशेभ्यो न्यूनाः सन्तीति तेऽपि पर्याप्तपृथ्व्यादिवल्लोकासंख्याततमे भागे एव क्षेत्रे वर्तन्ते इति । असंज्ञिमार्गणायां सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः पर्याप्तपञ्चेन्द्रिया असंज्ञिनो भवन्ति । शेषासु चतुर्दशोत्तरशतमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका यथासम्भवं पर्याप्तसंज्ञिनोऽपर्याप्तसंज्ञिनश्च भवन्ति । अथ सामान्यवक्तव्यतायामुक्तात् प्रज्ञापनावचनात् पञ्चेन्द्रियमात्रस्य क्षेत्रं लोकासंख्यभागप्रमाणमिति पर्याप्तपञ्चेन्द्रियासंज्ञिनः, पर्याप्तसंज्ञिनोऽपर्याप्तसंज्ञिनश्च लोकासंख्येयतमभागे एव वर्तन्त इति सुतरां सिद्ध्यति । इत्येवं शेषासु पञ्चत्रिंशदुत्तरशतमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकान् लोकासंख्याततमभागप्रमाणं क्षेत्रं साधितम् ॥२८०॥

सम्प्रति मार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां क्षेत्रं कलापकेन चिन्तयति—

तिरिये सव्वेगिंदियणिगोअवणसेससुहमभेएसुं ।
पुहवाइचउसु तेसिं बायरबायरअपज्जेसुं ॥२८१॥
पत्तेअवणम्मि तहा तदपज्जत्तम्मि कायजोगे य ।
उरलदुगकम्मणेसुं णपुंसगे चउकसायेसुं ॥२८२॥
अण्णाणदुगे अयते अचक्खुअपसत्थलेसभवियेसुं ।
अभवियमिच्छत्तेसुं असण्णिआहारगियरेसुं ॥२८३॥

अणुक्कस्सस्स सयललोगे बायरसमत्तवाउम्मि ।
ऊणजगे सेसासु लोगस्स असंखभागम्मि ॥२८४॥

(प्रे०) "तिरिये" इत्यादि, तिर्यगोघे, सर्वैकेन्द्रियभेदेषु, सर्वनिगोदभेदेषु, 'वन' इति, वनस्पतिकायौघे, शेषसूक्ष्मभेदेषु–एकेन्द्रियनिगोदयोः सर्वभेदेषूक्तत्वादेकेन्द्रियनिगोदयोः षड्भ्यः सूक्ष्मभेदेभ्यो व्यतिरिक्तेषु पृथ्व्यप्तेजोवायूनां द्वादशसूक्ष्मभेदेषु इत्यर्थः, पृथ्व्यादिचतुषु–पृथ्व्यप्तेजोवायूनां चतुर्ष्वोघभेदेषु, तेषां–पृथ्व्यादिचतुर्णां बादरेषु बादरापर्याप्तेषु च, (द्वितीयगाथावृत्तिः) प्रत्येकवनस्पतिकायौघे, तथा तस्य–प्रत्येकवनस्पतिकायस्यापर्याप्ते, काययोगौघे, औदारिकद्विके, कार्मणकाये, नपुंसकवेदे, चतुष्कषायेषु, (तृतीयगाथावृत्तिः) मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अप्रशस्तलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिनि, आहारके, इतरेऽनाहारके चेति चतुःषष्टिमार्गणासु (चतुर्थगाथावृत्तिः) सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः सम्पूर्णलोके वर्तन्ते ।

अत्रेयं भावना–अत्र कासुचित्सूक्ष्मपृथिव्यादिमार्गणासु सूक्ष्मजीवानां समावेशः, कासुचिद् बादरपृथ्व्यादिमार्गणासु बादरापर्याप्तानां समावेशः, कासुचित्तिर्यगोघादिमार्गणासु सूक्ष्मबादरापर्याप्तोभयविधानां समावेशोऽस्ति । सूक्ष्माणां बादरापर्याप्तानां च क्षेत्रं सर्वलोक इत्युत्कृष्टप्रदेशबन्धकानां क्षेत्रनिरूपणे सप्रमाणं निरूपितमेव । नवरमयं विशेषः–सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां क्षेत्रनिरूपणे सूक्ष्माणां स्वस्थानसमुद्घाताभ्यां बादरापर्याप्तानां च समुद्घातेन सर्वलोकः क्षेत्रं निरूपितम्, परमत्र तु सूक्ष्माणां बादरापर्याप्तानां चोपपातेनाऽपि सर्वलोकः क्षेत्रं ज्ञेयम् ।

ननु को विशेषो येन तत्रोपपातेन सर्वलोकः क्षेत्रं न प्राप्यतेऽत्र तु प्राप्यते इति चेद्, शृणु, उत्कृष्टप्रदेशबन्धस्य कारणकूटे उत्कृष्टयोगोऽपि प्रविष्टः । तथा भवान्तरालवर्तनात्मको हि उपपातः । भवप्रथमसमये स च भवान्तरं गच्छतो जीवस्य गमनप्रथमसमय एव भवति । भवप्रथमसमये च पर्याप्तानामपर्याप्तानां वा केषाञ्चिदपि जीवानामुत्कृष्टयोगः नैव सम्भवति । यतः "सव्वो वि पढमजतगो पइखणमसंखगुणाए जोगवुड्ढीए वड्ढई" इति वचनाद् भवप्रथमसमयादन्तर्मुहूर्तं यावद् योगस्यासंख्यगुणवृद्धिर्भवति । इत्युपपातावस्थायां सर्वजीवानामुत्कृष्टयोगाभावादुत्कृष्टप्रदेशबन्धकानामभावेन तन्मूलस्य क्षेत्रस्याप्यभावः ।

अथ प्रत्येकवनस्पतिकायौघे अपर्याप्तवनस्पतिकायेऽपि च जीवानामसंख्येयलोकाकाशप्रदेशप्रमाणत्वात् सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका उपपातादिना संपूर्णलोके वर्तन्ते ।

"बायरसमत्तवाउम्मि ऊणजगे" इति, बादरपर्याप्तवायुकाये सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः 'ऊनजगति' एकासंख्याततमभागेन न्यूने लोके वर्तन्ते, 'बादरपवणा असंखेसु' इति पञ्चसंग्रहवचनप्रामाण्यात् ।

नन्वत्र को विशेषः ? येनोत्कृष्टप्रदेशबन्धकानां क्षेत्रं वायुकायौघादित्रिमार्गणासु देशोनलोकः प्ररूपितम्, अत्र तु केवलं पर्याप्तबादरवायुकाये देशोनलोकः क्षेत्रं निरूप्यते, इति चेत्, प्रतिविधीयते, वायुकायौघादित्रिभेदेषु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः पर्याप्तबादरवायुकायिका भवन्ति, ते चोत्कृष्टप्रदेशबन्धकानां क्षेत्रस्य चिन्तायामुक्तप्रज्ञापनावचनात् स्वस्थानादित्रिभिरपि प्रकारैः देशोनलोके वर्तन्ते । अथ सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका वायुकायौघे बादरवायुकाये च पर्याप्तबादरवायुकाया इवापर्याप्तबादरवायुकाया अपि भवन्ति । बादरापर्याप्तवायुकायाश्चोपपातसमुद्घाताभ्यां सर्वलोके वर्तन्ते । तथा चोक्तं प्रज्ञापनायाम्—"कहि णं भंते अपज्जत्तबादरवाउकाइयाणं ठाणा प० ? गोयमा ! जत्थेव बादरवाउकाइयाणं पज्जत्तगाणं ठाणा तत्थेव बादरवाउकाइयाणं अपज्जत्तगाणं ठाणा प०, उववाएणं सव्वलोए, समुग्घाएणं सव्वलोए, सट्ठाणेणं लोयस्स असंखेज्जेसु भागेसु" । इति वायुकायौघे सूक्ष्मानाश्रित्यापर्याप्तबादरवायुकायानाश्रित्य वा बादरवायुकाये चापर्याप्तबादरवायुकायानाश्रित्य सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका उपपातसमुद्घाताभ्यां सर्वलोके वर्तन्ते । ततोऽत्र वायुकायौघादित्रिमार्गणानां मध्ये पर्याप्तबादरवायुकाया एव सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका देशोनलोके वर्तन्ते ।

"सेसासु लोगस्स असंखभागम्मि" इति, शेषासु पञ्चोत्तरशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका लोकस्यासंख्याततमे भागे वर्तन्ते । शेषमार्गणा इमाः—निखिलनरकभेदाः, तिर्यक्पञ्चेन्द्रियाणां चतुर्भेदाः, कृत्स्नमनुष्यदेवगतिभेदाः, समद्वित्रिचतुःपञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजःकायाः, पर्याप्तप्रत्येकवनस्पतिकायः, त्रसत्रिकं चेति सप्तकायभेदाः, पञ्चमनःपञ्चवचनवैक्रियद्विकाहारकद्विकानि, स्त्रीपुरुषापगतवेदमार्गणाः, मतिश्रुतावधिमनःपर्यवविभङ्गज्ञानानि, असंयममन्तरा षट्संयमभेदाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट् सम्यक्त्वमार्गणाः संज्ञी च ।

इयमत्र भावना—शेषमार्गणान्तर्गतासु कासुचिन्नरकगत्यादिमार्गणासु संज्ञिपञ्चेन्द्रिया एव, कासुचिद् द्वीन्द्रियौघादिषु द्वीन्द्रियादय एव, कासुचित् त्रसौघादिषूभयविधा जीवाः प्रविष्टाः सन्ति । संज्ञिपञ्चेन्द्रियाः पर्याप्तद्वीन्द्रियादयश्च प्रत्येकं प्रागभिहितप्रज्ञापनावचनेन स्वस्थानादित्रिभिरपि प्रकारैर्लोकासंख्याततमे भाग एव वर्तन्ते । तथा बादरपर्याप्तपृथ्व्यप्तेजःपर्याप्तप्रत्येकवनस्पतिकाया अपि प्राग् भावितरीत्या स्वस्थानादिना लोकासंख्याततमे भागे वर्तन्ते । ततः शेषासु पञ्चोत्तरशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका लोकासंख्याततमे भाग एव वर्तन्त इति सिद्धं भवति ॥३८१।३८२।३८३।३८४॥

साम्प्रतमायुष उत्कृष्टप्रदेशबन्धकानां क्षेत्रं चिन्तयितुमना आदौ तावद्यासु मार्गणासु सर्वलोकः क्षेत्रं ताः प्राह—

**उक्कोसस्स पएसस्स बंधगा आउगस्स कम्मस्स ।**
**होअन्ति सव्वलोगे सव्वेसुं सुहमभेएसुं ॥३८५॥**

(प्रे०) "उक्कोसस्स" इत्यादि, आयुषः कर्मण उत्कृष्टप्रदेशबन्धकाः सर्वलोके भवन्ति । कासु मार्गणासु ? इत्याह-'सव्वेसु सुहुमभेएसु' इति, सूक्ष्मैकेन्द्रियौघपर्याप्तापर्याप्तसूक्ष्मैकेन्द्रियेषु, सूक्ष्मपृथिव्यप्तेजोवायुवनस्पतिकायौघेषु, पर्याप्तापर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुवनस्पतिकायेषु चेत्यष्टादशसंख्याकसर्वसूक्ष्मभेदेषु । इयमत्र भावना-सूक्ष्ममार्गणासु आयुरुत्कृष्टप्रदेशबन्धका यथासम्भवं सूक्ष्मा एवापर्याप्तनिगोदादयो भवन्ति । अथ सर्वेऽपि सूक्ष्माः "सुहुमा उ सव्वलोए" इति वचनात् स्वस्थानेन समस्तलोके प्राप्यन्ते । ततः सर्वसूक्ष्ममार्गणास्वायुरुत्कृष्टप्रदेशबन्धकानां क्षेत्रं सर्वलोक एव भवति ॥३८५॥

साम्प्रतमायुरुत्कृष्टप्रदेशबन्धकानां क्षेत्रं यासु मार्गणासु "देशोनलोको" यासु च "लोकासंख्याततमभागः' ताः प्ररूपयति-

**एगिंदियवाऊसुं ताण सयलबायरेसु लोगम्मि ।**
**देसूणे सेसासुं लोगस्स असंखभागम्मि ॥३८६॥**

(प्रे०) "एगिंदिय' इत्यादि, एकेन्द्रियौघे, वायुकायौघे, तयोः-एकेन्द्रियवायुकाययोः सकलबादरभेदेषु=बादरैकेन्द्रियपर्याप्तापर्याप्तबादरैकेन्द्रियेषु बादरवायुकायपर्याप्तापर्याप्तबादरवायुकायेषु चेत्यष्टमार्गणास्वायुष उत्कृष्टप्रदेशबन्धकाः लोके देशोने-असंख्याततमभागात्मकदेशेन न्यूने लोके वर्तन्त इति सोपस्कारं व्याख्येयम् । अत्रेयं भावना-एकेन्द्रियौघबादरैकेन्द्रियपर्याप्तबादरैकेन्द्रियेषु आयुष उत्कृष्टप्रदेशबन्धकाः पर्याप्तबादरजीवा भवन्ति । पर्याप्तबादरेषु पर्याप्तबादरवायुकायानामपि समावेशोऽस्ति । ततस्तेऽप्यायुरुत्कृष्टप्रदेशबन्धका भवन्ति । तथाऽपर्याप्तबादरैकेन्द्रिये आयुष उत्कृष्टप्रदेशबन्धका अपर्याप्तबादरजीवा भवन्ति । अपर्याप्तबादरेषु बादरापर्याप्तवायुकायानामपि समावेशः । ततस्तेऽप्यायुष उत्कृष्टप्रदेशबन्धका भवन्ति । तथा वायुकायौघबादरवायुकायपर्याप्तबादरवायुकायेषु आयुष उत्कृष्टप्रदेशबन्धकाः पर्याप्तबादरवायुकाया एव भवन्ति । एवमपर्याप्तबादरवायुकाये आयुरुत्कृष्टप्रदेशबन्धका बादरापर्याप्तवायुकाया एव भवन्ति । अथ पर्याप्तबादरवायुकाया अपर्याप्तबादरवायुकायिकाश्च प्रत्येकं स्वस्थानेन देशोनलोके वर्तन्ते । तथा चोक्तं पञ्चसंग्रहे क्षेत्रद्वारे "बायरपवणा असंखेसु" इति । पूज्यपादमलयगिरिसूरिकृततट्टीका चैवम्-"बादरपवना=बादरवायुकायिका. पर्याप्ता अपर्याप्ताश्च प्रत्येकं लोकस्यासंख्येयेषु भागेषु वर्तन्ते । लोकस्य हि यत्किमपि सुषिरं तत्र सर्वत्रापि वायवः प्रसर्पन्ति । यत्पुनरतिनिबिडनिचितावयवतया सुषिरहीनकनकगिरिमध्यभागादि तत्र न । तच्च सकलं लोकस्यासंख्येयभाग मात्रं मुक्त्वा शेषेषु सर्वेष्वसंख्येयेषु भागेषु वायवो वर्तन्त इति ।' इत्येवमेकेन्द्रियौघादिमार्गणासु आयुष उत्कृष्टप्रदेशबन्धका देशोनलोके वर्तन्ते, न न्यूने, नाप्यधिके ।

नन्वेकेन्द्रियौघादित्रिमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकाः पर्याप्तबादरजीवाः सन्ति, ततः पर्याप्तबादरेषु पर्याप्तबादरवायुकायानां समावेशादायुष उत्कृष्टप्रदेशबन्धका यथा पर्याप्तबादरवायुकाया अपि भवन्ति तथैव पर्याप्तबादरसाधारणवनस्पतिकायानामपि पर्याप्तबादरजीवेषु समावेशात्

तेऽप्यायुरुत्कृष्टप्रदेशबन्धका भवन्ति । पर्याप्तबादरसाधारणवनस्पतिकायाश्च सर्वलोके वर्तन्त इति सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां क्षेत्रचिन्तायां भवद्भिरेव साधितम् । तत एकेन्द्रियौघादिमार्गणासु बादरपर्याप्तसाधारणवनस्पतिकायानाश्रित्यायुरुत्कृष्टप्रदेशबन्धकानां क्षेत्रं सर्वलोकः प्राप्यते । अपरञ्च जीवसमासवचनाद् बादरापर्याप्तमात्राणां सर्वलोकस्य क्षेत्रस्य साधितत्वादपर्याप्तबादरवायुकायानाश्रित्य यद् देशोनलोकः क्षेत्रं निरूपितं तदपि न घटामञ्चतीति चेद्, न, वस्तुतत्त्वापरिज्ञानाद्, सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां क्षेत्रचिन्तायां पर्याप्तबादरसाधारणवनस्पतिकायानामपर्याप्तबादरवायुकायानां च सर्वलोकः क्षेत्रं यत्साधितं तत् समुद्घातेन साधितम् । अत्रायुष उत्कृष्टप्रदेशबन्धकानां क्षेत्रं तु स्वस्थानेनैव प्राप्यते न तु समुद्घातेनाऽपि । यतः समुद्घात इह मारणसमुद्घात एवापेक्षितः । मारणसमुद्घाते चायुषो बन्धो न भवति, आयुर्बन्धस्य पश्चादेव मारणसमुद्घातस्य सद्भावाद् । ततो मारणान्तिकसमुद्घाते नायुषो बन्धकानां सर्वलोकः क्षेत्रं न प्राप्यते । अन्यच्चोपपातावस्थायामप्यायुषो बन्धो न भवतीत्यायुष उत्कृष्टादिचतुर्विधस्यापि प्रदेशस्य बन्धकानां क्षेत्रं स्वस्थानेनैव प्राप्यत इति समाधानम् । अतः स्वस्थानेन बादरपर्याप्तसाधारणवनस्पतिकायानां क्षेत्रं लोकासंख्याततमभाग एव वर्तते । ततो यद्यत्र बादरपर्याप्तसाधारणवनस्पतिकायानाश्रित्य क्षेत्रं चिन्त्यते तदा तु लोकासंख्येयतमभागप्रमाणमेव क्षेत्रं प्राप्यते । अत एवैकेन्द्रियौघादिमार्गणासु बादरपर्याप्तसाधारणवनस्पतिकायानामायुष उत्कृष्टप्रदेशबन्धकत्वेऽपि तानुपेक्ष्य बादरपर्याप्तवायुकायानाश्रित्यैव क्षेत्रचिन्ता कृता । पर्याप्तबादरवायुकायाश्च स्वस्थानेन देशोनलोके वर्तन्ते । एवमपर्याप्तबादरवायुकायविषयेऽपि समाधेयम् ।

'**सेसासु लोगस्स असंखभागम्मि**' इति, शेषासु सप्तत्रिंशदधिकशतमार्गणासु आयुष उत्कृष्टप्रदेशबन्धका लोकस्यैकासंख्याततमे भागे वर्तन्ते । शेषमार्गणा इमाः—सर्वगतिभेदाः, समस्तद्वित्रिचतुःपञ्चेन्द्रियभेदाः, पृथ्व्यप्तेजःसाधारणवनस्पतिकायौघभेदाः, बादरपृथ्व्यप्तेजोनिगोदाः, पर्याप्तबादरपृथ्व्यप्तेजःसाधारणवनस्पतिकायाः, अपर्याप्तबादरपृथ्व्यप्तेजःसाधारणवनस्पतिकायाः, वनस्पतिकायौघः, प्रत्येकवनस्पतिकायत्रिकं, त्रसत्रिकं चेति त्रयोविंशतिकायभेदाः, शेषाऽशेषमार्गणानामखिलभेदाः । अत्र भावना सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां क्षेत्रस्य निरूपणे यथा कृता तथैव कर्तव्या । नवरमयं विशेषः—तत्र बादरापर्याप्तपृथ्व्यप्तेजोनिगोदभेदाः, वनस्पतिकायौघनिगोदौघबादरनिगोदपर्याप्तबादरनिगोदाः अपर्याप्तप्रत्येकवनस्पतिकायश्चेति नवमार्गणासु क्षेत्रं सर्वलोकः भावितम् । परमत्र तु लोकासंख्याततमभागः क्षेत्रं परिभावनीयम् । यतः प्रज्ञापनायां द्वितीयस्थानपदे सर्वसूक्ष्मान् पर्याप्तापर्याप्तबादरवायुकायांश्च विहाय शेषसर्वविधानां जीवानां स्वस्थानेन क्षेत्रं लोकासंख्याततमभाग एव निरूपितम् ॥३८६॥

अथायुषोऽनुत्कृष्टप्रदेशबन्धकानां क्षेत्रं परिविभावयिषुरादौ तावदायु मार्गणासु समस्तलोकः क्षेत्रं ता गाथाद्विकेन निरूपयति—

तिरिये एगिंदियपणकायणिगोएसु सव्वसुहुमेसु ।
कायुरलदुगणपुंसगकसायचउगदुअणाणेसुं ॥३८७॥
अयताचक्खूसु असुहलेसाभवियेयरेसु मिच्छत्ते ।
तह अमणाहारेसुं अगुरुपएसस्स सव्वजगे ॥३९८॥

(प्रे०) "तिरिये" इत्यादि, तिर्यगोघे, एकेन्द्रियौघे, पृथ्व्यप्तेजोवायुवनस्पतिलक्षणपञ्च-कायौघेषु, निगोदौघे, सर्वेष्वष्टादशसु सूक्ष्मभेदेषु, काययोगौघे, औदारिकद्विके, नपुंसकवेदे, कषायचतुष्के, मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अशुभलेश्यात्रिके, भव्ये, इतरेऽभव्ये, मिथ्यात्वे, तथा समुच्चये, असंज्ञिनि, आहारके चेति षट्चत्वारिंशद्मार्गणासु आयुषोऽनुत्कृष्टप्रदेश-बन्धकाः समस्तजगति वर्तन्ते । इयमत्र भावना–एतासु मार्गणास्वायुषोऽनुत्कृष्टप्रदेशबन्धकत्वेन सूक्ष्मजीवानामपि समावेशः । ततस्तानाश्रित्यायुषोऽनुत्कृष्टप्रदेशबन्धकाः स्वस्थानेन विश्वस्मिन् विश्वे वर्तन्ते ॥३८७।३८३॥ इदानीमायुषोऽनुत्कृष्टप्रदेशबन्धका यासु मार्गणासु "देशोनलोके" यासु च "लोकासंख्याततमे भागे" वर्तन्ते ताः प्ररूपयति—

देसूणजगे बायरएगिंदियवाउसव्वभेएसुं ।
लोगस्स असंखयमे भागे सेसासु विण्णेया ॥३८९॥

(प्रे०) "देसूणजगे" इत्यादि, "आयुषोऽनुत्कृष्टप्रदेशबन्धकाः" इति पूर्वगाथातोऽनुवर्तते, बादरौ च तावेकेन्द्रियवायू चेति बादरैकेन्द्रियवायू, तयोः सर्वभेदेषु, तद्यथा–बादरैकेन्द्रियपर्याप्तबादरै-केन्द्रियापर्याप्तबादरैकेन्द्रियाः, बादरवायुकायपर्याप्तबादरवायुकायापर्याप्तबादरवायुकायाश्चेति षड्मार्ग-णास्वायुषोऽनुत्कृष्टप्रदेशबन्धका असंख्याततमेन भागेन हीने जगति वर्तन्ते । एतासु मार्गणास्वायु-षोऽनुत्कृष्टप्रदेशबन्धकत्वेन यथासम्भवं पर्याप्तानामपर्याप्तानां च बादरवायुकायानामपि समावेशः । ततस्तानाश्रित्यायुषोऽनुत्कृष्टप्रदेशबन्धकाः स्वस्थानेनैव लोकस्य बहुष्वसंख्यातभागेषु वर्तन्ते ।

अथ शेषासु मार्गणासु प्राह-"लोगस्स" इत्यादि, शेषासु एकादशाधिकशतमार्गणास्वायुषोऽनुत्कृष्ट-प्रदेशबन्धका लोकस्यासंख्याततमे भागे विज्ञेयाः । शेषमार्गणा इमाः–निखिलनरकगतिभेदाः, चत्वारः पञ्चेन्द्रियतिर्यञ्चः, समस्तमर्त्याऽमर्त्यगतिभेदाः, कृत्स्नाद्वित्रिचतुःपञ्चेन्द्रियाः, बादर-पृथ्व्यप्तेजोनिगोदाः, बादरपर्याप्तपृथ्व्यप्तेजोनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजोनिगोदाः, प्रत्येक-वनस्पतिकायत्रिकं, त्रसत्रिकं चेत्यष्टादशकायभेदाः, पञ्चमनोयोग पञ्चवचनयोगाः, वैक्रियकाय-आहारकद्विकं चेति त्रयोदश योगभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, संय-मौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतयः, चक्षुरवधिदर्शने, शुभलेश्यात्रिकं, सम्य-क्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि, संज्ञी च । इयमत्र भावना–आयुर्बन्धकानां क्षेत्रं

स्वस्थानेनैव प्राप्यत इति प्रागेव निरूपितम् । अथ प्रज्ञापनादिग्रन्थान्तरेण स्वस्थानेन सूक्ष्मजीवाना- श्रित्य सर्वलोकः, पर्याप्तापर्याप्तबादरवायुकायानाश्रित्य देशोनलोकः, शेषसर्वविधजीवानाश्रित्य लोका- संख्याततमो भागः क्षेत्रं प्राप्यते । अत्र शेषमार्गणासु सूक्ष्मजीवानां पर्याप्तापर्याप्तबादरवायुकायिकानां चाभावः । ततः शेषमार्गणासु स्वस्थानेन लोकासंख्याततमो भाग एव क्षेत्रं प्राप्यते, नाधिकम् ।

तदेवमष्टानामपि कर्मणामुत्कृष्टानुत्कृष्टप्रदेशबन्धकानां क्षेत्रं चिन्तितम् ॥३८९॥ साम्प्रतमेकेनैव वृत्तेनाष्टानामपि कर्मणां जघन्याजघन्यप्रदेशबन्धकानां क्षेत्रं प्रतिपिपादयिषुः पूर्वार्धेनौघत उत्तरार्धेन चादेशतः सातिदेशं निरूप्य प्रस्तुतक्षेत्रद्वारं समापयति—

हस्सियरपएसाणं अट्ठण्हं बंधगाऽत्थि सव्वजगे ।
सप्पाउग्गाणं खलु अगुरुपएसव्व सव्वासुं ॥३९०॥

(प्रे०) "**हस्सियर**" इत्यादि, अष्टानामपि कर्मणां जघन्यप्रदेशबन्धका अजघन्यप्रदेश- बन्धकाश्च प्रत्येकं स्वस्थानेन समस्मिन् लोके सन्ति । अत्रायं हेतुः—अष्टानामपि कर्मणां जघन्य प्रदेशबन्धकाः सूक्ष्मापर्याप्तनिगोदजीवा एव । तथाऽष्टानामपि कर्मणामजघन्यप्रदेशबन्धका बादरजीवा इव सूक्ष्मजीवा अपि भवन्ति । सूक्ष्मजीवाश्च प्रागुक्तवचनप्रामाण्यात् सर्वलोके वर्तन्ते । ततोऽष्टा- नामपि कर्मणां जघन्यप्रदेशबन्धकानां क्षेत्रं सूक्ष्मापर्याप्तनिगोदानाश्रित्याजघन्यप्रदेशबन्धकानां क्षेत्रं च सूक्ष्मजीवानाश्रित्य सर्वलोक एव प्राप्यते । अथोत्तरार्धेन विशेषवक्तव्यतामतिदिशति—"**सप्पा- उग्गाणं**" इत्यादि, सर्वासु-सप्ततिशतमार्गणासु स्वप्रायोग्याणां=यासु मार्गणासु यावन्ति कर्माणि बध्यन्ते तावतां कर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च प्रत्येकं क्षेत्रमगुरुप्रदेश- वत्=अष्टकर्मणामनुत्कृष्टप्रदेशबन्धकानां यासु मार्गणासु यावत्क्षेत्रं प्रतिपादितं तासु मार्गणासु तावत्प्रमाणमस्तीति सोपस्कारं व्याख्येयम् । अष्टकर्मणामनुत्कृष्टप्रदेशबन्धकानां क्षेत्रमेवम्—

आयुःकर्मणोऽनुत्कृष्टप्रदेशबन्धकानां क्षेत्रस्य वक्तव्यतायां निरूपितासु तिर्यगोघादिषट्त्वा- रिंशद्मार्गणास्वष्टानामपि कर्मणामनुत्कृष्टप्रदेशबन्धकानां क्षेत्रं सर्वलोकः । अतस्तास्वष्टकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च क्षेत्रमपि सर्वलोको भवति । यतस्तास्वष्टानामपि कर्मणां जघन्यप्रदेशबन्धकाः सूक्ष्मापर्याप्तनिगोदादयः सन्ति । तथाऽजघन्यप्रदेशबन्धकाः सूक्ष्मजीवा अपि भवन्ति ।

अथ बादरपर्याप्तबादरापर्याप्तबादरैकेन्द्रियेषु, बादरापर्याप्तबादरवायुकाययोश्च सप्तकर्मणामनु- त्कृष्टप्रदेशबन्धकानां सर्वलोकस्तथाऽऽयुःकर्मणोऽनुत्कृष्टप्रदेशबन्धकानां देशोनलोकः क्षेत्रं प्ररूपित- मतस्तासु जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च क्षेत्रं सप्तकर्माण्याश्रित्य सर्वलोकस्तथा- ऽऽयुराश्रित्य देशोनलोको ज्ञेयम् । अत्रेयं भावना—बादरैकेन्द्रियपर्याप्तबादरैकेन्द्रिययोर्जघन्य- प्रदेशबन्धका अपर्याप्तबादरा भवन्ति, पर्याप्तबादरैकेन्द्रिये पर्याप्तबादरा भवन्ति । पर्याप्तबादरेषु

पर्याप्तबादरनिगोदस्यापि समावेशः। बादरैकेन्द्रियेऽजघन्यप्रदेशबन्धकमध्येऽपर्याप्तबादराणामपि समावेशः। पर्याप्तबादरापर्याप्तबादरैकेन्द्रिययोरजघन्यप्रदेशबन्धका अनुक्रमेण पर्याप्तबादरा अपर्याप्तबादरा भवन्ति। पर्याप्तबादरेषु पर्याप्तबादरनिगोदा अपि प्रविष्टाः। सर्वविधा पर्याप्तबादराः पर्याप्तबादरनिगोदाश्च प्रत्येकमुपपातादिना सर्वलोके वर्तन्ते। अत एतासु पञ्चमार्गणासु सप्तकर्मणां जघन्याजघन्यप्रदेशबन्धकानां क्षेत्रं सर्वलोको भवति। परमायुषो बन्धकानां क्षेत्रं तु स्वस्थानेनैव प्राप्यते। तद्यथा—बादरैकेन्द्रियौघापर्याप्तबादरैकेन्द्रिययोरायुःकर्मणो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां चापर्याप्तबादराणामन्तोऽपर्याप्तबादरवायुकाया अपि प्रविष्टाः, पर्याप्तबादरैकेन्द्रिये जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च पर्याप्तबादराणां मध्ये पर्याप्तबादरवायुकायानामपि समावेशः, तथा वायुकायद्विमार्गणयोरायुःकर्मणो जघन्यप्रदेशबन्धका अजघन्यप्रदेशबन्धकाश्च अपर्याप्तबादरवायुकायाः सन्त्येव। अथापर्याप्तबादरवायुकायाः पर्याप्तबादरवायुकायाश्च प्रत्येकं स्वस्थानेन देशोनविश्वे वर्तन्ते। अत एतासु पञ्चमार्गणासु आयुःकर्मणो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च क्षेत्रं यथासम्भवं पर्याप्ताऽपर्याप्तबादरवायुकायानाश्रित्य देशोनलोको भवति।

अथ कार्मणकाययोगः बादरपर्याप्तबादरापर्याप्तबादरनिगोदाः, बादरापर्याप्तबादरपृथ्व्यप्तेजः कायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ अनाहारकश्चेति त्रयोदशमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां क्षेत्रं सर्वलोकः प्ररूपितम्, अतस्तासु सप्तकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च क्षेत्रं सर्वलोको ज्ञातव्यम्। तद्यथा—कार्मणकाययोगे, अनाहारके च सूक्ष्मापर्याप्तनिगोदाः, निगोदत्रिमार्गणासु यथासम्भवमपर्याप्तपर्याप्तबादरनिगोदाः, बादरापर्याप्तबादरपृथ्व्यप्तेजःकायमार्गणासु यथासंख्यं बादरापर्याप्तपृथ्व्यप्तेजःकायिकाः, प्रत्येकवनस्पतिकायद्विमार्गणयोश्चापर्याप्तप्रत्येकवनस्पतिकायाः सप्तकर्मणां जघन्यप्रदेशबन्धमजघन्यप्रदेशबन्धं च विदधति। अथ ते सर्वे प्रत्येकं यथासम्भवं स्वस्थानादिना सर्वलोके वर्तन्ते। अत एतासु त्रयोदशमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च क्षेत्रं विश्वविश्वं भवति।

तथा कार्मणकायानाहारकमार्गणयोरायुषोऽबध्यमानत्वात् ते विहाय बादरनिगोदाद्येकादशमार्गणास्वायुःकर्मणोऽनुत्कृष्टप्रदेशबन्धका लोकासंख्याततमे भागे वर्तन्तेऽतो जघन्यप्रदेशबन्धका अजघन्यप्रदेशबन्धकाश्च प्रत्येकं लोकासंख्याततमे भागे वर्तन्ते। अत्र भावनाऽनन्तरं यथा कृता तथैव कर्तव्या। नवरं तत्र स्वस्थानादित्रिभिरपि प्रकारैः क्षेत्रं प्राप्यते स्म, अत्र तु स्वस्थानेनैव प्राप्यते। स्वस्थानेन चापर्याप्तबादरनिगोदादयो लोकासंख्याततमे भाग एव वर्तन्ते। अतो बादरनिगोदाद्येकादशमार्गणास्वायुःकर्मणो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च क्षेत्रं लोकासंख्याततमो भाग एव भवति।

तथा बादरपर्याप्तवायुकायमार्गणायामष्टानामपि कर्मणामनुत्कृष्टप्रदेशबन्धका देशोनजगति वर्तन्तेऽतो जघन्यप्रदेशबन्धका अजघन्यप्रदेशबन्धकाश्चापि देशोनविष्टपे वर्तन्ते, अष्टानामपि कर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च पर्याप्तवायुकायानां देशोनजगति लभ्यमानत्वात्।

शेषासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां क्षेत्रवक्तव्यतायां प्रदर्शितासु पञ्चोत्तरशतमार्गणासु यथासम्भवं षष्ठादिकर्मणामनुत्कृष्टप्रदेशबन्धका लोकासंख्याततमभागे वर्तन्तेऽतो यथासम्भवं षष्ठादिकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च क्षेत्रमपि लोकासंख्याततमो भाग एव ज्ञातव्यम् । इयमत्र भावना–क्षेत्रद्वारे सर्वलोकः, देशोनलोकः, लोकासंख्यातभागश्चेति त्रिविधमेव क्षेत्रं प्राप्यते । एतासु मार्गणासु प्राक्प्रदर्शितक्षेत्रज्ञापनादिवचनानुसारेण यान् जीवानाश्रित्य सर्वलोकः क्षेत्रं प्राप्यते तेषां सूक्ष्मादीनां, यांश्चाश्रित्य देशोनलोकः क्षेत्रं प्राप्यते तेषां पर्याप्तबादरादिवायुकायानामभावः । तत एतासु मार्गणासु जघन्यप्रदेशबन्धका अजघन्यप्रदेशबन्धकाश्च सूक्ष्मादिव्यतिरिक्ता जीवा भवन्ति । सूक्ष्माद्यतिरिक्तानां सर्वविधानां जीवानां क्षेत्रं स्वस्थानादिभिस्त्रिभिरपि प्रकारैर्लोकासंख्याततमभाग एव प्राप्यते ॥३९०॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे एकादशं क्षेत्रद्वारम् समाप्तम् ।



* अष्टकर्मणां चतुर्विधप्रदेशबन्धकानां

ओघतः—अष्टकर्मणामुत्कृष्टप्रदेशबन्धका लोकासंख्यातभागे, अनुत्कृष्टप्रदेशबन्धकाः सम्पूर्णलोके वर्तन्ते (गाथा० १७७)।

| | | क्षेत्रम् | गति० | इन्द्रिय० | काय० | योग० |
|---|---|---|---|---|---|---|
| सप्तकर्मणाम् | उत्कृष्टप्रदेशबन्धकानाम् | सर्वलोक. | | सर्वैकेन्द्रियभेदेषु० | पृथ्व्यादिचतुर्णां सर्वसूक्ष्मेषु, चतुर्बादरापर्याप्तेषु, सर्वनिगोदभेदेषु व० सा०, प्र० प्र० व० | |
| | | देशोनलोक. | | | वायुकायौघबादरपर्याप्तबादर-वायुकायेषु | |
| | | लोकासंख्याततमो भागः (ओघवत्) | सर्व० | सर्वविकलपञ्चेन्द्रिय० | शेषसर्व० (१४) | सर्व० |
| | अनुत्कृष्ट-जघन्या-जघन्यप्रदेशबन्धकानाम् | सर्वलोकः (ओघवत्) | तिर्यगोघ० | सर्वैकेन्द्रियभेदेषु | सर्वनिगोद०, व० सा० द्वादश-सूक्ष्मेषु पृथ्व्यप्तेजोवायुकायौघ-बादरबादरापर्याप्तभेदेषु प्र० व० सा०, प्र० प्र० व० ३५ | का सा.।कार्मण० औदारिकद्विके |
| | | देशोनलोकः | | | बादरपर्याप्तवायुकाये | |
| | | लोकासंख्यात-भागः | शेषसर्व० ४६ | सर्वविकलपञ्चे-न्द्रिय० | बादरपर्याप्तपृथ्व्यप्तेज.कायेषु. प प्र व., त्रसत्रिके ७ | पञ्चमनोवचन. वैक्रियद्विके १४ आहारकद्विके |
| आयुष्ककर्मणः | उत्कृष्टप्रदेशबन्धकानाम् | सर्वलोकः | | सर्वसूक्ष्मभेदेषु | सर्वसूक्ष्मभेदेषु | |
| | | देशोनलोकः | | एके० सा०। त्रिबादरभेदेषु | वायुकायौघ० त्रिबादरवायु० | |
| | | लोकासंख्याततमो भागः | सर्व० | सर्वविकलपञ्चे-न्द्रिय० | शेषसर्व० २३ | सर्व० |
| | अनुत्कृष्ट-जघन्या-जघन्यप्रदेशबन्धकानाम् | सर्वलोकः (ओघवत्) | तिर्यगोघ० | एके० सा०। त्रिसूक्ष्मभेदेषु | पञ्चकायनिगोदौघ० पञ्चदश-सूक्ष्म० | का सा./औदा-रिकद्विके |
| | | देशोनलोक. | | त्रिबादरैकेन्द्रियेषु | त्रिबादरवायुकायेषु | |
| | | लोकासंख्याततमो भागः | शेषसर्व० | सर्वविकलपञ्चेन्द्रिय. | बादरबादरपर्याप्तबादरापर्याप्त-पृथ्व्यप्तेजोनिगोदेषु प्रत्येकवन-स्पतिकायत्रिके, त्रसत्रिके | पञ्चमनःपञ्च-वचनेषु वैक्रिये, आहारकद्विके |

**क्षेत्रप्रदर्शकं यन्त्रकम् ***

अष्टकर्मणां जघन्यप्रदेशबन्धका अजघन्यप्रदेशबन्धकाश्च सम्पूर्णलोके वर्तन्ते ( गाथा० ३६० ) ।

| वेद० | कषाय० | ज्ञान० | संयम० | दर्शन० | लेश्या० | भव्य० | सम्य० | संज्ञी० | आहा० | मार्गणा-संख्या | गाथा० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | ३२ | ३७८ ३७९ |
| | | | | | | | | | | १ | ३८० |
| सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | १३५ | ३८० |
| नपुंसके | सर्व० | मतिश्रुता-ज्ञान० | असंयमे | अचक्षु-र्दर्शने | कृ.।नी.।-का० । | सर्व० | मिथ्यात्वे. | असं० | सर्व० | ६४ | ३८१ ३८२ ३८३ ३८४ |
| | | | | | | | | | | १ | ३८४ |
| स्त्री ।पु.। अवे. | | मतिश्रुतावधि-मन.पर्यव-विभङ्ग० | शेषसर्व० ६ | चक्षुर-वधि० | ते.। प./ शु. | | शेषसर्व० | सं० | | १०५ | ३८४ |
| | | | | | | | | | | १८ | ३८५ |
| | | | | | | | | | | ८ | ३८६ |
| सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | सर्व० | १३७ | ३८६ |
| नपुंसके | सर्व० | मतिश्रुता-ज्ञान० | असंयमे | अचक्षु-र्दर्शने | कृ.।नी० का. | सर्व० | मिथ्यात्वे | असं० | आहा० | ४६ | ३८७ ३८८ |
| | | | | | | | | | | ६ | ३८९ |
| स्त्री./पु. | | मतिश्रुता-वधिविभङ्ग-मनःपर्यय० | शेषसर्व० (५) | चक्षुर-वधि० | ते.।प.शु. | | शेषसर्व० ४ | सं० | | १११ | ३८९ |

## ॥ द्वादशं स्पर्शनाद्वारम् ॥

तदेवं प्ररूपितं क्षेत्रद्वारम् । सम्प्रति यथाक्रमप्राप्तमुत्कृष्टप्रदेशबन्धकादिभिर्जीवैरतीतानागतवर्तमानरूपत्रिविधकालमाश्रित्यातीतकालमाश्रित्य वोत्कृष्टतो लोकाकाशस्य कियन्तो भागाः स्पृष्टा इति स्पर्शनाद्वारप्ररूपणां प्रस्तोतुमना आदौ तावदोघतो मोहनीयायुषोरुत्कृष्टप्रदेशबन्धकानां स्पर्शनामाह—

**मोहस्स बंधगेहिं जेट्ठपएसस्स फोसिअं हवए ।**
**सव्वजगमट्ठ भागा फुसिआ आउस्स विण्णेया ॥३११॥**

(प्रे०) "**मोहस्स**" इत्यादि, मोहनीयस्य प्रकृतेरुत्कृष्टप्रदेशबन्धकैर्निखिलो लोकः स्पृष्टो भवति । इयमत्र भावनासरणीः–मोहनीयोत्कृष्टप्रदेशबन्धस्वामिनः पर्याप्तसंज्ञिपञ्चेन्द्रियाः, ते च सूक्ष्मजीवेष्वप्युत्पद्यन्ते । सूक्ष्मजीवानां निखिललोकव्यापित्वात् पर्याप्तसंज्ञिपञ्चेन्द्रियाः सर्वत्रोर्ध्वमधस्तिर्यक् चोत्पद्यन्ते । ततो मोहस्योत्कृष्टप्रदेशबन्धं कुर्वाणास्ते मारणान्तिकसमुद्घातेन सर्वलोकं स्पृशन्ति । यतो मारणसमुद्घातसमुद्धतो जीवः स्वशरीरविष्कम्भबाहल्यं जघन्यतो दैर्घ्येणाङ्गुलासंख्येयभागमात्रमुत्कर्षेणासंख्येयानि योजनानि स्वप्रदेशदण्डं निसृजति, निसृज्य च तत्र स्थित एव यत्र स्थानेऽग्रेतनभवे समुत्पत्स्यते तत्र स्थाने तं स्वप्रदेशदण्डं प्रक्षिपति । तथा चोक्तं प्रज्ञापनायां समुद्घातपदे–"जीवे णं भंते ! मारणंतियसमुग्घातेणं समोहणइ समोहणित्ता जे पोग्गले णिच्छुभति तेहि णं भंते ! पोग्गलेहिं केवतिते खेत्ते अप्फुणे केवतिते खेत्ते फुडे ? गो. सरीरप्पमाणमेत्ते विक्खंभबाहल्लेणं आयामेणं जहण्णेण अंगुलस्स असंखेज्जतिभागं उक्कोसेणं असंखेज्जाति जोयणाति एगदिसिं एवतिते खेत्ते अप्फुण्णे एवतिए खेत्ते फुडे" ।

एवं **जीवसमासवृत्तावपि** प्रोक्तं, तद्यथा–"कश्चिज्जीवोऽन्तर्मुहूर्त्तशेषे स्वायुषि स्वशरीरविष्कम्भबाहल्यान्वितमायामतस्तु जघन्यतोऽङ्गुलासंख्येयभागमात्रमुत्कृष्टतस्त्वसंख्येयानि योजनानि शरीराद् बहिः स्वप्रदेशदण्डं निसृजति, निसृज्य च यत्र स्थानेऽग्रेतनभवे समुत्पत्स्यते तत्र स्थाने तं स्वप्रदेशदण्डं प्रक्षिपति" । अतोऽत्र लोकसर्वस्थानेषूत्पद्यमानानां पर्याप्तसंज्ञिपञ्चेन्द्रियाणां नानापर्याप्तसंज्ञिपञ्चेन्द्रियानतीतादिकालं चाश्रित्य मारणान्तिकसमुद्घातेन सर्वलोकः स्पर्शना भवति । तथा चोक्तं **जीवसमासे स्पर्शनाद्वारे**—

बायरपज्जत्ता वि य सयला विगला य समुहउववाए । सव्वं फोसंति जगं अह एवं फोसणाणुगमो ॥१९९॥

तत्र "सयला" इत्यनेन तिरश्चां स्पर्शनाप्ररूपणायाः प्रस्तुतत्वात् पञ्चेन्द्रियतिर्यञ्चो गृह्यन्ते । एवं "नरतिरिए हि लोगो" [जीवसमासे गा. १९८] इत्यनेन मनुष्याणामपि सर्वलोकः स्पर्शना प्रतिपादिता । न च तत्र केवलिसमुद्घातमाश्रित्य मनुष्याणां सर्वलोकः स्पर्शना निरूपितेत्याशङ्कनीयम्, तत्र प्ररूपणाया गुणस्थानक्रमेण सत्त्वादनन्तरमेव "सच्चासाणेहि" इत्यादिना सास्वादनादीनां तिर्यग्मनुष्याणां स्पर्शनाया निरूपितत्वाच्च "नरतिरिए हि लोगो" इत्यनेन मिथ्यादृष्टीनां तिर्यग्मनुष्याणामेव सर्वलोकः स्पर्शना निरूपिता भवति ।

ननु "एत्थ णं पंचिदियाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे। [सू० ४८] इति भगवदार्यश्रीश्यामसूरिवचनात् प्रज्ञापनायां पञ्चेन्द्रियमात्राणां सर्वलोकव्यापिता निषिद्धा, ततः पर्याप्तसंज्ञिपञ्चेन्द्रियाणां तु सुतरां निषिद्धा भवतीति प्रज्ञापनावचनेन सहात्र विसंवादः समापततीति चेद् , न, प्रज्ञापनावचनस्य प्रस्तुतग्रन्थस्य चाभिप्रायान्तरत्वात् , प्रज्ञापनायां पञ्चेन्द्रियमात्राणां यल्लोकासंख्याताभागः क्षेत्रं निरूपितं तत् वर्तमानकालमेवाश्रित्य निरूपितम् । प्रस्तुतग्रन्थे सर्वलोकः स्पर्शना त्वतीतादिकालमाश्रित्य निरूपिता । ततोऽत्राविसंवादेनाभिहितं "मोहस्स बंधगेहिं जेट्ठपएसस्स फोसिअं हवए सव्वजगम्" इति ।

नन्वत्रैव क्षेत्रद्वारेऽष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धकानां क्षेत्रं लोकासंख्याततमो भागः प्ररूपितम् , अत्र च मोहनीयस्योत्कृष्टप्रदेशबन्धकानां स्पर्शना सर्वलोकः प्ररूपितेति "वदतो व्याघातः" । यतो जीवाः स्वस्थानादिना यस्मिन् स्थाने सम्भवन्ति तदेव स्थानं तेषां क्षेत्रं भवति; तत्रैव च स्पर्शना भवति; ततो यावत् क्षेत्रं तावत्येव स्पर्शना भवतीत्यत्र सर्वलोकः स्पर्शना कुतस्कुती समापतितेति चेद् , मैवं वोचः, वस्तुतत्त्वापरिज्ञानात् , क्षेत्रं वर्तमानकालविषयकमेव भवति, स्पर्शना त्वतीतादिकालविषयाऽपि भवतीति क्षेत्रस्पर्शनयोर्भिन्नविषयत्वान्न वदतो व्याघातः । इदमुक्तं भवति—यद्यपि जीवानां यत् स्वसम्भवस्थानं तदेव क्षेत्रं तदेव च स्पर्शना भवति, तथापि तत्स्थानं यदि वर्तमानकाले एव चिन्त्यते तदा क्षेत्रं भवति, यदि चातीतानागतवर्तमानलक्षणेषु त्रिष्वपि कालेषु चिन्त्यते तदा स्पर्शना भवति । तथा चोक्तं मूलप्रकृतिबन्धे प्रथमाधिकारे क्षेत्रद्वारे—

कालं तु वट्टमाणं पडुच्च खेत्ते परूवणा णेया । आसिज्ज अईअद्धं परूवणा फरिसणाए ॥

एवं जीवसमासेऽपि निगदितम्—

सट्ठाणसमुग्घाएणुववाएणं च जे जहिं भावा । संपइ काले खेत्तं तु फासणा होइ समईए ॥१८१॥

ततोऽत्र यदि मोहनीयस्योत्कृष्टप्रदेशबन्धकानां जीवानां स्वसम्भवस्थानं वर्तमानकाले चिन्त्यते तदा सूक्ष्मजीवापेक्षयाऽतिस्तोकत्वात् सर्वस्थानेष्वनुत्पद्यमानानां तेषां मारणान्तिकसमुद्घातेनाऽपि लोकस्यासंख्यातभागमात्रमेव भवति । तच्च क्षेत्रमिति कीर्त्यते । अथ यद्यतीतादिकालेषु चिन्त्यते तदाऽन्यान्यसमयेषु भिन्नभिन्नस्थानेषूत्पद्यमानानां तेषामनन्तसमयेषु व्यतीतेषु सर्वलोकव्यापित्वं भवति । तच्च स्पर्शनेति गीयते । एवमग्रेऽपि यथास्थानमवगन्तव्यम् । न च यदीत्थं क्षेत्रस्पर्शनयोर्विषयान्तरमस्ति तर्हि ग्रन्थकृतैव स्वयमभिधेयं, न चाभिहितमिति न्यूनत्वमवगन्तव्यम् , प्रकृतिबन्धाधिकारे निरूपितत्वाद् ग्रन्थगौरवभयाच्च पुनर्नाभिहितम् , यद्वा विचित्रत्वात् ग्रन्थकारप्रवृत्तेः ।

अथायुष उत्कृष्टप्रदेशबन्धकानां स्पर्शनामाह-"अट्ठभागा" इत्यादि, "बंधगेहिं जेट्ठपएसस्स" इत्यत्रापि सम्बध्यते । आयुष उत्कृष्टप्रदेशबन्धकैः "अष्टभागाः" स्पृष्टा विशेषाः । तद्यथा—आयुष

उत्कृष्टप्रदेशबन्धं कुर्वन्तो भवनपत्यादिकाः सहस्रारपर्यन्ता अमर्त्याः स्वयं गन्तुमसमर्था अपि "भिच्चत्ति अच्चुयं जा अच्चुयदेवेण इयरसुरा" इति श्रीचन्द्रर्षिमहत्तरवचनात् पूर्वसांगतिकैरच्युतदेवलोकवासिदेवैः स्नेहादच्युतदेवलोके नीयन्ते। अतो भवनपत्यादिदेवानामूर्ध्वलोकमाश्रित्य "छ अच्चुए" इति वचनात् षड्भागाः स्पर्शना भवति। तथाऽऽयुरुत्कृष्टप्रदेशबन्धं कुर्वन्तो भवनपत्यादयो विबुधाः "सहसारंतियदेवा नारयनेहेण जंति तइयभुवं" इति पञ्चसंग्रहवचनात् पूर्वसांगतिकनारकस्नेहेन तस्य वेदनोपशमार्थं यद्वा पूर्ववैरिकस्य वेदनोदीरणाय वालुकप्रभानामधेयां तृतीयां नरकपृथ्वीं यावत् स्वसामर्थ्याद् गच्छन्तीत्यधोलोकसम्बन्धिभागद्वयमधिकं लभ्यते। ततः पूर्वोक्ताः षड्भागा भागद्वयेन सहिता अष्टौ भवन्ति। अथ पूर्वोक्ता देवा नरकादिषु गच्छन्तोऽतीतादिकालमाश्रित्य भिन्नभिन्नस्थाने आयुरुत्कृष्टप्रदेशबन्धं कुर्वन्तीति तेषामायुरुत्कृष्टप्रदेशबन्धकानां गमनागमनक्षेत्रापेक्षयाऽष्टभागाः स्पर्शना भवति। अत्र यद्यप्येकमेव जीवमाश्रित्याप्यष्टभागानां स्पर्शना घटां याति, तथापि भङ्गविचयादीनां सर्वद्वाराणां नानाजीवानाश्रित्य निरूपणीयत्वाद् न लिख्यते।

न चायुरुत्कृष्टप्रदेशबन्धकाः संज्ञिपञ्चेन्द्रिया भवन्ति, तेषां मध्ये मनुष्याः तिर्यञ्चश्च सूक्ष्मेष्वप्युत्पद्यन्त इति तानाश्रित्य मारणसमुद्घातेन तेषां सर्वलोकः स्पर्शना भवतीति कथमत्र देवानेवाश्रित्य भावना कृतेत्याशङ्कनीयम्, आयुर्बन्धकाले मारणसमुद्घाताऽभावस्य प्रागेवोक्तत्वात्। मनुष्यान् तिर्यक्पञ्चेन्द्रियांश्चाश्रित्य या सर्वलोकः स्पर्शना प्राप्ता सा तु समुद्घातमाश्रित्य प्राप्ता। आयुर्बन्धकाले मारणान्तिकसमुद्घातो न भवति। मारणसमुद्घातं विना तु मनुष्यान् तिर्यक्पञ्चेन्द्रियांश्चाश्रित्य लोकासंख्यातभाग एव प्राप्यते। नारकानाश्रित्य च लोकासंख्येयभाग एव स्पर्शनाऽग्रे वक्ष्यते। इति मनुष्यादीनामायुरुत्कृष्टप्रदेशबन्धकत्वेऽपि तानुपेक्ष्य देवानाश्रित्यैवात्र भावना कृता ॥३९१॥

अथात्र येऽष्टौ भागाः प्ररूपिता अग्रे च ये षडादिभागाः प्ररूपयिष्यन्ते ते प्रत्येकं कियन्माना इत्याशङ्कायां भागप्रमाणनिर्दिधारयिषया भागप्रमाणप्रतिपादिकामार्यामाह—

फुसणाअ वुच्चिरे इह जे भागा भाजिआअ चउदसहिं।
तसणाडीअ लहे जं णेया ते तावइअमाणा ॥३९२॥

(प्रे०) 'फुसणाअ' इत्यादि, इह-स्पर्शनाद्वारे स्पर्शनाया ये भागा उच्यन्ते ते, कोऽर्थः? अनन्तरगाथायां येऽष्टभागाः प्रोक्ताः, अग्रे च ये षडादिभागा वक्ष्यन्ते ते सर्वेऽपि प्रत्येकं 'भाजिआअ चउदसहिं तसणाडीअ' इति, चतुर्दशभिरङ्कैर्विभाजितायां चतुर्दशरज्ज्वायतैकरज्जुवृत्तविस्तृतायां त्रसनाड्यां 'लहे जं णेया ते तावइअमाणा' इति यद्-यावत्प्रमाणं भागफलं लभेत तावत्प्रमाणाः-लब्धलब्धिप्रमाणा ज्ञेयाः। एकरज्जुप्रमाण एकभागो भवतीति निष्कर्षः। ततो यावद्भागाः स्पर्शना निरूप्यते तावद्रज्जवः स्पर्शना भवतीति समापतितम्।

अत्र कश्चिदाह—नन्वत्रैकभाग एकरज्जुप्रमाणो भवति, अतोऽत्र निरूपितानां निरूपयिष्य-माणानां च भागानां ज्ञानार्थं चतुर्दशरज्ज्वात्मत्रसनाडिकायां कस्मिन् स्थाने कति रज्जवो भवन्तीति ज्ञातव्यं भवति, तच्च कथं ज्ञायते ? अत्रोच्यते, शास्त्रवचनात्, तच्चैवम्—

"ईसाणम्मि दीवड्ढा अड्ढाइज्जा य रज्जु माहिंदे। पंचेव सहस्सारे छ अच्चुए सत्त लोगंते ॥"

इति जीवसमासवचनेन ऊर्ध्वलोकसत्कसप्तभागाः प्रदर्शिताः । अधुनाऽधोलोकसत्कसप्त-भागा लोकप्रकाशग्रन्थेन प्रदर्श्यन्ते । तच्चैवम्—

"अस्य सर्वस्य लोकस्य कल्प्या भागाश्चतुर्दश। एकैकश्च विभागोऽयमेकैकरज्जुसम्मितः॥
सर्वाधस्तना लोकान्तादारभ्योपरि तलम्। यावत् सप्तममेदिन्या एका रज्जुरियं भवेत्॥
प्रत्येकमेवं सप्तानां भुवामुपरिवर्तिषु । तलेषु रज्जुरेकैका स्युरेवं सप्त रज्जवः ॥"

इति ॥३९२॥ इदानीमोघतः पूर्वार्धेन षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकानामुत्तरार्धेन चाष्टानामपि कर्मणामनुत्कृष्टप्रदेशबन्धकानां स्पर्शनां चिन्तयति—

**लोगस्स असंखियमो भागो फुसिओ हवेज्ज सेसाणं।**
**अट्ठण्हं पि फरिसिअं अगुरुपएसस्स सव्वजगं ॥३९३॥**

(प्रे०) "लोगस्स" इत्यादि, "बंधगेहिं जेट्ठपएसस्स" इति 'मण्डुकप्लुतिन्यायेन' अत्रानु-वर्तते, शेषाणां मोहनीयायुर्वर्जानां षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकैः "लोकस्यासंख्याततमो भागः" स्पृष्टो भवति । इयमत्र भावना—षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकाः सूक्ष्मसम्परायस्था भवन्ति । ते यदि निधनं प्राप्नुवन्ति तदा वैमानिकेषु देवेष्वेवोत्पद्यन्ते । वैमानिकदेवानां सर्वमप्युत्पत्तिस्थानं रज्ज्वसंख्येयभागमात्रमेव । ततः सूक्ष्मसम्परायस्थानां जीवानां नानाजीवानतीतादिकालं मारणा-न्तिकसमुद्घातश्चाश्रित्य लोकस्यासंख्येयभाग एव स्पर्शना भवति, नाधिका । तथा चोक्तं जीवसमासे—"सेसेहऽसंखभागो फुसिओ" इति । तत्र शेषत्वेन प्रमत्तादयो गृहीताः ।

ननु सूक्ष्मसम्परायस्था जीवा अनुत्तरदेवेषूत्पद्यन्ते, तथा तिर्यग्लोकादनुत्तरं यावत् सप्तरज्जवो भवन्ति, अतस्तेषां सप्तरज्जवः स्पर्शना भवतीति कथं लोकासंख्येयभाग एव प्रदर्श्यते ? उक्ता चैषां सप्तरज्जुस्पर्शना पञ्चसंग्रहे—"सगसेसा उ फुसंती रज्जु" इति, तत्र शेषत्वेन प्रमत्तादयो गृहीताः, इति चेद्, प्रतिविधीयते, अत्र स्पर्शनाद्वारे घनरज्जुर्विवक्षिता पञ्चसङ्ग्रहे च सूचिरज्जुर्विवक्षिता । आयामेन विष्कम्भतो बाहल्येन चेति त्रिधाऽपि या तुल्या रज्जुः सा घनरज्जुरुच्यते । प्रस्तुते सूक्ष्मसम्परायस्थानां स्वोत्पत्तिस्थानं रज्ज्वसंख्येयभागमात्रमेव । अतस्तेषां स्पर्शनाया ऊर्ध्वमधः सप्तरज्जुप्रमाणत्वेऽप्यायामविष्कम्भाभ्यां रज्ज्वसंख्यातभागमात्रत्वाद् घनरज्जुरेकाऽपि न प्राप्यते । अतः सूक्ष्मसम्परायस्थानां जीवानां स्पर्शना नानाजीवैरतीतादिकालेनाऽपि च लोकासंख्यातभाग एवभवति ।

अथाऽत्र घनस्पर्शना विवक्षिताऽत इदं समापतितम्—येषां जीवानां स्पर्शनाऽऽयामविष्कम्भा-भ्यां रज्जुप्रमाणाऽपि बाहल्यतो रज्ज्वसंख्येयभागमात्रा तेषां लोकासंख्यातभाग एव स्पर्शना भवति ।

यथा प्रथमनरकस्थानां जीवानाम् । एवं वैपरीत्येन येषां जीवानां स्पर्शनोर्ध्वमधः सप्तादिरज्जु-प्रमाणाऽप्यायामविष्कम्भाभ्यां रज्ज्वसंख्यातभागमात्रा तेषामपि स्पर्शना लोकासंख्यातभागमात्रा भवति । यथा सूक्ष्मसम्परायस्थादयो जीवाः । तथा येषामायामविष्कम्भाभ्यां बाहल्यतश्चेति त्रिधा रज्ज्वसंख्यातभागः स्पर्शना तेषामपि लोकासंख्यातभागः स्पर्शना भवति । यथाऽऽहारकमिश्रकाययोगे स्थितानां जीवानाम् । अथ येषां जीवानां स्वस्थानगमनस्थानपारभविकस्थानलक्षणेषु त्रिस्थानेष्वन्यतमस्थानमायामविष्कम्भाभ्यां त्रसनाडीगततिर्यग्वृत्तविस्तृतप्रतरबहुसंख्येयभागान्यवगाहते,तथोर्ध्वमधः स्पर्शना एकादिरज्जवो भवति, तेषां जीवानां मध्ये देवानां यथासम्भवं गमनागमनेन मारणसमुद्घातेन च शेषजीवानां च मरणसमुद्घातेनोर्ध्वमधः स्पर्शनानुसारेणैकादिघनरज्जवः स्पर्शना भवति । तत्र तिर्यग्वृत्तविस्तृतप्रतरबहुसंख्येयभागावगाहनायां स्वस्थाने देशविरतादयः, गमनागमनस्थाने आनतादिचतुर्विधविबुधादयः, पारभविकोत्पत्तिस्थाने द्वितीयादिपृथ्वीस्थनैरयिकादयो दृष्टान्तत्वेनाऽवगन्तव्याः । अथ सूक्ष्मव्यतिरिक्ता ये जीवाः सूक्ष्मेष्वप्युत्पद्यन्ते तेषां मारणान्तिकसमुद्घातेन सर्वलोकः स्पर्शना भवति । सूक्ष्माणां तु मारणान्तिकसमुद्घातेन स्वस्थानेनाऽपि सर्वलोकः स्पर्शना भवति । अत्र दृष्टान्तत्वेन मोहस्योत्कृष्टप्रदेशबन्धकाः पर्याप्तसंज्ञिपञ्चेन्द्रियादयः । अत्र प्रदर्शितदृष्टान्तान्तर्गतानां सूक्ष्मसम्परायस्थानां पर्याप्तसंज्ञिपञ्चेन्द्रियाणां च प्राग् भावना कृतैव । शेषाणां तु यथास्थानमग्रे करिष्यते । अत्र सर्वमपि स्पर्शनाद्वारमनया दिशा परिभावयिष्यते । अत्रेदमप्यालक्षितव्यम्—स्पर्शनाया येऽष्टभागाः प्रदर्शिता ये च षडादिभागा निरूपयिष्यन्ते ते सर्वेऽपि देशोना अवगन्तव्याः ।

अथोत्तरार्धं व्याख्यायते—"अट्ठण्हं" इत्यादि, अष्टानामपि कर्मणामनुत्कृष्टप्रदेशबन्धकैः सम्पूर्णं जगत् स्पृष्टम् । अष्टकर्मणामनुत्कृष्टप्रदेशबन्धकाः सूक्ष्मजीवा अपि भवन्तीति तानाश्रित्य न केवलं मारणसमुद्घातेनापि तु स्वस्थानेनाऽपि सर्वलोकः स्पर्शना भवति । इयमत्र भावना–उत्कृष्टप्रदेशबन्धकालं विहाय संसारस्थाः सर्वेऽपि जीवा अनुत्कृष्टमेव प्रदेशबन्धं कुर्वन्तीति सर्वजीवान्तर्गताः सूक्ष्मजीवा अप्यनुत्कृष्टप्रदेशबन्धं कुर्वन्ति । अतः सूक्ष्मजीवापेक्षया सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः स्वस्थानसमुद्घाताभ्यां सम्पूर्णलोकं स्पृशन्ति ।

इदमुक्तं भवति—"सुहुमा उ सव्वलोए" इति पूर्वमहर्षिवचनप्रामाण्यात् सूक्ष्मजीवानां स्वोत्पत्तिस्थानं सर्वलोक इति स्वस्थानेन स्पर्शना सर्वलोको भवति । तथा सूक्ष्मजीवाः सूक्ष्मेष्वपि समुत्पद्यन्त इति पुनरपि सूक्ष्मजीवेषु समुत्पित्सवस्ते मरणसमुद्घाते स्वोत्पत्तिक्षेत्रं यावत् प्रक्षिप्तात्मप्रदेशदण्डा मारणान्तिकसमुद्घातेनाऽपि सर्वलोकं स्पृशन्ति । परमायुःकर्मणोऽनुत्कृष्टप्रदेशबन्धकास्तु स्वस्थानेनैव सर्वलोकं स्पृशन्ति, आयुर्बन्धकाले मरणसमुद्घातस्याप्रवर्तनात् ॥२९३॥ तदेवमुत्कृष्टानुत्कृष्टप्रदेशबन्धकानां स्पर्शना ओघतो निरूपिता । साम्प्रतं तामेव स्पर्शनामादेशतो विवक्षुरादौ तावद्यासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां "छभागाः" स्पर्शना ताः प्रतिपादयति—

णिरयचरमणियेरसु आणतपहुडीसु चउसु छ फरिसिआ ।
भागाऽत्थि बंधगेहिं जेट्ठपएसस्स आउवज्जाणं ॥३९४॥

(प्रे०) "णिरय" इत्यादि, नरकौघान्तिमसप्तमनरकयोः, "आणतपहुडीसु" इति, अत्र प्रभृतिशब्द आद्यर्थोऽनव्ययो बोध्यः, आनतः प्रभृतिः–आदिर्येषां ते आनतप्रभृतयस्तेषु, अर्थादानत-देवलोकादारभ्य चतुर्षु देवभेदेष्विति षण्मार्गणास्वायुर्वर्जानां सप्तकर्मणामुत्कृष्टप्रदेशबन्धकैः षड्-भागाः–षड्रज्जवः स्पृष्टाः सन्तीति शब्दार्थः । भावना पुनरेवम्–नारकाणां स्वस्थानं तिर्यक्प्रत-रासंख्येयभागमात्रमेव, तथा त्रिविधवेदनादावानलेन पापच्यमानास्ते स्वस्थानादन्यत्र क्षिप्रमिषवो-ऽपि गन्तुं न शक्नुवन्तीति तेषां गमनागमनक्षेत्रस्याभावः । तथापि ते नरकादुद्वृत्य तिर्यग्लोके तिर्यक्पञ्चेन्द्रियतया स्वयम्भूरमणसमुद्रजगतीं यावत् तिर्यक्प्रतरासंख्यातबहुभागेषूत्पद्यन्त इति तेषां पारभविकोत्पत्तिस्थानमायामविष्कम्भाभ्यां तिर्यक्प्रतरासंख्येयबहुभागान्यवगाहते । तथा सप्तमनरकादारभ्य तिर्यग्लोकं यावद् दैर्घ्येण षड् रज्जवो भवन्ति । अतः सप्तमपृथिवीस्थानां नैरयि-काणां तिर्यग्लोके भिन्नभिन्नस्थानमुत्पद्यमानानां मारणसमुद्घातेन तिर्यग्लोकं यावत् प्रक्षिप्तात्म-प्रदेशदण्डानां नानाजीवैरतीतादिकालमाश्रित्य षड् रज्जवः स्पर्शना भवति । एवं नरकौघेऽपि सप्तम-नरकमाश्रित्य परिभावनीयम् । यतः शेषनरकेषु तस्मान्न्यूना स्पर्शना भवति । आनतादीनामच्युत-पर्यन्तानाममराणां स्वस्थानं प्रतरासंख्यातभागमेव । तथा ते मनुष्येष्वेवोत्पद्यन्त इति पारभवि-कोत्पत्तिस्थानमपि तिर्यक्प्रतरासंख्यातभागमात्रमेव । इति तेषां स्वस्थानपारभविकोत्पत्तिस्थानयो-स्तिर्यक्प्रतरासंख्यातभागमात्रत्वेऽपि तीर्थकरजन्माभिषेकादिप्रयोजनवशात् तिर्यग्लोके तिर्यक्प्रतरा-संख्येयबहुभागेषु गमनागमनं कुर्वन्तीति गमनागमनस्थानं तिर्यक्प्रतरासंख्यातबहुभागान्यवगा-हते । तथा तिर्यग्लोकादानतपर्यन्तं दैर्घ्येण "छ अच्चुए" इति वचनात् षड् रज्जवो भवन्ति । अत आनतादिदेवानां भिन्नभिन्नस्थानेन गमनागमनं कुर्वतां गमनागमनापेक्षयोत्कृष्टतः षड् घनरज्जवः स्पर्शना भवति । नन्वानतदेवाः षष्ठरज्जुप्रारम्भे समागता इति तेषां साधिकपञ्चरज्जव एव स्प-र्शना भवतीति चेद्, न, आनतप्राणतदेवा अच्युतदेवलोकं यावन्नीयन्त इति सर्वेषां यथोक्ता स्प-र्शना घटामटति ॥३९४॥

साम्प्रतं यासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां लोकासंख्यातभागः स्पर्शना ताः षड्विंशतिमार्गणा गाथाद्विकेन निरूपयति—

पढमणिरये सुरेसुं गेविज्जाईसु उरलमिस्सम्मि ।
वेउव्वियमीसे तह आहारदुगम्मि गयवेए ॥३९५॥
मणणाणसंयमेसुं समइअछेअपरिहारसुहमेसुं ।
लोगस्स असंखयमो भागो फुसिओ मुणेयव्वो ॥३९६॥

(प्रे०) 'पढमनिरयंमि' इत्यादि, शब्दार्थः सुगमः । भावना पुनरेवम्–

रत्नप्रभाभिधानप्रथमपृथ्वीगता नारकास्तिर्यग्लोक एवोत्पद्यन्ते । प्रथमनरकपृथ्वी सप्तमरज्जूपरितनभागे समाप्ता तिर्यग्लोकश्चाष्टमरज्ज्वारम्भे समागतः । अतः प्रथमनरकपृथ्वी-तिर्यग्लोकयोः समुदितबाहल्यमपि संख्यातयोजनान्येव । इत्येवं प्रथमपृथ्वीनारकाणां पारभविकोत्पत्तिस्थानं यद्यपि तिर्यग्वृत्तविस्तृतप्रतरबहुसंख्येयभागेषु वर्तते, तथाऽप्यूर्ध्वमधः स्पर्शना रज्ज्वसंख्यातभागमात्रैव । ततस्तिर्यग्लोके समुत्पित्सूनां प्रथमपृथ्वीनारकाणां स्पर्शनाऽऽयामविष्कम्भाभ्यां रज्जुप्रमाणाऽपि बाहल्यतो रज्ज्वसंख्येयभागमात्रैवेति ते मरणसमुद्घातेनाऽपि लोकासंख्यातभागमेव स्पृशन्ति, नाधिकम् ।

ग्रैवेयकादीनाममर्त्यानामैहलौकिकस्थानं रज्ज्वसंख्येयभागमात्रमिति प्रतीतमेव । तथा ते स्वस्थानादन्यत्र गमनागमनं न कुर्वन्ति, अन्यत्तावद् दूरे आस्ताम्, तीर्थंकरनमस्कारादिकमपि तत्र स्थिता एव कुर्वन्ति । इति तेषां गमनागमनस्थानं न विद्यते । तेषां पारभविकोत्पत्तिस्थानं मनुष्यक्षेत्रमेव, तच्च रज्ज्वसंख्यातभागमात्रमेव । इत्येवं मारणान्तिकसमुद्घाते ग्रैवेयकादिविमानादारभ्य मनुष्यलोकं यावत् सप्तरज्जुदीर्घास्तेषामात्मप्रदेशदण्डा भवन्तीति स्पर्शनाया ऊर्ध्वमधः सप्तरज्जुप्रमाणत्वेऽप्यायामविष्कम्भाभ्यां रज्ज्वसंख्येयभागमात्रत्वात् सप्त घनरज्जवः स्पर्शना न प्राप्यते, किन्तु लोकासंख्यातभाग एव । तथा चोक्तं जीवसमासे–"असंखभागुंमि" इति ।

औदारिकमिश्रे सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः करणापर्याप्ताः मार्गणाचरमसमये वर्तमानाः संज्ञिनो भवन्ति । ते च तिरश्च आश्रित्य स्वयम्भूरमणसमुद्रपर्यन्तं वर्तन्त इति तेषामायामविष्कम्भाभ्यां स्पर्शना यद्यपि रज्जुप्रमाणाऽस्ति तथापि तेषाम् अभवो गमनागमनाभावाद् मारणान्तिकसमुद्घातस्याभावाच्च दैर्घ्येण स्पर्शनाया रज्ज्वसंख्यातभागमात्रत्वाद् लोकासंख्यातभाग एव स्पर्शना भवति ।

वैक्रियमिश्रे सप्तकर्मणामुत्कृष्टप्रदेशबन्धं देवा नारका वा मार्गणाचरमसमये विदधति । तदानीं तेषामपर्याप्तत्वाद् गमनागमनस्याभावः । तेषां स्वस्थानमपि रज्जुसंख्यातभागमात्रमेव । वैक्रियमिश्रे मारणसमुद्घातोऽपि न प्रवर्तते । इत्येवं वैक्रियमिश्रे मार्गणाचरमसमये उत्कृष्टप्रदेशबन्धं विदधतां देवानां नारकाणां वा स्पर्शना आयामविष्कम्भाभ्यां रज्जुसंख्यातभागमात्रत्वेऽपि बाहल्यतो रज्ज्वसंख्येयभागमात्रत्वाद् लोकासंख्येयभाग एव भवति ।

आहारककाययोगे उत्कृष्टप्रदेशबन्धकाः संयताः । ते च वैमानिकेषूत्पद्यन्त इति तेषां पारभविकोत्पत्तिस्थानं रज्ज्वसंख्येयभागमात्रमेव । ततो मारणान्तिकसमुद्घातेनानुत्तरं यावत् प्रक्षिप्तात्मप्रदेशदण्डानां तेषां स्पर्शनाया ऊर्ध्वमधः सप्तरज्जुप्रमाणत्वेऽप्यायामविष्कम्भाभ्यां रज्ज्व-

संख्येयभागमात्रत्वात् सप्तघनरज्जवः स्पर्शना न भवति, किन्तु लोकासंख्यातभाग एव भवति।

आहारकमिश्रे तु मरणसमुद्घाताभावादायामविष्कम्भाभ्यां दैर्घ्येण चेति त्रिधापि स्वस्थानस्य रज्ज्वसंख्यातभागमात्रत्वाल्लोकासंख्यातभाग एव स्पर्शना भवति।

अवेदमनःपर्यवसंयमौघसूक्ष्मसम्परायमार्गणासूत्कृष्टप्रदेशबन्धकाः सूक्ष्मसम्परायस्थाः, तेषां स्पर्शना तु षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शनाप्रसङ्गे परिभावितैव।

अवेदमनःपर्यवसंयमौघेषु मोहनीयस्योत्कृष्टप्रदेशबन्धकास्तथा सामायिकछेदोपस्थापनीयपरिहारविशुद्धिमार्गणासु सप्तानामुत्कृष्टप्रदेशबन्धकाः संयता एव, ते च वैमानिकेषूत्पद्यन्ते। ततोऽवेदादिषु मोहनीयोत्कृष्टप्रदेशबन्धकानां तथा सामायिकादिषु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शना प्रागाहारकयोगे भावितरीत्या लोकासंख्यातभाग एव भवति।

तदेवं प्रथमनरकादिषु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शना लोकासंख्यातभाग एवेति परिभावितम्। अथ लोकासंख्यातभागस्यानेकभेदभिन्नत्वात् प्रथमनरकादिसर्वमार्गणासु स्पर्शना समाना उत न्यूनाधिका वेत्याशङ्कापनोदार्थं स्पर्शनाल्पबहुत्वं लिख्यते। तद्यथा–आहारकमिश्रे सर्वस्तोका स्पर्शना, तत्रस्थानां जीवानां मनुष्यक्षेत्रतोऽपि हीनक्षेत्रत्वात्। ततो ग्रैवेयकादिषु असंख्यगुणा, मनुष्यक्षेत्रादसंख्यगुणत्वात् तिर्यग्लोकस्य चासंख्यातभागमात्रत्वात्। ततः परिहारविशुद्धौ संख्यातगुणाऽसंख्यातगुणा वा, यथाऽऽगमं परिभावनीयम्। तत आहारकावेदमनःपर्यवसंयमसामायिकछेदोपस्थापनीयसूक्ष्मसम्परायेषु विशेषाधिका; स्वस्थाने तुल्या, बृहत्तरतिर्यग्लोकासंख्येयभागमात्रत्वात्। ततो वैक्रियमिश्रे असंख्यगुणा, तिर्यग्लोकसंख्यातभागप्रमाणत्वात्। तत औदारिकमिश्रे संख्यातगुणा, देशोनतिर्यग्लोकप्रमाणत्वात्। ततः प्रथमनरके संख्यातगुणा, संख्याततिर्यग्लोकप्रमाणत्वात्॥३९५।३९६॥

साम्प्रतं द्वितीयादिपञ्चनरकमार्गणासु देशविरतौ च सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शनां चिन्तयति—

**भागा फुसिआ पंचसु दुइआईसु णिरयेसु देसम्मि।**
**एगं दोण्णि य तिण्णि य चत्तारो पंच पंच कमा॥३९७॥**

(प्रे०) "भागा फुसिआ पंचसु दुइआईसु णिरयेसु देसम्मि" इति, द्वितीयतृतीयचतुर्थपञ्चमषष्ठेषु इति पञ्चसु नरकेषु देशविरतौ च, सप्तकर्मणामुत्कृष्टप्रदेशबन्धकैर्भागाः स्पृष्टाः, कियन्तः? इत्याह–'एगं दोण्णि' इत्यादि, क्रमेणैकः, द्वौ, त्रयः, चत्वारः, पञ्च, पञ्च भागाः स्पृष्टाः। पञ्चनरकमार्गणासु भावना पूर्वं सप्तमनरके यथा कृता तथा कर्तव्या। नवरं तत्र मारणान्तिकसमुद्घातेन दैर्घ्येण स्पर्शना षड् रज्जवः प्रदर्शिता, अत्र तु द्वितीयादिनरकेषु यथासंख्यमेकद्वित्रिचतुःपञ्चरज्जवो ज्ञातव्याः। तथा चोक्तं जीवसमासे–'एगाईओ भागा बीयाइसु नारगपुढवीसु" इति।

देशविरतौ पुनरेवं भावना-सम्यग्दृष्टितिर्यञ्चोऽपि देशविरतिंप्रतिपद्यन्ते । देशविरताः सम्यग्दृष्टितिर्यञ्चः स्वयम्भूरमणसमुद्रं यावद् भवन्ति । ततस्तिरश्च आश्रित्य देशविरतानामैहलौकिकस्थानमायामविष्कम्भाभ्यां तिर्यग्लोकगततिर्यक्प्रतरासंख्येयबहुभागेषु वर्तते । तथा ते ऊर्ध्वं सहस्रारकल्पं यावदुत्पद्यन्त इति मारणान्तिकसमुद्घातेन दैर्घ्येण पञ्च रज्जवः स्पर्शना भवति । अतः सहस्रारदेवलोकप्रुत्पित्सवः सहस्रारपर्यन्तं निक्षिप्तस्वात्मप्रदेशदण्डा देशविरता मारणान्तिकसमुद्घातेनातीतादिकालमाश्रित्य नानाजीवापेक्षया पञ्चरज्जूः स्पृशन्ति ॥२९७॥ इदानीं यासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शना "ओघवत्" ता निरूपयति—

**ओघव्व तिणरदुपणिंदितसपणमणवयकायउरलेसुं ।**
**लोहणयणेयरेसुं भविये सण्णिम्मि आहारे ॥२९८॥**

(प्रे०) "ओघव्व" इति, सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शना ओघवत्=मोहनीयमाश्रित्य "सर्वलोकः" षट्कर्माण्याश्रित्य च "लोकासंख्यातभागो" भवति । कासु मार्गणासु ? इत्याह-"तिणर" इत्यादि, अपर्याप्तमन्तरा त्रिमनुष्येषु, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियलक्षणद्विपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसरूपद्वित्रसयोः, पञ्चमनःपञ्चवचनेषु काययोगौघौदारिककाययोः, लोभे, चक्षुर्दर्शने, इतरेऽचक्षुर्दर्शने, भव्ये, संज्ञिनि, आहारके चेति पञ्चविंशतिमार्गणासु । एतासु मार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धकाः पर्याप्तसंज्ञिपञ्चेन्द्रियाः षण्णां कर्मणां च सूक्ष्मसम्परायस्थाः । अत्र भावनापि सामान्यवक्तव्यतावत् कर्तव्या ॥२९८॥

इदानीं यासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शना "नव भागाः "यासु च" अष्टभागाः ताः प्ररूपयति—

**भागाऽत्थि फोसिआ णव सुरईसाणंततेउलेसासुं ।**
**सेससुरपम्हवेअगमीसेसु फुसीअ भागाऽट्ठ ॥२९९॥**

(प्रे०) "भागा" इत्यादि, सप्तकर्मणामुत्कृष्टप्रदेशबन्धकैः "नव भागाः" स्पृष्टाः । कासु मार्गणासु ? इत्याह-"सुर" इत्यादि, देवौघे, "ईसाणंत" इति, भवनपतित आरभ्येशानपर्यन्तेषु पञ्चदेवभेदेषु, तेजोलेश्यायां चेति सप्तमार्गणासु । अत्रेयं भावना-भवनपत्यादीशान पर्यन्तानां देवानां स्वस्थानस्थासंख्येयभागमात्रत्वेऽपि गमनागमनक्षेत्रमायामविष्कम्भाभ्यां त्रसनाडीगत तिर्यग्वृत्तविस्तृतप्रतरबहुसंख्येयभागान्वगाहते, तथा भवनपतिव्यन्तरज्योतिष्काणां पूर्वोक्तकारणादधस्तृतीयनरकपृथिवीं यावद् गच्छतां रज्जुद्वयमुपरि चेषत्प्राग्भारादिपृथ्वीकायिकेषूत्पद्यमानानां मारणान्तिकसमुद्घातेन सप्त रज्जवः स्पर्शना भवतीति सर्वा अपि नव रज्जवः स्पर्शना भवति । यद्वा गमनागमनापेक्षयाऽच्युतकल्पादारभ्य तृतीयपृथिवीं यावदष्टौ रज्जवः स्पर्शना भवति । मारणान्तिकसमुद्घातेन चाच्युतकल्पादीषत्प्राग्भारपृथ्वीं यावत् स्पर्शना भवति । अच्युतकल्पादी-

पत्प्राग्भारपृथ्वीं यावदेका रज्जुर्भवतीति सर्वा मीलित्वा नव रज्जवः स्पर्शना भवति । सौधर्मेशान-देवानामपि तृतीयपृथिवीं यावद् गच्छतामधः सार्धं रज्जुत्रयमुपरि चेषत्प्राग्भारादिपृथिवीकायेषूत्पद्य-मानानामर्धन्यूनषड्रज्जवः स्पर्शना भवतीति सर्वा अपि नव रज्जवः स्पर्शना भवति । तथा चोक्तं जीवसमासे–'ईसाणंता·····················नव' इति । एवं देवौघे तेजोलेश्यायां च यथासम्भवं भवनपत्यादिदेवानाश्रित्य निगदितस्पर्शना परिभावनीया ।

अथोत्तरार्धं विव्रियते-"सेस" इत्यादि, शेषेषु=सनत्कुमारादारभ्य सहस्रारपर्यन्तेषु षड्-विधेषु देवेषु, पद्मलेश्यायां, क्षायोपशमिकसम्यक्त्वे मिश्रे चेति नव मार्गणासु सप्तकर्मणामुत्कृष्ट-प्रदेशबन्धकैः "अष्टभागाः" स्पृष्टाः । एतासु मार्गणासु वर्तमानानां जीवानामेकेन्द्रियेषूत्पादाभावाद् मारणान्तिकसमुद्घातेन नव रज्जवः स्पर्शना न भवत्यपि तु गमनागमनमेवाश्रित्याष्टौ रज्जवः स्पर्शना भवति । तथाहि–सनत्कुमारादयो देवा अधस्तृतीयपृथ्वीं यावद् गच्छन्तः सार्धं रज्जुचतुष्कं स्पृशन्ति, उपरि च पूर्वसाङ्गतिकदेवैर्नीयमाना अच्युतदेवलोकं यावद् गच्छन्तीति सार्धं रज्जुत्रयं स्पृशन्तीति सर्वा मीलित्वा "अष्टौ रज्जूः" स्पृशन्ति । तथा चोक्तं जीवसमासे–अट्ठ सहस्सारं-तिय" इति । एवं पद्मलेश्यायामपि सनत्कुमारादिदेवानाश्रित्य परिभावनीयम् ।

ननु पद्मलेश्या पञ्चेन्द्रियतिरश्चामप्यस्तीति कथं पद्मलेश्यायामपि सनत्कुमारादिदेवाना-श्रित्य परिभावनीयमित्युच्यते ? इति चेद्, सत्यम्, पञ्चेन्द्रियतिरश्चां पद्मलेश्यासद्भावेऽपि तानाश्रित्यात्र भावना न क्रियते । यतः पद्मलेश्यावन्तः पञ्चेन्द्रियतिर्यञ्चोऽधो नैरयिकेषु नोत्प-द्यन्ते, तथोर्ध्वमपि सहस्रारपर्यन्तमेवोत्पद्यन्ते । तिर्यग्लोकात् सहस्रारपर्यन्तं पञ्चरज्जवो भवन्ति । ततो यद्यत्र तिर्यक्पञ्चेन्द्रियानाश्रित्य भावना क्रियते तदा तु त्रिभागा न्यूनाः प्राप्यन्ते । क्षायो-पशमिकसम्यक्त्वमिश्रयोरपि सनत्कुमारादिदेवानाश्रित्य आयुष उत्कृष्टप्रदेशबन्धकानामष्टभागस्प-र्शनावद् वा परिभावनीयम् ।

न चानुत्तरदेवेष्वपि क्षायोपशमिकसम्यक्त्वस्य सद्भावः, मारणसमुद्घातेनानुत्तरविमानाद् तिर्यग्लोकं यावत् प्रक्षिप्तस्वात्मप्रदेशदण्डास्ते सप्तरज्जूः स्पृशन्तीत्युपरितनी सप्तरज्जवः स्पर्शना भवति । तथा सहस्रारादिकल्पवासिनः सम्यग्दृष्टिदेवा अधस्तृतीयां पृथिवीं यावद् गच्छन्तीत्य-धस्तनी द्विरज्जु स्पर्शना भवतीति सर्वा मीलित्वा नव रज्जवः स्पर्शना भवतीति कथमष्टावेव रज्जवः स्पर्शना निरूपितेति वाच्यम्, अनुत्तरदेवास्तिर्यग्लोके मनुष्येष्वेवोत्पद्यन्ते । मनुष्याणां च क्षेत्रं रज्ज्वसंख्यातभागमात्रमेव । अतोऽनुत्तरदेवानां दैर्घ्येण स्पर्शनायाः सप्तरज्जुप्रमाणत्वेऽप्यायाम-विष्कम्भाभ्यां रज्ज्वसंख्यातभागमात्रत्वेन घनसप्तरज्जवो न प्राप्यन्ते । सनत्कुमारादिदेवानाश्रित्य तु गमनागमनेन घनाष्टरज्जवः स्पर्शना प्राप्यत इति तानाश्रित्य भावना कृता । ॥३९९॥ इदानीं सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां यत्र त्रयोदशभागा यत्र च द्वादशभागास्ता मार्गणा निरूपयति—

छुहिआ तेरहभागा णेया वेउव्वियम्मि परिपुट्ठा ।
बारह भागा कम्मे सासाणे तह अणाहारे ॥४००॥

(प्रे०) "छुहिआ" इत्यादि, वैक्रियकाययोगमार्गणायां सप्तकर्मणामुत्कृष्टप्रदेशबन्धकैः "त्रयोदशभागाः" स्पृष्टा ज्ञातव्याः । तद्यथा–वैक्रियकाययोगवन्तः सप्तमपृथ्वीस्था नैरयिकास्तिर्यग्लोके उत्पित्सवो मारणान्तिकसमुद्घातेन तिर्यग्लोकं यावत् षड्रज्जूः स्पृशन्तीत्यधस्तनी षड्रज्जवः स्पर्शना भवति । तथा भवनपत्यादयो देवा ईषत्प्राग्भारादिपृथ्वीकायिकेषूत्पद्यमाना मारणान्तिकसमुद्घातेनेषत्प्राग्भारां पृथिवीं यावत् सप्तरज्जूः स्पृशन्तीत्युपरितनी सप्तरज्जवः स्पर्शना भवति । इत्येवं वैक्रियकाययोगे प्रकृतजीवानां सर्वा मीलित्वा त्रयोदश रज्जवः स्पर्शना भवति ।

"परिपुट्ठा" इत्यादि, कार्मणकाययोगे, सास्वादनसम्यक्त्वेऽनाहारके च सप्तकर्मणामुत्कृष्टप्रदेशबन्धकैः "द्वादशभागाः" स्पृष्टाः । तद्यथा–सास्वादनभावे वर्तमानाः षष्ठपृथिवीस्था नैरयिकाः तिर्यक्षूत्पद्यन्त इति मारणसमुद्घातेनाधस्तनी पञ्चरज्जवः स्पर्शना भवति । तथा तिर्यक्पञ्चेन्द्रियाः सास्वादनभावे वर्तमाना उपरि ईषत्प्राग्भारादिपृथ्वीकायिकेषूत्पद्यन्त इति मरणसमुद्घातेनोपरितनी सप्तरज्जवः स्पर्शना भवतीति सास्वादनमार्गणायां प्रस्तुतजीवानां सर्वा मीलित्वा द्वादशरज्जवः स्पर्शना भवति ।

ननु सप्तमपृथ्वीस्था नैरयिकाः सास्वादनभावमवाप्नुवन्तीति सप्तमनरकात् तिर्यग्लोके उत्पद्यमानानां तेषां मारणान्तिकसमुद्घातेन षड्रज्जवः स्पर्शना भवतीत्युपरितनसप्तरज्जुस्पर्शनया सह सास्वादनमार्गणायां त्रयोदशरज्जवः स्पर्शना भवतीति चेद्, न, सप्तमपृथिवीनारकाः सास्वादनभावं परित्यज्यैव तिर्यक्षूत्पद्यन्ते अत सास्वादनभावे वर्तमानास्ते मरणसमुद्घातं न विदधतीत्युक्तरीत्या द्वादश रज्जवः एव स्पर्शना भवति ।

ननु सास्वादनभावमापन्नाः पञ्चेन्द्रियतिर्यञ्च उपरि यथा लोकान्तप्रदेशेषूत्पद्यन्ते तथाऽधस्ताल्लोकान्तप्रदेशेषूत्पद्यन्ते नवा ? यदि समुत्पद्यन्ते तदा सास्वादनमार्गणायां त्रयोदशरज्जवः स्पर्शना भवतीति चेद्, उच्यते, इह-प्रायः सास्वादन भावमापन्नानामधोलोके गतिर्नोपलभ्यते, तेषां किञ्चित् शुभपरिणामयुक्तत्वात् । तथा चोक्तं पञ्चसंग्रहे मूलटीकायां–"प्रायोऽधोलोकाभिमुखी सास्वादनगुणापन्नानां सत्त्वानां गतिरेव नास्ति, तेन इयन्मात्रा स्पर्शना प्रतिपादिता" ।

अथ कार्मणकायेऽनाहारके चैवं भावना–कार्मणकायानाहारकयोरुत्कृष्टप्रदेशबन्धका विग्रहगतौ वर्तमानाः संज्ञिनो भवन्ति । ततः सप्तमपृथ्वीस्था नैरयिकास्तिर्यग्लोके संज्ञितिर्यक्पञ्चेन्द्रियतयोत्पद्यन्त इत्यधस्तनी षड्रज्जवः स्पर्शना भवति । तथाऽच्युतदेवलोकामरैरच्युतदेवलोकं नीता भवनपत्यादयोऽच्युतदेवलोक एव मृत्वा तिर्यग्लोके संज्ञितिर्यक्पञ्चेन्द्रियतया समुत्पद्यन्त इत्युपरितनी षड्रज्जवः स्पर्शना भवतीति कार्मणकायानाहारकयोः सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां विग्रहगत्या सर्वा मीलित्वा द्वादशरज्जवः स्पर्शना भवति ॥४००॥

सम्प्रति यासु मार्गणासु मोहस्य षण्णां च कर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शनानुक्रमेण "अष्टभागा लोकस्यासंख्यातभागश्च" ताः प्ररूपयति—

**भागा अट्ठ फरिसिआ तिणाणऽवहिसम्मखइउवसमेसुं ।**
**मोहस्स असंखंसो जगस्स पुट्ठोऽत्थि सेसाणं ॥४०१॥**

(प्रे०) "भागा" इत्यादि, मतिश्रुतावधिलक्षणत्रिज्ञानेषु, अवधिदर्शने, सम्यक्त्वौघक्षायिकौपशमिकसम्यक्त्वेषु चेति सप्तमार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धकैः "अष्टभागाः" स्पृष्टाः । अत्र भावना सामान्यवक्तव्यतायामायुरुत्कृष्टप्रदेशबन्धकानामष्टभागस्पर्शनायां यथा कृता, यद्वा सनत्कुमारादीनामष्टभागस्पर्शनायां यथा कृता तथा कर्तव्या ।

अत्र कश्चिदाह-ननु त्रिनरादिमार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामिनो ये सप्तप्रकृतिबन्धकाः पर्याप्तास्त एव त्रिज्ञानादिषु सन्तीति को विशेषः ? येन मोहनीयस्योत्कृष्टबन्धकानां त्रिनरादिमार्गणासु "सर्वलोकः," त्रिज्ञानादिषु "अष्टौ भागाः" स्पर्शना भवति । अत्र प्रतिविधीयते,—त्रिनरादिमार्गणासु सप्तप्रकृतिबन्धकाः पर्याप्ता जीवाः सम्यग्दृष्टयो मिथ्यादृष्टयश्चेति द्विविधा भवन्ति । तेषु मिथ्यादृष्टयो जीवाः सूक्ष्मेष्वप्युत्पद्यन्त इति त्रिनरादिमार्गणासु मिथ्यादृष्टिजीवानाश्रित्य मोहनीयस्योत्कृष्टप्रदेशबन्धकानां "सर्वलोकः" स्पर्शना भवति । त्रिज्ञानादिमार्गणासु जीवाः सम्यग्दृष्टय एव भवन्ति, ते च सूक्ष्मेषु नोत्पद्यन्त इति तेषां स्पर्शना सर्वलोको न भवति, अपि तु प्रदर्शितभावनयाऽष्टौ भागा एव भवति ।

"असंखंसो" इत्यादि, त्रिज्ञानादिमार्गणासु शेषाणां—मोहनीयव्यतिरिक्तानां षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकैर्विश्वस्यासंख्याततमो भागः स्पृष्टोऽस्ति । एतासु मार्गणासु षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकाः सूक्ष्मसम्परायस्था भवन्तीति सामान्यवक्तव्यतायां भावितरीत्या परिभावनीयम् ॥४०१॥ सम्प्रति शुक्ललेश्यायां शेषासु च मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शनां निरूपयन्नाह—

**सुक्काए छ फरिसिआ भागा मोहस्स छण्ह सेसाणं ।**
**लोगासंखियभागो छुहिओ सेसासु पुट्ठमखिलजगं ॥४०२॥ (गीतिः)**

(प्रे०) "सुक्काए" इत्यादि, शुक्लेश्यायां मोहनीयस्योत्कृष्टप्रदेशबन्धकैः "षड्भागा" स्पृष्टाः, शेषाणां षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकैः "लोकासंख्याततमो भाग" स्पृष्टः । इयमत्र भावना—अस्यां मार्गणायां मोहनीयस्योत्कृष्टप्रदेशबन्धका अच्युतकल्पवासिनो विबुधाः प्रागुक्तप्रयोजनवशात् तिर्यग्लोकं यावदागच्छन्तीति तेषां गमनागमनक्षेत्रमायामविष्कम्भाभ्यां रज्जुप्रमाणं दैर्घ्येण च षड्रज्जुप्रमाणमस्तीति षड् घनरज्जवः स्पर्शना भवति । अथ षण्णां कर्मणामुत्कृष्टप्रदेश-

बन्धस्वामिनः सूक्ष्मसम्परायस्था इति षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शनायां भावना सुगमा ।

"**सेसासु**" इत्यादि, निरूपितेतरासु नवसप्ततिमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकैः समस्तलोकः स्पृष्टः । शेषमार्गणा इमाः—सर्वतिर्यग्गतिभेदाः, अपर्याप्तमनुष्यः, पञ्चेन्द्रियौघपर्याप्त-पञ्चेन्द्रियौ विना सप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना चत्वारिंशत्कायभेदाः, वेदत्रिकं, लोभमन्तरा कषायत्रिकम्, अज्ञानत्रिकम्, असंयमः, अप्रशस्तलेश्यात्रिकम्, अभव्यः, मिथ्यात्वम्, असंज्ञी च । अत्रेयं भावना—एतासु मार्गणासु वर्तमाना जीवाः 'संखनरा चउसु गइसु" इति सन्न-पणिंदियतिरिया मरिउ चउसु वि गइसु जंति । थावरविगला नियमा, संखाउय तिरिनरेसु गच्छन्ति ॥ इति च वचनात् सूक्ष्मेष्वपि समुत्पद्यन्त इति मारणान्तिकसमुद्घातेन, सूक्ष्मौघादिषु कासुचिद् मार्गणासु स्वस्थानेनापि सर्वलोकः स्पर्शना भवति । तदेवं सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शना निरूपिता ॥४०२॥

सम्प्रति विशेषकेण सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां स्पर्शनां प्ररूपयिषुराह—

सव्वणिरयदेवेसुं वेउव्वाहारदुगअवेएसुं ।
चउणाणसंयमेसुं समइअछेअपरिहारेसुं ॥४०३॥
देससुहमओहीसुं तहा पसत्थासु तीसु लेसासुं ।
सम्मुवसमखइएसुं वेअगसासाणमीसेसुं ॥४०४॥
अगुरुपएसस्साउगवज्जाणं मोहगुरुपएसव्व ।
फुसणा णेयाऽण्णासुं सव्वजगं फोसिअं णेयं ॥४०५॥

(प्रे०) "**सव्वणिरय**" इत्यादि, सर्वनरकदेवगतिभेदेषु, वैक्रियद्विके, आहारकद्विकेऽपगत वेदे, चतुर्ज्ञानमार्गणासु संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयममार्गणासु [ द्वितीयार्या-वृत्ति] "**देससुहम**" इत्यादि, देशविरतिसूक्ष्मसम्पराययोः, अवधिदर्शने, तथा प्रशस्तलेश्यात्रिके, सम्यक्त्वौघौपशमिकक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वेषु, मिश्रे चेति शलाकापुरुषप्रमाणासु मार्गणासु [तृतीयगाथावृत्तिः] '**अगुरु**' इत्यादि, आयुर्वर्जानां ज्ञानावरणीयादिसप्तकर्मणामनुत्कृष्ट-प्रदेशबन्धकानां स्पर्शना "**मोहगुरुपएसव्व**" इति, मोहनीयस्योत्कृष्टप्रदेशबन्धकानां स्पर्शनावद् भवतीति । अर्थादेतासु मार्गणासु मोहनीयस्योत्कृष्टप्रदेशबन्धकानां स्पर्शना यावत्प्रमाणा प्रदर्शिता तावत्प्रमाणा सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां भवति ।

तद्यथा—द्वितीयादिषष्ठपर्यन्तनरकगतनैरयिकेषु देशविरतेषु चानुक्रमेण एका, द्वे, तिस्रः, चतस्रः, पञ्च पञ्च रज्जवः, नरकौघसप्तमनरकयोः, आनताद्यच्युतपर्यन्तत्रिदशेषु, शुक्ललेश्यायां च षड्रज्जवः, सनत्कुमारादिसहस्रारपर्यन्तामरेषु, मतिश्रुतावधिलक्षणज्ञानत्रिके, अवधिदर्शने, पद्मलेश्यायां, सम्य-

क्त्वौघौपशमिकक्षायिकक्षायोपशमिकसम्यक्त्वेषु मिश्रे चेति षोडशमार्गणासु अष्टौ रज्जवः, देवौघे, भवनपत्यादीशानपर्यन्तविबुधेषु, तेजोलेश्यायां च नव रज्जवः,सास्वादनसम्यक्त्वे द्वादश रज्जवः, वैक्रियकाययोगे त्रयोदश रज्जवः, प्रथमनरके आद्यग्रैवेयकादिसर्वार्थसिद्धपर्यन्तचतुर्दशदेवेषु, वैक्रियमिश्रे, आहारकद्विके, अवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमेषु चेति पञ्चविंशतिमार्गणासु लोकासंख्यातभागः, सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां स्पर्शना भवतीति सर्वत्र योज्यम् । अत्र तत्तन्मार्गणासु भावना मोहनीयस्योत्कृष्टप्रदेशबन्धकानां स्पर्शनायां यथा कृता तथा कर्तव्या ।

समुदितभावना त्वेवम्—यासु एकादिरज्जवः स्पर्शना तासु जीवानां यथासम्भवं स्वस्थानादिक्षेत्रमायामविष्कम्भाभ्यां रज्जुप्रमाणं दैर्घ्येण चैकादिरज्जुप्रमाणं भवतीति दैर्घ्यक्षेत्रानुसारेण तेषामेकादिरज्जवः स्पर्शना भवति । अथ यासु लोकासंख्यातभागः स्पर्शना तासु क्वचिदायामविष्कम्भाभ्यां बाहल्यतश्च रज्ज्वसंख्यातभागमात्रं यथासम्भवं स्वस्थानादिक्षेत्रं भवति, क्वचिच्च दैर्घ्येणैकादिरज्जुप्रमाणमस्ति, तथाप्यायामविष्कम्भाभ्यां रज्ज्वसंख्यातभागमात्रमेवेति तेषां लोकासंख्यातभाग एव स्पर्शना भवति ।

अथोत्तरार्धं विव्रियते—"फुसणा णेयाऽण्णासु" इत्यादि, शेषासु सप्तोत्तरशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां "सर्वलोकः" स्पर्शना भवति । शेषमार्गणा इमाः—सर्वतिर्यग्मनुष्यगतिभेदाः, समस्तेन्द्रियभेदाः, निखिलकायभेदाः, पञ्चमनःपञ्चवचनकाययोगौघौदारिकद्विककार्मणकाययोगाः, वेदत्रिकं, कषायचतुष्कं, मतिश्रुतावधिलक्षणाज्ञानत्रिकम्, असंयमः, चक्षुरचक्षुर्दर्शने, अशुभलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वं, संज्ञी, असंज्ञी, आहारकानाहारकौ च । अत्रेयं भावना—तिर्यगोघादिकतिपयमार्गणासु सूक्ष्मजीवानां प्रवेशः, कतिपयमार्गणासु च मार्गणस्था जीवाः सूक्ष्मेषूत्पद्यन्ते इति शेषासु सप्तोत्तरशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका जीवाः सम्पूर्णलोकं स्पृशन्ति ।

तदेवं मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामनुत्कृष्टप्रदेशबन्धकानां च स्पर्शना निरूपिता ॥४०३।४०४।४०५॥ अथायुःकर्मण उत्कृष्टानुत्कृष्टप्रदेशबन्धकानां स्पर्शनां निजिगदिषुरादौ तावद्यासु मार्गणासूत्कृष्टप्रदेशबन्धकानां स्पर्शना "अष्टभागाः" ता विशेषकेण प्ररूपयति—

आउस्स बंधगेहिं जेट्ठपएसस्स अट्ठ भागा उ ।
परिपुट्ठा विण्णेया देवसहस्सारअंतेसुं ॥४०६॥
दुपणिंदितसेसुं तह पणमणवयणेसु कायविउवेसुं ।
थीपुरिसकसायचउगतिणाणतिअणाणअयतेसुं ॥४०७॥
दरिसणतिगतेऊसुं पम्हभवियअभविसम्मखइएसुं ।
वेअगसासाणेसुं मिच्छे सण्णिम्मि आहारे ॥४०८॥

(प्रे०) "आउस्स" इत्यादि, आयुःप्रकृतेरुत्कृष्टप्रदेशबन्धकैः "अष्टभागाः" स्पृष्टा ज्ञातव्याः। कासु मार्गणासु ? इत्याह–"देवसहस्सार" इत्यादि, देवौघे, भवनपतिप्रमुखसहस्रारपर्यन्तेषु एकादशदेवभेदेषु, [द्वितीयगाथावृत्तिः] "दुपणिंदि" इत्यादि, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियलक्षणपञ्चेन्द्रियद्विके, त्रसौघपर्याप्तत्रसलक्षणत्रसद्विके, तथा समुच्चये, पञ्चमनःपञ्चवचनयोगेषु, काययोगौघवैक्रियकाययोगयोः, स्त्रीपुरुषवेदयोः, कषायचतुष्के, मतिश्रुतावधिलक्षणज्ञानत्रिके, मतिश्रुतावधिलक्षणाज्ञानत्रिके, असंयमे, [तृतीयगाथावृत्तिः] "दरिसणतिग" इत्यादि, दर्शनत्रिके, तेजःपद्मलेश्ययोः, भव्याभव्ययोः, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वेषु, मिथ्यात्वे, संज्ञिनि आहारके चेति पञ्चपञ्चाशन्मार्गणासु।

इयमत्र भावना–देवौघसहस्रारपर्यन्तेषु आयुरुत्कृष्टप्रदेशबन्धकानां स्पर्शना सामान्यवक्तव्यतायां यथा भाविता तथा भावनीया। अत्र कश्चित् प्रेरयति–नन्वत्र को विशेषः? येन देवौघसौधर्मेशानपर्यन्तदेवमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शना नव रज्जवः प्ररूपिता, अत्र च तास्वष्टौ रज्जवः स्पर्शना प्ररूप्यते, अत्र प्रतिविधीयते, सौधर्मेशानपर्यन्ता अमरा ईषत्प्राग्भारादिपृथ्वीकायिकेषु समुत्पद्यन्त इति तेषां सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां मारणसमुद्घातेनोपरितनैकरज्जोरधिकलाभाच्च रज्जवः स्पर्शना भवति। परन्तु आयुरुत्कृष्टप्रदेशबन्धकानां तेषामायुर्बन्धकाले समुद्घातस्याभावादुपरितनैकरज्जुरधिका न प्राप्यत इत्यष्टौ रज्जव एव स्पर्शना भवति। द्विपञ्चेन्द्रियादिमार्गणासु सर्वपर्याप्तिपर्याप्ताः संज्ञिन एवायुरुत्कृष्टप्रदेशबन्धं विदधतीत्यायुरुत्कृष्टप्रदेशबन्धका देवा अपि भवन्ति। अतो द्विपञ्चेन्द्रियादिमार्गणास्वपि भवनपतिप्रमुखामरानाश्रित्याष्टरज्जवः स्पर्शना परिभावनीया। न च नपुंसकवेदेऽपि आयुरुत्कृष्टप्रदेशबन्धस्वामिनः सर्वपर्याप्तिपर्याप्तसंज्ञिनो भवन्तीति कथमष्टभागाः स्पर्शना न भवतीत्याशङ्कनीयम्, देवेषु नपुंसकवेदस्यासद्भावात् ॥४०६।४०७।४०८॥ इदानीमायुरुत्कृष्टप्रदेशबंधकानां स्पर्शना यासु मार्गणासु "षड् भागाः" यासु च "देशोनलोकः" ता दर्शयति–

चउआणताइसुइलासु छ भागा फोसिआऽत्थि हीणजगं।
एगिंदियवाऊसुं ताण मयलबायरेसु भवे ॥४०९॥

(प्रे०) "चउआणताइ" इत्यादि, आनताद्यच्युतपर्यन्तेषु चतुर्षु देवभेदेषु शुक्ललेश्यायां चायुरुत्कृष्टप्रदेशबन्धकैः "षड्भागाः" स्पृष्टाः सन्ति। अत्र भावना सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां स्पर्शनायां यथा कृता तथा कर्तव्या। "हीणजगं" इत्यादि, एकेन्द्रियौघे, वायुकायौघे, 'ताण' इति, एकेन्द्रियवायुकाययोः, प्राकृतत्वाद् द्विवचनस्थाने बहुवचनम्, समस्तेषु षट्संख्याकेषु बादरभेदेषु इत्यष्टमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकानां स्पर्शना देशोनलोको भवति। अयमत्र भावनापथः–एकेन्द्रियौघत्रिबादरैकेन्द्रियेषु आयुरुत्कृष्टप्रदेशबन्धका यथासम्भवं पर्याप्ता अपर्याप्ता वा बादरजीवाः सन्तीति तासु पर्याप्ता अपर्याप्ताश्च बादरवायुकाया अप्यायुरुत्कृष्टप्रदेशबन्धं कुर्वन्ति। तथा वायुकायमार्गणासु

तु यथासम्भवं पर्याप्ता अपर्याप्ता वा बादरवायुकायिका एवायुरुत्कृष्टप्रदेशबन्धं कुर्वन्ति । अथ पर्याप्तापर्याप्तबादरवायुकायाः प्रत्येकं सुषिरबहुललोकस्य यत्किमपि सुषिरं तत्र सर्वत्रापि प्रसर्पन्तीति "बायरपवणा असंखेसु" इति वचनाल्लोकस्यासंख्येयेषु भागेषु वर्तन्ते । ततोऽत्रैकेन्द्रियौघप्रमुखाष्टमार्गणासु यथासम्भवं पर्याप्तापर्याप्तबादरवायुकायानाश्रित्यायुरुत्कृष्टप्रदेशबन्धकानां देशोनलोकः स्पर्शना भवति ।

नन्वत्र पर्याप्तापर्याप्तबादरवायुकायाः सूक्ष्मेष्वपि समुत्पद्यन्त इति सम्पूर्णलोकः स्पर्शना कथं न भवति ? इति चेद्, न, त्वं विस्मरणशीलो दृश्यसे, प्रागनिरूपिताक्षेपपरिहाराणां विस्मृतत्वात्, सूक्ष्मेषु समुत्पद्यमानानां पर्याप्तापर्याप्तबादरवायुकायानां सर्वलोकः स्पर्शना मारणान्तिकसमुद्घातेन भवति, आयुर्बन्धकाले च मरणसमुद्घातो न भवतीति प्रागनेकशो निरूपितम् । अतोऽत्र तत्प्रयुक्ता सर्वलोकः स्पर्शना न भवति । स्वस्थानेन तु प्रागुक्तवचनाद् देशोनलोक एव स्पर्शना भवति ।

न चात्रैकेन्द्रियौघत्रिबादरैकेन्द्रियेषु आयुरुत्कृष्टप्रदेशबन्धका यथा यथासम्भवं पर्याप्ता अपर्याप्ताश्च बादरवायुकाया भवन्ति तथा यथासम्भवं पर्याप्ता अपर्याप्ताश्च बादरनिगोदा अपि भवन्ति । ते च बादरवायुकायिकेभ्योऽधिकाः, यतः पर्याप्तापर्याप्तबादरवायुकायाः प्रत्येकमसंख्याताः, पर्याप्तापर्याप्तबादरनिगोदाश्च प्रत्येकमनन्ताः, इति तेषां बादरवायुकायिकेभ्योऽधिकत्वात् तेषां क्षेत्रमधिकं भवेदिति कथमत्र बादरवायुकायानाश्रित्यैव भावना कृतेत्याशङ्कनीयम् , एकस्मिन् शरीरेऽनन्तबादरनिगोदानां समावेशाद् बादरवायुकायेभ्योऽधिकत्वेऽपि तेषां स्वस्थानक्षेत्रं लोकासंख्यातभागमात्रमेव । तथा चोक्तं प्रज्ञापनायाम्–"कहि णं भंते ? बादरवणस्सइकाइयाणं पज्जत्तगाण ठाणा प० ? गोयमा ?..................सट्ठाणेण लोयस्स असंखेज्जइभागे ! कहिणं भंते ? बादरवणस्सइकाइयाणं अपज्जत्तगाणं ठाणा प० ?. गोयमा ?........................सट्ठाणेणं लोयस्स असंखेज्जइभागे" । अतोऽत्रैकेन्द्रियौघत्रिबादरैकेन्द्रियेषु पर्याप्तापर्याप्तबादरनिगोदान् विहाय पर्याप्तापर्याप्तबादरवायुकायानाश्रित्य भावना कृता ॥४०९॥

साम्प्रतं शेषमार्गणासु एकयाऽऽर्ययाऽऽयुष उत्कृष्टप्रदेशबन्धकस्पर्शनां प्रकटयन्नाह—

**सव्वसुहमेसु सव्वो लोगो भागाऽट्ठ असुहलेसासुं ।**
**अण्णे भणन्ति लोगासंखंसो सो च सेसासुं ॥४१०॥**

(प्रे०) 'सव्वसुहमेसु' इत्यादि, अष्टादशसंख्याकेषु सर्वसूक्ष्ममार्गणाभेदेषु आयुरुत्कृष्टप्रदेशबन्धकैः सम्पूर्णो लोकः स्पृष्टः । अत्र हेत्वादिकं सुगमं प्राक्प्रदर्शितमपि चेति न पुनः प्रपञ्च्यते । तथा 'असुहलेसासु' इति, तिसृषु अप्रशस्तलेश्यामार्गणासु आयुरुत्कृष्टप्रदेशबन्धकैरष्टौ भागाः परिस्पृष्टाः, अप्रशस्तलेश्यावत्सु आयुरुत्कृष्टप्रदेशबन्धकेषु देवानां प्राधान्यात् अप्रशस्तलेश्यावतां भवनपत्यादिदेवानां कालत्रयमपेक्ष्य गमनागमनक्षेत्रस्य यथोक्ताष्टरज्जुप्रमाणत्वात् । अथात्रार्थे

मतान्तरं दर्शयति—'अण्णे' इत्यादि, अन्ये महाबन्धकाराद्य इत्यर्थः, प्रस्तुतस्पर्शनां लोकाऽसंख्येयभागमितामेव निगदन्ति, तेषां मते प्रस्तुतमार्गणासु देवानामायुर्बन्धाभावात्, यतः ते हि देवानां पर्याप्तावस्थायामप्रशस्तलेश्यां न स्वीकुर्वन्ति, अपर्याप्तावस्थायाञ्च देवानामायुर्बन्धो नैव भवति, ततः शेषत्रिगतिस्थपर्याप्तसंज्ञिन एवाश्रित्य प्रस्तुतस्पर्शना प्राप्यते, तेषां स्वस्थानस्योत्कृष्टतो लोकाऽसंख्येयभागमात्रत्वात् गमनागमनक्षेत्रस्याऽकिञ्चित्करत्वाच्च । तथा 'सेसासु' इति, उक्तशेषासु एकाधिकसप्ततिमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकैः 'सो च्चिअ' स एव—लोकाऽसंख्येयभाग एव स्पृष्टः ।

शेषमार्गणा नामत इमाः—निखिलनरकगतिभेदाः, समस्ततिर्यग्मनुष्यगतिभेदाः, प्रथमग्रैवेयकाद्यनुत्तरपर्यन्ताः चतुर्दशदेवभेदाः, सर्वविकलेन्द्रियभेदाः, अपर्याप्तपञ्चेन्द्रियश्चेति दशेन्द्रियभेदाः, पृथिव्यप्तेजोवनस्पतिकायौघभेदाः, साधारणवनस्पतिकायौघबादरपृथिव्यप्तेजःसाधारणवनस्पतिकायिकाः, पर्याप्तबादरपृथिव्यप्तेजःसाधारणवनस्पतिकायाः, अपर्याप्तबादरपृथिव्यप्तेजोनिगोदाः, प्रत्येकवनस्पतिकायत्रिकम्, अपर्याप्तत्रसकायश्चेत्येकविंशतिकायभेदाः, औदारिकद्विकाहारकद्विके, नपुंसकवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः, असंज्ञी च ।

**इयमत्र भावना**—एतासु मार्गणासु स्थितानां जीवानां विशिष्टगमनागमनक्षेत्रस्याभावात् स्वस्थानक्षेत्रानुसारेणैव स्पर्शना प्राप्यते । तत्र तिर्यगोघः, पृथिव्यप्तेजोवनस्पतिकायौघाः, साधारणवनस्पतिकायौघः, औदारिकद्विकं, नपुंसकवेदः, अशुभलेश्यात्रिकमसंज्ञी चेति त्रयोदशमार्गणा विहाय शेषमार्गणासु मार्गणास्थानां जीवानां स्वस्थानक्षेत्रं लोकासंख्यातभाग एवेति पूर्वं क्षेत्रद्वारे सप्रमाणं प्रदर्शितम् । तिर्यगोघादित्रयोदशमार्गणासु सूक्ष्मजीवानाश्रित्य मार्गणास्थजीवानां स्वस्थानक्षेत्रस्य सम्पूर्णलोकप्रमाणत्वेऽप्यायुरुत्कृष्टप्रदेशबन्धका देवभिन्नपञ्चेन्द्रियादयो भवन्ति, तेषां स्वस्थानक्षेत्रं तु लोकाऽसंख्यातभाग एव भवति । अतः शेषास्वशीतिमार्गणास्वायुरुत्कृष्टप्रदेशबन्धका जीवा नानाजीवानतीतादित्रिविधकालञ्चाश्रित्य लोकासंख्यातभागमेव स्पृशन्ति । इत्थमायुरुत्कृष्टप्रदेशबन्धकानां स्पर्शना व्याख्याता ॥४१०॥

साम्प्रतमादेशत आयुरनुत्कृष्टप्रदेशबन्धकानां स्पर्शनां विशेषकेण प्ररूपयितुकाम आह—

तिरिये एगिंदियपणकायणिगोएसु सव्वसुहुमेसुं ।
कायोरालदुगेसुं णपुंसगे चउकसायेसुं ॥४११॥
अण्णाणदुगे अयते अचक्खुदंसणतिअसुहलेसासुं ।
भवियेयरमिच्छेसुं असण्णिआहारगेसुं च ॥४१२॥

आउस्स बंधगेहिं अणुक्कपएसस्स फोसिअं णेयं।
सव्वजगं सेसासु जेट्ठपएसव्व फुसणाऽत्थि ॥४१३॥

(प्रे०) "तिरिये" इत्यादि, तिर्यगोघे, एकेन्द्रियौघे, "पणकाय" इति, पृथिव्यप्तेजोवायुवनस्पतिकायौघेषु, साधारणवनस्पतिकायौघे, सर्वेष्वष्टादशसु सूक्ष्मभेदेषु, काययोगौघे, औदारिकद्विके, नपुंसकवेदे, चतुष्कषायेषु, [ द्वितीयवृत्तवृत्तिः ] 'अण्णाणदुगे' इत्यादि, मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अशुभलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिनि, आहारके चेति षट्चत्वारिंशद्मार्गणासु [ तृतीयार्यावृत्तिः ] "आउस्स" इत्यादि, आयुषोऽनुत्कृष्टप्रदेशबन्धकैः सम्पूर्णो लोकः स्पृष्टो ज्ञेयः। एतासु मार्गणास्वायुषोऽनुत्कृष्टप्रदेशबन्धकाः सूक्ष्मा भवन्तीति तानाश्रित्य स्वस्थानेन सम्पूर्णलोकः स्पर्शना घटामटाट्यते। "सेसासु" इत्यादि, पूर्वार्धस्थं 'बंधगेहिं' इति पदमत्रापि सम्बध्यते, भणितव्यतिरिक्तासु सप्तदशशतमार्गणासु आयुषोऽनुत्कृष्टप्रदेशस्य "अर्थवशाद् विभक्तिपरिणाम" इति न्यायाश्रयणाद् बन्धकैः इति पदस्य षष्ठ्यन्ततया परिणामे सति बन्धकानां स्पर्शना, "जेट्ठपएसव्व" इति, सूचकत्वात् सूत्रस्यायुरुत्कृष्टप्रदेशबन्धकानां स्पर्शनावद् भवति। शेषासु मार्गणास्वायुरुत्कृष्टप्रदेशबन्धकानां यावत्प्रमाणा स्पर्शना भवति तावत्प्रमाणाऽऽयुषोऽनुत्कृष्टप्रदेशबन्धकानां भवतीत्यर्थः।

शेषमार्गणा इमाः—समस्तनरकगतिभेदाः, पञ्चेन्द्रियतिर्यगोघपर्याप्तापर्याप्तपञ्चेन्द्रियतिर्यक्तिरश्चीलक्षणाश्चत्वारस्तिर्यग्गतिभेदाः, निखिलमनुष्यभेदाः, सकलदेवगतिभेदाः, बादरैकेन्द्रियपर्याप्तापर्याप्तबादरैकेन्द्रियाः, निखिलविकलेन्द्रियपञ्चेन्द्रियभेदाश्चेति पञ्चदशेन्द्रियभेदाः, बादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, पर्याप्तबादरपृथिव्यप्तेजोवायुनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, प्रत्येकवनस्पतिकायत्रिकं, त्रसत्रिकं चेत्येकविंशतिकायभेदाः, पञ्चमनःपञ्चवचनवैक्रियाहारकद्विककाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वानि संज्ञी च।

शेषमार्गणास्वायुरुत्कृष्टप्रदेशबन्धकानां स्पर्शनावदायुरनुत्कृष्टप्रदेशबन्धकानां स्पर्शनैवम्-देवौघे, भवनपतिप्रमुखसहस्रारपर्यन्तेषु देवेषु, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसयोः, पञ्चमनःपञ्चवचनेषु, वैक्रियकाययोगे, स्त्रीपुरुषवेदयोः, मतिश्रुतावधिविभङ्गज्ञानेषु, चक्षुरवधिदर्शनयोः, तेजःपद्मलेश्ययोः, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनेषु, संज्ञिनि चेति द्विचत्वारिंशन्मार्गणासु "अष्टभागाः", आनतादिचतुर्देवभेदेषु, शुक्ललेश्यायां च "षड्भागाः", बादरैकेन्द्रियपर्याप्तापर्याप्तबादरैकेन्द्रियेषु, बादरवायुकायपर्याप्तापर्याप्तबादरवायुकायेषु चेति षण्मार्गणासु "देशोनलोकः", शेषासु समस्तनरकगतिभेदेषु, तिर्यगोघं विना चतुर्षु तिर्यग्गतिभेदेषु, निखिलमनुष्य-

गतिभेदेषु, प्रथमग्रैवेयकाद्यन्तिमानुत्तरपर्यन्तेषु चतुर्दशदेवगतिभेदेषु, समस्तविकलेन्द्रियभेदेषु अपर्याप्तपञ्चेन्द्रिये चेति दशेन्द्रियभेदेषु, बादरपृथ्व्यप्तेजोनिगोदेषु, पर्याप्तबादरपृथिव्यप्तेजोनिगोदेषु, अपर्याप्तपृथिव्यप्तेजःसाधारणवनस्पतिकायेषु, प्रत्येकवनस्पतिकायत्रिकेऽपर्याप्तत्रसे चेति षोडशकायमार्गणासु, आहारकद्विके, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमेषु चेति चतुःषष्टिमार्गणासु "लोकासंख्यातभागः", आयुरनुत्कृष्टप्रदेशबन्धकानां स्पर्शना भवतीति सर्वत्र योज्यम् । अत्र भावनाऽपि आयुरुत्कृष्टप्रदेशबन्धकानां स्पर्शनायां यथा कृता तथा कर्तव्या ॥४११।४१२।४१३॥

तदेवमष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धकानामनुत्कृष्टप्रदेशबन्धकानां च स्पर्शना निरूपिता । साम्प्रतमष्टकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च स्पर्शनां वक्तुं प्रतुष्टूषुरादौ तावत् सामान्यवक्तव्यतामाह—

होएइ सव्वलोगो परिपुट्ठो बंधगेहि जीवेहिं ।
अट्ठण्हं कम्माणं हस्सियराणं पएसाणं ॥४१४॥

(प्रे०) "होएइ" इत्यादि, अष्टानामपि कर्मणां जघन्यप्रदेशस्येतरस्याजघन्यप्रदेशस्य बन्धकैर्जीवैः "सम्पूर्णलोकः" स्पृष्टो भवति । अष्टानामपि कर्मणां जघन्यप्रदेशस्याजघन्यप्रदेशस्य च बन्धकाः सूक्ष्मापर्याप्ता भवन्तीति तानाश्रित्य स्वस्थानेन "सर्वलोकः" स्पर्शना भवति ॥४१४॥

सम्प्रति सप्तकर्मणां जघन्यप्रदेशबन्धकानां स्पर्शनां मार्गणासु निर्दिधारयिषुर्यासु मार्गणासु "सर्वलोकः यासु च देशोनलोकः" ता गाथात्रिकेण वक्तुकाम आह—

तिरिये एगिंदियपणकायणिगोएसु सव्वसुहमेसुं ।
कायउरलदुगकम्मणणपुंसगकसायचउगेसुं ॥४१५॥
अण्णाणदुगे अयते अचक्खुदंसणतिअसुहलेसासुं ।
भवियेयरमिच्छेसुं अमणिआहारगियरेसुं ॥४१६॥
सत्तण्ह बंधगेहिं हस्सपएसस्स पुट्ठमखिलजगं ।
देसूणजगं बायरएगिंदियवाउसव्वभेएसुं ॥४१७॥ (गीतिः)

(प्रे०) "तिरिये" इत्यादि. तिर्यगोघे, एकेन्द्रियौघे. "पणकाय" इति, पृथ्व्यप्तेजोवायुवनस्पतिकायौघेषु, सर्वेषु अष्टादशसु सूक्ष्मभेदेषु, काययोगौघे, औदारिकौदारिकमिश्रलक्षणौदारिकद्विके, कार्मणकाये, नपुंसकवेदे, चतुष्कषायेषु, [द्वितीयवृत्तवृत्तिः] मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अशुभलेश्यात्रिके, भव्ये, इतरेऽभव्ये, मिथ्यात्वे, असंज्ञिनि, आहारके, इतरेऽनाहारके चेत्येवमेताचत्वारिंशन्मार्गणासु [तृतीयगाथावृत्तिः] सप्तकर्मणां जघन्यप्रदेशबन्धकैः "समस्तजगत्"

स्पृष्टम् । इयमत्र भावना–एतासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकाः कासुचित् सूक्ष्मनिगोदाः कासुचिच्च सूक्ष्मा इति सूक्ष्मजीवानाश्रित्य स्वस्थानेन सर्वलोकः स्पर्शना भवति ।

"देसूणजगं" इति, देशोनलोकः, 'सप्तकर्मणां जघन्यप्रदेशबन्धकैः स्पृष्टः' इत्यत्र सम्बध्यते । कासु मार्गणासु ? इत्याह–"बायर" इत्यादि, बादरैकेन्द्रियवायुकाययोः सर्वभेदेषु, बादरैकेन्द्रिये, पर्याप्तबादरैकेन्द्रिये, अपर्याप्तबादरैकेन्द्रिये, बादरवायुकाये, पर्याप्तबादरवायुकाये, अपर्याप्तबादरवायुकाये चेति षण्मार्गणास्वित्यर्थः । इयमत्र भावना-एतासु मार्गणासु यथासम्भवं पर्याप्ता अपर्याप्ताश्च बादरवायुकायाः सप्तकर्मणां जघन्यप्रदेशबन्धं कुर्वन्तीति तानाश्रित्य पूर्वोक्तवचनप्रामाण्यात् स्वस्थानेन देशोनलोकः स्पर्शना भवति ।

ननु पर्याप्तापर्याप्तबादरवायुकायाः सूक्ष्मेष्वपि समुत्पद्यन्ते, अतो मरणसमुद्घातेन सर्वलोकः स्पर्शना कथं न भवति ? न च मारणान्तिकसमुद्घातो न भवतीति वाच्यं, सप्तकर्मणां जघन्यप्रदेशबन्धकानां स्पर्शनायाः प्रस्तुतत्वाद्, इति चेत् , न, पर्याप्तापर्याप्तबादरवायुकायिका भवप्रथमसमये एव जघन्यप्रदेशबन्धं कुर्वन्ति, भवप्रथमसमये च केषामपि जीवानां मारणसमुद्घातो न भवति, पारभविकायुर्बन्धस्य पश्चादेव तस्य प्रवर्तनाद् , भवप्रथमसमये वायुर्बन्धस्यासम्भवाद् । अतोऽत्र सप्तकर्मणां जघन्यप्रदेशबन्धकानां स्पर्शनायाः प्रक्रान्तत्वेऽपि जघन्यप्रदेशबन्धं विदधतां पर्याप्तापर्याप्तबादरवायुकायिकानां मरणसमुद्घातो न भवति, ततश्च तत्प्रयुक्ता सर्वलोकः स्पर्शनाऽपि न भवति । एवमग्रेऽपि यथास्थानमवगन्तव्यम् ॥४१५ । ४१६ । ४१७॥

सम्प्रति विभङ्गज्ञानमार्गणायां सप्तकर्मणां जघन्यप्रदेशबन्धकानां स्पर्शनां मतान्तरप्रदर्शनपूर्वकं परिबिभावयिषुराह—

**विब्भंगम्मि असंखियभागो लोगस्स फोसिओ णेयो ।**
**अण्णे बिंति फरिसिआ भागा अड बंधगेहिं तु ॥४१८॥**

(प्रे०) 'विब्भंगम्मि' इत्यादि, विभङ्गज्ञानमार्गणायां सप्तकर्मणां जघन्यप्रदेशबन्धकैः "लोकस्यासंख्याततमो भागः" स्पृष्टो भवति । इयमत्र भावना–अस्यां मार्गणायां सप्तकर्मणां जघन्यप्रदेशबन्धं देवनारका भवप्रथमसमये विदधति, तदानीं च गमनागमनादेरभावात् स्वस्थानेन स्पर्शना प्राप्यते । तेषां स्वस्थानं च लोकासंख्यातभागप्रमाणमेव । ततो विभङ्गज्ञाने सप्तकर्मणां जघन्यप्रदेशबन्धकानां स्पर्शना लोकासंख्याउभाग एव भवति । अथोत्तरार्धेन मतान्तरमाह–'अण्णे' इत्यादि, अन्ये=येऽपर्याप्तावस्थायां विभङ्गज्ञानं न मन्यन्ते ते विभङ्गज्ञाने सप्तकर्मणां जघन्यप्रदेशबन्धकैः "अष्टभागाः" स्पृष्टा इत्याहुः । तेषां मते विभङ्गज्ञानस्य पर्याप्तावस्थायामेव सद्भावात् तस्मिन् सप्तकर्मणां जघन्यप्रदेशबन्धमष्टविधबन्धको घोलमयोगी जीवो विदधातीति भवनपतिप्रमुखसहस्रारपर्यन्तत्रिदशानाश्रित्य गमनागमनप्रयुक्ताष्टरज्जवः स्पर्शना भवति ॥४१८॥

इदानीं सप्तकर्मणां जघन्यप्रदेशबन्धकानां स्पर्शना यासु मार्गणासु "अष्टभागाः" यासु च "लोकासंख्यातभागः" ताः प्ररूपयति—

भागा अट्ठ फरिसिआ णेया पणमणतिवयणमीसेसुं ।
सेसासु असंखयमो भागो लोगस्स परिपुट्ठो ॥४१९॥

(प्रे०) "भागा" इत्यादि, सप्तकर्मणां जघन्यप्रदेशबन्धकैः "अष्टौ भागाः" स्पृष्टा ज्ञातव्याः । कासु मार्गणासु ? इत्याह—"पणमण" इत्यादि, पञ्चमनोयोगेषु, सत्यासत्यसत्यासत्यलक्षणत्रिवचनयोगेषु, मिश्रे चेति नव मार्गणासु । तद्यथा—एतास्व अष्टमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धं जघन्ययोगवन्तो घोलणयोगिनः संज्ञिपञ्चेन्द्रिया अष्टविधबन्धका एव, मिश्रसम्यक्त्वे तु ते एव सप्तविधबन्धका विदधति । अतो भवनपतिप्रमुखसहस्रारपर्यन्तदेवानाश्रित्याष्टौ रज्जवः स्पर्शना सूपपद्यते । तथाहि—आयुर्बन्धकाले सप्तकर्मणां जघन्यप्रदेशबन्धं कुर्वन्तो भवनपत्यादयः सहस्रारपर्यन्ता अमराः पूर्वसाङ्गतिकनारकवेदनोपशमाद्यर्थमधो वालुकाप्रमाभिधानां तृतीयां पृथिवीं यावद् गच्छन्तीत्यधस्तनी द्विरज्जू स्पर्शना भवति । तथा तेऽच्युतकल्पवासिदेवैरच्युतदेवलोकं यावन्नीयन्त इत्युपरितनी षड्रज्जवः स्पर्शना भवति । सर्वा मीलित्वा तेषामष्टौ रज्जवः स्पर्शना भवति ।

"सेसासु" इत्यादि, निरूपितव्यतिरिक्तासु षड्नवशतमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकैः "लोकस्यासंख्याततमो भागः" स्पृष्टः । शेषमार्गणा नामत इमाः—सर्वनरकगतिभेदाः, तिर्यगोघं विना चत्वारस्तिर्यग्गतिभेदाः, सर्वमर्त्यामर्त्यगतिभेदाः, सर्वविकलेन्द्रियपञ्चेन्द्रियभेदाः, बादरपृथ्व्यप्तेजःसाधारणवनस्पतिकायाः, पर्याप्तबादरपृथ्व्यप्तेजोनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजःसाधारणवनस्पतिकायाः, प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेत्यष्टादशकायभेदाः, वैक्रियद्विकम्, आहारकद्विकं, वचनौघासत्यामृषावचनयोगौ चेति षड्योगभेदाः, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिमनःपर्यवज्ञानानि, असंयममन्तरा षट्संयमभेदाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिक, सम्यक्त्वौघक्षायिकक्षायोपशमिकौपशमिकसास्वादनानि संज्ञी च ।

इयमत्र भावना—वचनौघव्यवहारवचनयोर्जघन्यप्रदेशबन्धमायुर्बन्धकाले घोलणयोगी द्वीन्द्रियो विदधाति, आयुर्बन्धकाले च मरणसमुद्घातस्याभाव इति द्वीन्द्रियाणां सूक्ष्मेषु समुत्पत्तिसद्भावेऽपि मारणसमुद्घातप्रयुक्तायाः सर्वलोकस्पर्शनाया अभावः । अतो द्वीन्द्रियाणां स्वस्थानस्यायामविष्कम्भाभ्यां रज्जुप्रमाणत्वेऽपि बाहल्यतो रज्ज्वसंख्यातभागमात्रत्वाल्लोकासंख्यातभाग एव स्पर्शना भवति । एवमाहारकद्विके, मनःपर्यवज्ञाने, संयमौघादिपञ्चसंयममार्गणास्वपि परिभावनीयम् । नवरं तासु स्वस्थानस्य स्पर्शनाऽऽयामविष्कम्भाभ्यां रज्ज्वसंख्येयभागमात्रैवेति विशेषः परिभावनीयः । अवेदसूक्ष्मसम्परायायोः सप्तकर्मणां जघन्यप्रदेशबन्धकानां स्पर्शनाया दैर्घ्येण सप्तरज्जुप्रमाणत्वेऽप्यायामविष्कम्भाभ्यां रज्ज्वसंख्येयभागमात्रत्वाद् यथोक्तस्पर्शनैव भवति ।

वैक्रियकाययोगे सप्तकर्मणां जघन्यप्रदेशबन्धं नारका देवाश्च स्वशरीरपर्याप्तिप्रथमसमय एव विदधति, तदानीं च तेषां करणापर्याप्तत्वाद् गमनागमनयोर्मारणान्तिकसमुद्घातस्य चाभावः । अतः स्वस्थानप्रयुक्ता लोकासंख्यातभाग एव स्पर्शना भवति, तेषां स्वस्थानस्य बाहल्येन रज्जुसंख्यातभागमात्रत्वात् । शेषासु नरकौघादित्रिनवतिमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धो भवप्रथमसमय एव भवति । तदानीं च गमनागमनयोर्मारणसमुद्घातस्य चाभावः । अतः स्वस्थानप्रयुक्ता लोकासंख्यातभाग एव स्पर्शना भवति ॥४१९॥

सम्प्रति सप्तकर्मणामजघन्यप्रदेशबन्धकानाम्, आयुष्कर्मणो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च स्पर्शनामतिदिशन्नाह—

**सव्वासु सत्तण्हं अलहुपएसस्स फोसणाउस्स ।**
**हस्सियरपएसाण य अगुरुपएसव्व विण्णेया ॥४२०॥**

(प्रे०) "सव्वासु" इत्यादि, उत्तरार्धस्थम् "अगुरुपएसव्व" इति पदमत्र सम्बध्यते, सर्वासु सप्तत्यधिकशतसंख्यासु मार्गणासु सप्तकर्मणामजघन्यप्रदेशस्य, बन्धकानामिति गम्यते, स्पर्शनाऽनुत्कृष्टप्रदेशवद्, "व्याख्यानतो विशेषप्रतिपत्तिः" इति सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां स्पर्शनावद् भवति । सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां स्पर्शना यासु मार्गणासु यावत्प्रमाणा निरूपिता तासु मार्गणासु तावत्प्रमाणैव स्पर्शना सप्तकर्मणामजघन्यप्रदेशबन्धकानां भवतीत्यर्थः ।

तद्यथा—द्वितीयादिषष्ठपर्यन्तनरकगतनैरयिकेषु देशविरतौ च क्रमश एकः, द्वौ, त्रयः, चत्वारः, पञ्च, पञ्च भागाः, नरकौघसप्तमनरकयोः, आनतप्रमुखाच्युतपर्यन्तेषु त्रिदशेषु, शुक्ललेश्यायां च षड्भागाः, सनत्कुमारादिसहस्रारपर्यन्तेषु विबुधेषु, मतिश्रुतावधिलक्षणज्ञानत्रिके, अवधिदर्शने, पद्मलेश्यायां, सम्यक्त्वौघक्षायिकक्षायोपशमिकौपशमिकसम्यक्त्वेषु मिश्रे चेति षोडशमार्गणासु अष्टौ भागाः, देवौघे, भवनपत्यादीशानपर्यन्तामरेषु तेजोलेश्यायां च नव भागाः, सास्वादनसम्यक्त्वे द्वादशभागाः, वैक्रियकाययोगे त्रयोदशभागाः, प्रथमनरके, प्रथमग्रैवेयकप्रमुखान्तिमानुत्तरान्तेषु चतुर्दशसु नाकिषु, वैक्रियमिश्रे, आहारकद्विके, अवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमेषु चेति पञ्चत्रिंशतिमार्गणासु लोकासंख्यातभागः, समस्ततिर्यग्मनुष्यगतिभेदेषु, निखिलेन्द्रियभेदेषु, कृत्स्नकायभेदेषु, पञ्चमनःपञ्चवचनकाययोगौदारिकद्विककार्मणकाययोगेषु, वेदत्रिके, कषायचतुष्के, मतिश्रुतावधिलक्षणाऽज्ञानत्रिके, असंयमे, चक्षुरचक्षुर्दर्शनयोः, अशुभलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, संज्ञिनि, असंज्ञिनि, आहारके, अनाहारके चेति सप्ताधिकशतमार्गणासु सर्वलोकः, सप्तकर्मणामजघन्यप्रदेशबन्धकानां स्पर्शना भवतीति सर्वत्र योज्यम् । अत्र भावनाऽपि सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां स्पर्शनायां यथा कृता तथा कर्तव्या ।

"आउस्स" इत्यादि, 'सव्वासु' इति 'फोसणा' इति च पदे इहापि सम्बध्येते, ततोऽयमर्थः—सर्वासु=त्रिषष्टिशतमार्गणासु आयुषो जघन्यप्रदेशस्येतरस्याजघन्यप्रदेशस्य च बन्धकानां स्पर्शना, "अणुक्कपएसव्व विण्णेया" इति, अनुत्कृष्टप्रदेशवत् सूचकत्वात्सूत्रस्यायुष्ककर्मणोऽनुत्कृष्टप्रदेशबन्धकानां स्पर्शनावत् विज्ञेया । आयुषोऽनुत्कृष्टप्रदेशबन्धकानां स्पर्शना यासु मार्गणासु यावत्प्रमाणा निरूपिता तावत्प्रमाणैव स्पर्शनाऽऽयुषो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च भवतीति यावत् ।

तद्यैवम्—तिर्यगोघः, एकेन्द्रियौघः, पृथिव्यप्तेजोवायुवनस्पतिलक्षणपञ्चकायाः, साधारणवनस्पतिकायः, सर्वसूक्ष्मभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुतलक्षणाज्ञानद्विकम्, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी, आहारकश्चेति षट्चत्वारिंशद्मार्गणासु सूक्ष्मजीवानाश्रित्य स्वस्थानेन 'सर्वलोकः', देवौघः, भवनपतिप्रमुखसहस्रारपर्यन्ता अमराः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनवैक्रियकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि, संज्ञी चेति द्विचत्वारिंशन्मार्गणासु भवनपतिप्रमुखसहस्रारपर्यन्तदेवानाश्रित्य "अष्टौ भागाः", आनतादिचतुर्विधामरेषु शुक्ललेश्यायां चानतादिविबुधानाश्रित्य 'षड्भागाः', बादरैकेन्द्रियपर्याप्तापर्याप्तबादरैकेन्द्रियेषु बादरवायुकायेषु चेति षण्मार्गणासु पर्याप्तापर्याप्तबादरवायुकायिकानाश्रित्य 'देशोनलोकः', सकलनरकगतिभेदेषु, तिर्यगोघं विना चतुर्षु तिर्यग्गतिभेदेषु, अखिलमनुष्यगतिभेदेषु प्रथमग्रैवेयकप्रमुखान्तिमानुत्तरपर्यन्तेषु चतुर्दशविधामरेषु चेति त्रिंशद्गतिभेदेषु, समविकलेन्द्रियभेदेषु, अपर्याप्तपञ्चेन्द्रिये चेति दशेन्द्रियभेदेषु, बादरपृथिव्यप्तेजःसाधारणवनस्पतिकायेषु, पर्याप्तबादरपृथिव्यप्तेजःसाधारणवनस्पतिकायेषु, अपर्याप्तबादरपृथिव्यप्तेजःसाधारणवनस्पतिकायेषु प्रत्येकवनस्पतिकायत्रिके, अपर्याप्तत्रसे चेति षोडशकाय मार्गणासु, आहारकद्विके, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थानीयपरिहारविशुद्धिदेशविरतिसंयमेषु चेति चतुःषष्टिमार्गणासु गमनागमनाभावात् स्वस्थानस्य च बाहुल्यादिना रज्ज्वसंख्येयभागमात्रत्वात् स्वस्थानेन 'लोकासंख्यातभागः,' आयुष्कस्य जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च स्पर्शना भवतीति सर्वत्र योजनीयम् । अत्र भावनाऽपि आयुष्कस्यानुत्कृष्टप्रदेशबन्धकानां स्पर्शनायां यथा कृता तथा कर्तव्या ॥४२०॥

सम्प्रति पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसयोः, वचनौघव्यवहारवचनयोः, स्त्रीपुरुष-वेदयोः, चक्षुर्दर्शने संज्ञिनि चेति दशमार्गणासु आयुरजघन्यप्रदेशबन्धकानामष्टभागाः स्पर्शना भवनपतिप्रमुखसहस्रारपर्यन्तामरानाश्रित्य गमनागमनाभ्यां घटां याति, परमायुषो अजघन्यप्रदेशबन्धकानां तावत्प्रमाणा स्पर्शना नोपपद्यते, यतो पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रिययोः स्त्रीपुरुष-

वेदयोश्चासंज्ञिनः, त्रसौघपर्याप्तत्रसयोः वचनौघव्यवहारवचनयोश्च द्वीन्द्रियाः, चक्षुर्दर्शने चतुरिन्द्रियाः, संज्ञिनि च लब्ध्यपर्याप्तसंज्ञिन आयुष्कस्य जघन्यप्रदेशबन्धका भवन्ति, असंज्ञिनां, द्वीन्द्रियाणां, चतुरिन्द्रियाणां, लब्ध्यपर्याप्तसंज्ञिनां च स्वस्थानक्षेत्रस्य स्वयम्भूरमणसमुद्रं यावत् सद्भावात् स्पर्शनाया आयामविष्कम्भाभ्यां रज्जुप्रमाणत्वेऽप्यूर्ध्वमधो गमनागमनाभावाद् रज्ज्वसंख्यातभागमात्रत्वमेवेति तेषां लोकासंख्यातभाग एव स्पर्शना भवतीति पञ्चेन्द्रियौघादिदशमार्गणास्वनन्तरगाथायामतिदिष्टां स्पर्शनामपोद्य प्रकृतस्पर्शनाद्वारं पारयति—

णवरि भवे दुपणिंदियतसवयथीपुरिसचक्खुसण्णीसुं ।
लोगासंखियभागो हस्सपएसस्स आउस्स ॥४२१॥

(प्रे०) "णवरि" इत्यादिशब्दार्थः स्पष्टः । भावनाऽपि गतार्था ॥४२१॥ तदेवमायुषो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च स्पर्शना समाप्ता, तत्समाप्तौ चाष्टकर्मणामपि जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च स्पर्शना समाप्ता। तत्समाप्तौ स्पर्शनाद्वारमपि समाप्तम् ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने
मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे
द्वादशं स्पर्शनाद्वारं समाप्तम् ॥



## * सप्तकर्मणां चतुर्विधप्रदेशबन्धकानां

ओघतः—मोहनीयस्योत्कृष्टप्रदेशबन्धकैः सम्पूर्णजगत् स्पृष्टम् (गाथा० ३९१) । षट्कर्मणामुत्कृष्टप्रदेशबन्धकैः लोकासंख्यातभागः स्पृष्टः, सप्तानामपि कर्मणामनुत्कृष्टजघन्याजघन्यप्रदेशबन्धकैः सर्वजगत् स्पृष्टम् (गाथा० ३९३।४१४)

| मार्गणा-संख्या० | मार्गणाः | स्पर्शना | गाथा० |
|---|---|---|---|
| | **उत्कृष्टप्रदेशबन्धकानाम्** | | |
| ६ | नरकौघ-चरमनरकानत-प्राणतारणाच्युत० । | षड्भागाः | ३९४ |
| २६ | प्रथमनरक०-ग्रैवेयकादिचतुर्दशदेव० औ.मि /वै मि /आहा.द्विक. अवेद. मनःपर्य० संयमसा० सामा० छेदो० परि० सूक्ष्म० । | लोकासंख्यातभागः | ३९५<br>३९६ |
| ६ | द्वितीयादिपञ्चनरक० देशवि० । | यथाक्रममेकद्वित्रिचतु.पञ्च पञ्चभागाः | ३९७ |
| २५ | मनु० सा० पर्या०मनु० मानु० पञ्चे० सा० पर्या० पञ्चे० त्रस० सा० पर्या० त्रस० पञ्चमन० पञ्चवचन० कायसा० औदा० लोभ० चक्षुरचक्षु० भव्य० संज्ञि० आहा० । | ओघवत् | ३९८ |
| ७ | देवौघ० भव० व्य० ज्यो० सौधर्म० ईशान० तेजोले० । | नवभागाः | ३९९ |
| ९ | सनत्कुमारादिषड्देव० पद्मले० क्षायो० मिश्रसम्य० । | अष्टभागा | ३९९ |
| १ | वैक्रिय० । | त्रयोदशभागाः | ४०० |
| ३ | कार्मण० सास्वा० अना० । | द्वादशभागाः | ४०० |
| ७ | मति० श्रुत० अवधि० अवधिदर्श० सम्यक्त्वौघ. क्षायि० औप० । | मोहबन्धकैरष्टभागाः षड्बन्धकैर्लोकासंख्यभाग | ४०१ |
| १ | शुक्ल० | मोहबन्धकैः षड्भागाः षण्णां बन्धकैर्लोकास. | ४०२ |
| ७९ | सर्वतिर्य० अप० म०. सर्वैकद्वित्रिचतुरिन्द्रियभेदाः, अप पञ्चे. द्वित्रसौ विना सर्वकायभेदाः पु. स्त्री. नपु., त्रिकषाय. त्र्यज्ञान. असंय. कृ. नील. कापो अभ. मिथ्या. असं. । | सर्वलोकः | ४०२ |
| | **अनुत्कृष्टाजघन्यप्रदेशबन्धकानाम्** | | |
| ७ | नरकौघ. चरमनरक. आनत. प्राणत. आरण. अच्युत. शुक्ल । | षड्भागाः | ४०३ |
| २५ | प्रथमनरक. १४ देव. वै मि. आहा. द्विक. अवेद. मनःपर्यव. संयमौघ. सामा. छेदो. परि. सूक्ष्म. । | लो० ासंख्यभाग | ४०३<br>४०४ |
| ६ | द्वितीयादिपञ्चनरक. देश । | यथाक्रममेकद्वित्रिचतुः-पञ्चपञ्चभागाः | ४०३<br>४०४ |
| १६ | सनत्कुमारादिसहस्रान्तदेव त्रिज्ञानावधिदर्शन पद्म. सम्यक्त्वौघ क्षायिक क्षायो. औप मिश्र. । | अष्टौ भागाः | ४०३<br>४०४ |
| ७ | देवौघ भवन व्य. ज्यो. सौध. ईशान. तेजोले. । | नव भागाः | ४०३ |
| १ | सास्वा. । | द्वादशभागाः | ४०४ |
| १ | वैक्रिय । | त्रयोदश भागाः | ४०३ |
| १०७ | ९ सर्वतिर्यग्मनु १६ सर्वेन्द्रिय. ४२ सर्वकाय. १४ शेषयोग. ३ वेद त्रिक. ४ सर्वकषाय. ३ त्र्यज्ञान. १ असंयमः, २ चक्षुरचक्षु ३-अशुभत्रिले.२ भव्याभव्य.१ मिथ्या. २ संज्ञ्यसंज्ञि. १ आहा. १ अना. । | सर्वलोकः | ४०५ |

स्पर्शनाप्रदर्शकं यन्त्रम् *

जघन्यप्रदेशबन्धकानाम्

| मार्गणा-संख्या | मार्गणा | स्पर्शना | गाथा० |
|---|---|---|---|
| ४८ | तिर्यगोघ एके. ओघ. त्रिसूक्ष्मैके. पञ्चकायौघ. निगोदौघ. १५ सूक्ष्मकायभेद. काय. सामा. औदा. द्विक. कार्मण. नपुं. सर्वकषाय. अज्ञानद्विक. असंयम. अचक्षु. त्र्यशुभले. भव्याभव्या. मिथ्या. असंज्ञि. आहा. अना. । | सर्वलोकः | ४१५ ४१६ ४१७ |
| ६ | त्रिबादरैके. त्रिबादरवायु. | देशोनलोकः | ४१७ |
| ९ | पञ्चमनो त्रिवचन. मिश्र. | अष्टौ भागाः | ४१९ |
| १ | विभङ्ग० | लोकासंख्यातभागः मतान्तरेण अष्टौ भागाः | ४१८ |
| १०६ | तिर्यगोघं विना ४६ गति सर्वविकलपञ्चे. १२, बादरपर्याप्त-बादरापर्याप्तबादरपृथ्व्यप्तेजोनिगोद. त्रिप्रत्येकवन त्रित्रस. वै द्विक आहा द्विक. वचनौघव्यवहारवचन स्त्री. पु. अवेद. चतु-र्ज्ञान. शेषषट्संयम. चक्षुरवधि. त्रिशुभलेश्या., सम्यक्त्वौघ० क्षायि. क्षायो. औप. सास्वा. संज्ञि. । | लोकासंख्यातभागः | ४१९ |



* आयुषश्चतुर्विधबन्धकानां

ओघतः—आयुष उत्कृष्टप्रदेशबन्धकैरष्टभागा स्पृष्टाः (गाथा०      ) आयुषोऽनुत्कृष्टजघन्याजघन्यप्रदेशबन्धकैः

| | | स्पर्शना० | गति० | इन्द्रिय० ३९१ | काय० | योग० |
|---|---|---|---|---|---|---|
| आयुषः | उत्कृष्टप्रदेशबन्धकानाम् | अष्टौ भागा. | देवौघभवनपत्यादिसहस्रारान्तदेव० | पञ्चेन्द्रियौघपर्याप्तपञ्चे० | त्रसौघपर्याप्तत्रसः | पञ्चमनःपञ्चवचन०का.सा./वै. |
| आयुषः | उत्कृष्टप्रदेशबन्धकानाम् | षड् भागाः | आनतादिचतुर्विधदेव० | | | |
| आयुषः | उत्कृष्टप्रदेशबन्धकानाम् | देशोनलोकः | | एके सा /त्रिबादरैके. | वायुकायौघ० त्रिबादरवायुकाय० | |
| आयुषः | उत्कृष्टप्रदेशबन्धकानाम् | सर्वलोक | | त्रिसूक्ष्मैकेन्द्रिय० | पञ्चदशसूक्ष्म० | |
| आयुषः | उत्कृष्टप्रदेशबन्धकानाम् | अष्टौ भागा मतान्तरेण लोकासङ्ख्यातभाग | | | | |
| आयुषः | उत्कृष्टप्रदेशबन्धकानाम् | लोकासङ्ख्यातभाग | सर्वनरकतिर्यग्नरगतिभेदा नवग्रैवेयकपञ्चानुत्तरदेवभेदा | सर्वविकले० अप. पञ्चे० | पृथ्व्यप्तेजोवनस्पतिनिगोदौघबादरपर्याप्तबादरापर्याप्तबादरपृथ्व्यप्तेजोनिगोद० प्रत्येकवनस्पतिकायत्रिक० त्रसाप० २१ | औदारिकद्विक० आहारकद्विक० |
| आयुषः | अनुत्कृष्टजघन्याजघन्यप्रदेशबन्धकानाम् | सर्वलोक | ति सा. | एकेन्द्रियौघ० सर्वसूक्ष्म० | पञ्चकायौघ., निगोदौघ., सर्वसूक्ष्म. २१ | काययोगौघ० औदारिकद्विक |
| आयुषः | अनुत्कृष्टजघन्याजघन्यप्रदेशबन्धकानाम् | अष्टौ भागाः | देवसा./भवनपत्यादिसहस्रारान्तदेव० | पञ्चे. सा /प. प. 卐 | त्रसकायौघपर्याप्तत्रस० 卐 | पञ्चमन.पञ्चवचन वै.का.卐 |
| आयुषः | अनुत्कृष्टजघन्याजघन्यप्रदेशबन्धकानाम् | षड् भागाः | आनतादिचतुर्विधदेव० | | | |
| आयुषः | अनुत्कृष्टजघन्याजघन्यप्रदेशबन्धकानाम् | देशोनलोकः | | सर्वबादर० | त्रिबादरवायुकाय० | |
| आयुषः | अनुत्कृष्टजघन्याजघन्यप्रदेशबन्धकानाम् | लोकासंख्यातभागः | सर्वनरकशेषतिर्यक्सर्वनरनवग्रैवेयकपञ्चानुत्तरदेवभेदाः ३० | सर्वविकलेन्द्रिय० अप. पञ्चे. १० | बादरपर्याप्तबादरापर्याप्तबादरपृथ्व्यप्तेजोनिगोद. प्रत्येकवनस्पतिकायत्रिक० त्रसाप० १६ | आहारकद्विक० |

卐 नवर पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियत्रसौघपर्याप्तत्रसवचनौघव्यवहारवचनस्त्रीपुरुषवेदचक्षुर्दर्शनसंज्ञिन इति दश-मार्गणास्वायुषो जघन्यप्रदेशबन्धकानां स्पर्शना लोकासंख्यातभागो भवति ।

## स्पर्शनाप्रदर्शकं यन्त्रकम् *

सम्पूर्णजगत् स्पृष्टम् ( गाथा० ३९३ ४१४) ।

| वेद० | कषाय. | ज्ञान० | संयम० | दर्शन० | लेश्या० | भव्य० | सम्य० | संज्ञि० | आहा० | | गा. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| स्त्री./पु. | सर्व० | म /श्रु./अ. अज्ञानत्रिक. | असयम० | सर्व० | ते./प. | सर्व० | स. सा./क्षा. क्षायो.सास्वा. मिथ्या० | स. | आहा. | ५५ | ४०६ ४०७ ४०८ |
| | | | | | शुक्ल० | | | | | ५ | ४०९ |
| | | | | | | | | | | ८ | ४०९ |
| | | | | | | | | | | १८ | ४१० |
| | | | | | अशुभ० | | | | | ३ | ४१० |
| नपुं० | | मनःपर्यव० | शेषसर्व. (५) | | | | | असं. | | ७४ | ४१० |
| नपुंसक० | सर्व० | मतिश्रुता-ज्ञान० | असंयम. | अचक्षु-दर्शन० | अशुभ० | सर्व० | मिथ्यात्व० | असं. | आहा. | ४६ | ४११ ४१२ |
| स्त्री./पु. 卐 | | मतिश्रुतावधि-विभङ्गज्ञान० | | चक्षुर-वधि० 卐 | ते./प. | | स. सा./क्षा. क्षायो.सास्वा. | सं.卐 | | ४२ | ४१३ |
| | | | | | शु० | | | | | ५ | ४१३ |
| | | | | | | | | | | ६ | ४१३ |
| | | मनःपर्यव० | शेषसर्व. (५) | | | | | | | ६४ | ४१३ |

## ॥ त्रयोदशं कालद्वारम् ॥

तदेवं स्पर्शनाद्वारं चिन्तितम् । अथ 'यथोद्देशं निर्देशः' इति क्रमप्राप्तं त्रयोदशं नानाजीवाश्रितं कालद्वारं प्रचिक्रमिषुरादौ तावदोघतो वक्तुमना अष्टकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यं षट्कर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टं च कालं चिन्तयति–

अट्ठण्ह भवे कालो जेट्ठपएसस्स बंधगाण लहू।
समयो संखियसमया जेट्ठो मोहाउवज्जाणं ॥ ४२२ ॥

(प्रे०) अत्रेदमवगन्तव्यं शेमुषीधनैः–अस्मिन् द्वारे नानाजीवानाश्रित्य विवक्षितोत्कृष्टादिप्रदेशबन्धकानां जघन्य उत्कृष्टश्च कालः कियान् भवत्यर्थाद् विवक्षितोत्कृष्टादिप्रदेशबन्धका जीवा जघन्यत उत्कृष्टतश्च निरन्तरं कियत्कालं यावद् भवन्तीति चिन्तयिष्यते ।

ननु विवक्षितोत्कृष्टादिप्रदेशबन्धस्य जघन्य उत्कृष्टश्च कालो यावान् भवति तावानेव जघन्य उत्कृष्टश्च कालो विवक्षितोत्कृष्टादिप्रदेशबन्धकानां भवति, उत्कृष्टादिप्रदेशबन्धकानां कालस्योत्कृष्टादिप्रदेशबन्धमूलत्वाद् । उत्कृष्टादिप्रदेशबन्धकालश्च पूर्वं तृतीये कालद्वारे चिन्तितः, ततश्चोत्कृष्टादिप्रदेशबन्धकानां कालोऽपि चिन्तित एवेति कथमत्र पुनश्चिन्त्यत इति चेद्, प्रतिविधीयते, पूर्वं तृतीये कालद्वारे योत्कृष्टादिप्रदेशबन्धकालस्य चिन्ता कृता सैकजीवमाश्रित्य कृता, अत्र त्वनेकजीवानाश्रित्योत्कृष्टादिप्रदेशबन्धकालानुसारेणोत्कृष्टादिप्रदेशबन्धकानां कालस्य चिन्ता क्रियते इति तृतीयकालद्वारादेतत्कालद्वारे विशेषः । तृतीये कालद्वारे कालचिन्ताविषय एक एव जीवो भवति, अत्र त्वनेके जीवाः कालचिन्ताविषया भवन्तीति यावद् । एवमग्रे चतुर्दशेऽन्तरद्वारेऽपि विज्ञेयम् ।

अथास्मिन् द्वारे इयं नियमावलिरनुसर्तव्या–तत्रादौ अष्टकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यप्रदेशबन्धकानां चोत्कृष्टकालमाश्रित्य लिख्यते–उत्कृष्टप्रदेशबन्धप्रायोग्या जघन्यप्रदेशबन्धप्रायोग्याश्च जीवा यासु मार्गणासु संख्यातास्तासु 'संख्यातसमयाः', यासु मार्गणास्वसंख्याताः सन्तोऽप्यसंख्यलोकाकाशप्रदेशेभ्यो न्यूनास्तासु 'आवलिकासंख्यातभागः', यासु असंख्यलोकाकाशप्रदेशप्रमाणा यद्वाऽनन्तास्तासु 'सर्वाद्धा' अष्टकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यप्रदेशबन्धकानां चोत्कृष्टः कालो भवति । अथ सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां चोत्कृष्टकालमाश्रित्य प्रदर्श्यते–या मार्गणा निरन्तरास्तासु 'सर्वाद्धा', शेषासु 'मार्गणोत्कृष्टकालः' सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां चोत्कृष्टः कालो भवति । साम्प्रतमायुषोऽनुत्कृष्टप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां चोत्कृष्टकालमाश्रित्योच्यते–अनुत्कृष्टप्रदेशबन्धप्रायोग्या अजघन्यप्रदेशबन्धप्रायोग्याश्च जीवा यासु मार्गणासु संख्यातास्तासु "अन्तर्मुहूर्तं", यास्वसंख्याताः

सन्तोऽप्यसंख्यलोकाकाशप्रदेशेभ्यो न्यूनास्तासु 'पल्योपमासंख्यातभागः', यासु असंख्यलोकाकाशप्रदेशप्रमाणा अनन्ता वा तासु 'सर्वाद्धा' आयुषोऽनुत्कृष्टप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां चोत्कृष्टकालो भवति । अथाष्टानामपि कर्मणामुत्कृष्टादिचतुर्विधमपि प्रदेशबन्धं विदधतां जीवानां जघन्यः काल एकसमयो भवति । नवरमत्रापवादः—वैक्रियमिश्राहारकमिश्रयोः सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां वैक्रियमिश्राहारकमिश्रापर्याप्तमनुष्योपशमसम्यक्त्वेषु च सप्तकर्मणामजघन्यप्रदेशबन्धकानां जघन्यः कालः "अन्तर्मुहूर्तं" भवति । अनयैव नियमावल्याऽत्र कालद्वारे कालप्ररूपणा करिष्यते ।

नन्वत्र प्रदर्शिते तत्तन्नियमे किं बीजम् ? इति चेत् , मा त्वरिष्ठाः, प्रदर्शित तत्तन्नियमे यथावसरं तत्तदग्रे यथास्थानं यथासंभवं व्यक्तीकरिष्यामः । अथ गाथार्थः प्रस्तूयते—"अट्ठण्हं" इत्यादि, अष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यः कालः 'एकसमयो' भवेत् । इयमत्र भावना—उत्कृष्टप्रदेशबन्धं कुर्वन्तः सर्वे जीवा उत्कृष्टप्रदेशबन्धकारणकलापान्तर्गतोत्कृष्टयोगस्य जघन्यत एकसमयमेवावस्थितेर्युगपज्जघन्यत एकसमयं यावदेवोत्कृष्टप्रदेशबन्धं विधाय द्वितीयादिसमयेष्वनुत्कृष्टप्रदेशबन्धं कुर्वन्तीत्यष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यकाल एकसमयो भवति ।

'**संखियसमया**' इत्यादि, मोहायुर्वर्जानां षट्कर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टः कालः "संख्यातसमयाः" भवति । अत्रायं हेतुः—षण्णां कर्मणामुत्कृष्टप्रदेशबन्धकाः सूक्ष्मसम्परायस्था जीवाः, ते च संख्याता एव । यस्य कर्मण उत्कृष्टप्रदेशबन्धप्रायोग्या जीवाः संख्यातास्तस्य नानाजीवानाश्रित्योत्कृष्टप्रदेशबन्धः संख्यातसमयान् यावदेव भवति, तदनन्तरमवश्यं तस्य विरहो भवति । अत उत्कृष्टप्रदेशबन्धकालप्रयुक्तः षट्कर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालोऽपि संख्यातसमया भवति ॥४२२॥ इदानीं मोहायुषोरुत्कृष्टप्रदेशबन्धकानामुत्कृष्टमष्टकर्मणाञ्चानुत्कृष्टप्रदेशबन्धकानां कालं चिन्तयति—

**मोहाऊणं भागो आवलिआए भवे असंखयमो ।**
**अट्ठण्ह बंधगाणं अणुरुपएसस्स सव्वद्धा ॥४२३॥**

(प्रे०) '**मोहाऊणं**' इत्यादि, "उत्कृष्टप्रदेशबन्धकानामुत्कृष्टः कालः" इति पूर्वगाथातोऽत्र सम्बध्यते, मोहायुषोरुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः "आवलिकाया असंख्याततमो भागो" भवेत् । तथथा—मोहायुषोरुत्कृष्टप्रदेशबन्धकाः पर्याप्तसंज्ञिपञ्चेन्द्रियाः, ते चासंख्याताः, तथाप्यसंख्यलोकाकाशप्रदेशेभ्यो न्यूनाः । यस्य कर्मण उत्कृष्टप्रदेशबन्धप्रायोग्या जीवा असंख्याताः सन्तोऽसंख्यलोकाकाशप्रदेशेभ्यो न्यूनास्तस्योत्कृष्टप्रदेशबन्ध उत्कृष्टत आवलिकासंख्यातभागं यावद् भवतीति मोहायुषोरुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः आवलिकाऽसंख्याततमो भागो घटामञ्चति ।

'अट्ठण्ह' इत्यादि, अष्टानामपि प्रकृतीनामनुत्कृष्टप्रदेशबन्धकानां कालः, 'सव्वद्धा' इति, सर्वकालो भवति । अत्रेयं भावना—प्रतिसमयमनन्ता निगोदजीवा अष्टकर्मणामनुत्कृष्टप्रदेशबन्धं कुर्वन्ति, तेषामुत्कृष्टयोगस्य सर्वदाऽसद्भावात् । अत्रेदं बोध्यम्—यत्र सर्वाद्धा कालस्तत्र जघन्योत्कृष्टभेदाभावः, यतो जघन्य उत्कृष्टश्च पदार्थौ ह्रस्वदीर्घादिवत् सापेक्षत्वात् पदार्थान्तरमाश्रित्याभिधीयते, अत्र च सर्वकाल एक एवेति कालान्तरस्याभावः ।

तदेवमोघतोऽष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धकानामनुत्कृष्टप्रदेशबन्धकानां च कालः प्ररूपितः ॥४२३॥ सम्प्रति तेषामेव कालमादेशतः प्रदिदर्शयिषुरादौ तावत्सप्तकर्माण्याश्रित्य वक्तुमनाः सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां कालमाह—

सव्वेसुं एगिंदियणिगोअभेएसु सेससुहमेसुं ।
बायरअपज्जपुहवाइचउगपत्तेअवणवणोघेसुं ॥४२४ ॥
सत्तण्ह बंधगाणं जेट्ठपएसस्स होइ सव्वद्धा ।
सेसासु मग्गणासुं ह्स्सो समयो मुणेयव्वो ॥४२५ ॥

(प्रे०) "सव्वेसु" इत्यादि, सर्वेषु सप्तसंख्याकैकेन्द्रियभेदेषु, सर्वेषु सप्तसंख्याकसाधारणवनस्पतिकायभेदेषु, शेषेषु—एकेन्द्रियनिगोदयोः समुदितषट्सूक्ष्मभेदेभ्यो व्यतिरिक्तेषु द्वादशसूक्ष्मभेदेषु बादरापर्याप्तपृथ्व्यादिचतुष्के, बादरापर्याप्तपृथ्व्यप्तेजोवायुष्वित्यर्थः, बादरापर्याप्तप्रत्येकवनस्पतिकाये, अत्र प्रत्येकवनस्पतिकायस्य बादरविशेषणं स्वरूपदर्शकं ज्ञेयम्, वनस्पतिकायौघे चेति द्वात्रिंशद्मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति । इयमत्र भावना—एकेन्द्रियौघादिद्वात्रिंशन्मार्गणान्तर्गतासु एकेन्द्रियौघादिषु कासुचिन्मार्गणास्वनन्ताः सूक्ष्मपृथ्व्यादिषु कासुचिच्चासंख्यलोकाकाशप्रदेशप्रमाणाः सप्तकर्मणामुत्कृष्टप्रदेशबन्धप्रायोग्या जीवाः सन्ति । यासु मार्गणासूत्कृष्टप्रदेशबन्धप्रायोग्या जीवा अनन्ता यद्वाऽसंख्यलोकाकाशप्रदेशप्रमाणास्तासूत्कृष्टप्रदेशबन्धः सर्वाद्धा भवतीत्यत्र प्रदर्शितासु द्वात्रिंशन्मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां कालः सर्वाद्धा भवति ॥४२४॥४२५॥ साम्प्रतमुत्तरार्धेन शेषासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यकालं वक्तुकाम आह—"सेसासु" इत्यादि, शेषासु अष्टात्रिंशदुत्तरशतमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यः कालः 'एकसमयः' ज्ञातव्यः ।

सम्प्रति शेषासु अष्टात्रिंशदधिकशतमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टं कालं प्ररूपयितुमना आदौ तावद्यासु मार्गणासूत्कृष्टः कालः 'ओघवद्' ताः सार्धगाथेन निर्दिशति—

जेट्ठो दुपणिंदियतसपणमणवयकायउरलजोगेसुं ।
लोहम्मि तिणाणेसुं दरिसणतिगसुक्कभवियेसुं ॥४२६॥

सम्मुवसमखइएसुं च सण्णिआहारगेसु ओघव्व ।

(प्रे०) "जेट्ठो" इत्यादि, अन्तिमम् 'ओघव्व' इति पदमत्र सम्बध्यते । सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टः कालः 'ओघवद्', सामान्यवक्तव्यतायां यावान्निरूपितस्तावान् भवति । तद्यथा–ज्ञानावरणीयादिषट्कर्मणां मोहनीयस्य चोत्कृष्टप्रदेशबन्धकानां यथासंख्यं संख्यातसमयाः आवलिकासंख्यातभागश्चोत्कृष्टकालो भवति । कासु मार्गणासु ? इत्याह–'दुपणिंदि' इत्यादि, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियलक्षणद्विपञ्चेन्द्रिययोः त्रसौघपर्याप्तत्रसलक्षणद्वित्रसयोः, पञ्चमनःपञ्चवचनेषु, काययोगौघौदारिककाययोः, लोभकषाये, मतिश्रुतावधिलक्षणत्रिज्ञानेषु, दर्शनत्रिके, शुक्ललेश्यायां, भव्ये, सम्यक्त्वौघोपशमक्षायिकसम्यक्त्वेषु, संज्ञिनि, आहारके चेति त्रिंशन्मार्गणासु । अत्र भावनाऽपि सामान्यवक्तव्यतायां प्रदर्शितरीत्या विधेया ॥४२६॥

सम्प्रति सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालो यासु मार्गणासु 'संख्यातसमयाः' यासु च 'आवलिकाऽसंख्यातभागः' ताः सार्धार्यया प्रतिपादयति–

तिमणुससव्वट्ठेसुं आहारदुगम्मि गयवेए ॥४२७॥
मणणाणसंयमेसुं समइअछेअपरिहारसुहमेसुं ।
संखियसमयाऽण्णासुं आवलिआए असंखंसो ॥४२८॥

(प्रे०) "तिमणुस" इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, सर्वार्थसिद्धे, आहारकद्विके, अवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायेषु चेति त्रयोदशमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः 'संख्यातसमयाः' भवति । एतासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः संख्याता एव । अतः सामान्यवक्तव्यतायामुक्तरीत्या तेषामुत्कृष्टकालः संख्यातसमया एव भवति । 'अण्णासु' इत्यादि, अन्यासु=अत्र पर्यन्तं नामतो भणिताभ्यो व्यतिरिक्तासु पञ्चनवतिमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः "आवलिकाया असंख्याततमो भागः" भवति ।

शेषमार्गणा इमाः–समस्तनरकतिर्यग्गतिभेदाः, अपर्याप्तमनुष्यः, सर्वार्थसिद्धमन्तरा नवविंशतिदेवभेदाश्चेति त्रिचत्वारिंशद्गतिमार्गणाभेदाः, निखिलविकलेन्द्रियभेदाः, अपर्याप्तपञ्चेन्द्रियश्चेति दशेन्द्रियभेदाः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायौघाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघपर्याप्तप्रत्येकवनस्पतिकायौ, अपर्याप्तत्रसकायश्चेति पञ्चदशकायभेदाः, औदारिकमिश्रः; वैक्रियद्विकं कार्मणकायश्चेति चत्वारो योगभेदाः वेदत्रिकं, लोभमृते कषायत्रिकम्, अज्ञानत्रिकं, देशविरत्यसंयमौ, शुक्लां विना लेश्यापञ्चकम्, अभव्यः, क्षायोपशमिकसास्वादनमिश्रमिथ्यात्वानि, असंज्ञी, अनाहारकश्च ।

अत्रेयं भावना—सर्वतिर्यग्मार्गणासु, अपर्याप्तपञ्चेन्द्रियत्रसकाययोः, कार्मणकाये, वेदत्रिके, क्रोधमानमायासु, अज्ञानत्रिके, अशुभलेश्यात्रिके, अभव्ये, मिथ्यात्वे, अनाहारके चेति चतुर्विंशतिमार्गणासु यथासम्भवं पर्याप्ता अपर्याप्ता वा संज्ञिनः औदारिकमिश्रे वैक्रियमिश्रे च यथासंख्यं मार्गणाचरमसमयावच्छिन्नाः संज्ञिनो मार्गणाचरमसमयावच्छिन्ना देवनारकाश्च, असंज्ञिनि पर्याप्तपञ्चेन्द्रियाः, शेषासु अष्टषष्टिमार्गणासु यथासम्भवं पर्याप्ता अपर्याप्ता वा तत्तद्मार्गणास्था जीवाः, सप्तकर्मणामुत्कृष्टप्रदेशबन्धका भवन्तीति सर्वत्र योजनीयम् । पर्याप्तसंज्ञिप्रमुखाः सर्वे जीवा असंख्याताः सन्तोऽसंख्यलोकाकाशप्रदेशेभ्यो न्यूना इति सामान्यवक्तव्यतायामुक्तरीत्या तेषामुत्कृष्टकाल आवलिकाऽसंख्यातभागो घटामटति ॥ ८२७।८२८ ॥

तदेवं सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां कालः चिन्तितः । सम्प्रति सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां कालं व्याचिख्यासुरादौ तावद्यासु मार्गणासु 'सर्वाद्धा' कालस्ता निरूपयति—

**जहि णत्थि अट्ठभंगा अगुरुपएसस्स आउवज्जाणं ।**
**तहि कालो सव्वद्धा इगूणसट्ठिअहियसयम्मि ॥४२९॥**

(प्रे०) "जहि" इत्यादि, यत्र-यासु मार्गणासु, 'णत्थि अट्ठभंगा' इति, "सूचनात् सूत्र"-मिति न्यायाद् भङ्गविचयद्वारे सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामष्टभङ्गा न निरूपिताः किन्तु एकः त्रयो वा निरूपिताः, 'तहि' इति, तत्र-तासु मार्गणासु, कतिमार्गणासु ? इत्याह—'इगूणसट्ठिअहियसयम्मि' इति, एकोनषष्ट्यधिकशते, 'अगुरुपएसस्स' इत्यादि, आयुर्वर्जानां सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति ।

यासु मार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामष्टभङ्गानामभावस्ता मार्गणा इमाः—अपर्याप्तमनुष्यमृते षट्चत्वारिंशद्गतिभेदाः, निखिलेन्द्रियभेदाः, समस्तकायभेदाः, वैक्रियमिश्राहारकद्विके विना पञ्चदशयोगभेदाः, वेदत्रिकं, कषायचतुष्कम्, अखिलज्ञानमार्गणाः, संयमौघसामायिकदेशविरत्यसंयमाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, सम्यक्त्वौघवेदकक्षायिकमिथ्यात्वानि, संज्ञी, असंज्ञी, आहारकानाहारकौ चेति नवपञ्चाशदधिकशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामष्टभङ्गनामभावोऽतस्तासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति ।

इयमत्र भावना—एता मार्गणा निरन्तराः, अर्थात्तासां कदाप्यत्यन्ताभावो न प्राप्यते । तत एतासु मार्गणासु मार्गणाकालस्य सर्वाद्धात्वेन सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां सर्वदा प्राप्यमाणत्वाच्च प्रकृतजीवानां कालः सर्वाद्धा भवति । न च कदाचित् सर्वेऽपि जीवा उत्कृष्टप्रदेशं विदध्युरिति कथं तेषां कालः सर्वाद्धा भवतीत्याशङ्कनीयम्, उत्कृष्टपदे वर्तमाना अपि उत्कृष्टप्रदेशबन्धका मार्गणास्थसर्वजीवापेक्षयाऽनन्ततमादिभागे वर्तन्ते । शेषसर्वजीवा अनुत्कृष्टमेव प्रदेशबन्धं कुर्वन्ति । दर्शितं चैतत् प्राग् भागप्ररूपणायाम् ॥४२९॥

इदानीं शेषासु एकादशमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां जघन्यं कालं चिन्तयन्नाह—

मीसदुजोगेसु लहू भिन्नमुहुत्तं सयं च विण्णेयो ।
छेए तह परिहारे सत्तसु सेसासु समयोऽत्थि ॥४३०॥

(प्रे०) "मीसदुजोगेसु" इत्यादि, द्विमिश्रयोगयोः, औदारिकमिश्रेऽनन्तरगाथायां सर्वाद्धाकालस्योक्तत्वाद् वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रयोगयोः सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां जघन्यः कालः "अन्तर्मुहूर्तं भवति । कथम् ? इति चेद्, मार्गणयोः सान्तरत्वाद्, मार्गणाचरमसमय एवोत्कृष्टप्रदेशबन्धस्य सद्भावाच्च । इदमुक्तं भवति–एते द्वे अपि मार्गणे सान्तरे । ततो यदा तन्मार्गणास्था देवनारका आहारकशरीरिणश्च मार्गणाप्रथमसमयादनुत्कृष्टमेव प्रदेशबन्धं कुर्वन्तो मार्गणाचरमसमय एवोत्कृष्टयोगं प्राप्य उत्कृष्टप्रदेशबन्धं कुर्युः तदन्तरं च नव्योत्पन्नदेवनारकाणामाहारकशरीरिणां चाभावेन मार्गणाविच्छेदो भवेत् तदा सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां जघन्यकालोऽन्तर्मुहूर्तमेव भवति, न न्यूनः, मार्गणाकालं यावद्योगस्यासंख्यगुणवृद्धिसद्भावेन मार्गणाचरमसमये एवोत्कृष्टयोगस्य सत्त्वाद्, मार्गणाजघन्यकालस्यान्तर्मुहूर्तप्रमाणत्वाच्च ।

'सयं च' इत्यादि, छेदोपस्थापनीयपरिहारविशुद्धिकसंयममार्गणयोः प्रत्येकं सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां जघन्यो कालः स्वयमेव विज्ञेयः, तज्ज्ञातृसकाशाद् ज्ञात्वेति शेषः । एतद्विध सामान्यतो भावितमेव प्राग् भङ्गविचयद्वारे 'सयमुज्जो ऽपरिहारे' इत्यादि '३३४' गाथावृत्तौ, विशेषतो जिज्ञासुकृतेऽतिदिष्टं च तत्रेति तत्रत्या प्रेमप्रभाऽवलोकनीया । 'सेसासु' इत्यादि, शेषासु सप्तसु मार्गणासु प्रस्तुतजीवानां जघन्यः कालः 'एकसमयः' ज्ञातव्यः । तद्यथा—मार्गणास्थाः सर्वे जीवाः कदाचिद्युगपद् विवक्षितप्रथमसमय उत्कृष्टं प्रदेशबन्धं विधाय द्वितीयसमयेऽनुत्कृष्टं विदधति, तृतीयसमये पुनरुत्कृष्टं विदधतीति सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां जघन्यः कालः एकसमय उपपद्यते । यद्वा यदा मार्गणाद्विचरमसमये मार्गणास्थाः सर्वेऽपि जीवा युगपदुत्कृष्टप्रदेशबन्धं विधाय मार्गणाचरमसमये पुनरनुत्कृष्टप्रदेशबन्धं कुर्युस्तदा जघन्यकाल एकसमयो भवति । शेषसप्तमार्गणा इमाः-अपर्याप्तमनुष्यः, आहारककाययोगः, अवेदः, सूक्ष्मसम्परायः, उपशमसास्वादनमिश्रेति त्रिसम्यक्त्वभेदाः ॥४३०॥

सम्प्रति शेषासु एकादशमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालं गाथाद्विकेन विचिन्तयिषुराह—

असमत्तमणुसविकियमीसुवसममीससासणेसु गुरू ।
पलिआऽसंखियभागो छेए अयराऽड्ढकोडिकोडीओ ॥४३१॥ (गीतिः)

भिन्नमुहुत्तं णेयो आहारदुगगयवेअसुहमेसुं ।
परिहारे विण्णेयो देसूणा पुव्वकोडी दो ॥४३२॥

(प्रे०) 'असमत्त' इत्यादि, अपर्याप्तमनुष्ये, वैक्रियमिश्रकाययोगे, उपशममिश्रसास्वादनेषु चेति पञ्चमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टः कालः 'पल्योपमासंख्यातभागो' भवति। 'छेए अयराद्धकोडिकोडिओ' इति, छेदोपस्थापनीयसंयमे "अर्धकोटिकोट्यः=पञ्चाशल्लक्षकोट्योऽतराः=सागराः, पदैकदेशेन पदसमुदायस्यापि गम्यमानत्वाद् सागरोपमाः", (द्वितीयवृत्तवृत्तिः) 'भिन्नमुहुत्तं' इत्यादि, आहारकद्विके, अपगतवेदे, सूक्ष्मसम्पराये च 'अन्तर्मुहूर्त्तम्', 'परिहारे' इत्यादि, परिहारसंयमे देशेन—अष्टपञ्चाशद्वर्षप्रमाणेन न्यूने द्वे पूर्वकोटी, सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टः कालो भवतीति सर्वत्र योजनीयम्। अत्रेयं भावना—यदा तत्तद्मार्गणायां वर्तमाना जीवा मार्गणाप्रथमसमयादारभ्य मार्गणोत्कृष्टकालं यावदनुत्कृष्टप्रदेशबन्धं विदध्युस्तदाऽपर्याप्तमनुष्यादिमार्गणानामुत्कृष्टकालस्य पल्योपमासंख्यातभागादिप्रमाणत्वात् सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालो यथोक्तः पल्योपमासंख्यातभागादिः सूपपद्यते।

नन्वपर्याप्तमनुष्यादिमार्गणानामुत्कृष्टकालः पल्योपमासंख्यातभागादिप्रमाण इति कथं ज्ञायेत? इति चेद्, शास्त्रवचनाद्, तद्यथा—

एक्कगजीवाठिई एसा बहुजीविया उ सव्वद्धं। मणुयअपज्जत्ताणं असंखभागो उ पल्लस्स ॥
पल्लासंखियभागो सासणमिस्सा य हुंति उक्कोसं। अविरहिया य जहण्णेण एक्कसमयं मुहुत्ततो।
पल्लासंखियभागो वेउव्वियमिस्सगाण अणुसारो। भिन्नमुहुत्तं आहारमिस्स सेसाण सव्वद्धं॥

इत्यनेन जीवसमासवचनेनापर्याप्तमनुष्यस्य, सास्वादनस्य, मिश्रस्य, वैक्रियमिश्रस्य च 'पल्योपमासंख्यातभागः', आहारकमिश्रस्य चान्तर्मुहूर्तमुत्कृष्टकालो ज्ञायते। तथैवाहारकमार्गणाया उत्कृष्टकालोऽन्तर्मुहूर्तप्रमाणो ज्ञातव्यः। सास्वादनस्योपशमसम्यक्त्वमूलकत्वात् सास्वादनस्योत्कृष्टकालस्य पल्योपमासंख्यातभागे सिद्धे उपशमसम्यक्त्वमार्गणाया उत्कृष्टकालोऽपि निरुक्तकालाद् बृहत्पल्योपमासंख्यातभागप्रमाणः सिद्ध्यति। तथा "कोडिसयसहस्साइं पन्नासं हुंति उयहिनामाण"। "दो पुव्वकोडिऊणा नाणाजीवेहि उक्कोसं"॥ इति जीवसमासवचनेन छेदोपस्थापनीयपरिहारविशुद्धिकयोरुत्कृष्टकालो यथासंख्यं पञ्चाशल्लक्षकोट्यः सागरोपमा देशोनद्विपूर्वकोटी च सिद्ध्यति। अथ सूक्ष्मसम्परायो दशमगुणस्थानेऽवेदश्च प्रकृते नवमदशमगुणस्थानयोर्भवति। दशमगुणस्थानस्य नवमदशमगुणस्थानयोश्चोत्कृष्टकालोऽन्तर्मुहूर्तमिति तु सुप्रसिद्धम् ॥४३१।४३२॥

तदेवं सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामनुत्कृष्टप्रदेशबन्धकानां च कालश्चिन्तितः। साम्प्रतमादेशत आयुरुत्कृष्टप्रदेशबन्धकानां कालं निर्दिधारयिषुराह—

सव्वेसु एगिंदियणिगोअभेएसु सेससुहमेसुं ।
बायरअपज्जपुहवाइचउसमत्तेअवणवणोहेसुं ॥४३३॥ (गीतिः)

आउस्स बंधगाणं जेट्ठपएसस्स होइ सव्वद्धा ।
सेसासु मग्गणासु हस्सो समयो मुणेयव्वो ॥४३४॥

(प्रे०) "सव्वेसु" इत्यादि, सर्वेषु एकेन्द्रियभेदेषु, सर्वेषु निगोदभेदेषु, शेषेषु एकेन्द्रिय-निगोदयोः सूक्ष्मेभ्यो व्यतिरिक्तेषु द्वादशसूक्ष्मेषु, बादरापर्याप्तपृथ्व्यादिचतुष्के, बादरापर्याप्तपृथ्व्य-प्तेजोवायुष्वित्यर्थः, बादरापर्याप्तप्रत्येकवनस्पतिकाये, वनस्पतिकायौघे चेति द्वात्रिंशद्मार्गणासु आयुरुत्कृष्टप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति । "सव्वेसु एगिंदिय" इत्यत्र सप्तकर्मणा-मुत्कृष्टप्रदेशबन्धकानां सर्वाद्धाकालो यथोपपादितस्तथाऽत्राप्युपपादनीयः ।

ननु एकेन्द्रियादिमार्गणास्थाः प्रत्येकं जीवाः सप्तकर्मणां बन्धं सदैव कुर्वन्तीति एकेन्द्रियौ-घादिमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां कालः सर्वाद्धा सूपपद्यते, परमायुषो बन्धं प्रत्येकं जीवा अन्तर्मुहूर्तं यावदेव कुर्वन्तीति आयुषो बन्धकानां कालः सर्वाद्धा कथमुपपद्येत ? इति चेद् , न, प्रत्येकं जीवानामायुषो बन्धस्यान्तर्मुहूर्तं यावदेव सत्त्वेऽपि एकेन्द्रियौघादिद्वात्रिंशद्मार्गणान्त-र्गतासु कासुचिद् मार्गणासु आयुरुत्कृष्टप्रदेशबन्धप्रायोग्या जीवा अनन्ताः कासुचिच्चासंख्यलोका-काशप्रदेशप्रमाणा असंख्याताः सन्तीति आयुरुत्कृष्टप्रदेशबन्धप्रायोग्याणां जीवानां बहुत्वात् प्रति-समयं यथासंख्यमनन्ता असंख्याताश्च जीवा आयुरुत्कृष्टप्रदेशबन्धं कुर्वन्तो लभ्यन्त इत्येकेन्द्रियादि-द्वात्रिंशद्मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामपि कालः सर्वाद्धा सूपपद्यते । अथोत्तरार्धेन शेषासु मार्गणासु आयुरुत्कृष्टप्रदेशबन्धकानां जघन्यकालं प्रतिपादयति-'सेसासु' इति, एकत्रिंशदु-त्तरशतमार्गणासु, शेषशब्दार्थः स्पष्टः । भावनाऽपि सुगमा ॥४३३।४३४॥

सम्प्रति शेषमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालं गाथाद्विकेन दिदर्शयिषुराह—

तिणराणतपहुडीसु आहारदुगमणपज्जवेसु तहा ।
संयमसामइएसु छेए परिहारसुक्खइएसु ॥४३५॥ (गीतिः)
उक्कोसो संखेज्जा समया सेसासु मग्गणासु तु ।
जाणेयव्वो भागो आवलिआए असंखयमो ॥४३६॥

(प्रे०) "तिणराणतपहुडीसु" इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, आनतप्रभृतिष्वन्तिमानुत्तरपर्यन्तेषु अष्टादशसु देवेषु, आहारकद्विके, मनःपर्यवज्ञाने, तथा समु-च्चये, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमेषु, शुक्ललेश्यायां, क्षायिकसम्यक्त्वे चेति त्रिंशति मार्गणासु (द्वितीयवृत्तवृत्तिः) 'उक्कोसो संखेज्जसमया' इति, आयुरुत्कृष्ट-प्रदेशबन्धकानामुत्कृष्टकालः 'संख्यातसमया एव' भवति । अत्र भावना सप्तकर्मणामुत्कृष्टप्रदेशबन्ध-कानां संख्यातसमयप्रमाणोत्कृष्टकालोपपादने 'तिमणुसाणयत्तेसु' इत्यत्र यथा कृता तथा कर्तव्या ।

ननु 'तिमणुससव्वत्थेसु' इत्यत्र तु सर्वा मार्गणाः संख्यातजीवा इति तत्र पूर्वोदितनियमानुसृत्या संख्यातसमयाः कालः समुपपद्यते, परमत्र त्वानतादिमार्गणा असंख्यातजीवा इति कथं संख्यातसमयमितकाल उपपद्येत ? इति चेद् न, आनतादिमार्गणासु जीवानामसंख्यातत्वेऽपि पूर्वं परिमाणद्वारे आयुष उत्कृष्टप्रदेशबन्धकानां परिमाणनिरूपणप्रारम्भे प्रदर्शितरीत्याऽऽयुष उत्कृष्टप्रदेशबन्धप्रायोग्या जीवाः संख्याता एव । अत्र पूर्वोदितनियमे "यत्रोत्कृष्टप्रदेशबन्धप्रायोग्या जीवाः संख्यातास्तत्रोत्कृष्टप्रदेशबन्ध उत्कृष्टतः संख्यातसमयान् यावद् भवती"ति प्रतिपादितम्, न तु यत्र जीवाः संख्याता इति । अत आनतादिमार्गणास्वपि जीवानामसंख्यातत्वेऽप्यायुर्बध्नतां जीवानां संख्यातत्वादायुरुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः संख्यातसमया एव भवति । 'सेसासु' इत्यादि, शेषासु एकाधिकशतमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकानामुत्कृष्टः कालः "आवलिकाया असंख्याततमो भागः" ज्ञातव्यः । आवलिकाया असंख्याततमे भागे यावन्तः समयास्तावत्प्रमाण इत्यर्थः । अत्र भावना सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालस्यावलिकासंख्यातभागस्योपपादने यथा कृता तथा कर्तव्या । शेषा एकोत्तरशतमार्गणा नामत इमाः—निखिलनरकतिर्यग्गतिभेदाः, अपर्याप्तमनुष्यः, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्माद्यष्टवैमानिकदेवाश्चेति षड्विंशतिगतिभेदाः, समस्तद्वित्रिचतुःपञ्चेन्द्रियाः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथिव्यप्तेजोवायुकायाः, पर्याप्तबादरपृथिव्यप्तेजोवायुकायिकाः, प्रत्येकवनस्पतिकायौघपर्याप्तप्रत्येकवनस्पतिकायौ, त्रसत्रिकं चेति सप्तदशकायभेदाः, पञ्चमनःपञ्चवचनानि, काययोगौघौदारिकद्विकवैक्रियकाययोगाश्चेति चतुर्दशयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, विना मनःपर्यवज्ञानं षड् ज्ञानभेदाः, देशविरत्यसंयमौ, दर्शनत्रिकं, शुक्लामृते लेश्यापञ्चकं, भव्याभव्यौ, सम्यक्त्वौघक्षायोपशमिकसास्वादनमिथ्यात्वानि, संज्ञी, असंज्ञी, आहारकश्च ।

नन्वत्र शेषमार्गणान्तर्गतास्तिर्यगोघादिमार्गणा अनन्तजीवाः, ततः पूर्वोदितनियमेन तासु तिर्यगोघादिमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकानां सर्वाद्धा कालः कथं न प्राप्यते इति चेद्, न, तिर्यगोघादिमार्गणासु जीवानामानन्त्यादायुषो बन्धकानामनन्तजीवानां प्रतिसमयं प्राप्यमाणत्वेऽप्यायुरुत्कृष्टप्रदेशबन्धकानां कालः सर्वाद्धा न भवति, तिर्यगोघादिषु संज्ञिनोऽसंज्ञिनि च पञ्चेन्द्रियस्यायुरुत्कृष्टप्रदेशबन्धस्वामित्वात् । संज्ञिनः पञ्चेन्द्रियाश्च प्रत्येकं प्रतरासंख्यातभागमात्रा इति प्रागुक्तनियमेन तेषामायुरुत्कृष्टप्रदेशबन्धकानामुत्कृष्टः काल आवलिकासंख्यातभाग एव भवति । ॥४३५।४३६॥

साम्प्रतमायुषोऽनुत्कृष्टप्रदेशबन्धकानां कालं व्याचिख्यासुराह—

तिरिये सव्वेगिंदियणिगोअवणसेससुहमभेएसु ।
पुहवाइचउसु तेसिं बायरबायरअपज्जेसु ॥४३७॥

पत्तेअवणम्मि तहा तदपज्जत्तम्मि कायजोगे य।
ओरालदुगम्मि तहा णपुंसगे चउकसायेसु ॥४३८॥
अण्णाणदुगे अयते अचक्खुअपसत्थलेसभवियेसुं।
अभवियमिच्छत्तेसुं असण्णिआहारगेसुं च ॥ ४३९ ॥
आउस्स बंधगाणं अगुरुपएसस्स होइ सव्वद्धा ।
सेसासु मग्गणासुं हस्सो समयो मुणेयव्वो॥ ४४० ॥

(प्रे०) "अत्रार्धचतसृभिर्गाथाभिर्यासु मार्गणासु प्रकृतजीवानां सर्वाद्धा कालस्ता निरूपयति– 'तिरिये' इत्यादि, तिर्यगोघे, सर्वैकेन्द्रियभेदेषु, सर्वनिगोदभेदेषु, 'वण' इति वनस्पतिकायौघे, शेषेषु एकेन्द्रियनिगोदसूक्ष्मेभ्यो व्यतिरिक्तेषु द्वादशकायसूक्ष्मभेदेषु, 'पुढवाइचउसु' इति, पृथ्व्यप्तेजोवायुकायौघेषु, 'तेसिं' इत्यादि, पृथ्व्यप्तेजोवायुकायानां बादरेषु पृथ्व्यप्तेजोवायुकायानां बादरापर्याप्तेषु, (द्वितीयगाथावृत्तिः) 'पत्तेअवणम्मि' इत्यादि, प्रत्येकवनस्पतिकायौघे, तस्य= प्रत्येकवनस्पतिकायस्यापर्याप्ते, काययोगौघे, औदारिकौदारिकमिश्ररूपौदारिकद्विके, नपुंसकवेदे, चतुष्कषायेषु, (तृतीयवृत्तवृत्तिः) 'अण्णाणदुगे' इत्यादि, मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने अप्रशस्तलेश्यात्रिके, भव्ये, अभव्ये, मिथ्यात्वे, असंज्ञिनि आहारके चेति द्वाषष्टिमार्गणासु, (चतुर्थार्यापूर्वार्द्धवृत्तिः) 'आउस्स' इत्यादि, आयुरनुत्कृष्टप्रदेशबन्धकानां कालः सर्वद्धा भवति ।

**इयमत्र भावना**–प्रतिजीवमायुषो बन्धस्य सान्तरत्वेऽपि आयुषो बन्धका जीवाः तिर्यगोघादिद्वाषष्टिमार्गणान्तःप्रविष्टासु कासुचिदनन्ताः कासुचिच्चासंख्यलोकाकाशप्रमाणाः सन्तीति जीवानां बहुत्वात् प्रतिसमयमायुषो बन्धका लभ्यन्ते । अतस्तिर्यगोघादिमार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकानां कालः सर्वाद्धा घटां याति ।

साम्प्रतमुत्तरार्धेन शेषास्वेकोत्तरशतमार्गणास्वायुरनुत्कृष्टप्रदेशबन्धकानां जघन्यकालं निर्वक्ति- 'सेसासु" इत्यादि, निगदमिदम् । न चाहारकमिश्रमार्गणायां प्रतिसमयमसंख्यगुणयोगवृद्धित्वान्मार्गणाचरमसमय एवोत्कृष्टप्रदेशबन्धो भवति, अतो मार्गणाचरमसमयात् प्रागन्तर्मुहूर्तं यावदनुत्कृष्ट एव प्रदेशबन्धो भवतीति तस्यामायुरनुत्कृष्टप्रदेशबन्धकानां जघन्यकालः अन्तर्मुहूर्तं भाव्य इति वाच्यम्, यदा मार्गणोपान्त्यसमय एकोऽनेके वा जीवा आयुर्बद्धुमुपक्रमन्ते तदा मार्गणोपान्त्यसमये आयुरनुत्कृष्टप्रदेशबन्धः, मार्गणान्तिमसमये आयुरुत्कृष्टप्रदेशबन्धः, तदनन्तरं मार्गणाविच्छेदो भवतीत्याहारकमिश्रे आयुरनुत्कृष्टप्रदेशबन्धकानां जघन्यकालः 'एकसमयः' उपपद्यते । यद्वा यदा मार्गणाचरमसमये आयुर्बन्धप्रारम्भो भवेद् उत्कृष्टयोगस्य चाप्राप्तिस्तदाऽप्येकसमय उपपद्यत ॥४३७।४३८।४३९।४४०॥

अथ शेषास्वेकोत्तरशतमार्गणासु आयुरनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालं युग्मेन चिन्तयति—

दुणराणतपहुडीसु आहारदुगमणपजवेसु तहा ।
संयमसामइएसु छेए परिहारसुक्कखइएसु ॥४४१॥ (गीतिः)
भिन्नमुहूत्तं णेयो उक्कोसो मग्गणासु सेसासु ।
पलिओवमस्स भागो असंखिययमो मुणेयव्वो ॥४४२॥

(प्रे०) 'दुणर' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, आनतादारभ्यान्तिमानुत्तर-पर्यन्तेषु अष्टादशदेवभेदेषु, आहारकद्विके, मनःपर्यवज्ञाने, तथा समुच्चये, संयमौघसामायिकछेदो-पस्थापनीयपरिहारविशुद्धिकसंयमेषु, शुक्ललेश्यायां, क्षायिकसम्यक्त्वे चेत्येकाक्त्रिंशद्मार्गणासु (द्वितीयवृत्तवत्तिः) आयुरनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टः कालो भिन्नमुहूर्तम्—अन्तर्मुहूर्तं ज्ञातव्यः । कथम् ? इति चेद्, एतासु मार्गणास्वायुषो बन्धकानां जीवानां संख्यातमात्रत्वादन्तर्मुहूर्त्तानन्तर-मवश्यं तेषामत्यन्ताभावो भवति । इदमन्तर्मुहूर्त्तमायुर्बन्धस्यान्तर्मुहूर्त्तकालाद् बृहत्तरं बोध्यम् ।

'मग्गणासु सेसासु' इत्यादि, शेषासु द्विसप्ततिमार्गणासु आयुरनुत्कृष्टप्रदेशबन्धकाना-मुत्कृष्टकालः "पल्योपमासंख्याततमो भागो" ज्ञातव्यः । इयमत्र भावना—शेषासु मार्गणासु आयुषो बन्धका जीवा असंख्याताः सन्तोऽसंख्यलोकाकाशप्रदेशेभ्यो न्यूनाः सन्तीति प्रागुदितनियमेनायु-रनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः पल्योपमासंख्यातभागो भवति । पल्योपमासंख्यातभागकालात् परमवश्यं तेषामत्यन्ताभावो भवति ।

शेषमार्गणा नामत इमाः—सर्वनरकभेदाः, तिर्यक्पञ्चेन्द्रियौघपर्याप्तापर्याप्ततिर्यक्पञ्चेन्द्रिय-तिरश्चीलक्षणाश्चत्वारः तिर्यग्भेदाः, मनुष्यौघापर्याप्तमनुष्यलक्षणद्विमनुष्यभेदौ, देवौघभवनपतिव्यन्तर-ज्योतिष्कसौधर्माद्यष्टवैमानिकरूपद्वादशदेवभेदा इति षड्विंशतिगतिभेदाः, सर्वविधद्वित्रिचतुःपञ्चे-न्द्रियभेदा इति द्वादशेन्द्रियभेदाः, पर्याप्तबादरपृथिव्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः, त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियकायलक्षणैकादशयोगभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गलक्षणज्ञानचतुष्कं, देशविरतिः, चक्षुर्दर्शनावधिदर्शने, तेजःपद्मलेश्ये, सम्य-क्त्वौघक्षायोपशमिकसास्वादनसम्यक्त्वानि संज्ञी च ।

तदेवमष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धकानामनुत्कृष्टप्रदेशबन्धकानाञ्चौघत आदेशतश्च कालश्चिन्तितः ॥४४१।४४२॥

साम्प्रतं जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च कालं परिबिभावयिषुराह—

इस्सियरपएसाणं अट्ठण्हं बंधगाण सव्वद्धा ।
सत्तण्ह बंधगाणं हस्सपएसस्स सव्वद्धा ॥४४३॥

तिरिये सव्वेगिंदियणिगोअवणसेससुहमभेएसु ।
पुहवाइचउसु तेसिं बायरबायरअपज्जेसु ॥४४४॥
पत्तेअवणम्मि तहा तदपज्जतम्मि कायजोगे य ।
उरलदुगकम्मणेसुं णपुंसगे चउकसायेसुं ॥४४५॥
अण्णाणदुगे अयते अचक्खुअपसत्थलेसभवियेसुं ।
अभवियमिच्छत्तेसुं असण्णिआहारगियरेसुं ॥४४६॥

(प्रे०) आदौ तावत् पूर्वार्धेनाष्टकर्मणामोघवक्तव्यतामाह-'इगिसयरपएसाणं' इत्यादि, अक्षरगमनिका सुगमा । भावना पुनरेवम्—अष्टानामपि कर्मणां जघन्यप्रदेशबन्धस्वामिनां सूक्ष्मापर्याप्तत्वादष्टकर्मणां जघन्यप्रदेशबन्धप्रायोग्या जीवा अनन्ताः । यस्य कर्मणो जघन्यप्रदेशबन्धप्रायोग्या जीवा असंख्यलोकप्रमाणा अनन्ता वा तस्य जघन्यप्रदेशबन्धः सर्वाद्धा भवति । तथा यत्र जघन्यप्रदेशबन्धकानां कालः सर्वाद्धा तत्राजघन्यप्रदेशबन्धकानां कालः सर्वाद्धा सुतरां भवति । अतोऽष्टकर्मणां जघन्याजघन्यप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति । साम्प्रतं सप्तकर्मणां जघन्यप्रदेशबन्धकानां कालमादेशतो वक्तुमुपचिक्रंसुरादौ तावद्यासु मार्गणासु 'सर्वाद्धा' कालस्ताः सार्धत्रिगाथाभिः प्ररूपयति—'सत्तण्ह' इत्यादि, तिर्यगोघादिचतुःषष्टिमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति । स्पष्टमन्यत् । भावना पुनरेवम्—प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकाययोः अपर्याप्तप्रत्येकवनस्पतिकायः, पृथिव्यादिचतुरोघभेदेषु सूक्ष्मापर्याप्तपृथ्व्यादयः, बादरबादरापर्याप्तपृथ्व्यादिषु च बादरापर्याप्तपृथ्व्यादयः, पर्याप्तसूक्ष्मभेदेषु पर्याप्तसूक्ष्माः, शेषासु मार्गणासु अपर्याप्तसूक्ष्माः जघन्यप्रदेशबन्धस्वामिनो भवन्ति । अपर्याप्तप्रत्येकवनस्पतिकायादयः प्रत्येकं यथासम्भवमसंख्यलोकाकाशप्रदेशप्रमाणा अनन्ता वा सन्तीति तिर्यगोघादिमार्गणासु प्रागुदितनियममवलम्ब्य सप्तकर्मणां जघन्यप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति ॥४४३।४४४।४४५।४४६॥

सम्प्रति शेषासु षड्विंशतिमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकानां जघन्यमुत्कृष्टञ्च कालं युग्मेन निरूपयति—

सेसासु लहू समयो जेट्ठो समया हवेज्ज संखेज्जा ।
दुणराणताइगेसुं आहारदुगम्मि गयवेए ॥ ४४७ ॥
मणणाणसंयमेसुं समइअछेअपरिहारसुहमेसुं ।
सुक्कखइउवसमेसुं अण्णह आवलिअसंखंसो ॥४४८॥

(प्रे०) 'सेसासु लहू समयो' इति, निगदसिद्धम् । 'जेट्ठो' इत्यादि, सप्तकर्मणां जघन्यप्रदेशबन्धकानामुत्कृष्टः कालः "संख्याताः समयाः" भवति । कासु मार्गणासु ? इत्याह—

'दुणर' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, आनतप्रभृतिसर्वार्थसिद्धपर्यन्तेषु अष्टादशसु देवभेदेषु, आहारकद्विके, अवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धि-सूक्ष्मसम्परायेषु, शुक्ललेश्यायां, क्षायिकौपशमिकसम्यक्त्वयोश्चेति द्वात्रिंशन्मार्गणासु । कथम् ? इति चेद् , सप्तकर्मणां जघन्यप्रदेशबन्धप्रायोग्याणां जीवानां संख्यातत्वात् ।

न चानतादिविंशतिव्यतिरिक्तासु मार्गणासु घटते एतन्निरूपणं, परमानतादिषु तु जीवानाम-संख्यातत्वात् कथमुपपद्येतेत्याशङ्कनीयम् , आनतादिमार्गणासु जीवानामसंख्यातत्वेऽपि भव-प्रथमसमयस्थानां जघन्यप्रदेशबन्धस्वामित्वात् । परिमाणद्वाराभिहितयुक्त्याऽऽनतादिषु संख्याता-नामेव जीवानामुत्पद्यमानत्वात् भवप्रथमसमयस्था जीवाः संख्याता एव, इति जघन्यप्रदेशबन्ध-प्रायोग्याणां जीवानां संख्यातत्वादानतादिमार्गणास्वपि प्रकृतजीवानां कालः संख्याताः समया एव भवति ।

'अण्णत्थ' इत्यादि, अन्यत्र-अन्यासु चतुःसप्ततिमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्ध-कानामुत्कृष्टः कालः 'आवलिकाऽसंख्यातभागः' भवति । शेषासु मार्गणासु सप्तकर्मणां जघन्यप्रदेश-बन्धप्रायोग्याणां जीवानामसंख्यातत्वेऽप्यसंख्यलोकाकाशप्रदेशेभ्यो न्यूनत्वमित्यत्र बीजम् । शेष-मार्गणा इमाः—निखिलनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौ-घभवनपतिव्यन्तरज्योतिष्कसौधर्माद्यष्टवैमानिकभेदा इति षड्विंशतिगतिभेदाः, सर्वद्वित्रिचतुःपञ्चे-न्द्रियाः पर्याप्तबादरपृथिव्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः, त्रसत्रिकं चेत्यष्टौ काय-भेदाः, पञ्चमनःपञ्चवचनानि वैक्रियद्विकं चेति द्वादश योगभेदाः; स्त्रीपुरुषवेदौ, मतिश्रुतावधि-विभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघक्षायोपशमिकसास्वादन-मिश्राः, संज्ञी च ॥४४७।४४८॥

तदेवं सप्तकर्मणां जघन्यप्रदेशबन्धकानां कालं निरूप्य सम्प्रति सप्तकर्मणामजघन्यप्रदेश-बन्धकानां कालमतिदिशन्नाह—

अलहुपएसस्स भवे अगुरुपएसव्व सव्वहिं कालो ।
णवरं भिन्नमुहुत्तं लहू अपज्जणरवसमेसुं ॥४४९॥

(प्रे०) "अलहुपएसस्स" इत्यादि, सप्तकर्मणां बन्धकानामिति 'गङ्गाप्रवाह' न्यायेनानु-वर्तते, सर्वासु मार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धकानां कालः 'अगुरुपएसव्व' इति, 'सूचा-मात्रत्वात् सूत्रस्य' सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां कालो यासु मार्गणासु यावान्निरूपितस्तासु मार्गणासु तावान् भवति । तथा—अपर्याप्तमनुष्यमन्तरा चतुरुत्तरचत्वारिंशन्नुगतिभेदाः, विक-लेन्द्रियभेदाः, षड्जीवकायभेदाः, वैक्रियमिश्राहारकाहारकमिश्रैर्विना त्रयोदश योगभेदाः, वेदत्रिकं, चतुष्कषायाः, सप्तज्ञानमार्गणाभेदाः, संयमौघसामायिकदेशविरत्यसंयमाः, दर्शनत्रिकं, लेश्याषट्कं,

भव्याभव्यौ, सम्यक्त्वौघक्षायोपशमिकक्षायिकमिथ्यात्वानि, संज्ञी, असंज्ञी, आहारकानाहारकौ चेति नवपञ्चाशदुत्तरशतमार्गणासु 'सर्वाद्धा'। अत्र भावनाऽपि सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां सर्वाद्धा-कालवद् विधेया।

अथ एकादशमार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धकानामुत्कृष्टकाल एवम्—अपर्याप्तमनुष्यः, वैक्रियमिश्रः, उपशमसास्वादनमिश्रा इति पञ्चमार्गणासु पल्योपमासंख्यातभागः। तद्यथा—एतासु मार्गणासु वर्तमाना जीवा मार्गणाप्रथमसमयादारभ्यामार्गणोत्कृष्टकालमजघन्यप्रदेशबन्धं कुर्युरिति मार्गणोत्कृष्टकालस्य पल्योपमासंख्यातभागप्रमाणत्वात् सप्तकर्मणामजघन्यप्रदेशबन्धकानामुत्कृष्टकालः पल्योपमासंख्यातभागो भवति। छेदोपस्थापनीयसंयमे 'पञ्चाशल्लक्षकोट्यः सागरोपमाणि'। अत्र भावनाऽपर्याप्तमनुष्यादिषु यथा कृता तथा कर्तव्या, किन्तु मार्गणोत्कृष्टकालः पञ्चाशल्लक्षकोटि-सागरोपमप्रमाणो वक्तव्यः। आहारकद्विकावेदसूक्ष्मसम्परायेषु "अन्तर्मुहूर्त्तम्"। अत्र भावनाऽपर्याप्त-मनुष्यादिवद्, किन्तु मार्गणोत्कृष्टकालोऽन्तर्मुहूर्त्तप्रमाणो वक्तव्यः। परिहारसंयमे देशोने 'द्वे पूर्व-कोटी'। अत्रापि भावना पूर्ववद्, किन्तु मार्गणोत्कृष्टकालो देशोनद्विपूर्वकोटिप्रमाणो वक्तव्यः।

अथ शेषासु एकादशमार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धकानां जघन्यकाल एवम्—वैक्रिया-हारकमिश्रयोः 'अन्तर्मुहूर्त्तम्"। तद्यथा—एतयोर्मार्गणयोर्जघन्यप्रदेशबन्धस्वामिनो मार्गणाप्रथम-समये जघन्यप्रदेशबन्धं विधाय मार्गणाजघन्यकालं यावदजघन्यप्रदेशबन्धं कुर्युः, तदनन्तरं च मार्गणाऽत्यन्ताभावो भवेत् तदा मार्गणाया जघन्यकालस्यान्तर्मुहूर्तप्रमाणत्वात् सप्तकर्मणामजघन्य-प्रदेशबन्धकानां जघन्यः कालोऽन्तर्मुहूर्त्तं भवति। छेदोपस्थापनीयपरिहारविशुद्धिकयोः प्रकृतबन्ध-कालः स्वयं विज्ञेयः। अपर्याप्तमनुष्योपशमसम्यक्त्वयोः प्रकृतबन्धकालस्य 'णवरं' इत्यादिना पृथक् कथयिष्यमाणत्वात् शेषासु पञ्चमार्गणासु प्रकृतबन्धकानां जघन्यकाल एकसमयः। अत्रेयं भावना-आहारककायसास्वादनमार्गणयोः स्वस्वनानाजीवविषयकजघन्यकालस्यैकसामयिकत्वाद् यथो-क्तः काल उपपत्तिं याति। अवेदसूक्ष्मसम्पराययोर्यदा सर्वे जीवा मार्गणोपान्त्यसमये जघन्यप्रदेश-बन्धं विधाय मार्गणाचरमसमयेऽजघन्यप्रदेशबन्धं कुर्युस्तदा, यद्वा सर्वे जीवा युगपद् विवक्षितप्रथम-समये जघन्यं प्रदेशबन्धं विधाय द्वितीयसमयेऽजघन्यं विदध्युः, तृतीयसमये पुनर्जघन्यप्रदेशबन्धं कुर्यु-स्तदा एकसमयः कालो घटां याति। मिश्रे नानाजीवविषयकः कालो जघन्यतोऽन्तर्मुहूर्त्तमस्तीति यथोक्तः कालो मार्गणाजघन्यकालमाश्रित्य नोपपद्यते, किन्तु यदा सर्वेऽपि जीवा युगपद् विवक्षित-प्रथमसमये जघन्यं प्रदेशबन्धं विधाय द्वितीयसमयेऽजघन्यं कुर्युः, तृतीयसमये पुनर्जघन्यप्रदेशबन्धं विदध्युस्तदा यथोक्तः काल उपपद्यते। सप्तकर्मणामजघन्यप्रदेशबन्धकानामिति सर्वत्र योजनीयम्।

अत्र 'सव्वहिं' इत्यनेन सर्वासु मार्गणासु सप्तकर्मणामजघन्यप्रदेशबन्धकानां कालः सप्त-कर्मणामनुत्कृष्टप्रदेशबन्धकानां यावान् कालस्तावान् भवतीत्यतिदिष्टं, परमत्रातिव्याप्तिः, तद्यथा—

अपर्याप्तमनुष्योपशमसम्यक्त्वयोः सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां जघन्यकाल एकसमयो भवति, परं सप्तकर्मणामजघन्यप्रदेशबन्धकानां सोऽन्तर्मुहूर्त्तं भवति। यतोऽपर्याप्तमनुष्योपशमसम्यक्त्वयोर्जघन्यप्रदेशबन्धो भवप्रथमसमये एव भवति। तदनन्तरं मार्गणाजघन्यकालं यावदजघन्यप्रदेशबन्धो भवति। एते मार्गणे जघन्यतोऽपि भवप्रथमसमयादारभ्यान्तर्मुहूर्त्तं यावदवतिष्ठेते। इत्यतिदेशस्यातिव्याप्तिग्रसितत्वादतिव्याप्तिमुद्धर्तुकाम आह–'णवरं' इत्यादि, सुगमम् ॥४४९॥

तदेवं सप्तकर्मणां जघन्यप्रदेशबन्धकानामजघप्रदेशबन्धकानां च नानाजीवविषयककालप्ररूपणा कृता। अथायुषो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च कालमतिदिशति–

सव्वासु मग्गणासुं अगुरुपएसव्व णेयव्वो।
आउस्स बंधगाणं हस्सियराणं पएसाणं ॥४५०॥ [उपगीतिः]

(प्रे०) "**सव्वासु**" इत्यादि, सर्वासु त्रिषष्टिशतमार्गणासु आयुषः, **हस्सियराणं**' इति, जघन्यानामितरेषामजघन्यानां प्रदेशानां बन्धकानां, 'कालः' इति पूर्वगाथातोऽनुवर्तते, '**अगुरुपएसव्व**' इति 'व्याख्यानतो विशेषप्रतिपत्तिः' इति आयुषोऽनुत्कृष्टप्रदेशबन्धकानां कालो यावान्निरूपितस्तावान् भवति। तद्यथा–तिर्यगोघः, सर्वैकेन्द्रियभेदाः, निखिलनिगोदभेदाः, वनस्पतिकायौघः, एकेन्द्रियनिगोदव्यतिरिक्ता द्वादशसूक्ष्मभेदाः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, बादरापर्याप्तपृथिव्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुतलक्षणाऽज्ञानद्विकम्, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी, आहारकश्चेति द्वाषष्टिमार्गणासु आयुर्जघन्याजघन्यप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति। अत्र भावनाऽपि आयुषोऽनुत्कृष्टप्रदेशबन्धकानां सर्वाद्धाकालोपपादने यथा कृता तथा विधेया। शेषासु एकोत्तरशतमार्गणासु आयुषो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च जघन्यकालो निरूपणीयः, तत्र पञ्चेन्द्रियतिर्यगोघादिपञ्चदशमार्गणासु अजघन्यप्रदेशबन्धकानां जघन्यकालस्यापवदिष्यमाणत्वात् षडशीतिमार्गणासु अजघन्यप्रदेशबन्धकानामेकोत्तरशतमार्गणासु च जघन्यप्रदेशबन्धकानां जघन्यकाल एकसमयः। भावना सुगमा। अथ शेषासु एकोत्तरशतमार्गणासु आयुषो जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानाश्चोत्कृष्टकालो निरूपणीयः। तत्रायुषो जघन्यप्रदेशबन्धकानामुत्कृष्टकालस्यापवदिष्यमाणत्वादजघन्यप्रदेशबन्धकानामुत्कृष्टकाल एवम्—पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्यौ, आनतप्रभृत्यष्टादशदेवभेदाः, आहारकद्विकं, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमाः, शुक्ललेश्या, क्षायिकसम्यक्त्वं चेत्येकत्रिंशद्मार्गणासु अन्तर्मुहूर्तम्, निखिलनरकभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, चत्वारस्तिर्यक्पञ्चेन्द्रियाः, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्माद्यष्टवैमानिकदेवा इति षड्विंशतिगतिभेदाः, समस्तद्वित्रिचतुः-

पञ्चेन्द्रियाः, बादरपर्याप्तपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियकायलक्षणैकादशयोगभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधि-विभङ्गलक्षणज्ञानचतुष्कं, देशविरतिः, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघक्षायोपशमिक-सास्वादनानि, संज्ञी चेति द्वासप्ततिमार्गणासु पल्योपमासंख्यातभागः । अत्र भावनाऽऽयुषोऽनुत्कृष्ट-कालवद् विधेया ॥ ४५० ॥

साम्प्रतमनन्तरगाथाकृतातिदेशमायुषोऽजघन्यप्रदेशबन्धकानां जघन्यकाले जघन्यप्रदेशबन्धकानामु-त्कृष्टकाले चापवदति—

णवरि पणिंदितिरियणरविगलपणिंदितसतदसमत्तेसुं
सण्णिम्मि मुहुत्तंतो अलहुपएसस्स होइ लहू ॥४५१ ॥
संखसमया गुरू तहि हस्सपएसस्स जहि मुहुत्तंतो
जहि पल्लासंखंसो तहि आवलिआअसंखंसो ॥४५२ ॥

(प्रे०) 'णवरि' इत्यादि' किन्तु पञ्चेन्द्रियतिर्यग्मनुष्यद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रिय-त्रसमार्गणानामोघभेदेषु अपर्याप्तभेदेषु संज्ञिनि चेति पञ्चदशमार्गणास्वायुषोऽजघन्यप्रदेशबन्धकानां जघन्यकालोऽन्तर्मुहूर्तं भवति, एकजीवाश्रितप्रस्तुतकालस्यान्तर्मुहूर्तप्रमाणत्वाद् ॥४५१॥ (द्वितीय-गाथावृत्तिः) 'संखसमया' इत्यादि, यासु मार्गणासु आयुरनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालोऽन्त-र्मुहूर्तं तासु पर्याप्तमनुष्याद्येकाधत्रिंशद्मार्गणासु आयुर्जघन्यप्रदेशबन्धकानामुत्कृष्टकालः संख्यात-समया ज्ञातव्यः, आयुर्बन्धप्रायोग्यजीवानां संख्यातत्वाद् । "जहि पल्लासंखंसो" इत्यादि, यासु मार्गणासु आयुरनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः पल्योपमासंख्यातभागस्तासु निखिलनरका-दिद्वासप्ततिमार्गणासु आयुर्जघन्यप्रदेशबन्धकानामुत्कृष्टकालः आवलिकासंख्यातभागो ज्ञातव्यः, आयु-र्जघन्यप्रदेशबन्धयोग्यजीवानामसंख्यातत्वे सत्यसंख्यलोकाकाशप्रदेशेभ्यो न्यूनत्वाद् ॥४५२॥

इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे त्रयोदशं कालद्वारं समाप्तम् ॥



## * नानाजीवाश्रितकालप्रदर्शकं यन्त्रकम् *

ओघतः—सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यः काल एकसमयः, षट्कर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टतः संख्यातसमयाः, मोहायुषोस्तु आवलिकासंख्यातभागः, अष्टानामपि कर्मणामनुत्कृष्टजघन्याजघन्यप्रदेशबन्धकानां कालः सर्वाद्धा ।

### — आदेशतः सप्तकर्मणां कालः —

| | उत्कृष्टप्रदेशबन्धकानां | जघन्यप्रदेशबन्धकानां |
|---|---|---|
| सर्वाद्धा | सर्वैकेन्द्रिय. सर्वनिगोद. शेषसूक्ष्म. बादरापर्याप्त-पृथ्व्यप्तेजोवायु. अ. प्र. व./ वनौघ. ३२ | तिर्यगोघ. सर्वैकेन्द्रियादिद्वाविंशन्मार्गणा० पृथ्व्यप्तेजोवायुकायौघ. बादरपृथ्व्यप्तेजोवायुकायौघ. प्रत्येकवनौघ काय. सा. औ. द्विक., कार्मण. नपुं., सर्वकषाय. मतिश्रुताज्ञान. असंय. अच. अशुभले. भव्याभव्य. मिथ्या. असं. आहा. अना. =६४ |
| ज. समयः | शेषासु १३८ मार्गणासु | शेषासु १०६ मार्गणासु |
| उत्कृष्टतः | | |
| षण्णां संख्य. समयाः मोह. आव. असं | द्विपञ्चे. द्वित्रस. पञ्चमनोवचन. काययो. औदा. लोभ. त्रिज्ञान. त्रिदर्शन. शुक्ल. भव्य. सम्य. क्षायि. उप संज्ञि. आहा. ३० | |
| सप्तानां सं० समयाः | मनु. सा. मानु. प. मनु. सर्वार्थ. आहा. द्विक. अवेद. मनः. सय. सामा. छेदो. परि. सूक्ष्म. १३ | पर्या. मनु. मानु. आनताद्यष्टादशदेव. आहा. द्विक. अवेद. मन.पर्य. संय. सामा. छेदो. परि. सूक्ष्म. शुक्ल. क्षायिक. उपशम० =३२ |
| आवलिकासं. | शेषासु ९५ मार्गणासु | शेषासु ७४ मार्गणासु |

### — आदेशतः सप्तकर्मणामनुत्कृष्टाजघन्यप्रदेशबन्धकानां कालः —

अपर्याप्तमनुष्याद्यष्टसान्तरमार्गणामध्ये वैक्रियमिश्राहारकमिश्रयोर्जघन्यतोऽन्तर्मुहूर्तम्, छेदोपस्थापनीयपरिहारविशुद्धिकयोः जघन्यतः स्वयं ज्ञेयः, शेषसप्तमार्गणासु समयः, किन्त्वपर्याप्तमनुष्योपशमयोरजघन्यस्य जघन्यकालोऽन्तर्मु., उत्कृष्टतो यन्त्राज्ज्ञेयः ।

| | | | |
|---|---|---|---|
| पल्योपमासं. | अप० मनु० वै० मिश्र० उप० सास्वा मिश्र. (५) | अन्तर्मु० | आहारक. द्विक. अवेद. सूक्ष्म. (४) |
| अर्धकोटि-साग० | छेदो० (१) | देशोनद्विपूर्व. कोटी | परिहार० (१) |

शेषासु १५९ मार्गणासु सर्वाद्धा ।

### — आदेशतः आयुषः कालः —

| | उत्कृष्टप्रदेशबन्धकानां | जघन्यप्रदेशबन्धकानां | अजघन्यानु. बन्धकानां |
|---|---|---|---|
| सर्वाद्धा | उपर्युक्तद्वात्रिंशन्मार्गणासु | कार्मणानाहारवर्जासूपर्युक्तद्वाषष्टिमा० | ६२ मार्गणासु |
| ज. १समयः | शेषासु १३१ मार्गणासु | शेषासु १०१ मार्गणासु → | १०१ मार्गणासु * |
| उत्कृष्टतः संख्यात-समयाः | मनु. सा. पर्या. मनु. मानु. आनतादि-देव. १८ आहा. द्विक. मनः. संय. सामा. छेदो परि. शुक्ल. क्षायि. ३० | मनुष्यौघवर्जोक्तनवविंशतिमार्गणासु. → | २९ मार्गणासु उत्कृष्टतः अन्त. |
| उ. आव. असं. भाग. | शेषासु १०१ मार्गणासु | शेषासु ७२ मार्गणासु | ७२ मार्गणासु उत्कृ० पल्योपमासं० |

* किन्तु पञ्चेन्द्रियतिर्यग्मनुष्यद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियत्रसकायसत्कौघापर्याप्तभेदेष्वसंज्ञिनि चाजघन्यप्रदेशबन्धकानां जघन्यकालोऽन्तर्मुहूर्तं ज्ञेयः ।

## ॥ चतुर्दशमन्तरद्वारम् ॥

### ( नानाजीवविषयकम् )

तदेवं नानाजीवविषयकं कालद्वारं प्ररूपितम् । इदानीं क्रमप्राप्तं नानाजीवविषयकं चतुर्दशमन्तरद्वारमुपपिक्षुरादौ तावदोघतोऽष्टकर्मणामुत्कृष्टप्रदेशबन्धकानामनुत्कृष्टप्रदेशबन्धकानां चान्तरमाह—

अट्ठण्ह लहु समयो जेट्ठपएसस्स अंतरं परमं ।
सेढिअ संखियभागो अगुरुपएसस्स णेव भवे ॥४५३॥

(प्रे०) 'अट्ठण्ह' इत्यादि, अत्र 'बन्धकानाम्' इति गम्यते, भङ्गविचयादीनां द्वाराणां बन्धकानुद्दिश्य चिन्त्यमानत्वात्, यद्वा पूर्वद्वारादनुवर्तते । ततोऽयमर्थः—अष्टकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यमन्तरम् 'एकसमयो' भवति । जघन्यत एकसमयं यावदष्टकर्मणामुत्कृष्टप्रदेशबन्धका न प्राप्यन्त इत्यर्थः । अत्रेयं भावना—यदैक एवानेके वा जीवा युगपदुत्कृष्टयोगं प्राप्य ज्ञानावरणीयादिविवक्षितकर्मण उत्कृष्टप्रदेशबन्धं कुर्वन्त एकमेव समयमनुत्कृष्टं प्रदेशबन्धं विधाय पुनरुत्कृष्टं विदधति तदा ज्ञानावरणीयादिविवक्षितकर्मण उत्कृष्टप्रदेशबन्धकानां जघन्यमन्तरमेकसमयो भवति ।

'परमं' इत्यादि, अष्टकर्मणामुत्कृष्टप्रदेशबन्धकानामुत्कृष्टमन्तरं 'सेढिअसंखियभागो' इति, सूचिश्रेणेरसंख्याततमो भागो भवति । उत्कृष्टतः सूचिश्रेण्यसंख्याततमभागं यावदष्टकर्मणामुत्कृष्टप्रदेशबन्धकानामत्यन्ताभावो भवतीत्यर्थः । कथम् ? इति चेद् , नानाजीवानाश्रित्योत्कृष्टप्रदेशबन्धहेतूत्कृष्टयोगस्थानस्योत्कृष्टतस्तावत्कालमप्राप्यमाणत्वात्तदनन्तरं चावश्यमुत्कृष्टयोगस्य प्राप्तेरुत्कृष्टप्रदेशबन्धकानां लभ्यमानत्वात् । 'अगुरुपएसस्स' इत्यादि, अष्टकर्मणामनुत्कृष्टप्रदेशबन्धकानामन्तरं नैव भवति, नानाजीवानाश्रित्यानुत्कृष्टप्रदेशबन्धकानां कालस्य सर्वाद्धात्वात् ॥४५३॥

इदानीमादेशतः सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यमुत्कृष्टं चान्तरमेकयैव गाथया निरूपयितुकाम आह—

जेट्ठपएसस्स जहिं सव्वद्धा अत्थि आउवज्जाणं ।
तहि अंतरं भवे णो अण्णह लहुमियरमोघव्व ॥४५४॥

(प्रे०) "जेट्ठपएसस्स" इत्यादि, यत्र यासु मार्गणासु 'सव्वद्धा' "व्याख्यानतो विशेषप्रतिपत्तिः" इति सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयकः कालः सर्वाद्धा तत्र तासु सर्वैकेन्द्रियाः, समस्तनिगोदभेदाः, द्वादशकायसूक्ष्मभेदाः, बादरापर्याप्तपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तप्रत्येकवनस्पतिकायः, वनस्पतिकायौघश्चेति द्वात्रिंशन्मार्गणासु, 'आउवज्जाणं' इत्यादि, आयुरन्तरा सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामन्तरं न भवेत् । हेतुः सुगमः ।

'अवणाइ' इत्यादि, अन्यासु—समस्तगतिभेदाः सर्वद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघपर्याप्तप्रत्येकवनस्पतिकायौ, त्रसत्रिकं चेति सप्तदशकायभेदाः, निखिलयोगभेदाः, सर्ववेदमार्गणाभेदाः, कषायचतुष्कं, समस्तज्ञानमार्गणाभेदाः, समस्तसंयममार्गणाभेदाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, निखिलसम्यक्त्वमार्गणाभेदाः, संज्ञी, असंज्ञी, आहारकानाहारकौ चेत्यष्टात्रिंशदुत्तरशतमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्यमितरच्चोत्कृष्टमन्तरम् 'ओघवद्—' जघन्यमेकसमयमुत्कृष्टं च श्रेण्यसंख्येयतमभागो भवति । अत्र भावनाऽप्योघवद् विधेया ॥४५४॥

इदानीं सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामन्तरं प्रतिपिपादयिषुराह—

सत्तण्हं सव्वद्धा अणुरुपएसस्स जत्थ तहि णत्थि ।
सयममुज्झो परिहारे छेए णवसु लहु समयो ॥४५५॥

(प्रे०) "सत्तण्ह" इत्यादि, यत्र यासु मार्गणासु आयुर्वर्जानां सप्तकर्मणामनुत्कृष्टप्रदेशस्य कालः सर्वाद्धा, सूत्रमात्रत्वात्तत्रस्य सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयकः कालः सर्वाद्धा तासु अपर्याप्तमनुष्यमन्तरा षट्चत्वारिंशद्गतिभेदाः, सर्वेन्द्रियभेदाः, निखिलकायभेदाः, वैक्रियमिश्राहारद्विके विना पञ्चदशयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, निखिलज्ञानमार्गणाभेदाः, संयमौघसामायिकदेशविरत्यसंयमाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, सम्यक्त्वौघक्षायिकमिथ्यात्वानि, संज्ञी, असंज्ञी, आहारकानाहारकौ चेति नवपञ्चाशदुत्तरशतमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामन्तरं न भवेत् । भावनाऽतिसुगमा ।

'सयमुज्झो' इत्यादि, परिहारविशुद्धौ छेदोपस्थापनीये च प्रस्तुतमन्तरं स्वयं तज्ज्ञातृसकाशाद् वा ज्ञेयम् । अथ शेषासु नवमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां जघन्यमन्तरमाह—'णवसु' इत्यादि, निगदसिद्धम् । भावना पुनरेवम्—यदा तत्तन्मार्गणास्थाः सर्वे जीवा युगपदुत्कृष्टयोगं प्राप्यैकमेव समयं सप्तकर्मणामुत्कृष्टप्रदेशबन्धं विदधति तदा सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां जघन्यमन्तरमेकसमयो भवति । तथा "सव्वेसु जहण्णओ समओ" इति जीवसमासवचनात् मार्गणाकालस्य जघन्यत एकसमयत्वादपि यथोक्तमन्तरमुपपद्येत ॥४५५॥

इदानीं शेषासु अपर्याप्तनराद्येकादशमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टमन्तरं गाथाद्विकेन चिन्तयति—

पल्लासंखियभागो अपज्जणरमीससासणेसु गुरु ।

**बारमुहुत्ता विक्कयमीसेऽवेअसुहमेसु छम्मासा ॥४५६॥**
**आहारदुगे हायणपुहुत्तमट्ठारकोडिकोडीओ ।**
**छेए तह परिहारे अयराणं सत्तदिणुवसमे ॥४५७॥**

(प्रे०) "**पल्लासंखियभागो**" इत्यादि, अपर्याप्तमनुष्यमिश्रसास्वादनसम्यक्त्वेषु, '**गुरु**' इति, सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानुत्कृष्टमन्तरं 'पल्योपमासंख्यातभागो' भवति । '**बारमुहुत्ता विक्कियमीसे**' इति, वैक्रियमिश्रे 'द्वादशमुहूर्त्ताः' । '**ऽवेअसुहमेसु छम्मासा**' इति, 'वेअ' इत्यत्राद्यकारस्य लुक्, अवेदसूक्ष्मसम्पराययोः 'षण्मासाः' । (द्वितीयगाथावृत्तिः) '**आहारदुगे हायणपुहुत्तं**' इति, आहारकाहारकमिश्रयोः 'हायनपृथक्त्वम्', "स सं-पर्यनुदूभ्यो वर्षं, हायनोऽब्द समाः शरत्" इत्यभिधानचिन्तामणिवचनाद् हायनशब्दस्य वर्षवाचित्वाद् वर्षपृथक्त्वमित्यर्थः । '**अट्ठारकोडिकोडीओ**' इत्यादि, छेदोपस्थापनीये तथा परिहारविशुद्धौ संयमे प्रत्येकमतराणामष्टादशकोटिकोट्यः, अष्टादशकोटिकोटिसागरोपमा इत्यर्थः ! '**सत्तदिणुवसमे**' इति, सत्तदिणा उवसमे' इति विश्लेषः, 'लुक्' (सिद्धहेम० ८।१।१।१०) इति सूत्रेणान्त्याकारलोपः, उपशमसम्यक्त्वे सप्तदिनानि । सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टमन्तरं भवतीति सर्वत्र योजनीयम् । कथम् ? इति चेद्, तत्तन्मार्गणानामुत्कृष्टान्तरस्य तावत्प्रमाणत्वाद् । अर्थाद्यासु मार्गणासु प्रकृतान्तरं यावदुक्तं ता मार्गणास्तावत्कालमस्मिन् जगति कदाचिन्न विद्यन्ते इत्यत्र मार्गणाऽभावप्रयुक्तमन्तरं घटां याति ।

नन्वपर्याप्तमनुष्यादिमार्गणानां यथोक्तमुत्कृष्टान्तरं कथमवगन्तव्यमिति चेद्, शास्त्रवचनात् । तद्यथा—पल्लाऽसंखियभागो सासणमिस्सासमत्तमणुएसु । वासपुहुत्तं उवसामएसु खवगेसु छम्मासा ॥२५९॥ इति जीवसमासवचनाद् अपर्याप्तमनुष्यमिश्रसास्वादनानां पल्योपमासंख्यातभागः, अवेदसूक्ष्मसंपराययोश्च 'षण्मासाः' उत्कृष्टान्तरं सिद्ध्यति । यद्यप्यत्रावेदसूक्ष्मसंपराययोः साक्षान्नोक्तं तथापि तयोरुत्कृष्टान्तरस्य क्षपकश्रेणेरुत्कृष्टान्तरप्रमाणत्वात् क्षपकश्रेणेरुत्कृष्टान्तरं चात्र षण्मासा उक्तमित्यर्थापत्त्योक्तमेव ।

आहारमिस्सजोगे वासपुहुत्तं विउव्विमिस्सेसु ।
बारस हुंति मुहुत्ता सव्वेसु जहण्णओ समओ ॥(जी. स. गा०—२६०)

इति जीवसमासवचनाद् वैक्रियमिश्रे 'द्वादशमुहूर्त्ताः' आहारकद्विके च वर्षपृथक्त्वमुत्कृष्टान्तरं सिद्धं भवति । यद्यप्यत्राहारककायस्यान्तरं साक्षान्नोक्तं तथापि तदन्तरमाहारकमिश्रकायतुल्यमाहारकमिश्रस्योत्कृष्टान्तरञ्चात्र वर्षपृथक्त्वमुक्तमित्यर्थापत्त्याहारककायस्योत्कृष्टमन्तरमुक्तमेव । तथा—तेवट्ठी चुलसीई वाससहस्साइ छेयपरिहारे । अवरं परमुदहीणं अट्ठारस कोडिकोडीओ ॥ (जी. स. गा.२६१) इति जीवसमासवचनात् छेदोपस्थापनीयपरिहारविशुद्धिसंयमयोरुत्कृष्टान्तरं प्रत्येकमष्टादशसागरो-

पमकोटीकोट्यः सिद्ध्यति । एवमुपशमसम्यक्त्वेऽपि यथोक्तमेवोत्कृष्टान्तरं ज्ञातव्यम् ॥४५६।४५७॥

साम्प्रतमायुष उत्कृष्टप्रदेशबन्धकानामन्तरमेकयैव गाथया वक्तुकाम आह–

**जेट्ठपएसस्स जहिं सव्वद्धाउस्स अंतरं तत्थ ।**
**णेव भवे सेसासु ओघव्व भवे जहण्णियरं ॥४५८॥**

(प्रे०) 'जेट्ठपएसस्स' इत्यादि, यत्र–यासु मार्गणासु 'जेट्ठपएसस्स सव्वद्धा' इति, आयुरुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयककालः सर्वाद्धा, यत्तदोर्नित्याभिसम्बन्धादाह–'अंतरं तत्थ णेव भवे' इति, तासु सर्वैकेन्द्रियाः, समनिगोदभेदाः, द्वादशकायसूक्ष्मभेदाः, बादरापर्याप्तपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तप्रत्येकवनस्पतिकायः, वनस्पतिकायौघश्चेति द्वात्रिंशन्मार्गणासु आयुष उत्कृष्टप्रदेशबन्धकानामन्तरं नैव भवेत् । 'सेसासु' इत्यादि, शेषासु एकत्रिंशदुत्तरशतमार्गणासु आयुष उत्कृष्टप्रदेशबन्धकानां जघन्यमितरदुत्कृष्टं चान्तरम् 'ओघवद्'=जघन्यमेकसमयमुत्कृष्टं च श्रेण्यसंख्यातभागो भवति । अत्र भावनाऽपि सामान्यवक्तव्यतावज्ज्ञेया । शेषमार्गणा नामत इमाः-समस्तगतिभेदाः, समद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, पृथिव्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघपर्याप्तप्रत्येकवनस्पतिकायौ त्रसत्रिकं चेति सप्तदशकायभेदाः, सर्वयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, कृत्स्नज्ञानमार्गणाभेदाः, समस्तसंयममार्गणाभेदाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, विश्वसम्यक्त्वभेदाः, संज्ञी, असंज्ञी, आहारकानाहारकौ च ॥४५८॥

इदानीमायुषोऽनुत्कृष्टप्रदेशबन्धकानामन्तरं चिन्तयितुकाम आह–

**आउस्स बंधगाणं अगुरुपएसस्स सव्वद्धा ।**
**तत्थंतरं ण हवए सेसासु लहुं भवे समयो ॥४५९॥**

(प्रे०) 'आउस्स' इत्यादि, यत्र=यासु मार्गणासु 'सव्वद्धा' इति, आयुरनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयककालः सर्वाद्धा तत्र–तासु द्वाषष्टिमार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकानामन्तरं न भवति । बीजं सुगमम् । यासु आयुरनुत्कृष्टप्रदेशबन्धकानां कालः सर्वाद्धा ता मार्गणा इमाः–तिर्यगोघः, सर्वैकेन्द्रियभेदाः, निखिलनिगोदभेदाः, वनस्पतिकायौघः, द्वादशकायसूक्ष्मभेदाः पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताऽज्ञाने, असंयमः, अचक्षुर्दर्शनम् , अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी आहारकश्च ।

'सेसासु' इत्यादि, शेषासु एकोत्तरशतमार्गणासु आयुरनुत्कृष्टप्रदेशबन्धकानां जघन्यमन्तरमेकसमयो भवति । तद्यथा–यदैकोऽनेके वाऽऽयुषोऽनुत्कृष्टप्रदेशबन्धं कुर्वन्तो जीवा उत्कृष्टयोगं

प्राप्यैकसमयमेवोत्कृष्टप्रदेशबन्धं विधाय द्वितीयसमये पुनरनुत्कृष्टप्रदेशबन्धं विदधति तदाऽऽयुषोऽनुत्कृष्टप्रदेशबन्धकानां जघन्यमन्तरमेकसमयो भवति । शेषमार्गणा इमाः—सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, समममर्त्यामर्त्यगतिभेदाः, समस्तद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः, त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियाहारकद्विककायलक्षणत्रयोदशयोगभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वानि संज्ञी च ॥४५९॥

अथ शेषासु एकोत्तरशतमार्गणासु आयुरनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टमन्तरं चिन्तयन्नाह—

पंचिदियतिरियविगलपणिंदियतसेसु सिं अपज्जेसुं ।
भिन्नमुहुत्त जेट्ठं अण्णह णाऊण णेयव्वं ॥४६०॥

(प्रे०) 'पंचिदिय' इत्यादि, पञ्चेन्द्रियतिर्यगोघ-द्वीन्द्रियौघ-त्रीन्द्रियौघ-चतुरिन्द्रियौघ-पञ्चेन्द्रियौघ-त्रसकायौघरूपासु षट्सु मार्गणासु "सिं अपज्जेसु" इति, तेषामेव पञ्चेन्द्रियतिर्यगादीनां षट्स्वपर्याप्तभेदेषु चेति सर्वसंख्यया द्वादशसु मार्गणासु प्रत्येकमायुषोऽनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टमन्तरमन्तर्मुहूर्तम्, प्रस्तुतमार्गणासु प्रत्येकं जीवानामुत्पत्तिच्यवनान्तरस्योत्कृष्टतो यथोक्तमानत्वात् प्रकृतान्तरस्य सामान्यत उत्पत्तिच्यवनविरहाधीनत्वाच्च ।

'अण्णह' इत्यादि, उक्तशेषासु एकोननवतौ मार्गणासु प्रत्येकमायुषोऽनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टमन्तरं तज्ज्ञातृसकाशाद् ज्ञात्वा ज्ञेयम्, कुत इयमुक्तिर्ग्रन्थकृत इति चेत् तत्र जीवानामुत्पत्तिविरहान्तरस्य दुःषमानुभावेन सम्यगपरिज्ञानात् । अत्रार्थेऽन्यदपि वक्तव्यमस्ति तत्तु स्थितिबन्धग्रन्थे विदुषा श्रीजगच्चन्द्रमुनिपुङ्गवेन विरचिताया वृत्तेर्विज्ञेयम् ॥४६०॥

तदेवमष्टकर्मणामुत्कृष्टप्रदेशबन्धकानामनुत्कृष्टप्रदेशबन्धकानां च नानाजीवविषयकमन्तरं प्ररूपितम् । साम्प्रतमष्टकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां चान्तरं वक्तुमभिलाषुक आदौ गाथाद्विकेनौघतोऽष्टकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां चादेशतश्चाष्टकर्मणां जघन्यप्रदेशबन्धकानामन्तरं निर्वक्ति—

हस्सियरपएसाणं अंतरमट्ठण्ह बंधगाणं णो ।
जहि सप्पाउग्गाणं हस्सपएसस्स सव्वद्धा ॥४६१॥
तहि अंतरं ण हवए सेसासुं मग्गणासु होइ लहू ।
समयो असंखिययमो भागो सेढीअ उक्कोसं ॥४६२॥

(प्रे०) 'हस्सियर' इत्यादि, अष्टकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानामन्तरं न भवति, तेषां नानाजीवविषयककालस्य सर्वाद्धात्वात् । "जहि सप्पाउग्गाणं हस्सप-

एसस्स सव्वद्धा'' इति, यासु मार्गणासु स्वप्रायोग्याणां–त्वस्यां–तत्तन्मार्गणायां प्रायोग्याणि सप्ताष्टौ वा यावन्ति कर्माणि बध्यन्ते तावतां कर्मणां जघन्यप्रदेशबन्धकानां नानाजीवविषयककालः सर्वाद्धा, यत्तदोर्नित्याभिसम्बन्धादाह—'तहि अंतरं ण हवए' इति, तासु मार्गणासु स्वप्रायोग्याणां सप्तादिकर्मणां जघन्यप्रदेशबन्धकानामन्तराऽभावः ।

तद्यथा–तिर्यगोघः, सर्वैकेन्द्रियभेदाः, अखिलनिगोदभेदाः, वनस्पतिकायौघः, द्वादशकायसूक्ष्मभेदाः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, बादरापर्याप्तपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, असंज्ञी, आहारकश्चेति द्विषष्टिमार्गणासु स्वप्रायोग्याणामष्टकर्मणां कार्मणानाहारकयोश्च स्वप्रायोग्याणां सप्तकर्मणां जघन्यप्रदेशबन्धकानामन्तराभावः ।

'सेसासु' इत्यादि, 'सप्पाउग्गाणं' इत्यत्रापि सम्बध्यते, स्वप्रायोग्याणां षडादिकर्मणां जघन्यप्रदेशबन्धकानां जघन्यमन्तरम् 'एकसमयः' उत्कृष्टं च 'श्रेण्यसंख्यातभागः' भवति । अत्र भावना सामान्यवक्तव्यतायां सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानां जघन्ये उत्कृष्टे चान्तरे यथा कृता तथा कर्तव्या । नवरमुत्कृष्टस्थाने जघन्येति अनुत्कृष्टस्थाने चाजघन्येति वक्तव्यम् । शेषमार्गणा नामत इमाः–सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, कृत्स्नरनाकिभेदाः, समद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियद्विकाहारकद्विके, स्त्रीपुरुषवेदौ, अवेदः, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायदेशविरतयः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं सम्यक्त्वौघक्षायोपशमिकक्षायिकोपशममिश्रसास्वादनानि संज्ञी च ।४६१।४६२।

इदानीमष्टकर्मणामजघन्यप्रदेशबन्धकानामन्तरमतिदिश्य प्रकृतं नानाजीवविषयकमन्तरद्वारं पारयति–

**सव्वासु मग्गणासु अगुरुपएसव्व, अंतरं णेयं ।**
**अजहन्नपएसस्स उ सप्पाउग्गाणं कम्माणं ॥४६३॥**

(प्रे०) 'सव्वासु' इत्यादि, सर्वासु मार्गणासु स्वप्रायोग्याणां षडादिकर्मणामजघन्यप्रदेशबन्धकानामन्तरं तु 'अगुरुपएसव्व' इति, 'सूचनात्सूत्रम्' इति न्यायात् स्वप्रायोग्याणां षडादिकर्मणामनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयकान्तरवद् भवति । इति संक्षेपार्थः । विस्तरस्तु अस्मिन्नेव द्वारे 'जहि सव्वद्धा कालो' इत्यादिषु 'आउस्स बंधगाणं' इत्यादिषु च गाथासु कृतात् षडादिकर्मणामनुत्कृष्टप्रदेशबन्धकानामन्तरनिरूपणादवगन्तव्यम् । तदेवमष्टकर्मणां जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां चान्तरं निरूपितम् ॥ ४६३ ॥ 卐

। इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे (नानाजीवविषयकं) चतुर्दशमन्तरद्वारं समाप्तम् ॥

卐 अन्तरप्रदर्शकयन्त्रकार्थं पश्यन्तु ४०९ तमं पृष्ठम् ।

## पञ्चदशं भावद्वारम्

तदेवं नानाजीवविषयकमन्तरद्वारं प्ररूपितम् । ननूत्कृष्टादिप्रदेशबन्धकाः सकषाया जीवा औदयिकादिपञ्चभावान्तः कदाचिदौदयिकपारिणमिकक्षायोपशमिकरूपेषु त्रिषु भावेषु वर्तन्ते, कदाचिदौदयिकपरिणामिकक्षायिकक्षायोपशममिकरूपेषु चतुर्षु भावेषु वर्तन्ते, तत्रोत्कृष्टादिचतुर्विधप्रदेशबन्धः केन भावेन भवतीत्याशङ्कां मनसि निधाय तदपनोदाय सम्प्रति क्रमप्राप्तं पञ्चदशं भावद्वारं निरूपयितुमना अष्टविधकर्मचतुष्प्रकारप्रदेशबन्धकारणीभूतं भावमोघत आदेशतश्चैकयैव गाथया प्रतिपाद्य समाप्तिं गमयति—

अट्ठण्ह पएसाणं चउव्विहाणं वि होइ भावेणं ।
ओदइएणं बंधो एमेव हवेज्ज सव्वासुं ॥४६४॥

(प्रे०) 'अट्ठण्ह' इत्यादिशब्दार्थः सुगमः । इदमत्र हृदयम्—पूर्वम् 'एगपएसोगाढं' इत्यत्र जीवो मिथ्यात्वाविरतिकषाययोगैः कर्म बध्नातीत्युक्तम् । ते मिथ्यात्वादिबन्धहेतवश्चौदयिकभावजन्या एव । तथाहि—मिथ्यात्वं मिथ्यात्वमोहनीयाभिधकर्मोदयेन भवति । अविरतिरप्रत्याख्यानावरणकषायोदयेन भवितुमर्हति । क्रोधादयः कषायाश्च कषायमोहनीयकर्मोदयेन प्रवर्तन्ते । मनःप्रमुखयोगव्यापारोऽपि योगजनककर्मोदयजन्य एव । इत्येवमत्राष्टानामपि कर्मणां चतुर्विधप्रदेशबन्ध औदयिकभावेनैव भवतीति समीचीनमेवोक्तम् 'अट्ठण्ह' इत्यादि ॥४६४॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे प्रथमाधिकारे पञ्चदशं भावद्वारं समाप्तम् ॥



## ॥ षोडशमल्पबहुत्वद्वारम् ॥

तदेवं भावद्वारं चिन्तितम् । इदानीं क्रमिकं षोडशमल्पबहुत्वद्वारं प्रचिक्रंसुरादौ तावदोघत उत्कृष्टप्रदेशबन्धे बद्धानां कर्मदलिकानामल्पबहुत्वमाह—

> जेट्ठो पएसबंधो थोवो आउस्स तो कमाऽब्भहिओ ।
> मोहस्स वीसियाणं तिण्हं घाईण वेअस्स ॥४६५॥

(प्रे०) अत्रेदमनुसन्धेयं शेमुषीधनैः—अस्मिन् द्वारे विवक्षितोत्कृष्टादिप्रदेशबन्धोऽष्टकर्मणां मध्ये कस्मात् कर्मणः कस्य कर्मणः स्तोकोऽधिकोऽधिकतरादिको वा भवतीति निरूपयिष्यते । तत्र च यस्य कर्मणो विवक्षितोत्कृष्टादिप्रदेशबन्धे सत्यन्यकर्मापेक्षया यथा यथाऽल्पप्रकृतयो बध्यन्ते तथा तथा तस्य कर्मणो विवक्षितोत्कृष्टादिप्रदेशबन्धोऽन्यकर्मापेक्षयाऽधिकोऽधिकतरोऽधिकतमो वा भवति, भागहराणामल्पत्वाद् । यस्य कर्मणो विवक्षितोत्कृष्टादिप्रदेशबन्धे सत्यन्यकर्मापेक्षया समानाः प्रकृतयो बध्यन्ते तस्य कर्मणो विवक्षितोत्कृष्टादिप्रदेशबन्धोऽन्यकर्मापेक्षया स्वस्थित्यनुसारमधिकादितया परिणमति । किन्तु सर्वत्र वेदनीयस्य विवक्षितोत्कृष्टादिप्रदेशबन्धोऽन्यसर्वकर्मापेक्षयाऽधिकतया परिणमति । तद्धि तथास्वाभाव्यात् पूर्वं दलविभाजनद्वारे प्रदर्शितदृष्टान्तेन सैवं प्रभूतदलिकं भवति तदैव स्वफलभूतं सुखं दुःखं वा स्फुटतयाऽनुभावयितुं प्रभविष्णु, नान्यथा । एनामेव सिद्धान्तावलिमाश्रित्याह—'जेट्ठो पएसबंधो थोवो आउस्स' इति, आयुष उत्कृष्टप्रदेशबन्धोऽन्यसर्वकर्मापेक्षया स्तोकतया परिणमति । अन्यकर्मणामुत्कृष्टप्रदेशबन्धकाले बद्धदलिकमध्याद्यावन्ति कर्मद्रव्याणि प्रत्येकं कर्मणः स्वतया परिणमन्ति तदपेक्षयाऽऽयुष उत्कृष्टप्रदेशबन्धकाले बद्धदलिकमध्याद्यावन्ति कर्मद्रव्याणि आयुष्कतया परिणमन्ति तानि स्तोकानीत्यर्थः, आयुर्बन्धकालेऽष्टानामपि कर्मणां बध्यमानत्वेन भागहराणां बहुत्वाद् । 'तो कम्माऽब्भहियो' इत्यादि, तस्माद्—आयुष उत्कृष्टप्रदेशबन्धाद्यथाक्रमं मोहनीयस्य, 'वीसियाणं' इति, नामगोत्रयोः, विंशतिकोटिकोटिसागरोपमस्थितिकयोर्नामगोत्रकर्मणोः, 'वीसग' इति नामगोत्रकर्मणोः संज्ञा, त्रयाणां ज्ञानावरणदर्शनावरणान्तरायलक्षणानां घातिकर्मणां, वेदनीयस्य चोत्कृष्टप्रदेशबन्धो विशेषाधिको भवति । अत्रेयं भावना— आयुष उत्कृष्टप्रदेशबन्धे सति बद्धकर्मद्रव्येभ्यो यावन्ति कर्मद्रव्याणि आयुष्कतया परिणमन्ति तदपेक्षया मोहनीयोत्कृष्टप्रदेशबन्धे सति मोहनीयस्य विभागो विशेषाधिकतया परिणमति, मोहनीयोत्कृष्टप्रदेशबन्धकाले सप्तकर्मणां बध्यमानत्वेन भागहराणामल्पत्वाद् । नामगोत्रकर्मणोरुत्कृष्टप्रदेशबन्धकाले षट्प्रकृतयो बध्यन्त इति मोहनीयोत्कृष्टप्रदेशबन्धापेक्षया नामगोत्रयोरुत्कृष्टप्रदेशबन्धो विशेषाधिकः परस्परं च तुल्यो भवति । ज्ञानावरणीयादित्रिघातिकर्मणामुत्कृष्टप्रदेशबन्धकालेऽपि षट् प्रकृतयो बध्यन्ते तथापि नामगोत्रकर्मणोरोघोत्कृष्टस्थित्यपेक्षया ज्ञानावरणीयादित्रिघातिकर्मणां स्थितेर्बृहत्तरत्वादुत्कृष्टप्रदेशबन्ध-

काले बद्धदलिकमध्यादाधान् विभागो नामगोत्रकर्मतया परिणमति ततो ज्ञानावरणीयादित्रिघातिकर्मतया विशेषाधिकः परस्परं च तुल्यः परिणमति । ततो वेदनीयतया विशेषाधिकः परिणमति॥४६५॥

तदेवमोघत उत्कृष्टप्रदेशबन्धस्याल्पबहुत्वमुक्तम् । सम्प्रति तदेवादेशतो विवक्षुरादौ यासु मार्गणासु तदोघवत् ताः सार्धगाथया निरूपयति—

तिमणुसदुपणिंदियतसपणमणवयकायउरलजोगेसु ।
लोहे चउणाणेसु संयमतिदरिसणसुक्कासु ॥४६६॥
भविसम्मखाइएसु य सण्णिआहारगेसु ओघव्व ।

(प्रे०') तिमणुस' इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियलक्षणद्विपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसरूपद्वित्रसयोः, पञ्चमनःपञ्चवचनयोगेषु, काययोगौघे, औदारिककाययोगे, लोभकषाये, मतिश्रुतावधिमनःपर्यवरूपचतुर्ज्ञानेषु, संयमौघे, दर्शनत्रिके, शुक्ललेश्यायां, भव्ये, सम्यक्त्वौघक्षायिकसम्यक्त्वयोः, संज्ञिनि आहारकेषु चेति चतुस्त्रिंशद्मार्गणासु, 'ओघव्व' इति, अष्टकर्मणामुत्कृष्टप्रदेशबन्धस्याल्पबहुत्वमोघवद् भवतीति सोपस्कारं व्याख्येयम् । तद्यथा–आयुष उत्कृष्टप्रदेशबन्धः सर्वस्तोको भवति । ततो नामगोत्रयोर्विशेषाधिकः परस्परं च तुल्यः । ततो ज्ञानावरणीयादित्रिघातिकर्मणां विशेषाधिकः परस्परं च तुल्यः । ततो वेदनीयस्य विशेषाधिकः । अत्र भावनाऽनन्तरगाथोक्तरीत्या विधेया ॥४६६॥

इदानीं यासु मार्गणासु श्रेणेरायुर्बन्धस्य चाभावस्तासु वैक्रियमिश्रादिचतुर्मार्गणासूत्कृष्टप्रदेशबन्धस्याल्पबहुत्वं सार्धवृत्तेन प्रतिपादयति—

वेउव्वमीसकम्मणमीसाणाहारगेसु च ॥४६७॥
थोवोऽत्थि वीसियाणं पयडीणेत्तो हवेज्ज अब्महियो ।
घाईण तओ हवए मोहस्स तओऽत्थि वेअस्स ॥४६८॥

(प्रे०) 'वेउव्वमीस' इत्यादि, वैक्रियमिश्रकाये, कार्मणकाये, मिश्रे अनाहारके चेति चतुर्मार्गणासु नामगोत्रप्रकृत्योरुत्कृष्टप्रदेशबन्धः सर्वस्तोकः परस्परं च तुल्यो भवति । ततो ज्ञानावरणीयादित्रिघातिकर्मणां विशेषाधिकः परस्परं च तुल्यो भवति । ततो मोहनीयस्य विशेषाधिको भवति । ततो वेदनीयस्य विशेषाधिको भवति । इदमत्र हृदयम्–एतासु मार्गणास्वायुषो बन्धाभावात् सप्तप्रकृतीनामेवाल्पबहुत्वं वक्तव्यम् । तत्रापि श्रेण्यभावेन षड्विधप्रकृतिबन्धाभावात् सप्तानामपि कर्मणां युगपदुत्कृष्टप्रदेशबन्धो भवतीति न्यूनाधिकप्रकृतिबन्धस्याभावादत्र सप्तानामपि कर्मणामुत्कृष्टप्रदेशबन्धस्याल्पबहुत्वं स्वस्थित्यनुसारमेव विभावनीयं भवति । ततः सप्तकर्ममध्ये नामगोत्राभिधकर्मणोः स्थितेर्विंशतिकोटिकोटिसागरोपमप्रमाणत्वेन सर्वस्तोकत्वादुत्कृष्टप्रदेशबन्धः सर्वस्तोको

भवति । ततो ज्ञानावरणीयादित्रिघातिकर्मणां स्थितेस्त्रिंशत्कोटीकोटिसागरोपमप्रमाणत्वेन विशेषाधिकत्वादुत्कृष्टप्रदेशबन्धो विशेषाधिको भवति । ततो मोहनीयस्य स्थितेर्विशेषाधिकत्वादुत्कृष्टप्रदेशबन्धो विशेषाधिको भवति । ततः प्रागुक्तहेतुना वेदनीयस्य विशेषाधिको भवति ।

ननु मोहनीयस्य स्थितिः सप्ततिकोटिकोटिसागरोपमप्रमाणत्वाद् ज्ञानावरणीयादित्रिघातिकर्मणां त्रिंशत्कोटिकोटिसागरोपमप्रमाणस्थित्यपेक्षया साधिकद्विगुणा भवतीति ज्ञानावरणीयादित्रिघातिकर्मापेक्षया मोहनीयस्योत्कृष्टप्रदेशबन्धः साधिकद्विगुण इत्यनुक्त्वा विशेषाधिकः कथमुच्यते? इति चेद्, न अभिप्रायापरिज्ञानाद् । अत्र हि चारित्रमोहनीयस्य स्थितिर्विवक्षिता । दर्शनमोहनीयस्य स्थितेः सप्ततिकोटीकोटिसागरोपमप्रमाणत्वेऽपि तस्य सर्वघातित्वात् बद्धदलिकमध्यादनन्ततमो भाग एव स्वतया परिणमतीति तस्य स्थितिरत्र न विवक्षिता । चारित्रमोहनीयस्य स्थितिश्च चत्वारिंशत्कोटीकोटिसागरोपमप्रमाणा । सा तु त्रिंशत्कोटिकोटिसागरोपमप्रमाणस्थित्यपेक्षया विशेषाधिकैवेति न कश्चिद् दोषः ॥४६७।४६८॥

साम्प्रतमवेदोपशमसम्यक्त्वयोरुत्कृष्टप्रदेशबन्धस्याल्पबहुत्वमाह–

**गयवेअउवसमेसुं थोवो मोहस्स ताउ अब्भहियो ।**
**कमसोऽत्थि वीसियाणं तिसेसघाईण वेअस्स ॥४६९॥**

(प्रे०) '**गयवेअ**' इत्यादि, अवेदोपशमसम्यक्त्वयोर्मोहनीयस्योत्कृष्टप्रदेशबन्धः सर्वस्तोकः । ततो यथाक्रमं नामगोत्रयोः, शेषज्ञानावरणीयादित्रिघातिकर्मणां, वेदनीयस्य च विशेषाधिको भवति । एतयोर्मार्गणयोरायुषो बन्धाऽभावात् सप्तकर्मणामेवोत्कृष्टप्रदेशबन्धस्याल्पबहुत्वं चिन्तितम् । अत्र भावनापथ ओघवज्ज्ञातव्यः ॥४६९॥ सम्प्रति सूक्ष्मसम्पराये प्रकृताल्पबहुत्वमाह–

**सुहमम्मि वीसियाणं सव्वत्थोवो तओ कमा णेयो ।**
**अब्भहियो घाईणं ताहिन्तो वेअणीअस्स ॥४७०॥**

(प्रे०) '**सुहमम्मि**' इत्यादि, सूक्ष्मसम्परायसंयमे नामगोत्रयोरुत्कृष्टप्रदेशबन्धः सर्वस्तोको भवति । ततो ज्ञानावरणीयादित्रिघातिकर्मणां विशेषाधिको ज्ञातव्यः । ततो वेदनीयस्य विशेषाधिको ज्ञातव्यः । सूक्ष्मसम्पराये मोहायुषोर्बन्धाभावात् षट्कर्मणामेवोत्कृष्टप्रदेशबन्धस्याल्पबहुत्वं निरूपितम् । अत्र भावना षण्णामपि कर्मणां युगपदुत्कृष्टप्रदेशबन्धस्य सत्त्वान्न्यूनाधिकप्रकृतिबन्धस्याभावात्स्वस्थित्यनुसारं कर्तव्या ॥४७०॥

अथौदारिकमिश्रमार्गणायामाह–

**आउस्स उरलमीसे थोवो तो वीसियाणऽसंखगुणो ।**
**तत्तो विसेसअहियो अत्थि कमा घाइमोहवेआणं ॥४७१॥(गीतिः)**

(प्रे०) "आउस्स" इत्यादि, औदारिकमिश्रकाययोगलक्षणमार्गणास्थाने आयुःकर्मलक्षण-मूलप्रकृतेः प्रदेशबन्धः स्तोको भवति, कुतः ? प्रस्तुतमार्गणायां लब्ध्यपर्याप्तजीवानामेवाऽऽयुर्बन्ध-भावात्तेषां करणापर्याप्तजीवापेक्षयाऽसंख्यगुणहीनयोगसद्भावाच्च । 'तो वीसियाण' इत्यादि, विंशतिकयोर्नाम-गोत्रकर्मणोः प्रदेशबन्धोऽसंख्यगुणो भवति, 'संखगुणा' इत्यत्र पूर्वाकारस्य लोपः । "तत्तो" इत्यादि, ज्ञानावरण-दर्शनावरणाऽन्तरायकर्मणां प्रत्येकं विशेषाधिकः प्रदेशबन्धः, परस्परन्तु तेषामसौ तुल्य एव, ततोऽपि मोहनीयस्य विशेषाधिकस्ततो पुनर्वेदनीयस्य विशेषा-धिकः । तत्र द्वितीयपदेऽसंख्यगुणो बन्धः करणापर्याप्तस्वामिकत्वात् , तदुत्तरत्रयाणां विशेषा-धिक्यं पूर्ववद् भावनीयम् ॥४७१॥

इदानीं शेषाऽशेषमार्गणासूत्कृष्टप्रदेशबन्धस्याल्पबहुत्वं चिन्तयति—

सेसासु भवे थोवो आउस्स तओ कमा विसेसहिओ ।
मुण वीसियाण घाईण तिण्ह मोहस्स वेअस्स ॥४८२॥

(प्रे०) "सेसासु" इत्यादि, प्रोक्तव्यतिरिक्तास्वष्टाविंशत्यधिकशतमार्गणासु आयुरुत्कृष्ट-प्रदेशबन्धः सर्वस्तोको भवति । ततोऽनुक्रमेण नामगोत्रयोः, ज्ञानावरणीयादित्रिघातिकर्मणां, मोह-नीयस्य वेदनीयस्य च विशेषाधिको जानीहि । अत्र भावना सुगमा । नवरं शेषासु मार्गणासु श्रेण्यभावेन षड्विधबन्धस्याभावादायुरुत्कृष्टप्रदेशबन्धान्नामगोत्रयोरेवोत्कृष्टप्रदेशबन्धो विशेषाधिको भवति, न तु मोहनीयस्येत्यालक्षितव्यं प्रज्ञाशालिभिः ।

शेषमार्गणा नामत इमाः—निखिलनरकभेदाः, समस्ततिर्यग्भेदाः, अपर्याप्तमनुष्यः सुरामर्त्य-भेदाश्चेति चतुश्चत्वारिंशद् गतिभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ विना सप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना चत्वारिंशत्कायभेदाः, वैक्रियाहारकतन्मिश्रलक्षणयोगभेदाः, वेदत्रिकं, क्रोधमानमायाकषायाः, अज्ञानत्रिकं, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः, असं-यमः, शुक्लामन्तरा पञ्चलेश्याः, अभव्यः, क्षायोपशमिकसास्वादनमिथ्यात्वानि, असंज्ञी च ॥४७२॥

तदेवमष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धस्याल्पबहुत्वं प्रदर्शितम् । अथाष्टकर्मणां जघन्य-प्रदेशबन्धाल्पबहुत्वं निजिगदिषुरादौ तावदोघवक्तव्यतामाह—

हस्सोऽत्थि वीसियाणऽप्पो तोऽब्भहियो कमाऽत्थि घाईणं ।
मोहस्स वेअणीयस्स तो असंखियगुणोऽत्थि आउस्स ॥४७३॥ (गीतिः)

(प्रे) 'हस्सोऽत्थि' इत्यादि, अत्र 'प्रदेशबन्धः' इत्यनुवर्तते, नामगोत्रयोर्जघन्यप्रदेशबन्धः सर्व-स्तोको भवति । ततः क्रमशो ज्ञानावरणीयादित्रिघातिकर्मणां, मोहनीयस्य वेदनीयस्य च विशेषा-धिको भवति । तत आयुषोऽसंख्यगुणो भवति ।

इयमत्र भावना—अत्र सप्तकर्मणां जघन्यप्रदेशबन्धो युगपदेव भवतीति न्यूनाधिकप्रकृतिबन्धस्यासत्त्वात् तेषामल्पबहुत्वं स्वस्थित्यनुसारं विभावनीयं, नवरमायुषि विशेषः । तद्यथा—ज्ञानावरणीयादिसप्तकर्मणां जघन्यप्रदेशबन्धो भवप्रथमसमये भवत्यायुषस्तु भवतृतीयभागाद्यक्षणे भवति । अपर्याप्तावस्थायां भवप्रथमसमयादारभ्य यथोत्तरसमयेषु योगस्यासंख्यगुणा वृद्धिर्भवतीति भवप्रथमसमयापेक्षया भवतृतीयभागप्रथमसमये योगोऽसंख्यगुणो भवति । ततो भवप्रथमसमयभाविजघन्यप्रदेशबन्धे यावन्ति कर्मद्रव्याणि बध्यन्ते तदपेक्षया भवतृतीयभागाद्यक्षणभाविजघन्यप्रदेशबन्धेऽसंख्यगुणानि बध्यन्ते । तत आयुषो जघन्यप्रदेशबन्धकालेऽष्टप्रकृतीनां बन्धसत्त्वात्सप्तकर्मजघन्यप्रदेशबन्धत एकभागहरस्याधिकत्वेऽपि, न केवलं सप्तविधजघन्यप्रदेशबन्धकाले प्रत्येकं कर्मणः स्वतया यावन्ति कर्मद्रव्याणि परिणमन्ति तदपेक्षया, अपि तु सप्तविधजघन्यप्रदेशबन्धकाले समस्तानि यानि कर्मद्रव्याणि बद्धानि तदपेक्षयाऽपि, आयुषो जघन्यप्रदेशबन्धकाले आयुष्कतयाऽसंख्यगुणानि कर्मदलिकानि परिणमन्ति ।

तदसत्कल्पनया परिभाव्यते—अत्रासत्कल्पनया द्वाभ्यामारभ्य शतं यावदसंख्यातराशिः तदूर्ध्वं चानन्तराशिः कल्प्यते । भवप्रथमसमये जघन्यप्रदेशबन्धेऽसत्कल्पनया चतुःशतोत्तरषट्सहस्राणि कर्मद्रव्याणि बद्धानि । तत्र सप्तकर्मणां विभाग एवम्—नामगोत्रयोः प्रत्येकमष्टशतानि ज्ञानावरणीयादित्रिघातिकर्मणां प्रत्येकं नवशतानि । मोहनीयस्य सहस्रम् । वेदनीयस्यैकशतोत्तरसहस्रम् । कर्मद्रव्याणि परिणतानीति सर्वत्र योजनीयम् । अथ भवतृतीयभागप्रथमसमयभाव्यायुःकर्मजघन्यप्रदेशबन्धे चतुःशतोत्तरषट्सहस्रापेक्षयाऽसंख्यगुणानि पञ्चसप्ततिसहस्रोत्तरद्विलक्षप्रमाणानि कर्मद्रव्याणि बद्धानि । तत्राष्टकर्मणां विभाग एवम्—नामगोत्रयोः प्रत्येकं चतुस्त्रिंशत्सहस्राणि कर्मद्रव्याणि स्वतया परिणतानि । ज्ञानावरणीयादित्रिघातिकर्मणां प्रत्येकं पञ्चशतोत्तरचतुस्त्रिंशत्सहस्राणि । मोहनीयस्य पञ्चत्रिंशत्सहस्राणि । वेदनीयस्य पञ्चशतोत्तरपञ्चत्रिंशत्सहस्राणि । आयुषस्त्रयस्त्रिंशत्सहस्राणि । अत्रायुष्कतया परिणतानि त्रयस्त्रिंशत्सहस्राणि कर्मद्रव्याणि भवप्रथमसमयभाविजघन्यप्रदेशबन्धे वेदनीयतया परिणतेभ्य एकशताधिकसहस्रकर्मद्रव्येभ्योऽसत्कल्पनयाऽसंख्येयगुणानि भवन्त्येव, परं भवप्रथमसमये बद्धेभ्यः सर्वदलिकेभ्यश्चतुःशतोत्तरषट्सहस्रप्रमाणेभ्योऽप्यसंख्यगुणानि भवन्ति ॥४७३॥

सम्प्रति मार्गणास्वभिधित्सुरादौ तावद् गाथाद्विकेन यासु मार्गणासु सप्तप्रकृतीनां जघन्यप्रदेशबन्धस्वामी घोलणयोगवानष्टविधबन्धको भवति तासु आहारकद्विके च जघन्यप्रदेशबन्धाल्पबहुत्वमाह—

पणमणवयजोगेसुं आहारदुगमणपज्जवेसु तहा ।
संयमसामइएसुं छेए परिहारदेसेसुं ॥ ४७४ ॥

आउस्स लहू थोवो तोऽब्भहियो वीसियाण बोद्धव्वो ।
तो तीसियाण तत्तो मोहस्स तओऽत्थि वेअस्स ॥४७५॥

(प्रे०) 'पणमण' इत्यादि, पञ्चमनःपञ्चवचनयोगेषु, आहारकद्विके, मनःपर्यवज्ञाने, संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमेष्विति अष्टादशमार्गणासु, (द्वितीयगाथावृत्तिः) 'आउस्स' इत्यादि, आयुषो जघन्यप्रदेशबन्धः सर्वस्तोको भवति । ततो नामगोत्रयोरभ्यधिको ज्ञातव्यः । "तो तीसियाण" इति, त्रिंशत्कोटिकोटीसागरोपमस्थितिकानां ज्ञानावरणीयदर्शनावरणीयान्तरायाणां 'तीसग' इति संज्ञा, ततो ज्ञानावरणीयादित्रिघातिकर्मणां विशेषाधिको भवतीत्यर्थः । ततो मोहनीयस्य विशेषाधिकः । ततो वेदनीयस्य विशेषाधिकः । इयमत्र भावना-अत्राष्टानामपि कर्मणां जघन्यप्रदेशबन्धोऽष्टविधबन्धकघोलणयोगिनो जीवस्य भवति, अतोऽष्टानामपि कर्मणां युगपदेव जघन्यप्रदेशबन्धो भवतीति स्वस्थित्यनुसारमेवाल्पबहुत्वस्य चिन्तनीयत्वाद्यथोक्तमल्पबहुत्वं घटां याति ॥ ४७४।४७५ ॥

सम्प्रति सप्तकर्मबन्धिनीषु वैक्रियमिश्रादिषण्मार्गणासु जघन्यप्रदेशबन्धस्याल्पबहुत्वं प्रतिपादयति—

वेउव्वमीसकम्मणअवेअमीसुवसमेसुणाहारे ।
थोवोऽत्थि वीसियाणं एत्तो ऊड्ढं मणव्व भवे ॥ ४७६ ॥

(प्रे०) 'वेउव्वमीस' इत्यादि,-वैक्रियमिश्रादिषण्मार्गणासु नामगोत्रयोर्जघन्यप्रदेशबन्धः सर्वस्तोकः । 'एत्तो ऊड्ढं मणव्व भवे' इति, इत ऊर्ध्वमनन्तरगाथायां मनोयोगमार्गणायां यथोक्तं तथा ज्ञातव्यम् । तच्च सुगमम् । अत्र हेतुस्तु सप्तानामपि कर्मणां युगपदेव जघन्यप्रदेशबन्धसत्त्वात् स्वस्थित्यनुसारमल्पबहुत्वं चिन्त्यं भवतीति ॥ ४७६ ॥

साम्प्रतं विभङ्गज्ञाने प्रकृताल्पबहुत्वं प्रतिपादयन्नाह—

ओघव्व विभंगे उअ हस्सो आउस्स होइ सव्वप्पो ।
ताउ कमाऽब्भहियो वीसियतीसियमोहवेआणं ॥४७७॥

(प्रे०) "ओघव्व" इत्यादि, विभङ्गज्ञाने जघन्यप्रदेशबन्धस्याल्पबहुत्वम् 'ओघवद्' भवति । ओघतो जघन्यप्रदेशबन्धः भवप्रथमसमये भवति, अत्रापि जघन्यप्रदेशबन्धो भवप्रथमसमय एव भवति, इत्युभयत्र जघन्यप्रदेशबन्धकालस्य साम्यादत्रौघवदित्यतिदिष्टम् । अत्र भावनाऽप्योघवद् विधेया । केषाञ्चिन्मतेऽपर्याप्तावस्थायां विभङ्गज्ञानस्यासत्त्वाद् निरुक्तमार्गणायां परावर्तमानयोगे जघन्यप्रदेशबन्धो भवतीत्युक्ताल्पबहुत्वस्यासम्भवादाह-'उअ' इत्यादि, अथवा विभङ्गज्ञाने जघन्यप्रदेशबन्ध आयुषः सर्वस्तोको भवति, ततोऽनुक्रमेण नामगोत्रयोः, ज्ञानावरणीयदर्शनावरणीयान्तरा-

याणां, मोहनीयस्य वेदनीयस्य च विशेषाधिको भवति। अत्र भावना 'पणमणवयजोगेसु' इत्यादिगाथायां पञ्चमनोयोगादिषु यथा कृता तथा विधेया ॥४७७॥

इदानीं सूक्ष्मसम्पराये शेषासु मार्गणासु च जघन्यप्रदेशबन्धस्याल्पबहुत्वं कथयन्नाह—

सुहमम्मि वीसियाणं थोवो ताउ अहियो तिघाईणं।
तत्तो वेअस्स भवे ओघव्व हवेज्ज सेसासुं ॥४७८॥

(प्रे०) "सुहमम्मि" इत्यादि, सूक्ष्मसम्पराये नामगोत्रयोर्जघन्यप्रदेशबन्धः सर्वस्तोकः परस्परं च तुल्यः। ततो ज्ञानावरणीयादित्रिघातिकर्मणां विशेषाधिकः परस्परं च तुल्यः। ततो वेदनीयस्य विशेषाधिकः। अत्र मोहनीयायुषोर्बन्धाभावात् ज्ञानावरणीयादिषट्कर्मसु स्वस्थित्यनुसारेणाल्पबहुत्वं चिन्तितम्। "ओघव्व हवेज्ज सेसासु" इति, निगदितव्यतिरिक्तासु चतुश्चत्वारिंशत्शतमार्गणासु जघन्यप्रदेशबन्धस्याल्पबहुत्वमोघवद् भवति। तद्यथा—नामगोत्रयोर्जघन्यप्रदेशबन्धः सर्वस्तोकः परस्परं च तुल्यो भवति। ततो ज्ञानावरणीयादित्रिघातिकर्मणां विशेषाधिकः परस्परं च तुल्यः। ततो मोहनीयस्य विशेषाधिकः। ततो वेदनीयस्य विशेषाधिकः। तत आयुषोऽसंख्यगुणो भवति। अत्र भावना सामान्यवक्तव्यतायां प्रदर्शितदिशा कर्तव्या, नवरमयं विशेषः-नरकगत्यादिमार्गणासु यत्र लब्ध्यपर्याप्तजीवानामभावस्तत्रायुषो जघन्यप्रदेशबन्धस्यासंख्यगुणत्वे को हेतुरिति चेद्, उच्यते, भवप्रथमसमयस्थयोग्यतः करणपर्याप्तावस्थायां वर्तमानस्य जीवस्य जघन्ययोगस्यासंख्यातगुणत्वादिति। शेषमार्गणा इमाः—सर्वगतीन्द्रियकायमार्गणाः, काययोगौघौदारिकद्विकवैक्रियययोगभेदाः, वेदत्रिकं, कषायचतुष्कं, त्रिज्ञानानि, मतिश्रुताज्ञाने, असंयमः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, सम्यक्त्वौघक्षायिकवेदकसास्वादनमिथ्यात्वानि, संज्ञी, असंज्ञी आहारकश्च ॥४७८॥ तदेवं बद्धदलिकमाश्रित्याल्पबहुत्वं चिन्तितम्। सम्प्रति बन्धकजीवानाश्रित्याल्पबहुत्वप्ररूपणां प्रारिप्सुराह—

अट्ठण्ह अणंतगुणा अणुरुपएसस्स बंधगा णेया।
जेट्ठपएसा एवं अत्थि तिरियकायजोगेसुं ॥४७९॥
ओरालियदुगकम्मणणपुंसगेसुं कसायचउगम्मि।
अण्णाणदुगे अयते अचक्खुअपसत्थलेसासुं ॥४८०॥
भवियेयरमिच्छेसुं असण्णिआहारेयरेसु सत्तण्हं।

(प्रे०) 'अट्ठण्ह' इत्यादि, अष्टकर्मणामनुत्कृष्टप्रदेशबन्धका अनन्तगुणा ज्ञातव्याः, केभ्यः? इत्याह–'जेट्ठपएसा' इति, पदैकदेशे पदसमुदायोपचारादुत्कृष्टप्रदेशबन्धकात्, जातावेकवचनादुत्कृष्टप्रदेशबन्धकेभ्य इत्यर्थः। इयमत्र भावना–ज्ञानावरणीयादिषट्कर्मणामुत्कृष्टप्रदेशबन्धकाः सूक्ष्मसम्प-

रायस्थाः जीवाः, ते च संख्याता एव, मोहनीयायुर्वर्जोत्कृष्टप्रदेशबन्धकाः संज्ञिजीवाः, सर्वेऽपि संज्ञि-जीवाः प्रतरासंख्येयतमभागमात्रा एवेति परिमाणद्वारे निरूपितम् । अष्टानामपि कर्मणामनुत्कृष्टप्रदेश-बन्धका निगोदजीवा अपि भवन्ति, ते चानन्ताः । अत उत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धका अनन्तगुणा भवन्ति । अत एव भागद्वारेऽष्टकर्मणामुत्कृष्टप्रदेशबन्धका जीवाः सर्वजीवानामनन्ततमे भागे प्रदर्शिताः । 'अणुक्कपएसस्स बंधगा जेट्ठपएसा' इति सप्तमगाथां यावदनुवर्तनीयम् ।

अथ सप्तकर्माण्याश्रित्यादेशतो वक्तुकामो यासु मार्गणास्वोघवदल्पबहुत्वं तास्वाह–'एवं' इत्यादि, तिर्यगोघे, काययोगौघौदारिकद्विककार्मणकाययोगेषु, नपुंसकवेदे, कषायचतुष्के, मतिश्रुताज्ञानयोः, असंयमे, अचक्षुर्दर्शने, अप्रशस्तत्रिलेश्यासु, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिनि, आहारकानाहा-रकयोश्चेति त्रयोविंशतिमार्गणासु प्रकृताल्पबहुत्वमेवम्–ओघवद् ज्ञातव्यम् । अत्रेयं भावना–काययोगौघादिकतिपयमार्गणासु षट्कर्मणां संख्याता मोहनीयस्य चासंख्याता उत्कृष्टप्रदेशबन्धका भवन्ति । तिर्यगोघादिमार्गणासु सप्तानामपि कर्मणामुत्कृष्टप्रदेशबन्धका असंख्याताः । तिर्यगोघादि-सर्वमार्गणासु सप्तकर्मणामनुत्कृष्टप्रदेशबन्धका निगोदजीवाः । अतस्तिर्यगोघादिमार्गणासु सप्तकर्मणा-मुत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धका अनन्तगुणाः । अत एव भागद्वारे तासु सप्तकर्मणामुत्कृष्ट-प्रदेशबन्धका अनन्तभागे प्रतिपादिताः ॥४७९।४८०॥

इदानीं सार्धवृत्तेन सप्तकर्मणामुत्कृष्टप्रदेशबन्धकेभ्यः सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः कासु मार्गणासु संख्यातगुणाः कासु चासंख्यातगुणा भवन्तीति निरूपयन्नाह—

दुमणुयसव्वत्थेसुं आहारदुगे अवेअम्मि ॥४८१॥
मणणाणसंयमेसुं समइअछेअपरिहारसुहमेसुं ।
संखेज्जगुणा णेया असंखियगुणाऽत्थि सेसासुं ॥४८२॥

(प्रे०) 'दुमणुय' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, सर्वार्थसिद्धे, आहारक-द्विके, अवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंय-मेष्विति द्वादशमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकेभ्यः सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः संख्यातगुणा ज्ञातव्याः । इयमत्र भावना–एतासु मार्गणासु सर्वे जीवा अपि संख्याता एव । तत्राप्युत्कृष्टप्रदेशबन्धकास्तु संख्याततमे भागे वर्तन्ते । अत उत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेश-बन्धकाः संख्यातगुणा भवन्तीति सुतरां सिद्ध्यति ।

'असंखियगुणा' इत्यादि, उक्तव्यतिरिक्तासु पञ्चत्रिंशदधिकशतमार्गणासु सप्तकर्मणामुत्कृष्ट-प्रदेशबन्धकेभ्यः सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकाः "असंख्यातगुणाः" भवन्ति । इयमत्र भावना–शेषमार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका असंख्याततमे भागे भवन्तीति प्रथमाधिकारे भागप्ररूप-णायां निरूपितम्, अतोऽत्रोत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धका असंख्यातगुणाः सिद्ध-यन्ति । शेषमार्गणा नामत इमाः–निखिलनरकभेदाः, तिर्यगोघं विना शेषतिर्यग्गतिभेदाः,

मनुष्यौघापर्याप्तमनुष्यौ, सर्वार्थसिद्धं विना सर्वदेवगतिभेदाः, अखिलेन्द्रियभेदाः, सर्वकायमार्गणाः, पञ्चमनःपञ्चवचनवैक्रियवैक्रिमिश्रकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते समस्तसम्यक्त्वमार्गणाः, संज्ञी चेति ॥४८१।४८२॥

तदेवमादेशतः सप्तकर्माण्याश्रित्य प्रकृताल्पबहुत्वं चिन्तितम्। साम्प्रतं गाथात्रिकेणायुराश्रित्याह—

आउस्स तिरियकायगउरालदुगणपुमचउकसायेसुं ।
अण्णाणदुगे अयते अचक्खुअपसत्थलेसासुं ॥४८३॥
भवियेयरमिच्छेसुं अमणाहारेसु अत्थि ओघव्व ।
दुमणुयसव्वत्थेसुं आहारदुगाणताईसुं ॥४८४
मणणाणसंयमेसुं समइअछेअपरिहारसुकासुं ।
खइअम्मि य संखगुणा असंखियगुणाऽत्थि सेसासुं ॥४८५॥

(प्रे०) "आउस्स" इत्यादि, तिर्यगोघे, काययोगौघे, औदारिकद्विके, नपुंसकवेदे, कषायचतुष्के, मतिश्रुताज्ञानयोः, असंयमे, अचक्षुर्दर्शने, अशुभलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिन्याहारके चेत्येकविंशतिमार्गणासु आयुष उत्कृष्टप्रदेशबन्धकेभ्य आयुषोऽनुत्कृष्टप्रदेशबन्धकाः "ओघवद्=अनन्तगुणाः" भवन्ति, उत्कृष्टप्रदेशबन्धकानामसंख्यातत्वादनुत्कृष्टप्रदेशबन्धकानां चानन्तत्वात्। 'कायग' इत्यत्र काय एव कायक इति स्वार्थे कप्रत्ययः।

इदानीं कासु मार्गणास्वायुष उत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धकाः संख्यातगुणा इत्याह–'दुमणुय' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, आहारकद्विके, आनतादिसर्वार्थसिद्धपर्यन्तेष्वष्टादशदेवभेदेषु, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमेषु, शुक्ललेश्यायां क्षायिकसम्यक्त्वे चेति नवविंशतिमार्गणासु आयुष उत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धकाः "संख्यातगुणाः" भवन्ति। इयमत्र भावना–अत्र कासुचित् पर्याप्तमनुष्यादिमार्गणासु जीवा एव संख्याताः कासुचिच्चानतादिमार्गणासु जीवानामसंख्यातत्वेऽप्यायुर्बन्धकाः संख्याता एव। तत्राप्युत्कृष्टप्रदेशबन्धकास्तु संख्यातभागमात्रा एव। अत उत्कृष्टप्रदेशकेभ्योऽनुत्कृष्टप्रदेशबन्धकाः संख्यातगुणाः सिद्ध्यन्ति।

'असंखियगुणा' इत्यादि, शेषासु त्रयोदशाधिकशतमार्गणासु आयुष उत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धकाः "असंख्यातगुणाः" भवन्ति। इयमत्र भावना–प्रथमाधिकारे भागद्वारे शेषमार्गणास्वायुरुत्कृष्टप्रदेशबन्धका असंख्याततमे भागे भवन्तीति सविस्तरं साधितम्, अतोऽत्रायुष

उत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धका असंख्यातगुणाः सिद्धयन्ति । शेषमार्गणा इमाः–सर्वनरकगतिभेदाः, विना तिर्यगोघं चत्वारस्तिर्यग्भेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्मप्रमुखाष्टवैमानिकदेवभेदाः, समेन्द्रियभेदाः, निःशेषकायभेदाः, पञ्चमनःपञ्चवचनवैक्रियकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघवेदकमास्वादनानि संज्ञी चेति ॥४८३।४८४।४८५॥

तदेवमष्टकर्माण्याश्रित्यौघत आदेशतश्चोत्कृष्टप्रदेशबन्धकानामनुत्कृष्टप्रदेशबन्धकानां च परस्परमल्पबहुत्वं निरूपितम् । सम्प्रति जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च परस्परमल्पबहुत्वं वक्तुकाम आह–

अट्ठण्ह असंखगुणा अलहुपएसस्स लहुपएसाओ ।
दुमणुयसव्वत्थेसुं आहारदुगे अवेअम्मि ॥४८६॥
मणणाणसंयमेसुं समइअछेअपरिहारसुहमेसुं ।
सत्तण्हं संखगुणा असंखियगुणाऽत्थि सेसासुं ॥४८७॥

(प्रे०) आदावष्टकर्माण्याश्रित्यौघत आह–'अट्ठण्ह' इत्यादि, अष्टकर्मणामजघन्यप्रदेशस्य 'बन्धकाः' इति गम्यते, यद्वा प्रथमगाथातो 'मण्डुकप्लुतिन्यायेन' अनुवर्तते, असंख्यगुणा भवन्ति, केभ्यः ? इत्याह–लहुपएसाओ' इति, पदैकदेशेन पदसमुदायस्यापि गम्यमानत्वाज्जघन्यप्रदेशबन्धकात्, अत्रैकवचनस्य जातिनिमित्तकत्वाज्जघन्यप्रदेशबन्धकेभ्यः । इयमत्र भावना–प्रथमाधिकारे भागद्वारेऽष्टकर्मणां जघन्यप्रदेशबन्धका असंख्यातभागे भवन्तीति साधितम्, अतोऽत्राष्टकर्मणां जघन्यप्रदेशबन्धकेभ्योऽजघन्यप्रदेशबन्धका असंख्यातगुणाः सिद्धयन्ति ।

इदानीं सप्तकर्माण्याश्रित्यादेशतो विवक्षुराह–'दुमणुय' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, सर्वार्थसिद्धे, आहारकद्विके, अवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमेष्विति द्वादशमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्योऽजघन्यप्रदेशबन्धकाः संख्यातगुणा भवन्ति । भावना सुगमा । 'असंखियगुणा' इत्यादि, निगदितातिरिक्तासु अष्टपञ्चाशदुत्तरशतमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्योऽजघन्यप्रदेशबन्धका असंख्यातगुणा भवन्ति । अत्रेयं भावना-प्रथमाधिकारे भागद्वारे शेषमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धका असंख्यातभागे भवन्तीति प्रपञ्चतः साधितम्, अतोऽत्र सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्योऽजघन्यप्रदेशबन्धका असंख्यातगुणाः सिद्धा भवन्ति । तदेवमादेशतः सप्तकर्माण्याश्रित्य प्रकृताल्पबहुत्वं चिन्तितम् ॥४८६॥४८७॥

साम्प्रतं गाथाद्विकेनायुराश्रित्य प्रकृताल्पबहुत्वं चिन्तयति—

दुणराणताइगेसुं आहारदुगमणपज्जवेसु तहा ।
संयमसामइएसुं छेए परिहारसुक्कासुं ॥४८८॥
खइअम्मि य संखगुणा अलहुपएसस्स बंधगाउस्स ।
हस्सपएसा णेया असंखियगुणाऽत्थि सेसासुं ॥४८९॥

(प्रे०) 'दुणराणताइगेसु' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, आनताद्यष्टादशदेवभेदेषु, आहारकद्विके, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमेषु, शुक्ललेश्यायां क्षायिकसम्यक्त्वे चेत्येकान्नत्रिंशन्मार्गणासु आयुषो जघन्यप्रदेशबन्धकेभ्योऽजघन्यप्रदेशबन्धकाः संख्यातगुणा भवन्ति । अत्र भावनाऽऽप्यायुरुत्कृष्टानुत्कृष्टप्रदेशबन्धकानामल्पबहुत्वे यथा कृता तथा विधेया । "असंखियगुणा" इत्यादि, शेषासु चतुस्त्रिंशदधिकशतमार्गणासु आयुषो जघन्यप्रदेशबन्धकेभ्योऽजघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । अत्रेयं भावना—प्रथमाधिकारे भागद्वारे शेषासु मार्गणासु आयुषो जघन्यप्रदेशबन्धकाः सर्वजीवानामसंख्यातभागे भवन्तीति हेतुपुरःसरं साधितम् ,अतोऽत्रायुषो जघन्यप्रदेशबन्धकेभ्योऽजघन्यप्रदेशबन्धका असंख्यातगुणाः सिद्धयन्ति ।

शेषमार्गणा नामत इमाः—कृत्स्ननरकभेदाः, समस्ततिर्यग्गतिभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्माद्यष्टवैमानिकदेवाः, निखिलेन्द्रियभेदाः, अशेषकायभेदाः, पञ्चमनःपञ्चवचनकाययोगौघौदारिकद्विकवैक्रियकाययोगाः, वेदत्रिकं, कषायचतुष्कं, मतिश्रुतावधिज्ञानानि, मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानानि, देशविरत्यसंयमौ, दर्शनत्रिकं, शुक्लामन्तरा पञ्चलेश्याः, भव्याभव्यौ, सम्यक्त्वौघवेदकसास्वादनमिथ्यात्वानि, संज्ञी, असंज्ञी, आहारकश्चेति ॥ ॥४८८।४८९॥

तदेवं जघन्यप्रदेशबन्धकानामजघन्यप्रदेशबन्धकानां च परस्परमल्पबहुत्वं निरूपितम् । साम्प्रतमुत्कृष्टदेशबन्धकानां, जघन्यप्रदेशबन्धकानामजघन्यानुत्कृष्टप्रदेशबन्धकानां च परस्परमल्पबहुत्वं चिन्तयितुमारभते—

अट्ठण्ह गुरुपएसा बोद्धव्वा बंधगा अणंतगुणा ।
हस्सपएसस्स तओ असंखियगुणाऽत्थि सेसस्स ॥४९०॥

(प्रे०) "अट्ठण्ह" इत्यादि, अष्टकर्मणामुत्कृष्टप्रदेशबन्धकेभ्योऽष्टकर्मणां जघन्यप्रदेशबन्धका अनन्तगुणा बोद्धव्याः । इयमत्र भावना—षट्कर्मणामुत्कृष्टप्रदेशबन्धकाः सूक्ष्मसम्परायस्था जीवाः, ते च संख्याता एव । मोहनीयायुषोरुत्कृष्टप्रदेशबन्धकाः पर्याप्तसंज्ञिनः, ते चासंख्याताः । अष्टानामपि कर्मणां जघन्यप्रदेशबन्धका निगोदजीवा अपि भवन्ति । अतोऽष्टकर्मणामुत्कृष्टप्रदेश-

बन्धकेभ्यो जघन्यप्रदेशबन्धका अनन्तगुणा भवन्ति । 'तत्तो' इत्यादि, ततोऽष्टकर्मणां जघन्यप्रदेश-बन्धकेभ्योऽष्टकर्मणां शेषस्य=जघन्योत्कृष्टप्रदेशातिरिक्तस्याजघन्यानुत्कृष्टप्रदेशस्य बन्धका असंख्य-गुणा भवन्ति । अत्र भावना जघन्याजघन्यप्रदेशबन्धकानामोघतोऽल्पबहुत्वनिरूपणे यथा कृता तथा विधेया ॥४९०॥

इदानीं सप्तकर्माण्याश्रित्यादेशतः प्रकृताल्पबहुत्वं निरूपयति—

ओघव्व बंधगा खलु सत्तण्हं तिरियकायजोगेसुं ।
उरलदुगकम्मणेसुं णपुंसगे चउकसायेसुं ॥४९१॥
अण्णाणदुगे अयते अचक्खुदंसणतिअसुहलेसासुं ।
भवियेयरमिच्छेसुं असण्णिआहारइयरेसुं ॥४९२॥

(प्रे०) 'ओघव्व' इत्यादि, सप्तकर्मणां जघन्यप्रदेशबन्धकादीनामल्पबहुत्वमोघवद् भवति, कासु मार्गणासु ? इत्याह—'तिरिय' इत्यादि, तिर्यगोघे, काययोगौदारिकद्विककार्मणकायेषु, नपुंसकवेदे, कषायचतुष्के, अज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, अशुभलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिन्याहारकानाहारकयोश्चेति त्रयोविंशतिमार्गणासु । इयमत्र भावना—त्रयोविंशति-मार्गणान्तो यासु मार्गणासु श्रेणिसद्भावस्तासु षट्कर्मणामुत्कृष्टप्रदेशबन्धकाः संख्याता मोहनीयस्य चासंख्याताः । शेषासु सप्तानामपि कर्मणामुत्कृष्टप्रदेशबन्धका असंख्याताः । उक्तसर्वासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धका अनन्ताः । अतः सप्तकर्मणामुत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेश-बन्धका अनन्तगुणा भवन्ति । एवं सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धकाना-मसंख्यातगुणत्वं यथोक्तरीत्या स्वयं परिभावनीयम् ॥४९१।४९२॥

इदानीं यासु मार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकादीनामल्पबहुत्वमोघोक्तक्रमेण तास्वाह—

पंचिदियतिरिये णरपणइंदियपणगकायछक्केसुं ।
बायरएगिंदियचउपुढवाइणिगोअकायेसुं ॥४९३॥
पत्तेअवणम्मि तहा पणमणवयविउवमीसमीसेसुं ।
ओघुत्तेण कमेणं असंखियगुणा मुणेयव्वा ॥४९४॥

(प्रे०) "पंचिंदियतिरिये" इत्यादि, पञ्चेन्द्रियतिर्यगोघे, मनुष्योघे, 'पणइंदियपणग' इति, पञ्चेन्द्रियेषु पनके च,एकद्वित्रिचतुष्पञ्चेन्द्रियौघेषु,साधारणवनस्पतिकाये चेत्यर्थः; 'कायछ-क्केसु' इति, पृथ्व्यप्तेजोवायुवनस्पतित्रसकायौघेषु 'बायर' इत्यादि, "द्वन्द्वादौ श्रूयमाणः प्रत्येकम-भिसंबध्यते" इत्यत्र बादरशब्दः एकेन्द्रियादिप्रत्येकपदे सम्बध्यते, बादरैकेन्द्रिये, बादरपृथ्व्यप्तेजो-वायुकायेषु, बादरसाधारणवनस्पतिकाये, 'पत्तेअवणम्मि' इत्यादि, तथा प्रत्येकवनस्पतिकायौघे,

पञ्चमनःपञ्चवचनेषु, वैक्रियमिश्रे, मिश्रे चेति त्रयस्त्रिंशन्मार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकादय ओघोक्तक्रमेणासंख्यगुणा ज्ञातव्याः । अथात्रानुक्रमेण भावना क्रियते ।

तत्रादौ तिर्यक्पञ्चेन्द्रियमाश्रित्य भावनैवम्—उत्कृष्टप्रदेशबन्धकाः संज्ञिनो जघन्यप्रदेशबन्धकाश्चासंज्ञिनो भवन्ति । असंज्ञिभ्यः संज्ञिनोऽसंख्यातभागमात्रा एवेति संज्ञिभ्योऽसंज्ञिनोऽसंख्यातगुणा भवन्ति । अत उत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । असंज्ञिनोऽपि भवप्रथमसमयस्था एव जघन्यप्रदेशबन्धं कुर्वन्ति । भवप्रथमसमयेऽपि सर्वेषामेवासंज्ञिनां जघन्ययोगो न भवति, अपि त्वसंख्यातभागमात्राणाम् । येषां जघन्ययोगो न भवति ते सर्वेऽजघन्यानुत्कृष्टप्रदेशबन्धं कुर्वन्ति । इति जघन्यप्रदेशबन्धकासंज्ञिभ्यो भवप्रथमसमयस्था एवासंज्ञिनोऽसंख्यगुणा भवन्ति, तर्हि द्वितीयादिसमयस्थासंज्ञिनामुत्कृष्टयोगरहितसंज्ञिनाञ्चाजघन्यप्रदेशबन्धकानामसंख्यगुणत्वे किं प्रष्टव्यम् ।

मनुष्यौघमाश्रित्यैवं भावना—सप्तकर्मणामुत्कृष्टप्रदेशबन्धं पर्याप्तमनुष्याः कुर्वन्ति । सप्तकर्मणां जघन्यप्रदेशबन्धमसंज्ञित आगता भवप्रथमसमयस्था अपर्याप्तमनुष्याः कुर्वन्ति । पर्याप्तमनुष्येभ्योऽपर्याप्तमनुष्या असंख्यगुणाः । अत उत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । अपर्याप्तमनुष्येष्वपि असंख्यातभागमात्राणामेव जीवानां जघन्ययोगो भवतीति जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

अथैकेन्द्रियौघमाश्रित्यैवम्—उत्कृष्टप्रदेशबन्धं बादरपर्याप्तैकेन्द्रिया जघन्यप्रदेशबन्धं च सूक्ष्मापर्याप्तैकेन्द्रियाः कुर्वन्ति । सूक्ष्मापर्याप्तेभ्यः बादरपर्याप्ता "असंख्यातभागमात्रा एव । अत उत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । अत्र गुणकारोऽसंख्यलोकाकाशप्रमाणोऽवगन्तव्यः । सूक्ष्मापर्याप्तानामपि सर्वेषां जघन्ययोगो न भवति, किन्त्वसंख्यातभागमात्राणामेव । अतो जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

अथ विकलेन्द्रियत्रिकमाश्रित्यैवम्—उत्कृष्टप्रदेशबन्धं पर्याप्ता जघन्यप्रदेशबन्धं चापर्याप्ताः कुर्वन्ति । पर्याप्तेभ्योऽपर्याप्तानामसंख्येयगुणत्वादुत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । एवमपर्याप्तानामप्यसंख्यातभागमात्राणां जघन्ययोगो भवतीति जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

पञ्चेन्द्रियौघमाश्रित्य भावना तिर्यक्पञ्चेन्द्रियौघवद् विधेया । निगोदौघे पृथ्वीकायादिपञ्चौघभेदेषु च भावना एकेन्द्रियौघवद् विधेया । उत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धकानामसंख्यगुणत्वे गुणकारोऽसंख्यलोकाकाशप्रदेशप्रमाणो ज्ञेयः ।

त्रसकायौघे भावनैवम्—उत्कृष्टप्रदेशबन्धकाः पर्याप्तसंज्ञिपञ्चेन्द्रियाः । जघन्यप्रदेशबन्धका अपर्याप्तद्वीन्द्रिया भवन्ति । संज्ञिपञ्चेन्द्रियेभ्योऽपर्याप्तद्वीन्द्रिया असंख्यगुणा इत्युत्कृष्टप्रदेशबन्धकेभ्यो

जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । जघन्ययोगप्रायोग्येष्वपि जीवेषु असंख्यातभाग-मात्रा एव जघन्ययोगं प्राप्नुवन्तीति जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्य-गुणा भवन्ति ।

बादरैकेन्द्रियपृथ्व्यप्तेजोवायुवनस्पतिकायौघप्रत्येकवनस्पतिकायेषु भावनैवम्—जघन्यप्रदेशबन्ध-मपर्याप्ता उत्कृष्टप्रदेशबन्धं च पर्याप्ताः कुर्वन्ति । पर्याप्तेभ्योऽपर्याप्तानामसंख्येयगुणत्वादुत्कृष्टप्रदेशबन्ध-केभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । अत्र गुणकारोऽसंख्यलोकाकाशप्रमाणो बोध्यः ।

पञ्चमनःपञ्चवचनेष्वेवम्—षट्कर्मणामुत्कृष्टप्रदेशबन्धकाः संख्याता एवेति षट्कर्मणामुत्कृष्ट-प्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यातगुणा सुतरां सिद्धयन्ति । मोहनीयस्योत्कृष्टप्रदेश-बन्धका यद्यप्यसंख्यातास्तथाप्युत्कृष्टयोगस्थाने यावन्तो जीवास्तेभ्यो जघन्ययोगस्थानेऽसंख्यगुणा भवन्ति । अत एव पूर्वमसत्कल्पनायां जघन्ययोगस्थाने षोडशोत्कृष्टयोगस्थाने च पञ्च जीवाः कल्पिताः । अतो मोहनीयस्योत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणाः सिद्धयन्ति । जघन्ययोगस्थानेभ्योऽजघन्यानुत्कृष्टयोगस्थानानामसंख्यगुणत्वाज्जघन्यप्रदेशबन्धकेभ्योऽजघन्यानु-त्कृष्टप्रदेशबन्धका असंख्यातगुणा भवन्ति ।

वैक्रियमिश्रे भावनैवम्—ये जीवा मार्गणोत्कृष्टकालं यावद् मार्गणायामवतिष्ठन्ते तेषामेव जीवानामुत्कृष्टयोगो भवति । जघन्ययोगस्तु भवप्रथमसमयस्थानामेव जीवानां भवितुमर्हति । अतो वैक्रियमिश्रे उत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्तीति संभाव्यते । एवं भवप्रथमसमयभाविजघन्ययोगस्थानेभ्योऽजघन्यानुत्कृष्टयोगस्थानानामसंख्यगुणत्वाज्जघन्यप्रदेश-बन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यातगुणा भवन्ति ।

मिश्रमार्गणायामेवम्—यत्र जघन्यप्रदेशबन्धस्वामी परावर्तमानयोगी तथा मार्गणायां जीवा असंख्याता भवन्ति तत्रोत्कृष्टयोगस्थानगतजीवेभ्यो जघन्ययोगस्थानगता जीवा असंख्यगुणा भवन्तीति नियमः । मिश्रमार्गणायां जघन्यप्रदेशबन्धस्वामी परावर्तमानयोगी भवति, तथा मार्गणा-स्था जीवा असंख्याताः सन्तीत्युक्तनियमेनोत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । जघन्ययोगस्थानेभ्योऽजघन्यानुत्कृष्टयोगस्थानान्यसंख्यगुणानीति जघन्यप्रदेशबन्धकेभ्यो-ऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणाः ॥४९३।४९४॥

इदानीं संख्यातजीवासु पर्याप्तमनुष्यादिमार्गणासु प्रकृताल्पबहुत्वमाह—

दुणरमणणाणसंयमसुहमेसु छण्ह गुरुपएसत्तो ।
हुन्ति कमा संखगुणा हस्सअलहुगुरुपएसाणं ॥४९५॥
मोहस्स हुन्ति थोवा हस्सपएसस्स ताउ संखगुणा ।
जेट्ठपएसस्स तओ अत्थि अलहुगुरुपएसस्स ॥४९६॥

(प्रे०) 'सुहुमे' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, मनःपर्यवज्ञाने, संयमौघे सूक्ष्मसम्पराये च षट्कर्मणामुत्कृष्टप्रदेशबन्धकेभ्योऽनुक्रमेण जघन्यप्रदेशबन्धका अजघन्यानुत्कृष्टप्रदेशबन्धकाः संख्येयगुणा भवन्ति । अत्रेयं भावना–एतासु मार्गणासु सूक्ष्मसम्परायस्था एव जीवा उत्कृष्टप्रदेशबन्धं कुर्वन्ति । एतासु मार्गणासु जघन्यप्रदेशबन्धका एवम्–पर्याप्तमनुष्यमानुष्योरसंज्ञित आगता भवप्रथमसमयस्थाः, मनःपर्यवज्ञाने संयमे च घोलणयोगिनोऽष्टविधबन्धकाः, एते प्रत्येकविधाः जीवाः सूक्ष्मसम्परायस्थेभ्यः संख्यातगुणा भवन्तीति पर्याप्तमनुष्यादिमार्गणासु षट्कर्मणामुत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धकाः संख्यातगुणाः । सूक्ष्मसम्पराये भावनैवम्–सामान्यतः करणपर्याप्तावस्थायामुत्कृष्टयोगस्थानापेक्षया जघन्ययोगस्थानेऽसंख्येयगुणा जीवा अवतिष्ठन्ते, तथाप्यस्यां मार्गणायां सर्वजीवानां संख्यातमात्रत्वादुत्कृष्टयोगस्थानापेक्षया जघन्ययोगस्थाने जीवाः संख्यातगुणा अवतिष्ठन्त इति षट्कर्मणामुत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धकाः संख्यातगुणाः ।

'मोहस्स' इत्यादि, सूक्ष्मसम्पराये मोहनीयबन्धाभावात् पर्याप्तमनुष्यादिचतुर्मार्गणासु मोहनीयस्य जघन्यप्रदेशबन्धकाः स्तोकाः । 'ताउ' इत्यादि, जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धकाः संख्यातगुणाः । 'तओ' इत्यादि, उत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धकाः संख्यातगुणा भवन्ति । इयमत्र भावना–एतासु मार्गणासु ये षट्कर्मणां जघन्यप्रदेशबन्धकास्त एव मोहनीयस्य जघन्यप्रदेशबन्धं कुर्वन्ति, मोहनीयस्योत्कृष्टप्रदेशबन्धमुत्कृष्टयोगं प्राप्ताः पर्याप्ताः केऽपि जीवाः कुर्वन्तीत्युत्कृष्टबन्धप्रायोग्या जीवा जघन्यबन्धप्रायोग्यजीवेभ्यः संख्यातगुणा भवन्ति । अतः पर्याप्तमनुष्यादिचतुर्मार्गणासु मोहनीयस्य जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धकाः संख्यातगुणा भवन्ति । उत्कृष्टप्रदेशबन्धकाः सर्वेऽपि सर्वजीवानां संख्यातभागमात्रा एवेति मोहनीयस्योत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धकाः संख्यातगुणाः ॥४९५।४९६॥

इदानीं संख्यातजीवासु सर्वार्थसिद्धादिमार्गणासु प्रकृताल्पबहुत्वमाह–

**सव्वत्थाहारसमइअछेअपरिहारगे लहुपएसा ।**
**सत्तण्ह कमा संखियगुणाऽत्थि गुरुअगुरुलहुपएसाणं॥४९७॥ (गीतिः)**

(प्रे०) 'सव्वत्थाहार' इत्यादि, सर्वार्थसिद्धे, आहारककाये, सामायिके, छेदोपस्थापनीये परिहारविशुद्धौ चेति पञ्चमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्योऽनुक्रमेणोत्कृष्टप्रदेशबन्धका अजघन्यानुत्कृष्टप्रदेशबन्धकाश्च संख्यातगुणा भवन्ति । अत्र सर्वार्थसिद्धाहारककाययोर्भावनैवम्–सर्वार्थसिद्धे भवप्रथमसमयस्था आहारककाये च मार्गणाप्रथमसमयस्था आयुर्बन्धका जीवा सप्तकर्मणां जघन्यप्रदेशबन्धं कुर्वन्ति । उभयत्रापि सप्तकर्मणामुत्कृष्टप्रदेशबन्धं सप्तप्रकृतिबन्धकाः पर्याप्तजीवाः कुर्वन्ति । भवप्रथमसमयस्थेभ्यो मार्गणाप्रथमसमयस्थेभ्यश्च पर्याप्ता जीवाः संख्यातगुणाः । अतः सर्वार्थसिद्धाहारकयोः सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धकाः संख्यातगुणाः । सामा-

यिकादित्रिमार्गणासु भावनैवम्–सप्तकर्मणां जघन्यप्रदेशबन्धका घोलमानयोगिनोऽष्टविधबन्धकाः, उत्कृष्टप्रदेशबन्धका उत्कृष्टयोगं प्राप्ताः केऽपि जीवा भवन्ति । घोलमानयोग्यष्टविधबन्धकेभ्य उत्कृष्टयोगिनः संख्यातगुणाः । अतो जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धकाः संख्यातगुणा भवन्ति । सर्वजीवानां संख्यातभागमात्रा एव जीवा उत्कृष्टयोगं प्राप्नुवन्तीति उत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धकाः संख्यातगुणा भवन्ति ॥४९७॥

सम्प्रति पर्याप्तपञ्चेन्द्रियादिमार्गणासु प्रकृताल्पबहुत्वमाह—

पज्जत्तपणिंदियतसतिणाणणयणोहिसम्मसण्णीसु ।
मोहस्स बंधगाऽप्पा हस्सपएसस्स विण्णेया ॥४९८॥
ताउ असंखेज्जगुणा जेट्ठपएसस्स ताउ विण्णेया ।
अगुरुलहुपएसस्स उ पणिंदितिरियव्व सेसाणं ॥४९९॥

(प्रे०) 'पज्जत्त' इत्यादि, पर्याप्तपञ्चेन्द्रिये, पर्याप्तत्रसे, मतिश्रुतावधिलक्षणत्रिज्ञानेषु, चक्षुरवधिदर्शनयोः, सम्यक्त्वौघे संज्ञिनि चेति नवमार्गणासु मोहनीयस्य जघन्यप्रदेशबन्धकाः स्तोकाः । 'ताउ' इत्यादि, मोहनीयस्य जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यगुणाः । 'ताउ' इत्यादि, मोहनीयस्योत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणाः । अत्र क्रमशो भावना क्रियते ।

तत्र पर्याप्तपञ्चेन्द्रियत्रसयोरेवम्-मोहनीयस्योत्कृष्टप्रदेशबन्धकाः संज्ञिनः, जघन्यप्रदेशबन्धकाः पर्याप्तपञ्चेन्द्रिये भवप्रथमसमयस्थासंज्ञिनः, पर्याप्तत्रसे च भवप्रथमसमयस्था द्वीन्द्रियाः, भवप्रथमसमयस्थेभ्योऽसंज्ञिभ्यो द्वीन्द्रियेभ्यश्च संज्ञिनोऽसंख्यातगुणाः इति जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

संज्ञिनि भावनैवम्–उत्कृष्टप्रदेशबन्धकाः पर्याप्ताः, जघन्यप्रदेशबन्धका असंज्ञित आगता भवप्रथमसमयस्थाः, असंज्ञित आगतेभ्यो भवप्रथमसमयस्थजीवेभ्यः पर्याप्ता असंख्यगुणा भवन्तीति जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यातगुणाः ।

उक्तशेषसर्वमार्गणासु भावनैवम्–उत्कृष्टप्रदेशबन्धं पर्याप्ताः, जघन्यप्रदेशबन्धं भवप्रथमसमये वर्तमाना जीवाः कुर्वन्ति । पर्याप्तेभ्यो भवप्रथमसमये वर्तमाना असंख्यातभागमात्राः, स्थितराशित उत्पद्यमानराशेरतिस्तोकत्वात् । अतो जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति । अथाजघन्यानुत्कृष्टयोगस्थानान्यसंख्यातानि, उत्कृष्टयोगस्थानं त्वेकमेव, तथा मार्गणासु सर्वजीवा असंख्याताः । अतोऽत्र निरूपितासु पर्याप्तपञ्चेन्द्रियादिसर्वमार्गणासूत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

'पज्जिंदिलिरियव्व सेसाणं' इति, पर्याप्तपञ्चेन्द्रियादिनवमार्गणासु शेषाणां षट्कर्मणां जघन्यप्रदेशबन्धकानामल्पबहुत्वं पञ्चेन्द्रियतिर्यग्वद् ज्ञेयम्। तद्यथा–उत्कृष्टप्रदेशबन्धकाः स्तोकाः। ततो जघन्यप्रदेशबन्धका असंख्यातगुणाः। ततोऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यातगुणाः। अत्रैषं भावना–सर्वासु मार्गणासूत्कृष्टप्रदेशबन्धं सूक्ष्मसम्परायस्था जीवाः कुर्वन्ति, ते संख्याता एव, मोहनीयस्य ये जघन्यप्रदेशबन्धका ते एव षट्कर्मणां जघन्यप्रदेशबन्धका भवन्ति। तन्मार्गणायां मोहनीयस्य जघन्यप्रदेशबन्धका येऽनन्तरं दर्शितास्तेऽसंख्याताः। अत उत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति। अजघन्यानुत्कृष्टयोगस्थानान्यसंख्यातानि, जघन्ययोगस्थानमेकमेव, मार्गणासु सर्वे जीवा असंख्याताः। अतो जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ॥४९८।४९९॥

साम्प्रतमाहारकमिश्रेऽवेदे च प्रकृताल्पबहुत्वं चिन्तयन्नाह—

**आहारगमीसे गयवेए सत्तण्ह गुरुपएसत्तो।**
**हुन्ति कमा संखगुणा हस्सअलहुगुरुपएसाणं ॥५००॥**

(प्रे०) गाथार्थः सुगमः। इयमत्र भावना–आहारकमिश्रे सर्वेऽपि जीवाः संख्याता एव। तथा सप्तकर्मणां जघन्यप्रदेशबन्धं मार्गणाप्रथमसमये आयुर्बन्धकाः कुर्वन्ति, उत्कृष्टप्रदेशबन्धं मार्गणाचरमसमये सप्तविधबन्धकाः कुर्वन्ति। यद्यपि सप्तकर्मबन्धकेभ्योऽष्टकर्मबन्धका न्यूना भवन्ति, तथाप्यत्रोत्कृष्टप्रदेशबन्धो मार्गणाचरमसमये एव भवति, इति ये जीवा मार्गणोत्कृष्टकालं यावन्मार्गणायां वर्तन्ते ते एव जीवा मार्गणाचरमसमये सप्तकर्माणि बध्नन्तः सप्तकर्मणामुत्कृष्टप्रदेशबन्धं कुर्वन्ति। मार्गणोत्कृष्टकालं यावन्मार्गणायां वर्तमाना जीवास्तथास्वभावतोऽतिस्तोका भवन्ति। अतोऽत्रोत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धकाः संख्यगुणा भवन्ति। अपगतवेदे भावनैवम्–उत्कृष्टयोगस्थानापेक्षया जघन्ययोगस्थाने संख्यातगुणा जीवा अवतिष्ठन्ते इति सप्तकर्मणामुत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धकाः संख्यातगुणाः। उभयमार्गणयोः संख्यातभागमात्रा एव जीवा जघन्ययोगं प्राप्नुवन्तीति जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धकाः संख्यातगुणा भवन्ति ॥५००॥

सम्प्रति विभङ्गज्ञाने प्रकृताल्पबहुत्वं चिन्तयन्नाह–

**विब्भंगे सव्वप्पा हस्सपएसस्स तो असंखगुणा।**
**जेट्ठपएसस्स तओ अत्थि अलहुगुरुपएसस्स ॥५०१॥**

(प्रे०) 'विब्भंगे' इत्यादि, विभङ्गज्ञाने सप्तकर्मणां जघन्यप्रदेशबन्धकाः सर्वस्तोकाः। 'तो' इत्यादि, सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यातगुणाः। अत्रेयं भावना–उत्कृष्टप्रदेशबन्धकाः पर्याप्ता जघन्यप्रदेशबन्धकाश्च भवप्रथमसमयस्था भवन्ति। पर्याप्तविभङ्गज्ञानिभ्यो भवप्रथमसमयस्थ विभङ्गज्ञानिनोऽसंख्यातभागमात्रा भवन्तीति जघन्यप्रदेशबन्ध-

केभ्य उत्कृष्टप्रदेशबन्धका असंख्यातगुणा भवन्ति । 'तओ' इत्यादि, सप्तकर्मणां उत्कृष्टप्रदेश-बन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणाः, असंख्यातभागमात्राणामेव विभङ्गज्ञानिना-मुत्कृष्टयोगप्राप्तेः ॥५०१॥

साम्प्रतं मतान्तरेण विभङ्गज्ञाने प्रकृताल्पबहुत्वं प्रदर्शयन्नाह—

केइ उण बिंति थोवा जेट्ठपएसस्स तो असंखगुणा ।
हस्सपएसस्स तओ अत्थि अलहुगुरुपएसस्स ॥५०२॥

(प्रे०) 'केइ' इत्यादि, केचित् पुनरेवं वदन्ति—विभङ्गज्ञाने सप्तकर्मणामुत्कृष्टप्रदेशबन्धकाः सर्वस्तोकाः । 'तो' इत्यादि, सप्तकर्मणामुत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणाः । अत्रेयं भावना—केषाञ्चिन्मतेनापर्याप्तावस्थायां विभङ्गज्ञानं न भवतीति विभङ्गमार्गणायां जघन्य-प्रदेशबन्धका भवप्रथमसमयस्था न भवन्ति, किन्तु घोलमयोगिनोऽष्टविधबन्धका भवन्ति । उत्कृष्टप्रदेशबन्धकाः सप्तविधबन्धकाः पर्याप्ता भवन्ति । यद्यप्यष्टविधकर्मबन्धकेभ्यः सप्तकर्मबन्धकाः संख्यातगुणा भवन्ति, तथापि यत्र जघन्यप्रदेशबन्धस्वामी परावर्तमानयोगी मार्गणास्था जीवाश्चा-संख्यातास्तत्रोत्कृष्टयोगस्थानगतजीवेभ्यो जघन्ययोगस्थानगता जीवा असंख्यगुणा भवन्तीति पूर्वो-क्तान्नियमादत्र सप्तकर्मणामुत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका असंख्यगुणा भवन्ति । 'तओ' इत्यादि, सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणाः, जघन्ययोग-स्थानेभ्योऽजघन्यानुत्कृष्टयोगस्थानानामसंख्यगुणत्वात् ॥५०२॥

सम्प्रति गाथात्रिकेण शुक्ललेश्याक्षायिकोपशमसम्यक्त्वेषु प्रकृताल्पबहुत्वं प्रतिपादयन्नाह—

सुक्कखइएसु छण्हं संखगुणा बंधगा गुरुपएसा ।
हस्सपएसस्स तओ असंखियगुणाऽत्थि सेसस्स ॥५०३॥
मोहस्स बंधगाणं पज्जतसव्वऽत्थ छण्हुवसमेऽप्पा ।
हस्सपएसस्स तओ जेट्ठपएसस्स संखगुणा ॥५०४॥
ताउ असंखेज्जगुणा विण्णेया अगुरुलहुपएसस्स ।
मोहस्सऽप्पाबहुगं पज्जत्तपणिंदियव्व भवे ॥५०५॥

(प्रे०) "सुक्कखइएसु" इत्यादि, शुक्ललेश्याक्षायिकसम्यक्त्वयोर्विना मोहायुषी षट्कर्मणामुत्कृष्ट-प्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धकाः संख्यातगुणाः । 'तओ' इत्यादि, ततः=जघन्यप्रदेशबन्ध-केभ्यः शेषस्य=अजघन्यानुत्कृष्टप्रदेशस्य बन्धका असंख्यगुणा भवन्ति । अत्रेयं भावना—क्षपको-पशमश्रेणिगता जीवा एव षट्कर्मणामुत्कृष्टप्रदेशबन्धं कुर्वन्ति, उपशमश्रेणिगता जीवाः संख्याता एव,

षट्कर्मणां जघन्यप्रदेशबन्धं भवप्रथमसमये वर्तमाना जीवाः कुर्वन्ति, तेऽपि संख्याता एवेति परिमाणद्वारे प्ररूपितम् । इत्थमत्र श्रेणिगता भवप्रथमसमयस्थाश्चेत्युभयविधा अपि जीवाः संख्याता एव, तथापि श्रेणिगतजीवेभ्यो भवप्रथमसमयस्था जीवाः संख्यातगुणा भवन्ति । यतः श्रेणिगता जीवा मनुष्यगतावेव प्राप्यन्ते, भवप्रथमसमयस्थास्तु शुक्ललेश्यायां मर्त्यामर्त्योभयगत्योः, क्षायिकसम्यक्त्वे च चतुर्गतिषु प्राप्यन्ते । जघन्योत्कृष्टप्रदेशबन्धातिरिक्तसर्वकालेऽजघन्यानुत्कृष्टप्रदेशबन्धो भवतीति जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

'मोहस्स' इत्यादि, मोहनीयकर्मण उत्कृष्टप्रदेशादिबन्धकानामल्पबहुत्वं "पर्याप्तत्रसवद्" भवति । तद्यथा—मोहनीयस्य जघन्यप्रदेशबन्धकाः सर्वस्तोकाः, तत उत्कृष्टप्रदेशबन्धका असंख्यातगुणाः, ततोऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यातगुणाः । अत्रेयं भावना—मोहनीयस्य जघन्यप्रदेशबन्धं भवप्रथमसमयस्था जीवाः कुर्वन्ति, ते च परिमाणद्वारोक्तरीत्या संख्याता एव, उत्कृष्टप्रदेशबन्धं पर्याप्ताः कुर्वन्ति, उभयमार्गणयोः पर्याप्तजीवा असंख्याता इति जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यातगुणा भवन्ति । उत्कृष्टयोगस्थानेभ्योऽजघन्यानुत्कृष्टयोगस्थानान्यसंख्यगुणानीत्युत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

अथोपशमसम्यक्त्वे प्रकृताल्पबहुत्वमाह—'छण्हुवसमे' इत्यादि, उपशमसम्यक्त्वे विना मोहायुषी षट्कर्मणां जघन्यप्रदेशबन्धकाः सर्वस्तोकाः, 'तओ' इत्यादि, जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धकाः संख्यातगुणाः, 'ताउ' इत्यादि, उत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति । अत्रेयं भावना—उपशमश्रेणौ पञ्चत्वं प्राप्य देवगतिप्रथमसमये वर्तमाना एव जीवाः ष कर्मणां जघन्यप्रदेशबन्धं विधातुमर्हन्ति, उपशमश्रेणिगताः सूक्ष्मसम्परायस्थाः सर्वे जीवा उत्कृष्टप्रदेशबन्धप्रायोग्या भवन्ति । उपशमश्रेणिगतजीवेभ्य उपशमश्रेणौ पञ्चत्वं प्राप्य देवगतिप्रथमसमये वर्तमाना जीवाः संख्यातभागमात्रा भवन्तीति जघन्यप्रदेशबन्धप्रायोग्यजीवेभ्य उत्कृष्टप्रदेशबन्धप्रायोग्यजीवानां संख्यातगुणत्वाज्जघन्यप्रदेशबन्धप्रायोग्यकालादुत्कृष्टप्रदेशबन्धप्रायोग्यकालस्य बृहत्तरत्वाच्च जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका जीवाः संख्यातगुणा भवन्ति । उत्कृष्टयोगस्थानेभ्योऽजघन्यानुत्कृष्टयोगस्थानानामसंख्यगुणत्वादुत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

ननूपशमसम्यक्त्वे षट्कर्मणामुत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धकाः असंख्यातगुणा भवन्ति यत उत्कृष्टप्रदेशबन्धमुपशमश्रेणिगता एव जीवाः कुर्वन्ति, जघन्यप्रदेशबन्धं तु चतुर्ष्वपि गतिषूपशमसम्यक्त्वस्य सद्भावात् सोपशमसम्यक्त्वा देवा नारकाश्च पञ्चत्वं प्राप्य मनुष्यगतिप्रथमसमये मनुष्यास्तिर्यञ्चश्च निधनं प्राप्य देवगतिप्रथमसमये जघन्यप्रदेशबन्धं कुर्वन्तीत्युत्कृष्टप्रदेशबन्धप्रायोग्यजीवेभ्यो जघन्यप्रदेशबन्धप्रायोग्या जीवा अधिका भवन्तीति चेद्, न, उपशमसम्यक्त्वस्य चतुर्ष्वपि गतिषु सद्भावेऽपि विनोपशमश्रेणिमुपशममार्गणायां मरणाभावात् ।

इदानीमुपशमसम्यक्त्वे मोहमाश्रित्य प्रकृताल्पबहुत्वमाह—उपशमसम्यक्त्वे मोहनीयस्योत्कृष्टप्रदेशबन्धकादीनामल्पबहुत्वं पर्याप्तपञ्चेन्द्रियवद् भवति । तद्यथा—जघन्यप्रदेशबन्धकाः सर्वस्तोकाः, तत उत्कृष्टप्रदेशबन्धका असंख्यातगुणाः, ततोऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति । अत्रेयं भावना—अनन्तरोक्तवदुपशमश्रेणौ मृत्युमित्वा देवगतिप्रथमसमये वर्तमाना एव जीवा मोहनीयस्य जघन्यप्रदेशबन्धं विदधति, उत्कृष्टप्रदेशबन्धं तु चतुर्ष्वपि गतिषु पर्याप्ता जीवाः कुर्वन्ति । उपशमसम्यक्त्वे वर्तमानाः पर्याप्तजीवा असंख्याताः । अतो जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति । उत्कृष्टयोगस्थानेभ्योऽजघन्यानुत्कृष्टयोगस्थानान्यसंख्यगुणानीत्युत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ॥५०३॥ ।५०४।५०५॥

इदानीं शेषमार्गणासु प्रकृताल्पबहुत्वमाह—

> सेसासु सव्वप्पा हस्सपएसस्स तो असंखगुणा ।
> जेट्ठपएसस्स तओ अत्थि अलहुगुरुपएसस्स ॥५०६॥

(प्रे०) 'सेसासु' इत्यादि, शेषासु एकोननवतिमार्गणासु सप्तकर्मणां जघन्यप्रदेशबन्धकाः सर्वस्तोकाः, 'तो' इत्यादि, सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धकाः असंख्यगुणाः, 'तओ' इत्यादि, सप्तकर्मणामुत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यातगुणाः । अथ भावना क्रियते ।

तत्रापर्याप्तमार्गणासु भावनैवम्—जघन्यप्रदेशबन्धो भवप्रथमसमये एव भवति, उत्कृष्टप्रदेशबन्धस्तु भवचरमतृतीयभागे कदाऽपि भवतीति जघन्यप्रदेशबन्धकालापेक्षयोत्कृष्टप्रदेशबन्धकालस्यासंख्यगुणत्वेन जघन्यप्रदेशबन्धप्रायोग्यजीवेभ्य उत्कृष्टप्रदेशबन्धप्रायोग्यजीवानामसंख्यगुणत्वात् प्रत्येकमार्गणायां जीवानामसंख्यातत्वाच्च सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यगुणाः ।

वैक्रियकाययोगदेशविरती विनाऽपर्याप्तातिरिक्तसर्वमार्गणासु भावनैवम्—जघन्यप्रदेशबन्धो भवप्रथमसमये एव भवति, उत्कृष्टप्रदेशबन्धस्तूत्कृष्टयोगे प्राप्ते पर्याप्तावस्थायामायुर्बन्धकालं विहाय कदापि भवितुमर्हतीति जघन्यप्रदेशबन्धप्रायोग्यकालापेक्षयोत्कृष्टप्रदेशबन्धप्रायोग्यकालस्यासंख्यगुणत्वात् प्रतिमार्गणं जीवानामसंख्यातत्वाच्च सप्तकर्मणां जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यगुणाः । प्रत्येकमार्गणायां मार्गणास्थानां सर्वजीवानामसंख्यातभागप्रमाणा एव जीवा उत्कृष्टयोगं प्राप्नुवन्तीति शेषासु सर्वासु मार्गणासु सप्तकर्मणामुत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।

वैक्रियकाययोगे सप्तकर्मणां जघन्यप्रदेशबन्धो मार्गणाप्रथमसमये भवति, उत्कृष्टप्रदेशबन्धस्तु

आयुर्बन्धकालं विहाय कदाऽपि भवतीति जघन्यप्रदेशबन्धप्रायोग्यकालापेक्षयोत्कृष्टप्रदेशबन्धप्रायोग्य-कालस्यासंख्यगुणत्वान्मार्गणावर्तिजीवानामसंख्यातत्वाच्च जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति। जघन्ययोगस्थानेभ्योऽजघन्यानुत्कृष्टयोगस्थानान्यसंख्यगुणानि भवन्ति, अतो जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति।

देशविरतौ जघन्यप्रदेशबन्धं घोलणयोगवानष्टविधबन्धको विदधाति, उत्कृष्टप्रदेशबन्ध-मुत्कृष्टयोगी सप्तविधबन्धको विदधाति। घोलणयोगवदष्टविधबन्धकेभ्य उत्कृष्टयोगिसप्तविध-बन्धका असंख्यगुणा भवन्तीति जघन्यप्रदेशबन्धकेभ्य उत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति। अजघन्यानुत्कृष्टयोगस्थानेभ्य उत्कृष्टयोगस्थानानामसंख्यातभागमात्रत्वेन मार्गणागतजीवानाम-संख्यातभागमात्रा एव जीवा उत्कृष्टप्रदेशबन्धं विदधतीत्युत्कृष्टप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्ट-प्रदेशबन्धका असंख्यगुणा भवन्ति।

शेषमार्गणा नामत इमाः—सर्वनरकभेदाः, पर्याप्तापर्याप्तपञ्चेन्द्रियतिर्यक्तिरश्च्यः, अपर्याप्त-मनुष्यः, सर्वार्थसिद्धमन्तरा निखिलदेवगतिभेदाश्चेति एकचत्वारिंशद्गतिभेदाः, पर्याप्तापर्याप्तबादरै-केन्द्रियौ, सूक्ष्मौघपर्याप्तापर्याप्तसूक्ष्मैकेन्द्रियाः, पर्याप्तापर्याप्तद्वीन्द्रियौ, पर्याप्तापर्याप्तत्रीन्द्रियौ, पर्याप्ता-पर्याप्तचतुरिन्द्रियौ, अपर्याप्तपञ्चेन्द्रियश्चेति द्वादशेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुसाधारण-वनस्पतिकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, सूक्ष्मौघपृथ्व्यप्तेजोवायुसाधा-रणवनस्पतिकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्ते-जोवायुसाधारणवनस्पतिकायाः, पर्याप्तापर्याप्तप्रत्येकवनस्पतिकायौ, अपर्याप्तत्रसश्चेति अष्टाविंशतिकाय-भेदाः, वैक्रियकाययोगः, स्त्रीपुरुषवेदौ, देशविरतिः, तेजःपद्मलेश्ये, क्षायोपशमिकसास्वादनसम्य-क्त्वे चेति ॥५०६॥

तदेवं जघन्यप्रदेशबन्धकानामुत्कृष्टप्रदेशबन्धकानामजघन्यानुत्कृष्टप्रदेशबन्धकानां च परस्पर-मल्पबहुत्वमादेशतः सप्तकर्माण्याश्रित्य चिन्तितम्। सम्प्रति तदायुराश्रित्य वक्तुं प्रक्रमते—

तिरिकायुरलदुगणपुमकसायचउगदुअणाणअयतेसुं।
अणयणतिअसुहलेसा भवियरमिच्छामणेसु आहारे ॥५०७॥(गीतिः)
आउस्स बंधगाऽप्पा जेट्ठपएसस्स तो अणंतगुणा।
हस्सपएसस्स तओ असंखियगुणाऽत्थि सेसस्स ॥५०८॥

(प्रे०) "तिरि" इत्यादि, तिर्यगोघे, काययोगौघे औदारिकद्विके, नपुंसकवेदे, कषायचतुष्के, मति-श्रुताज्ञानयोः, असंयमे, अचक्षुर्दर्शने, अप्रशस्तलेश्यात्रिके, भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिन्या-हारके चेत्येकविंशतिमार्गणासु आयुष उत्कृष्टप्रदेशबन्धकाः स्तोकाः, 'तो' इत्यादि, उत्कृष्टप्रदेश-

बन्धकेभ्यो जघन्यप्रदेशबन्धका अनन्तगुणाः, 'तओ' इत्यादि, जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणाः । अत्रेयं भावना–उत्कृष्टप्रदेशबन्धं संज्ञिजीवा जघन्यप्रदेशबन्धं च सूक्ष्मजीवाः कुर्वन्ति । सूक्ष्मजीवेषु निगोदजीवानामपि समावेशः । निगोदजीवा अनन्ताः । अत उत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धका अनन्तगुणा भवन्ति । जघन्ययोगस्थानमेकमेव, अजघन्यानुत्कृष्टयोगस्थानान्यसंख्येयानीति जघन्यप्रदेशबन्धकेभ्योऽजघन्यानुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्ति ।।५०७।५०८।।

सम्प्रति कासु मार्गणासूत्कृष्टप्रदेशबन्धकेभ्यो जघन्यप्रदेशबन्धकाः संख्यातगुणा भवन्तीत्याह–

दुणराणताइगेसुं मणपज्जवसंयमेसु सामइए
आहारमीसजोगे छेए परिहारसुक्कखइएसुं ।।५०९।। (गीतिः)
होअन्ति बंधगाऽप्पा जेट्ठपएसस्स ताउ संखगुणा ।
हस्सपएसस्स तओ अत्थि अलहुगुरुपएसस्स ।।५१०।।

(प्रे०) 'दुणराणताइगेसुं' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, आनतादिसर्वार्थसिद्धपर्यन्तेष्वष्टादशदेवभेदेषु, मनःपर्यवज्ञाने, संयमौघसामायिकसंयमयोः, आहारकमिश्रकाययोगे, छेदोपस्थापनीयपरिहारविशुद्धिसंयमयोः, शुक्ललेश्यायां क्षायिकसम्यक्त्वे चेत्यष्टाविंशतिमार्गणासु, 'होअन्ति' इत्यादि, सुगमम् । अत्रैवं भावना–यासु मार्गणासु संख्याता जीवास्तासूत्कृष्टयोगस्थानस्थितायुर्बन्धकेभ्यो जघन्ययोगस्थाने संख्यातगुणा आयुर्बन्धका भवन्तीत्यायुरुत्कृष्टप्रदेशबन्धकेभ्य आयुर्जघन्यप्रदेशबन्धकाः संख्यातगुणा भवन्ति । यासु मार्गणासु जीवा असंख्यातास्तास्वपि पूर्वं परिमाणद्वारे प्रदर्शितयुक्त्या संख्यातानामेव जीवानामायुर्बन्धसद्भावात् उत्कृष्टयोगस्थानस्थितायुर्बन्धकजीवेभ्यो जघन्ययोगस्थानस्थितायुर्बन्धका जीवाः संख्यातगुणा एव भवन्ति, इत्यसंख्यातजीवासु मार्गणास्वपि आयुरुत्कृष्टप्रदेशबन्धकेभ्य आयुर्जघन्यप्रदेशबन्धकाः संख्यातगुणा भवन्ति । जघन्ययोगस्थानस्थितायुर्बन्धकेभ्योऽजघन्यानुत्कृष्टयोगस्थानेषु संख्यातगुणा जीवा आयुर्बध्नन्तीति आयुर्जघन्यप्रदेशबन्धकेभ्य आयुरजघन्यानुत्कृष्टप्रदेशबन्धकाः संख्यातगुणा भवन्ति ।।५०९।५१०।।

इदानीमपर्याप्तमनुष्याद्यपर्याप्तमार्गणासु प्रकृताल्पबहुत्वमाह—

असमत्तमणुस्सविगलछसुहमबायरछसुहमओहेसुं ।
पतेअवणअपज्जे सयं च णाऊण वत्तव्वं ।।५११।।

(प्रे०) 'असमत्तमणुस्स' इत्यादि, 'द्वन्द्वाद्यौ श्रूयमाणः प्रत्येकमभिसंबध्यते' इति न्यायेन 'असमत्त' इति शब्दो बादरपर्यन्तसर्वपदेषु पृथक् पृथक् योजनीयः, अपर्याप्तमनुष्ये, अपर्याप्तद्वीन्द्रिये, अपर्याप्तत्रीन्द्रिये, अपर्याप्तचतुरिन्द्रिये, अपर्याप्तसूक्ष्मैकेन्द्रियेऽपर्याप्तसूक्ष्मपृथ्व्यप्ते-

जोवायुवनस्पतिकायेषु चेति षडपर्याप्तसूक्ष्मेषु अपर्याप्तबादरैकेन्द्रियेऽपर्याप्तबादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायेषु चेति षडपर्याप्तबादरेषु, 'सुहुमओहेसु' इति, सूक्ष्मैकेन्द्रिये, सूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायेषु चेति षट्सूक्ष्मौघभेदेषु अपर्याप्तप्रत्येकवनस्पतिकाये चेति त्रयोविंशतिमार्गणासु प्रकृताल्पबहुत्वम् , 'सयं च्च णाऊण वत्तव्वं' इति, स्वयमेव ज्ञात्वा वक्तव्यम् । इदमुपलक्षणम् , अन्यतज्ज्ञातृसकाशाद् ज्ञात्वा वा वक्तव्यमिति ।

इदमुक्तं भवति–अपर्याप्तमनुष्यादित्रयोविंशतिमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकेभ्य आयुर्जघन्यप्रदेशबन्धका असंख्यगुणा भवन्त्युतायुर्जघन्यप्रदेशबन्धकेभ्य आयुरुत्कृष्टप्रदेशबन्धका असंख्यगुणा भवन्तीत्यत्र कोऽप्यादर्शो नोपलभ्यते । यद्यपि युक्त्या चिन्त्यमाने तु आयुर्जघन्यप्रदेशबन्धः स्वायुस्त्रिभागाद्यसमये एव भवितुमर्हति, आयुरुत्कृष्टप्रदेशबन्धस्तु आयुर्बन्धकाले क्वापि भवितुमर्हतीत्यायुर्जघन्यप्रदेशबन्धप्रायोग्यकालापेक्षयाऽऽयुरुत्कृष्टप्रदेशबन्धप्रायोग्यकालोऽधिकः । तथापि दुःषमानुभावेन प्रमाणानुपलब्ध्या छद्मस्थस्यायं हेतुर्हेत्वाभासोऽपि स्यात् , अतो मिथ्या निरूपणसम्भावनामाशङ्क्य स्वपापभीरुतां प्रदर्शयता ग्रन्थकारेणात्र स्वयमेव गुर्वादितो ज्ञात्वा वक्तव्यमित्युक्तम् ।

कश्चिदत्राह–ननु अपर्याप्ततिर्यक्पञ्चेन्द्रियः,अपर्याप्तपञ्चेन्द्रियोऽपर्याप्तत्रसश्चेति त्रिमार्गणा अप्यपर्याप्तमार्गणाः, तासु 'सयं च्च णाऊण वत्तव्वं' इत्यनुक्त्वाऽग्रे आयुरुत्कृष्टप्रदेशबन्धकेभ्य आयुर्जघन्यप्रदेशबन्धका असंख्यगुणा भवन्तीति वक्ष्यते, अतः किं तत्र प्रमाणमुपलभ्यते ? अत्र प्रतिविधीयते, यद्यपि अपर्याप्तपञ्चेन्द्रियादित्रिमार्गणास्वपि प्रमाणं नोपलभ्यते, तथापि अपर्याप्तपञ्चेन्द्रियतिर्यक्पञ्चेन्द्रिययोरसंज्ञिनोऽपर्याप्तत्रसे च द्वीन्द्रिया आयुर्जघन्यप्रदेशबन्धं कुर्वन्तीति तिसृष्वपि मार्गणासु आयुर्जघन्यप्रदेशबन्धमसंज्ञिनः कुर्वन्ति । आयुरुत्कृष्टप्रदेशबन्धं तिसृष्वपि मार्गणासु संज्ञिनः कुर्वन्ति । संज्ञिभ्योऽसंज्ञिनोऽसंख्यगुणाः, एवमुत्कृष्टयोगस्थानस्थितजीवेभ्यो जघन्ययोगस्थाने स्थिता जीवा असंख्यगुणा इति सुप्रसिद्धमेव । अतोऽपर्याप्तपञ्चेन्द्रियतिर्यगादित्रिमार्गणासु आयुरुत्कृष्टप्रदेशबन्धकेभ्य आयुर्जघन्यप्रदेशबन्धका असंख्यगुणा भवन्तीत्यत्र न काऽपि शङ्काऽवतिष्ठते । अतोऽपर्याप्ततिर्यक्पञ्चेन्द्रियादित्रिमार्गणासु 'सयं च्च णाऊण वत्तव्वं' इति नोक्तम् ॥५११॥

साम्प्रतमाहारककायमार्गणायां प्रकृताल्पबहुत्वं चिन्तयति—

आहारे सव्वप्पा हस्सपएसस्स ताउ संखगुणा ।
जेट्ठपएसस्स तओ अत्थि अलहुगुरुपएसाणं ॥५१२॥

(प्रे०) "आहारे" इत्यादि, गाथार्थः सुगमः । अत्रेयं भावना–अस्यां मार्गणायामायुर्जघन्यप्रदेशबन्धो मार्गणाप्रथमसमय एव भवितुमर्हति, आयुरुत्कृष्टप्रदेशबन्धस्तु सर्वपर्याप्तिप्राप्त्यनन्तरं मार्गणाचरमसमयं यावत् कदापि भवितुमर्हति, इत्यस्यां मार्गणायामायुर्जघन्यप्रदेशबन्ध-

'भुजारऽप्पयराणं' इत्यादि, सप्तकर्मणां भूयस्काराल्पतरप्रदेशबन्धयोरुत्कृष्टान्तरं मुहूर्तान्तः 'अन्तर्मुहूर्तं' भवेत् । अयमत्र भावनापथः—असंख्येयगुणादिचतुर्विधाया अपि योगहानेरुत्कृष्टतोऽन्तर्मुहूर्तं यावदेव प्रवृत्तिर्भवति,तदनन्तरमवश्यं योगस्य वृद्धिरवस्थितिर्वा भवतीति भूयस्कारप्रदेशबन्धकारणीभूतयोगवृद्धेरन्तर्मुहूर्त्तानन्तरमवश्यं प्राप्यमाणत्वात्सप्तकर्मणां भूयस्कारप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्त्तप्रमाणं भवति । एवं वैपरीत्येन हानावपि वक्तव्यम् ।

ननु यदा योगहानेः समाप्त्यनन्तरमवस्थितप्रदेशबन्धः स्यात् , तदनन्तरं पुनर्योगहानिः, तदनन्तरं पुनरवस्थितप्रदेशबन्ध इत्यनेकशः क्रमेणाल्पतरावस्थितप्रदेशबन्धौ भूत्वा भूयस्कारप्रदेशबन्धो भवेत् तदा भूयस्कारप्रदेशबन्धस्यान्तरमन्तर्मुहूर्तादधिकं कथं न भवेत् ? एवमल्पतरबन्धेऽपि वाच्यम् , अत्रोच्यते, उक्तक्रमोऽप्यन्तर्मुहूर्तं यावदेव प्रवर्तेत, तदनन्तरमवश्यं विपरीतप्रदेशबन्धो भवति । उक्तक्रमेण यद्यल्पतरप्रदेशबन्धः स्यात् तदाऽन्तर्मुहूर्त्तानन्तरमवश्यं भूयस्कारप्रदेशबन्धो भवति । एवमुक्तक्रमेण यदि भूयस्कारप्रदेशबन्धः स्यात् तदाऽन्तर्मुहूर्त्तानन्तरमवश्यमल्पतरप्रदेशबन्धो भवति ॥५३२॥

इदानीं पूर्वार्धेन सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टमन्तरमाह—

**देसूणाद्धपरट्टो भवे अवत्तव्वगस्स सत्तण्हं ।**

(प्रे०) "देसूणाद्धपरट्टो" इत्यादि, अत्र 'उत्कृष्टम्' इत्यनुवर्तते, 'अन्तरम्' इति गम्यते, सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टान्तरं 'देशोनार्धपुद्गलपरावर्तः' भवेत् । तद्यथा—उपशमश्रेणितो निपततो जीवस्य षट्कर्मणां सूक्ष्मसम्परायप्रथमसमये मोहनीयस्य चानिवृत्तिबादरसम्पराये प्रथमसमयेऽवक्तव्यप्रदेशबन्धो भवति । यतः सप्तकर्मणामवक्तव्यप्रदेशबन्ध उपशमश्रेणौ भवति, क्षपकश्रेणितः प्रतिपाताभावाद् । अतो द्वयोरुपशमश्रेण्योर्यावदुत्कृष्टमन्तरं तावत्सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टमन्तरं भवति । द्वयोरुपशमश्रेण्योरुत्कृष्टमन्तरं देशोनार्धपुद्गलपरावर्तो भवति । इदमुक्तं भवति—कश्चिदुपशमक उपशमश्रेणितः प्रतिपत्योक्तस्थाने सप्तकर्मणामवक्तव्यप्रदेशबन्धं कृत्वा देशोनार्धपुद्गलपरावर्तंयावत् संसारे पर्यटति । ततः पुनरुपशमश्रेणिमारुह्य प्रतिपत्योक्तस्थाने सप्तकर्मणामवक्तव्यप्रदेशबन्धं करोतीति सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योपशमश्रेणिद्विकान्तरप्रयुक्तं देशोनार्धपुद्गलपरावर्तप्रमाणमुत्कृष्टमन्तरं भवति ।

तदेवमष्टकर्मणां भूयस्कारादिचतुर्विधप्रदेशबन्धस्यान्तरमोघतः प्ररूपितम् । साम्प्रतं तदेवादेशतो निरूपयति । तत्रादौ सप्तप्रकृतीरधिकृत्य वक्तुकामः यासु मार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धान्तराभावस्ता आह—

**मीसदुजोगेसु तहा कम्मणजोगे अणाहारे ॥५३३॥**

आउगवज्जाण भवे भूओगारस्स अंतरं णेव ।
सेसासु जहण्णियरं भूगाराईण दोण्ह ओघव्व ॥५३४॥

(प्रे०) "मीसदुजोगेसु" इत्यादि, वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रकाययोगयोः, तथा समुच्चये, कार्मणकाययोगेऽनाहारके चेति चतुर्मार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धस्यान्तरं नैव भवति । कथम् ? इति चेद् , मार्गणाया द्वितीयसमयादारभ्य चरमसमयं यावदसंख्येयगुणयोगवृद्धेः सत्त्वाद् मार्गणाकालं यावद् भूयस्कारप्रदेशबन्धस्यैव प्रवृत्तेः । अत एवैतासु मार्गणासु सत्पदद्वारेऽल्पतरावस्थितावक्तव्यप्रदेशबन्धानामभावो निरूपितः

सम्प्रति शेषसर्वमार्गणासु सप्तकर्मणां भूयस्काराल्पतरप्रदेशबन्धयोर्जघन्योत्कृष्टान्तरातिदेशमाह–'सेसासु' इत्यादि, शेषासु षट्षष्ट्यधिकशतमार्गणासु सप्तकर्मणां भूयस्काराल्पतरप्रदेशबन्धयोरन्तरम् 'ओघवद्' भवति । तद्यथा–जघन्यमेकसमयः, उत्कृष्टमन्तर्मुहूर्त्तम् । अत्र भावना सामान्यवक्तव्यततो ज्ञेया ॥५३३।५३४॥ सम्प्रति सप्तकर्मणामवस्थितप्रदेशबन्धस्य जघन्यमुत्कृष्टं चान्तरं गाथात्रिकेण निर्धारयति—

जत्थाउगवज्जाणं अवट्ठिओ अत्थि तत्थ तस्स भवे ।
समयो लहु असंखियभागो सेढीअ उक्कोसं ॥५३५॥
तिरिये एगिंदियपणकायणिगोएसु सुहमभेएसु ।
कायणपुंसेसु तह दुअणाणायतअचक्खूसु ॥५३६॥
भवियाभवियेसु तह मिच्छासण्णीसु होइ सेसासु ।
देसूणा उक्कोसा सगसगकायट्ठिई णेयं ॥५३७॥

(प्रे०) 'जत्थाउगवज्जाणं' इत्यादि, यत्र यासु मार्गणासु आयुर्वर्जानां सप्तकर्मणामवस्थितप्रदेशबन्धपदमस्ति तत्र–तासु सर्वासु मार्गणासु तस्य–सप्तकर्मणामवस्थितप्रदेशबन्धस्य जघन्यमन्तरम् 'एकसमयः' भवति । हेतुः सुगमः । अथावस्थितप्रदेशबन्धस्योत्कृष्टमन्तरमाह–"असंखियभागो' इत्यादि, सप्तकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं "श्रेण्यसंख्यातभागः" भवति । (द्वितीयगाथावृत्तिः) कासु मार्गणासु ? इत्याह–'तिरिये' इत्यादि, तिर्यगोघे, एकेन्द्रियौघे, पृथिव्यप्तेजोवायुवनस्पतिकायलक्षणपञ्चकायौघेषु, निगोदौघे, सूक्ष्मैकेन्द्रिये सूक्ष्मपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायेषु चेति षट्सूक्ष्मौघभेदेषु, काययोगौघे, नपुंसके, तथा समुच्चये, मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, (तृतीयवृत्तवृत्तिः) भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिनि चेति चतुर्विंशतिमार्गणासु । कथम् ? इति चेद् , एतासु मार्गणासु स्वकायस्थितेः श्रेण्यसंख्यातभागतोऽधिकत्वाद् ।

इदमुक्तं भवति—ओघतोऽवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं श्रेण्यसंख्यातभागप्रमाणं निरूपितम्, अतः श्रेण्यसंख्यातभागाद्धिकमन्तरं कस्यामपि मार्गणायां न भवति । श्रेण्यसंख्यातभागप्रमाणमन्तरमपि यासु मार्गणासु स्वकायस्थितिः श्रेण्यसंख्यातभागादधिका तास्वेव घटां याति । अस्ति चैतासु मार्गणासु स्वकायस्थितिः श्रेण्यसंख्यातभागादधिका । अत एतासु मार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं श्रेण्यसंख्यातभागः सूपपद्यते ।

सम्प्रति शेषासु मार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरमाह-'सेसासु' इत्यादि, शेषासु द्विचत्वारिंशत्शतमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं "देशोना स्वस्वकायस्थितिः" ज्ञातव्यम् । तद्यथा पञ्चमनोयोगपञ्चवचनयोगेषु वैक्रियाहारककाययोगयोः, अवेदे, कषायचतुष्के, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानेषु, असंयमं विना षट्संयममार्गणासु, अवधिदर्शने, मिथ्यात्वं विना षट्सम्यक्त्वमार्गणासु चेति पञ्चत्रिंशन्मार्गणासु मार्गणाया द्वितीयसमयेऽवस्थितप्रदेशबन्धं विधाय पुनरन्तिमसमये करोतीति त्रिसमयन्यूना स्वोत्कृष्टकायस्थितिः प्रकृतान्तरं भवति । शेषनरकगत्यादिसप्तोत्तरशतमार्गणासु प्रथमान्तर्मुहूर्तं यावद् योगस्यासंख्येयगुणवृद्धेः प्रवृत्त्या भूयस्कारप्रदेशबन्धस्य सद्भावात्तदनन्तरमवस्थितप्रदेशबन्धं विदधाति । ततः पुनर्मार्गणान्तिमसमये विदधातीति अन्तर्मुहूर्तन्यूनस्वोत्कृष्टकायस्थितिः प्रकृतान्तरं भवति । औदारिकेऽन्तर्मुहूर्तन्यूनद्वाविंशतिसहस्रवर्षाणि प्रकृतान्तरं समायाति ।

शेषमार्गणा नामत इमाः—तिर्यगोघमन्तरा सर्वगतिभेदाः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियौघौ विना सप्तदशेन्द्रियभेदाः, बादरपृथ्व्यप्तेजोवायुनिगोदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायाः, प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेत्येकत्रिंशत्कायमार्गणाभेदाः, पञ्चमनोयोगपञ्चवचनयोगाः, औदारिकद्विकं, वैक्रियकायः, आहारककायश्चेति चतुर्दशयोगभेदाः, स्त्रीपुरुषवेदावेदाः, कषायचतुष्कं, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयममन्तरा षट्संयममार्गणाः, चक्षुरवधिदर्शने, लेश्याषट्कं, मिथ्यात्वमृते षट्सम्यक्त्वमार्गणाः संज्ञ्याहारकमार्गणे चेति । ॥५३५।५३६।५३७॥ इदानीं सप्तकर्मणामवक्तव्यप्रदेशबन्धान्तरं निरूपयितुमुपचिक्रंसुरादौ तावद् यासु मार्गणासु अन्तराभावस्ता निरूपयति—

पणमणवयकायउरलअवेअसुक्कुवसमेसु सत्तण्हं ।
मोहस्स य लोहे णो चेव अवत्तव्वगस्स भवे ॥५३८॥

(प्रे०) "पणमण" इत्यादि, पञ्चमनःपञ्चवचनेषु, काययोगौघौदारिककाययोगयोः, अवेदे, शुक्लेश्यायाम्, उपशमसम्यक्त्वे चेति पञ्चदशमार्गणासु सप्तकर्मणां, 'मोहस्स य लोहे' इत्यादि, लोभकषायमार्गणायां च मोहनीयस्यावक्तव्यप्रदेशबन्धस्यान्तरं नैव भवति । इयमत्र भावना—

एतासु मार्गणासु अवक्तव्यप्रदेशबन्धं षट्कर्मणामुपशान्तमोहेऽबन्धं कृत्वा प्रतिपत्य सूक्ष्मसम्पराय-प्रथमसमये, मोहनीयस्य सूक्ष्मसम्परायोपशान्तमोहयोरबन्धं विधायऽनिवृत्तिबादरसम्पराये प्रथम-समये मनुष्यो विदधाति । अथ निगदितपञ्चदशमार्गणान्तो यस्यां मार्गणायां वर्तमानो मनुष्य एवंरीत्या प्रथममवक्तव्यप्रदेशबन्धं कृत्वा पुनरुपशमश्रेणिमारुह्य यथोक्तरीत्या द्वितीयवारमवक्तव्य-प्रदेशबन्धं यावता कालेन कुर्यात् तावत्कालं सा मार्गणा नावतिष्ठते, उपशमश्रेणिद्विकप्रयुक्तजघन्या-न्तरकालतो मार्गणोत्कृष्टकालस्य स्तोकत्वात् । नन्वेवं कथं ज्ञायेत ? इति चेद्, एकजीवमाश्रित्यै-कस्यामप्युपशमश्रेणौ त्रिविधस्यापि योगस्य प्राप्यमाणत्वात्, अवेदमार्गणायाः श्रेणिद्वयं यावदसद्भा-वात्, उपशमश्रेणिद्विकप्रयुक्तजघन्यान्तरकालान्मनुष्यसत्कशुक्ललेश्याया उत्कृष्टकालस्य संख्येयगुण-हीनत्वात्, एकस्मिन्नुपशमसम्यक्त्वे उभयोपशमश्रेणेरभावाच्च ।

अत्रायं विशेषः–यद्यपि काययोगौघौदारिककाययोगयोरुत्कृष्टकाल एकेन्द्रियमाश्रित्याधिको भवति तथापि सोऽत्रानुपयोगी, तस्मिन्नुपशमश्रेणेरभावात् । अत्र तूपशमश्रेणिभाविसंज्ञिपञ्चेन्द्रिय-योग उपयोगी भवति । तस्य कालस्तूपशमश्रेणिप्रयुक्तान्तरकालतः स्तोक एवं । एवं देवमा-श्रित्य लेश्याकालोऽप्यधिकः, तथाप्यत्र तूपशमश्रेणिभाविमनुष्यलेश्या एव प्रकृतकार्यं साध्नोतीति सैव गृह्यते । तस्याश्च कालो यथोक्त एव ॥५३८॥ इदानीं यासु मार्गणासु सप्तकर्मणामवक्तव्य-प्रदेशबन्धस्य सत्ता तासु सर्वासु तस्य जघन्यमुत्कृष्टं चान्तरं गाथाद्विकेन निरूपयति—

सेसासु अवत्तव्वो सत्तण्हं जासु तासु तस्स लहू ।
भिन्नमुहुत्तं दीहं ओघव्व अचक्खुभवियेसु ॥५३९॥
तिणरेसुं पुव्वाणं कोडिपुहुत्तं हवेज्ज सेसासुं ।
देसूणा उक्कोसा सगसगकायट्ठिई णेयं ॥५४०॥

(प्रे०) अत्रेदमनुसन्धेयम्–पूर्वं पञ्चत्रिंशत्शतमार्गणासु अवक्तव्यप्रदेशबन्धाभावो निरूपितः । एवमत्र पञ्चदशमार्गणासु अवक्तव्यप्रदेशबन्धस्य सत्त्वेऽपि अन्तराऽभावः । अतोऽवशिष्टासु मार्गणा-स्वेवान्तरं निरूपणीयं न सर्वासु, इत्यत आह–'सेसासु' इत्यादि, अनन्तरगाथानिगदितपञ्चदश-मार्गणाव्यतिरिक्तमार्गणान्तो यासु विंशतिमार्गणासु सप्तकर्मणामवक्तव्यप्रदेशबन्धो विद्यते तासु मार्गणासु, 'से' इति, तस्य=सप्तकर्मणामवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरम् 'अन्तर्मुहूर्त्तं' भवति । अत्रेयं भावना–अनन्तरोक्तरीत्या सप्तकर्मणामवक्तव्यप्रदेशबन्ध उपशमश्रेणावेव भवति । उपशमश्रेणि-द्विकान्तराले यावान् जघन्यः कालस्तावत् सप्तकर्मणामवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरं भवति । उपशमश्रेणिद्विकजघन्यान्तरालकालश्चान्तर्मुहूर्त्तप्रमाणः । अतः सप्तकर्मणामवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरमन्तर्मुहूर्त्तं भवति ।

इदानीं सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टान्तरं वक्तुं प्रक्रमते–"वीइं ओघव्व अचक्खुभवियेसु" इति, अचक्षुर्दर्शनभव्यमार्गणयोः सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टमन्तरम् 'ओघवद्'=देशोनार्धपुद्गलपरावर्तो भवति। कथम्? इति चेद्, अनयोः स्वकायस्थितेर्देशोनार्धपुद्गलपरावर्तादधिकत्वेनौघवदुपशमश्रेणेरन्तरस्योत्कृष्टतस्तावन्मात्रत्वाद्। 'तिणरेसु'इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु सप्तकर्मणामवक्तव्यप्रदेशबन्धस्यान्तरं'पूर्वकोटिपृथक्त्वं' भवति। अत्रेयं भावना–यद्यप्येतासु मार्गणासु स्वकायस्थितिः साधिकत्रिपल्योपमप्रमाणाऽस्ति तथापि प्रस्तुते साऽन्यथा सिद्धा। कथम्? इति चेद्, तस्या युगलिकमनुष्यानाश्रित्य सत्त्वाद्। ततः प्रस्तुते किमायाताम्? इति चेद्, युग्मिमनुष्येषूपशमश्रेणेरभावः। प्रस्तुतमार्गणायां सप्तकर्मणामवक्तव्यप्रदेशबन्ध उपशमश्रेणौ एव भवितुमर्हति। अतोऽत्रायुग्मिमनुष्याणां कायस्थितिः प्रकृतकार्यं साध्नोति। अयुग्मिनुष्याणां स्वकायस्थितिस्तु पूर्वकोटिपृथक्त्वमस्ति। अतः स्वकायस्थितेः प्रथमभवे व्यतीते वर्षपृथक्त्वेऽवक्तव्यप्रदेशबन्धं विधाय पुनरन्तिमभवे चरमसमये विदधातीति यथोक्तमन्तरमुपपद्यते। न चात्र प्रथमभवे वर्षपृथक्त्वे व्यतीतेऽवक्तव्यप्रदेशबन्धो भवतीति देशोनं पूर्वकोटिपृथक्त्वं वक्तव्यमिति वाच्यम्, पृथक्त्वस्यानेकप्रकारत्वाद् देशोनमपि पृथक्त्वमेवोच्यते।

'सेसासु'' इत्यादि, शेषासु पञ्चदशमार्गणासु सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टमन्तरं 'देशोना स्वकीया कायस्थितिः' ज्ञातव्यम्। शेषमार्गणा इमाः–पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः, चक्षुरवधिदर्शने, सम्यक्त्वौघः, क्षायिकसम्यक्त्वं, संज्ञी, आहारकश्चेति। मनःपर्यवज्ञानसंयमौघाहारकमार्गणा विहाय शेषमार्गणासु भावनैवम्–स्वकायस्थितेः प्रथमभवे व्यतीते वर्षपृथक्त्वे उपशमश्रेणिमारुह्य यथोक्तरीत्याऽवक्तव्यप्रदेशबन्धं विदधाति। ततः स्वकायस्थितेश्चरमभवे उपान्त्यान्तर्मुहूर्ते उपशमश्रेणिं प्राप्य यथोक्तरीत्याऽवक्तव्यप्रदेशबन्धं विदधाति। ततः पुनर्व्यतीतेऽन्तर्मुहूर्ते क्षपकश्रेणिमारोहतीति सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टान्तरमुपशमश्रेणिद्वयोत्कृष्टान्तरालप्रयुक्तं वर्षपृथक्त्वन्यूनस्वकायस्थितिप्रमाणं भवति। किन्तु त्रिज्ञानावधिदर्शनसम्यक्त्वौघक्षायिकसम्यक्त्वमार्गणासु प्रथमभवसत्कान्तर्मुहूर्तं न्यूनं विधेयम्। अतस्तासूत्कृष्टान्तरमन्तर्मुहूर्तन्यूनस्वोत्कृष्टकायस्थितिप्रमाणं ज्ञेयम्।

मनःपर्यवज्ञानसंयमौघाहारकमार्गणासु भावनैवम्—मनःपर्यवज्ञानसंयमौघयोः स्वकायस्थितेरन्तर्मुहूर्ते व्यतीते, आहारके च स्वकायस्थितेर्वर्षपृथक्त्वे व्यतीते उपशमश्रेणिमारुह्य यथोक्तरीत्या सप्तकर्मणामवक्तव्यप्रदेशबन्धं विदधाति। ततः स्वोत्कृष्टकायस्थितेरन्तिमान्तर्मुहूर्ते उपशमश्रेणिं प्राप्योपशान्तमोहगुणस्थाने सप्तानामपि कर्मणामबन्धं विधायाद्धाक्षयेण प्रतिपत्य पुनर्बन्धं विधाय पञ्चत्वं प्राप्य मार्गणाविच्छेदं विदधाति। अतो मनःपर्यवज्ञानसंयमौघयोरन्तर्मुहूर्तन्यूना, आहारके च वर्षपृथक्त्वन्यूना स्वोत्कृष्टकायस्थितिः सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टमन्तरं भवति ॥५३९।५४०॥

तदेवं सप्तकर्मणां भूयस्कारादिचतुर्विधप्रदेशबन्धस्यान्तरं निरूपितम् । सम्प्रति तदेवायुराश्रित्य वक्तुकाम आदौ तावद्यासु मार्गणासु अवक्तव्यप्रदेशबन्धस्यान्तरमावस्ताः प्ररूपयति—

अत्थि अवत्तव्वस्स ण अंतरमाउस्स पणमणवयेसु ।
विउवे आहारदुगे कषायचउगम्मि सासाणे ॥५४१॥

(प्रे०) 'अत्थि' इत्यादि, पञ्चमनोयोगाद्यष्टादशमार्गणासु आयुषोऽवक्तव्यप्रदेशबन्धस्यान्तरं नास्तीत्यर्थः । इयमत्र भावना-यदाऽऽयुर्बन्धो भवति तदा तदादिमसमयेऽवक्तव्यप्रदेशबन्धो भवति । अतः सकृदायुर्बन्धं विधाय पुनर्यावत्कालेन कुर्यात्तावत्काल आयुरवक्तव्यप्रदेशबन्धस्यान्तरं भवति । अथैतासु मार्गणासु सकृदायुर्बन्धं विधाय पुनर्यावता कालेन कुर्यात्तावत्कालमेता मार्गणा नावतिष्ठन्ते, आकर्षद्वयप्रयुक्तान्तरजघन्यकालादपि मार्गणोत्कृष्टकालस्य स्तोकत्वात् । ॥५४१॥

इदानीं शेषमार्गणास्वायुषोऽवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरम्, आहारकमिश्रयोगे भूयस्कारप्रदेशबन्धस्यान्तराभावं, सम्भाव्यमानभूयस्कारादित्रिविधप्रदेशबन्धासु सर्वमार्गणासु आयुषो भूयस्कारादित्रिविधप्रदेशबन्धस्य जघन्यमन्तरं निर्वक्ति—

सेसासु मुहुत्तंतो हस्सं आहारमीसजोगम्मि ।
भूगारस्स भवे णो सेसासु लहु पयाण तिण्ह खणो ॥५४२॥(गीतिः)

(प्रे०) 'सेसासु' इत्यादि, शेषासु अनन्तरगाथोक्तव्यतिरिक्तासु पञ्चचत्वारिंशदशतमार्गणासु आयुषोऽवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरम् 'अन्तर्मुहूर्तं' भवति, आकर्षद्वयप्रयुक्तान्तरजघन्यकालस्य तावत्प्रमाणत्वात् । 'आहारमीसजोगम्मि' इत्यादि, आहारकमिश्रयोगे आयुषो भूयस्कारप्रदेशबन्धस्यान्तरं न भवेत्, आयुर्बन्धस्य द्वितीयसमयादारभ्यान्तिमसमयं यावद् भूयस्कारप्रदेशबन्धस्यैव सत्त्वात् । आहारकमिश्रे पूर्वं सत्पदद्वारेऽल्पतरावस्थितप्रदेशबन्धयोरभावः प्ररूपितः अत्र भूयस्कारप्रदेशबन्धस्यान्तराभाव उक्तः, अतो भूयस्कारादित्रिविधप्रदेशबन्धान्तरमाहारकमिश्रं विना द्वाषष्टिशतमार्गणासु वक्तव्यमित्यत आह-'सेसासु' इत्यादि, शेषाद्विषष्टिशतमार्गणासु भूयस्कारान्यतरावस्थितप्रदेशबन्धलक्षणत्रिपदानां जघन्यमन्तरम् 'एकसमयः' भवति । भावना सुगमा, पूर्वमसकृद् भावितत्वात् ॥५४२॥

तदेवमायुषो भूयस्कारादिचतुर्विधप्रदेशबन्धस्य जघन्यमन्तरं निरूपितम्, साम्प्रतमुत्कृष्टमन्तरं वक्तुं प्रक्रमते । तत्रादौ भूयस्कारादिचतुर्विधप्रदेशबन्धस्योत्कृष्टान्तरं यासु मार्गणासु देशोनषण्मासास्तासु औदारिककाययोगे चाह—

जेट्ठं सव्वणिरयसुरलेसासु चउपयाण आउस्स ।
ऊणछमासा उरले गुरुभमवठिइतिभागंतो ॥५४३॥

(प्रे०) 'जेट्ठ' इत्यादि, समस्तनरकभेदेषु, समामर्त्यभेदेषु, निखिललेश्याभेदेषु चेति चतुश्चत्वारिंशन्मार्गणासु आयुषो भूयस्कारप्रदेशबन्धादीनां चतुर्णामपि पदानामुत्कृष्टमन्तरं 'देशोनाः षण्मासाः' भवति । अत्रेयं भावना–देवो नारको वा स्वायुषः षण्मासेष्ववशिष्टेष्वायुर्बध्नाति । अथ भूयस्कारमाश्रित्य भावनेत्थं विधेया–अन्तर्मुहूर्तं यावदल्पतरप्रदेशबन्धः, ततः समयादिकालमवस्थितप्रदेशबन्धः, ततः पुनरन्तर्मुहूर्तं यावदल्पतरप्रदेशबन्धः, ततः पुनः समयादिकालमवस्थितप्रदेशबन्धः इत्येवमल्पतरावस्थितप्रदेशबन्धयोर्यावानुत्कृष्टकालस्तावति काले आयुर्बन्धकालान्तोऽवशिष्टे भूयस्कारप्रदेशबन्धं विदधाति । ततः स्वायुष उपान्त्यान्तर्मुहूर्ते पुनरायुर्बध्नाति । तत्राऽप्यायुर्बन्धस्य प्रथमसमयेऽवक्तव्यप्रदेशबन्धः, द्वितीयादिसमयेष्वन्तर्मुहूर्तं यावदल्पतरप्रदेशबन्धः, ततः समयादिकालमवस्थितप्रदेशबन्ध इत्येवमनन्तरोक्तरीत्याऽल्पतरावस्थितप्रदेशबन्धयोरुत्कृष्टकाले व्यतीते पुनर्भूयस्कारप्रदेशबन्धं विदधाति । इत्येवं भूयस्कारप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तन्यूनषण्मासा उपपद्यते । एवमल्पतरप्रदेशबन्धेऽपि भूयस्कारप्रदेशबन्धवद् भावना विधेया । नवरं भूयस्कारस्थानेऽल्पतरेति अल्पतरस्थाने च भूयस्कारेति वक्तव्यम् । अत्र द्वितीयायुर्बन्धान्तिमान्तर्मुहूर्तादधिको यः प्रथमायुर्बन्धप्रथमसमयादिकः कालः सोऽन्तर्मुहूर्त्तमनेकभेदमस्तीति पृथग् न विवक्षितः । एवमग्रेऽपि यथास्थाने बोध्यम् । अवक्तव्यमाश्रित्य भावनैवम्–स्वायुषः षण्मासेष्ववशिष्टेष्वायुर्बध्नाति, तत्र प्रथमसमयेऽवक्तव्यप्रदेशबन्धं विदधाति, स्वायुष उपान्त्यान्तर्मुहूर्ते पुनरायुर्बध्नाति, तत्र प्रथमसमयेऽवक्तव्यप्रदेशबन्धं विदधाति, इत्येवमवक्तव्यप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तन्यूनषण्मासा उपपद्यते । अवस्थितमाश्रित्य भावनैवम्–स्वायुषः षण्मासेष्ववशिष्टेष्वायुर्बध्नाति, तत्र द्वितीयसमयेऽवस्थितप्रदेशबन्धं विदधाति, स्वायुष उपान्त्यान्तर्मुहूर्तेऽवशिष्टे पुनरायुर्बध्नाति, तत्र चरमसमयेऽवस्थितप्रदेशबन्धं विदधाति, इत्येवमवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तन्यूनषण्मासा उपपद्यते ।

'उरले' इत्यादि, औदारिककाययोगे आयुषो भूयस्कारादिचतुष्पदानामन्तरं "गुरुभूभवस्थितित्रिभागान्तः" भवति । गुर्वी=उत्कृष्टा या भुवः=पृथिव्या भवस्य स्थितिः, तस्यास्तृतीयो भाग इति गुरुभूभवस्थितित्रिभागः, तस्यान्तः=मध्ये इति गुरुभूभवस्थितित्रिभागान्तः, पृथ्वीकायभवस्थितेर्देशोनस्तृतीयभागो भवतीत्यर्थः । अत्र भावनाऽनन्तरं यथा विहिता तथा विधेया । नवरमयं विशेषः–उत्कृष्टायुष्कः पृथिवीकायजीवः प्रथममायुर्बन्धं स्वायुश्चरमत्रिभागाद्यान्तर्मुहूर्ते द्वितीयं च स्वायुरुपान्त्यान्तर्मुहूर्ते विदधातीति आयुषो भूयस्कारादिचतुष्पदानामन्तरं देशोनः पृथिवीकायभवस्थितेस्तृतीयभागो भवति ॥५४३॥

इदानीमायुषो भूयस्कारादिचतुष्पदानामुत्कृष्टमन्तरं यासु मार्गणासु देशोनपूर्वकोटित्रिभागस्ता निरूपयति–

मणणाणसंयमेसु समइअछेअपरिहारदेसेसु ।
देसूणो पुव्वाणं कोडितिभागो मुणेयव्वं ॥५४४॥

(प्रे०) 'मणणाण' इत्यादि, शब्दार्थः सुगमः । भावना पुनरेवम्–पूर्वकोट्यायुष्कः संयमी स्वायुश्चरमत्रिभागाद्यान्तर्मुहूर्ते प्रथममायुर्बन्धं विधाय पुनः स्वायुरुपान्त्यान्तर्मुहूर्ते विदधाति तथा द्वयोरायुर्बन्धयोर्देवमार्गणायां प्रदर्शितरीत्या भूयस्कारादिप्रदेशबन्धं विदधातीत्यायुषो भूयस्कारादिचतुष्प्रदेशबन्धानामुत्कृष्टमन्तरम् 'अन्तर्मुहूर्तन्यूनपूर्वकोटित्रिभागः" सूपपद्यते ॥५४४॥

सम्प्रति विभङ्गज्ञानमार्गणायां समतान्तरमायुषो भूयस्कारादिचतुष्प्रदेशबन्धानामुत्कृष्टमन्तरमाह—

विब्भंगे देसूणा जेट्ठा कायट्ठिई मुणेयव्वं ।
देसूणा छम्मासा हवएत्ति भणन्ति अण्णे उ ॥५४५॥

(प्रे०) 'विब्भङ्गे' इत्यादि, विभङ्गज्ञाने आयुषो भूयस्कारादिचतुष्प्रदेशबन्धानामुत्कृष्टमन्तरं "देशन्यूना स्वोत्कृष्टकायस्थितिः" ज्ञातव्यम् । अत्रेयं भावना–पूर्वकोटिजीवितकालो विभङ्गज्ञानी कश्चिन्मनुष्यस्तिर्यङ् वा स्वायुश्चरमत्रिभागाद्यान्तर्मुहूर्ते आयुर्बध्नाति, तत्र च देवमार्गणायां प्रदर्शितरीत्या भूयस्कारादिचतुर्विधप्रदेशबन्धं विदधाति । ततः स्वायुषि समाप्ते निधनं प्राप्य सप्तमनरके उत्कृष्टायुष्को नारको भवति । तत्र स्वायुरुपान्त्यान्तर्मुहूर्ते पुनरायुर्बध्नाति, प्राग्दर्शितरीत्या भूयस्कारादिप्रदेशबन्धं च विदधातीति 'किञ्चित्कालोनस्वोत्कृष्टकायस्थितिः' प्रकृतान्तरं घटामञ्चति ।

अथोत्तरार्धेन मतान्तरमाह–'देसूणा छम्मासा' इत्यादि, अन्ये तु विभङ्गज्ञानमार्गणायामायुषो भूयस्कारादिचतुर्विधप्रदेशबन्धस्योत्कृष्टमन्तरं 'देशोनाः षण्मासाः' भवतीति स्वग्रन्थेषु भणन्ति । अत्र बीजमन्यैरपर्याप्तावस्थायां विभङ्गज्ञानस्यानङ्गीकरणम् । तेषां मतेऽपर्याप्तावस्थायां विभङ्गज्ञानस्याभावात् तिर्यग्मनुजानां विभङ्गज्ञानस्य अन्तर्मुहूर्तकालं यावदेवास्थानस्वीकाराच्च मनुष्यभवीयायुर्बन्धभाविभूयस्कारादिप्रदेशबन्धानाश्रित्यान्तरं नोपादीयते । अतो नरकमार्गणावद् देवमार्गणावद् वा देशोनषण्मासाः प्रकृतान्तरमुपपद्यते ॥५४५॥ इदानीं यासु मार्गणासु आयुषः सम्भाव्यमानानां भूयस्कारप्रदेशबन्धादीनामुत्कृष्टमन्तरम् 'अन्तर्मुहूर्तं' ता निरूपयति—

जाणऽत्थि मुहुत्तंतो ताण पणमणवयउरलमीसेसु ।
वेउव्वाहारेसु कसायचउगम्मि सासाणे ॥५४६॥

(प्रे०) 'जाणऽत्थि' इत्यादि, पञ्चमनोयोगप्रमुखाऽष्टादशमार्गणास्वायुषो येषां भूयस्कारादिपदानामन्तरमस्ति, 'ताण' इति, तेषां भूयस्कारादिपदानामुत्कृष्टमन्तरम् 'मुहुत्तंतो' इति, अन्तर्मुहूर्तं भवति । अत्रायं भावः–अत्रायुषोऽन्तरनिरूपणे 'जेट्ठं सव्वणिरयसुर' इत्यत्र आयुषो

भूयस्कारादीनां चतुर्णामपि पदानामुत्कृष्टमन्तरं युगपन्निरूपयति । अथात्रौदारिकमिश्रयोगं विना सप्तदशमार्गणासु अवक्तव्यप्रदेशबन्धस्यान्तरं न भवतीति आयुषोऽन्तरनिरूपणप्रारम्भे 'अत्थि अवत्तव्वस्स ण' इत्यत्र निरूपितम् । अतस्तासु भूयस्कारादित्रिप्रदेशबन्धानामेवान्तरं भवति । औदारिकमिश्रयोगे तु भूयस्कारादीनां चतुर्णामप्यन्तरं भवति । इत्येतत्सर्वं मनसि निधायोक्तं 'आणऽत्थि' इत्यादि । अत्रान्तर्मुहूर्तप्रमाणोपपत्तिरेवम्—एतासां सर्वासां मार्गणानामुत्कृष्टकालोऽन्तर्मुहूर्तम्, परन्तु स आयुर्बन्धान्तर्मुहूर्त्तकालाद् बृहत्तरः । तत आयुर्बन्धप्रथमसमयेऽवक्तव्यप्रदेशबन्धः द्वितीयसमये च भिन्नकालमाश्रित्य भूयस्कारादित्रिप्रदेशबन्धा भवन्ति । भिन्नकालमाश्रित्य भूयस्कारप्रदेशबन्धोत्कृष्टकाले व्यतीतेऽल्पतरप्रदेशबन्धः, अल्पतरोत्कृष्टकाले व्यतीते च भूयस्कारप्रदेशबन्धः, आयुर्बन्धान्तिमसमयेऽवस्थितप्रदेशबन्धो भवति । इति भूयस्काराल्पतरप्रदेशबन्धयोरन्तरमायुर्बन्धान्तर्मुहूर्त्तान्न्यूनमन्तर्मुहूर्त्तं भवति । अवस्थितप्रदेशबन्धस्यान्तरमायुर्बन्धकालात् त्रिसमयन्यूनमन्तर्मुहूर्त्तप्रमाणं भवति ।

अथौदारिकमिश्रेऽवस्थितं विना त्रिपदानामन्तरचिन्ता क्रियते—औदारिकमिश्रेऽसकृद् आयुर्बन्धो भवतीति तस्मिन् प्रथमायुर्बन्धे भूयस्काराल्पतरौ द्वितीयसमये न वक्तव्यौ किन्तु देवादिमार्गणात्रदायुर्बन्धकालस्य संख्यातबहुभागेषु व्यतीतेषु वक्तव्यौ । तथा द्वितीयायुर्बन्धे प्रथमसमयेऽवक्तव्यप्रदेशबन्धो वक्तव्यः, ततो द्वितीयादिसमयतः स्वप्रतिपक्षप्रदेशबन्धस्योत्कृष्टकाले व्यतीते भूयस्काराल्पतरप्रदेशबन्धौ वक्तव्यौ, इत्यौदारिकमिश्रे भूयस्कारादित्रिपदानामन्तरं पञ्चमनोयोगादिषु यदन्तर्मुहूर्तमन्तरं तस्मात् संख्यातगुणबृहत्तरमन्तर्मुहूर्तं भवति । अथावस्थितप्रदेशबन्धान्तरचिन्ता क्रियते—स्वोत्कृष्टकायस्थितेः जघन्यस्थितिके प्रथमभवे स्वायुस्त्रिभागायन्तर्मुहूर्तं आयुर्बध्नाति, तत्रायुर्बन्धद्वितीयसमयेऽवस्थितप्रदेशबन्धं विदधाति । ततः स्वोत्कृष्टकायस्थितेश्चरमभवे उपान्त्यान्तर्मुहूर्ते आयुर्बध्नन्नायुर्बन्धान्तिमसमये पुनरवस्थितप्रदेशबन्धं विदधातीत्यौदारिकमिश्रे देशोनस्वोत्कृष्टकायस्थितिप्रमाणमन्तर्मुहूर्तमायुरवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं भवति ॥५४६॥

इदानीमायुषोऽवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं यासु मार्गणासु ''श्रेण्यसंख्यातभागः'' यासु च 'देशोनस्वज्येष्ठकायस्थितिः' ता गाथाद्विकेन निरूप्यायुषोऽवस्थितप्रदेशबन्धस्यान्तरनिरूपणं समापयति—

एगिंदियपुढवाइगचउणिगोएसु ताण सुहुमेसुं ।
तिरिवणकायणपुमयतदुअणाणाचक्खुअभवियियरेसुं ॥५४७॥ (गीतिः)

मिच्छत्तामण्णीसुं अवट्ठिअस्स परमं असंखंसो ।
सेढीए सेसासुं देसूणमगसगजेट्ठकायठिई ॥५४८॥ (गीतिः)

(प्रे०) 'एगिंदिय' इत्यादि, एकेन्द्रियौघे, पृथ्व्यप्तेजोवायुकायौघे, निगोदौघे, 'ताण' इति, एकेन्द्रियपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायानां सूक्ष्मेषु, तिर्यगोघे, 'वण' इति, वनस्पतिकायौघे, काययोगौघे, नपुंसकवेदे, असंयमे, मतिश्रुतलक्षणाज्ञानद्विके, अचक्षुर्दर्शने, अभव्ये, इतरस्मिन् भव्ये, मिथ्यात्वेऽसंज्ञिनि चेति चतुर्विंशतिमार्गणासु आयुषोऽवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं 'श्रेण्यसंख्यातभागः' भवति । अत्र बीजमेतासु मार्गणासु स्वकायस्थितेः श्रेण्यसंख्यातभागतोऽधिकत्वमिति ।

'सेसासु'' इत्यादि, शेषासु अष्टषष्टिमार्गणासु आयुषोऽवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं ''देशोना स्वोत्कृष्टकायस्थितिः'' भवति । तद्यथा—स्वोत्कृष्टकायस्थितेः प्रथमभवे स्वायुश्चरमतृतीयभागाद्यान्तर्मुहूर्ते आयुर्बध्नाति, आयुर्बन्धद्वितीयसमयेऽवस्थितप्रदेशबन्धं विदधाति । ततः स्वोत्कृष्टकायस्थितेरन्तिमभवे स्वायुष उपान्त्यान्तर्मुहूर्ते आयुषो बन्धं विदधाति, आयुर्बन्धचरमसमये चावस्थितप्रदेशबन्धं करोतीति स्वकायस्थितेः चरमभवान्तिमान्तर्मुहूर्तादिना आद्यभवसत्कद्वितृतीयभागादिना च न्यूना स्वोत्कृष्टकायस्थितिः प्रकृतान्तरं भवति ।

शेषमार्गणा नामत इमाः—तिर्यक्पञ्चेन्द्रियौघपर्याप्ततिर्यक्पञ्चेन्द्रियापर्याप्ततिर्यक्पञ्चेन्द्रियतिरश्च्यः, चत्वारो मनुष्यभेदाश्चेत्यष्टौ गतिभेदाः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियौ विना सप्तदशेन्द्रियभेदाः, पृथ्वीकायादिपञ्चबादरौघभेदाः, पर्याप्तापर्याप्तभेदभिन्नपृथ्वीकायादिदशबादरभेदाः, पर्याप्तापर्याप्तभेदभिन्नदशपृथ्वीकायादिसूक्ष्मभेदाः, प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेत्येकत्रिंशत्कायभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिज्ञानानि, चक्षुरवधिदर्शने, सम्यक्त्वौघक्षायोपशमिकक्षायिकसम्यक्त्वानि, संज्ञी आहारकश्चेति ॥५४७।५४८॥

इदानीमायुषः शेषत्रिभूयस्कारादिपदानामुत्कृष्टमन्तरं यासु मार्गणासु "साधिकोत्कृष्टभवस्थितिः'' ताः प्रतिपादयति—

**सेसाण सव्वतिरिणरएगिंदियविगलपंचकायेसुं ।**
**असमत्तपणिंदितसेसु साहिया भवठिई जेट्ठा ॥५४९॥**

(प्रे०) "सेसाण सव्वतिरिणर" इत्यादि, "द्वन्द्वादौ श्रूयमाणः प्रत्येकमभिसम्बध्यते" इति सर्वशब्दस्य तिर्यगादिसर्वशब्दादौ योजनात् सर्वेषु पञ्चसंख्याकेषु तिर्यग्गतिभेदेषु, समस्तेषु चतुःसंख्याकेषु मनुष्यगतिभेदेषु, समेषु सप्तसंख्याकेषु एकेन्द्रियभेदेषु, कृत्स्नेषु नवसंख्याकेषु विकलेन्द्रियभेदेषु, सर्वेषु नवत्रिंशत्संख्याकेषु पृथिव्यप्तेजोवायुवनस्पतिकायलक्षणपञ्चकायभेदेषु, अपर्याप्तपञ्चेन्द्रियेऽपर्याप्तत्रसे चेति षड्उत्तरषष्टिमार्गणासु आयुषो भूयस्काराल्पतरावक्तव्यलक्षणत्रिपदानामुत्कृष्टमन्तरं 'साधिकस्वोत्कृष्टभवस्थितिः' भवति ।

तद्यथा—स्वस्वप्रायोग्योत्कृष्टस्थितिके प्रथमभवे स्वायुश्चरमत्रिभागाद्यान्तर्मुहूर्ते आयुर्बध्नाति, तथा देवमार्गणायां प्रदर्शितरीत्या भूयस्कारप्रदेशबन्धादीन् विदधाति । ततः स्वप्रायोग्योत्कृष्टस्थितिके द्वितीयभवे स्वायुष उपान्त्यान्तर्मुहूर्ते पुनरायुर्बध्नाति, यथोक्तरीत्या च भूयस्कारप्रदेशबन्धादीन् विदधाति । इत्येवं निगदितमार्गणासु किञ्चिन्न्यूनस्वप्रायोग्योत्कृष्टस्थितिकप्रथमभवतृतीयभागाधिकद्वितीयभवोत्कृष्टस्थितिः प्रकृतान्तरमुपपद्यते । अत्रायं विशेषोऽवगन्तव्यः—तिर्यगोघपञ्चेन्द्रियतिर्यक्पर्याप्तपञ्चेन्द्रियतिर्यक्तिरश्चीषु तथा मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्यमार्गणासु प्रथमभवः पूर्वकोटिप्रमाणायुष्को ग्राह्यः, न तु त्रिपल्योपमायुष्कः, तदनन्तरं मार्गणाया विनाशाद्, त्रिपल्योपमायुष्कभवस्य मार्गणाकायस्थितेरन्तिमभवत्वाद् । द्वितीयभवस्तु त्रिपल्योपमायुष्को ग्राह्यः । शेषभावना तु तथैव विधेया ॥५४९॥ साम्प्रतमायुषो भूयस्कारादित्रिपदानामुत्कृष्टान्तरं काययोगौघे स्त्रीवेदे च चिन्तयति—

कायम्मि भूभवठिई देसूणतिभागसंजुआ जेट्ठा ।
अब्भहिया पणवण्णा पलिया थीए मुणेयव्वं ॥५५०॥

(प्रे०) "**कायम्मि**" इत्यादि, काययोगौघे आयुषो भूयस्कारादित्रिपदानामुत्कृष्टान्तरं "देशोनत्रिभागाधिकोत्कृष्टपृथिवीभवस्थितिः" ज्ञातव्यम् । इदमन्तरं पृथिवीकायमाश्रित्योपपद्यते ! येषामन्तर्मुहूर्तादधिककालं काययोगोऽवतिष्ठते तेषां मध्ये पृथ्वीकायस्याधिकायुष्कत्वाद् । अत्रेयं भावना—स्वप्रायोग्योत्कृष्टायुष्कः पृथ्वीकायो जीवः स्वायुश्चरमत्रिभागाद्यान्तर्मुहूर्ते आयुर्बध्नाति, प्रागुक्तरीत्या भूयस्कारादित्रिविधप्रदेशबन्धं च विदधाति । ततः समाप्ते जीवितकाले पश्चत्वं प्राप्य पुनरुत्कृष्टायुष्कः पृथ्वीकायो भवति । तत्र च स्वायुरुपान्त्यान्तर्मुहूर्ते आयुर्बन्धं कुर्वन्नुक्तरीत्या भूयस्कारादित्रिविधप्रदेशबन्धं विदधातीति यथोक्तमन्तरमुपपद्यते । '**अब्भहिया**' इत्यादि, स्त्रीवेदमार्गणायामायुषो भूयस्कारादित्रिपदानामुत्कृष्टान्तरं "साधिकाः पञ्चपञ्चाशत्पल्योपमा" ज्ञातव्यम् । तद्यथा—पूर्वकोटयायुष्का काचिन्मानुषी तिरश्ची वा स्वायुश्चरमत्रिभागाद्यान्तर्मुहूर्ते आयुर्बन्धं कुर्वन्ती यथोक्तरीत्या भूयस्कारादित्रिविधप्रदेशबन्धं विदधाति । ततः समाप्तायुष्का सा निधनं प्राप्य शुभाध्यवसायप्रभावात्पञ्चपञ्चाशत्पल्योपमायुष्काऽमराङ्गना भवति । तत्र स्वायुरुपान्त्यान्तर्मुहूर्ते आयुर्बध्नती भूयस्कारादित्रिविधप्रदेशबन्धं विदधातीति यथोक्तमन्तरं समुपपद्यते ॥५५०॥ इदानीमसंज्ञिनि शेषमार्गणासु चायुषो भूयस्कारादित्रिपदानामुत्कृष्टान्तरं निरूप्यान्तरद्वारं पारयति—

पुव्वाण एगकोडी अब्भहिया होअए असण्णिम्मि ।
समासु विण्णयं तेत्तीसा सागराऽब्भहिया ॥५५१॥

(प्रे०) 'पुव्वाण' इत्यादि, असंज्ञिमार्गणायामायुषो भूयस्कारादित्रिविधप्रदेशबन्धस्योत्कृष्टान्तरं 'साधिकपूर्वकोटिः' भवति । अत्रेयं भावना—पूर्वकोट्यायुष्कः कश्चिदसंज्ञी स्वायुश्चरमतृतीयभागादिमान्तर्मुहूर्ते आयुर्बन्धं विदधद् यथोक्तरीत्या भूयस्कारादित्रिविधप्रदेशबन्धं विदधाति । ततः समाप्ते जीवितकाले निधनं प्राप्य पुनः पूर्वकोट्यायुष्कोऽसंज्ञी भवति । तत्र स्वायुरुपान्त्यान्तर्मुहूर्ते आयुर्बन्धं कुर्वन् भूयस्कारादित्रिविधप्रदेशबन्धं विदधातीति किञ्चिन्न्यूनप्रथमभवचरमतृतीयभागेनाधिकं पूर्वकोटिप्रमाणमन्तरं घटामटति ।

'सेसासु' इत्यादि, उक्तव्यतिरिक्तासु त्रयोविंशतिमार्गणासु आयुषो भूयस्कारादित्रिविधप्रदेशबन्धस्योत्कृष्टमन्तरं "साधिकाः त्रयस्त्रिंशत् सागरोपमा" विज्ञेयम् । 'सागरा' इत्यत्र 'ते लुग्वा (सिद्धहेम० ३।२।१०८) इति सूत्रेणोत्तरपदस्य लुक् । अत्रेयं भावना—पूर्वकोट्यायुष्कः कश्चिज्जीवः स्वायुश्चरमत्रिभागादिमान्तर्मुहूर्ते आयुर्बन्धं विदधद् भूयस्कारादित्रिविधप्रदेशबन्धं विदधाति । ततः समाप्तायुष्कः पञ्चत्वं प्राप्य त्रयस्त्रिंशत्सागरोपमायुष्को नारको वैमानिकदेवो वा भवति । तत्र स्वायुरुपान्त्यसमये आयुर्बन्धं कुर्वन् भूयस्कारादित्रिविधप्रदेशबन्धं विदधातीति शेषासु मार्गणासु "किञ्चिन्न्यूनप्रथमभवचरमत्रिभागाधिकत्रयस्त्रिंशत्सागरोपमाणि" प्रकृतान्तरं सूपपद्यते ।

शेषास्त्रयोविंशतिर्मार्गणा इमाः—पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसकायौ, पुरुषनपुंसकवेदौ, मतिश्रुतावधिज्ञानानि, मतिश्रुताज्ञाने, असंयमः, दर्शनत्रिकम्, भव्याभव्यौ, सम्यक्त्वौघक्षायिकक्षायोपशमिकसम्यक्त्वमिथ्यात्वानि, संज्ञी आहारकश्चेति । अत्रायं विवेकः—नपुंसकवेदाज्ञानद्विकासंयमाभव्यमिथ्यात्वमार्गणासु नारकमाश्रित्य, पुरुषवेदज्ञानत्रिकावधिदर्शनसम्यक्त्वौघक्षायिकक्षायोपशमिकसम्यक्त्वमार्गणासु देवमाश्रित्य, शेषनवमार्गणासु देवनारकोभयौ आश्रित्य प्रकृतान्तरं विभावनीयम् ॥५५१॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे द्वितीये भूयस्काराधिकारे चतुर्थमन्तरद्वारं समाप्तम् ॥



## ॥ पञ्चमं भङ्गविचयद्वारम् ॥

तदेवमेकजीवविषयकं चतुर्थमन्तरद्वारं निरूपितं निरूपिते च तस्मिन्नेकजीवविषयकाणि चत्वारि द्वाराणि समाप्तानि। इदानीमनेकजीवविषयकाणि द्वाराणि निरूपणीयानि। तत्रादौ क्रमागतं पञ्चमं भङ्गविचयद्वारमुपचिक्रंसुः प्रथमं तावदोघतोऽष्टकर्मणां नानाजीवानाश्रित्य सम्भाव्यमानभङ्गविचयं प्रतिपादयति—

सत्तण्ह अवत्तव्वो भयणीओ अत्थि तिण्णि सेसपया।
णियमा हवन्ति सव्वे पयाउगस्स हविरे णियमा ॥५५२॥

(प्रे०) **'सत्तण्ह'** इत्यादि; ज्ञानावरणीयादिसप्तकर्मणामवक्तव्यप्रदेशबन्धो भजनीयोऽस्ति, कदाचिद् भवति कदाचिच्च न भवत्यपीत्यर्थः। अत्रेयं भावना—सप्तकर्मणामवक्तव्यप्रदेशबन्धमुपशमश्रेणिमारूढा मनुष्या एव कुर्वन्ति। उपशमश्रेणिमारूढा मनुष्यास्तु कदाचिद् भवन्ति, कदाचिन्न भवन्त्यपि; उपशमश्रेणेर्वर्षपृथक्त्वप्रमाणान्तरस्य सद्भावाद्। अतो यदोपशमश्रेणिमारूढा मनुष्या भवन्ति तदाऽवक्तव्यप्रदेशबन्धो भवति, यदा चोपशमश्रेणिमारूढानामभावस्तदाऽवक्तव्यप्रदेशबन्धस्याप्यभावः।

**'तिण्णि सेसपया'** इत्यादि, सप्तकर्मणां भूयस्काराल्पतरावस्थितलक्षणानि शेषत्रिपदानि नियमाद्—अवश्यं भवन्ति, कदापि तेषामत्यन्ताभावो न प्राप्यत इत्यर्थः। अत्रेयं भावना—सप्तकर्मणां भूयस्काराल्पतरावस्थितलक्षणत्रिप्रदेशबन्धान् तत्तत्प्रदेशबन्धकारणान्यधिकयोगादीनि प्राप्य निगोदजीवा अपि कुर्वन्तीति सप्तकर्मणां भूयस्कारादित्रिविधप्रदेशबन्धं कुर्वतां जीवानामानन्त्याद् भूयस्कारादित्रिप्रदेशबन्धाः सर्वदैव भवन्ति। अथायुषो भङ्गविचयमाह—**'सव्वे पयाउगस्स'** इत्यादि, आयुःकर्मणो भूयस्कारप्रदेशबन्धादीनि सर्वाणि पदान्यवश्यं भवन्ति, कदाचिन्नापि भवन्तीति न। इयमत्र भावना—आयुर्बध्नन्तो निगोदजीवा अपि भूयस्कारादीनां यथोक्तकारणानि प्राप्य भूयस्कारादीन् चतुरोऽपि प्रदेशबन्धान् कुर्वन्ति। इत्यायुषो भूयस्कारादिचतुर्विधप्रदेशबन्धं विदधतां जीवानामनन्तत्वाद् भूयस्कारादिचतुष्पदानि सर्वदैव भवन्ति ॥५५२॥

तदेवमोघतो भङ्गविचयप्ररूपणा कृता। सम्प्रति तामादेशतश्चिकीर्षुरादौ तावदल्पवक्तव्यत्वात्पूर्वार्धेन सप्तकर्मणामवक्तव्यप्रदेशबन्धस्य भङ्गविचयं चिन्तयति—

जहि अत्थि अवत्तव्वो आउगवज्जाण तहि स भजणीओ।
अममत्तणरे विकियमीसे आहारदुगअवेएसुं ॥५५३॥ (गीतिः)
छेअम्मि य परिहारे सुहुमुवसममीससासणेसुं च।
जे भूगाराप्पयरा भजणीअत्थि णियमाऽण्णत्थ ॥५५४॥

(प्रे०) 'जहि अत्थि' इत्यादि, आयुर्वर्जानां सप्तकर्मणामवक्तव्यप्रदेशबन्धो यत्र—यासु मार्गणासु विद्यते तत्र—तासु त्रिमनुष्यादिपञ्चत्रिंशन्मार्गणासु 'स' इत्यादि, स सप्तकर्मणामवक्तव्यप्रदेशबन्धो भजनीयः, कदाचिद् भवति कदाचिन्च न भवति। अत्राशेषभावनापथोऽनन्तरगाथायामोघवक्तव्यतायां यथा प्रदर्शितस्तथाऽवगन्तव्यः। यासु मार्गणासु सप्तकर्मणामवक्तव्यप्रदेशबन्धो भवति ता मार्गणा नामत इमाः—मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्यभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियभेदौ, त्रसौघपर्याप्तत्रसलक्षणद्वित्रसकायौ, पञ्चमनःपञ्चवचनानि, काययोगौघौदारिककाययोगौ, अवेदः, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः, दर्शनत्रिकं, शुक्ललेश्या, भव्यः सम्यक्त्वौघोपशमक्षायिकसम्यक्त्वानि, संज्ञी आहारकश्चेति। लोभमार्गणायां मोहनीयस्यैवावक्तव्यबन्धो बोद्धव्यः।

सम्प्रति सार्धवृत्तेन सर्वमार्गणासु सप्तकर्मणां भूयस्काराल्पतरप्रदेशबन्धयोर्भङ्गविचयं निर्वक्ति—'अपज्जत्तणरे' इत्यादि, अपर्याप्तमनुष्यप्रमुखैकादशमार्गणासु सप्तकर्मणां 'जे भूगाराप्पयरा' इति, प्राकृतत्वाद् द्विवचनस्य बहुवचनम्, यौ भूयस्काराऽल्पतरौ सम्भवतः, इदमुक्तं भवति—निरूपितास्वपर्याप्तमनुष्याद्येकादशस्वपि मार्गणासु भूयस्काराल्पतरौभयौ न विद्येते किन्तु नवस्वेव, वैक्रियमिश्राहारकमिश्रकाययोगयोर्भूयस्कार एव, अतो यासु मार्गणासु यौ भूयस्काराल्पतरौ स्तस्तासु तौ भजनीयौ। तत इदं समापतितम्—अपर्याप्तमनुष्यादिनवमार्गणासु भूयस्काराल्पतरौ भजनीयौ, वैक्रियमिश्राहारकमिश्रकाययोगयोर्भूयस्कारो भजनीय इति। अत्रेयं भावना—अपर्याप्तमनुष्यादिमार्गणानां सान्तरत्वात्तासु जीवाः कदाचिन्न भवन्त्यपि। अतो यदा तासु जीवा भवन्ति तदा भूयस्काराल्पतरौ भवतः, यदा जीवा न भवन्ति तदा भूयस्काराऽल्पतरावपि न भवतः। अतः साधूक्तं "जे भूगाराप्पयरा भजणीआऽत्थि" इति।

"णियमाऽण्णत्थ" इति, अन्यासु नवपञ्चाशदधिकशतमार्गणासु सप्तकर्मणां भूयस्काराल्पतराववश्यं भवतः। कथमिति चेद्, मार्गणानां निरन्तरत्वाद्। इदमुक्तं भवति—शेषसर्वमार्गणान्तः प्रतिमार्गणं सर्वदाऽनेके जीवा वर्तमाना भवन्ति। तथा भूयस्काराऽल्पतरौ निरन्तरं पर्यायेण प्रवर्तेते। अतः शेषमार्गणासु सप्तकर्मणां भूयस्काराल्पतरौ सर्वदैव भवतः। नवरं कार्मणानाहारकयोर्भूयस्कार एव सर्वदा भवति॥५५३॥५५४॥

इदानीं सप्तकर्मणामवस्थितप्रदेशबन्धस्यायुषो भूयस्कारादिचतुष्प्रदेशबन्धानां च भङ्गविचयं गाथाद्विकेन प्रतिपादयति—

**जहि सव्वद्धा अगुरुपएसो आउस्स तत्थ णियमाऽत्थि।**
**बंधो अवट्ठिओ खलु सत्तण्हाउस्स सव्वपया ॥५५५॥**

चउजुअसयसेसासुं सत्तण्ह अवट्ठिओऽत्थि भजणीओ।
इगजुअसयसेसासुं सव्वपयाऽऽउस्स भजणीआ ॥५५६॥

(प्रे०) 'अत्थि सव्वद्धा' इत्यादि, यत्र–यासु मार्गणासु आयुषः 'अणुक्कपएसो' इति, पदैकदेशे पदसमुदायोपचाराद् नानाजीवविषयकोऽनुत्कृष्टप्रदेशबन्धः सर्वाद्धा=सर्वकालं भवति, तत्र–तासु द्वाषष्टिमार्गणासु 'णियमाऽत्थि' इत्यादि, सप्तकर्मणामवस्थितप्रदेशबन्धः सर्वदा भवति। अत्रेयं भावना–यासु मार्गणासु जीवा असंख्यलोकाकाशप्रदेशप्रमाणा यद्वा ततोऽप्यधिकास्तासु मार्गणासु जीवबाहुल्यादवस्थितप्रदेशबन्धका जीवाः सर्वदा प्राप्यन्ते, यासु चासंख्यलोकाकाशप्रदेशेभ्यो न्यूना जीवास्तासु जीवस्वल्पत्वादवस्थितप्रदेशबन्धका जीवाः सर्वदा न भवन्ति, कदाचित्तेषामत्यन्ताभावोऽपि भवतीति व्याप्तिः। नानाजीवविषयकानुत्कृष्टप्रदेशबन्धकाले निगदितद्वाषष्टिमार्गणान्तः कासुचिद् मार्गणासु असंख्यलोकाकाशप्रदेशप्रमाणाः कासुचिच्चानन्ता जीवा वर्तन्त इति यथोक्तव्याप्त्या सप्तकर्मणामवस्थितप्रदेशबन्धकानां सर्वदा लाभादवस्थितप्रदेशबन्धोऽपि सर्वदा भवति।

'आउस्स सव्वपया' इति, पूर्वार्धस्थानि समस्तपदान्यत्रापि सम्बध्यन्ते, ततोऽयमर्थः–यासु मार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धः सर्वदा भवति तासु द्वाषष्टिमार्गणासु आयुषो भूयस्कारादिसर्वपदानि सर्वकालं भवन्ति। इयमत्र भावना–यदाऽऽयुर्बन्धो भवति तदाऽऽयुषो भूयस्कारादिपदानि प्रवर्तन्ते। अतो यासु मार्गणासु जीवा असंख्यलोकाकाशप्रदेशप्रमाणा यद्वा ततोऽप्यधिकास्तासु आयुर्बन्धं विदधतामायुर्बन्धं प्रारभमाणानां च सर्वदा प्राप्यमाणत्वादायुषो भूयस्कारादयः सर्वदा भवन्ति। अथ यासु मार्गणासु असंख्यलोकाकाशप्रदेशेभ्यो न्यूना जीवास्तासु आयुर्बन्धं कुर्वतामायुर्बन्धमुपक्रममाणानां च सर्वदाऽप्राप्यमाणत्वादायुषो भूयस्कारादयः सर्वदा न भवन्तीति व्याप्तिः। अत्रोक्तद्विषष्टिमार्गणामध्ये कासुचिद् मार्गणासु असंख्यलोकाकाशप्रदेशप्रमाणाः कासुचिच्च ततोऽप्यधिका जीवा विद्यन्त इति यथोक्तव्याप्तिमाश्रित्य तासु आयुषो भूयस्कारादिचतुष्पदानि सर्वदैव लभ्यन्ते।

यासु मार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकालः सर्वाद्धा ता द्वाषष्टिमार्गणा इमाः–तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, द्वादशकायसूक्ष्मभेदाः, वनस्पतिकायौघः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ; मिथ्यात्वम्; असंज्ञी आहारकश्चेति।

[द्वितीयगाथावृत्तिः] इदानीं पूर्ववेन शेषमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धस्य भङ्गविचयं निर्वक्ति-'**चउजुअसयसेसासु**' इत्यादि; चतुरुत्तरशतसंख्याकासु शेषासु इति चतुरुत्तरशतशेषासु, 'मयूरव्यंसकेत्यादयः' [सिद्धहेम० ३।१।११६] इति सूत्रेण मध्यमपदलोपिसमासः ।

न चात्र "विशेषणं विशेष्येणैकार्थं कर्मधारयश्च" (सिद्धहेम० ३।१।९६) इति सूत्रेण कर्मधारयसमासः कथं न भवति ? इत्यारेकणीयम्, "संख्या समाहारे च द्विगुश्चाऽनाम्न्ययम्" (३।१।९९) इति सूत्रस्य नियमार्थत्वात् । तत्र नियमाकारश्चैवम्-संख्यावाचिनो नाम्नो यदि परेण नाम्ना कर्मधारयसमासो भवेत्तर्हि समाहार-संज्ञा तद्धितोत्तरपदेषु एव, नान्यत्र । अत एवाष्टौ प्रवचनमातर इत्यादौ न कर्मधारयसमासः । अत एव **सिद्धान्तकौमुद्यां** 'दिक्संख्ये संज्ञायाम्' (सिद्धान्त० २।१।५०) इति सूत्रे **बालमनोरमावृत्तौ** "ननु तर्हि 'षोडशपदार्थानाम्' इत्यत्र कथं समासः ? इत्याशङ्कां मनसि निधाय **श्रीवासुदेवदीक्षितोऽप्याह**-"षोडशपदानामित्यत्र तु षोडशसंख्याकाः पदार्था इति 'मध्यमपदलोपी समासः' इत्यलम्" ।

शेषासु चतुरधिकशतमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धो भजनीयः-अध्रुवोऽस्ति । कथम् ? इति चेद्, शेषमार्गणान्तः प्रतिमार्गणमसंख्यलोकाकाशप्रदेशेभ्यो न्यूना जीवा वर्तन्ते । अतस्तास्वनन्तरगाथायां सप्तकर्मावस्थितपदवक्तव्यतायां प्रदर्शितव्याप्त्या सप्तकर्मणामवस्थितप्रदेशबन्धकाः कदाचिन्न भवन्त्यपि । यदा चावस्थितप्रदेशबन्धकानामभावस्तदावस्थितप्रदेशबन्धस्याप्यभावः । इति शेषमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धो भजनीयो भवति ।

शेषमार्गणा इमाः-निखिलनरकभेदाः, तिर्यक्पञ्चेन्द्रियौघपर्याप्तापर्याप्तभेदभिन्नतिर्यक्पञ्चेन्द्रियतिरश्च्य इति चत्वारस्तिर्यग्गतिभेदाः, समस्तमर्त्यगतिभेदाः, समस्तामरगतिभेदाश्च इति षडुत्तरचत्वारिंशद्गतिभेदाः, कृत्स्नद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियकाय आहारककायश्चेति द्वादशयोगभेदाः, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयममन्तरा षट् संयममार्गणाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट्सम्यक्त्वमार्गणाः, संज्ञी चेति । वैक्रियमिश्राहारकमिश्रकार्मणकायानाहारकमार्गणास्ववस्थितप्रदेशबन्धो न भवतीति न विस्मर्तव्यम् ।

अथोत्तरार्धेन शेषमार्गणासु आयुषो भूयस्कारादिप्रदेशबन्धानां भङ्गविचयमाह-'**इगजुअसयसेसासु**' इत्यादि, एकाधिकशतमार्गणासु आयुषो भूयस्कारादिसर्वपदानि भजनीयानि=अध्रुवाणि सन्ति । **अत्रेयं भावना**-शेषासु मार्गणासु प्रतिमार्गणमसंख्यलोकाकाशप्रदेशेभ्यो न्यूना जीवा विद्यन्ते । अतस्तास्वनन्तरगाथायामायुषो भूयस्कारादिपदवक्तव्यतायां निगदितव्याप्त्याऽऽयुर्बन्धं विदधतामायुर्बन्धमुपक्रममाणानां च जीवानां सर्वदाऽप्राप्यमाणत्वादायुषो भूयस्कारादिचतुष्पदानि सर्वदा न भवन्ति । अत्र शेषमार्गणा अवेदसूक्ष्मसम्परायमिश्रोपशमसम्यक्त्ववर्जा आहारक-

मिश्रसहिताश्चानन्तरनिगदितमार्गणा एव ज्ञातव्याः। अत्रायं विशेषः—आहारकमिश्रमार्गणायां भङ्गविचय आयुषः सर्वपदानां न वक्तव्यः, किन्तु भूयस्कारावक्तव्यपदयोरेव, तस्यामल्पतरावस्थितपदयोरसद्भावात्।

ननु प्रकृतद्वारस्य भङ्गविचय इति संज्ञा। तत्र भङ्गानां विचयः=समूह इति भङ्गविचयः। अतोऽस्मिन् द्वारे भूयस्कारादिपदानां भङ्गविचयो निरूपणीयः। परन्तु ग्रन्थकृता तु तमनिरूप्य भूयस्कारादिचतुष्पदान्तः कानि पदानि भजनीयानि सन्ति कानि च सर्वदा भवन्तीत्येवं निरूपितमिति चेद्, न, वस्तुतत्त्वापरिज्ञानात्, अत्र ग्रन्थकृतौघत आदेशतो वा भूयस्कारादिचतुष्पदान्तोऽमुकपदानि भजनीयानि सन्ति अमुकपदानि सर्वदा भवन्तीत्यादिनिरूपणेन परमार्थतो भङ्गविचय एव प्ररूपितः।

कथम्? इति चेद्, शृणु, यत्र भूयस्कारप्रदेशबन्धादिपदानि नियमाद् भवन्ति ध्रुवाणि भवन्तीति यावत्; तत्र तेषां भूयस्कारप्रदेशबन्धादीनां विधायकाः सर्वदाऽनेके एव भवन्ति। परन्तु *यत्र भूयस्कारप्रदेशबन्धादिपदानि भजनीयान्यर्थादध्रुवाणि तत्र भूयस्कारादिप्रदेशबन्धकानां यथा* कदाचिदत्यन्ताभावो भवति तथैव कदाचिदेकः कदाचिच्चानेके जीवास्तत्तत्प्रदेशबन्धका अपि भवन्ति। अतो यस्यां मार्गणायां त्रीणि पदानि ध्रुवाण्येकं पदं चाध्रुवं तस्यां मार्गणायां त्रयाणां ध्रुवपदानां तु सर्वदाऽनेके एव जीवा बन्धका भवन्तीति तेषाम् 'अनेकबन्धकाः' इतिस्वरूप एक एव भङ्गो भवति। अध्रुवपदस्य कदाचिदेक एव जीवो बन्धको वर्तत इति 'एकबन्धकः' इति स्वरूप एकभङ्गस्तथा कदाचिदनेके जीवा अपि बन्धका भवन्तीति 'अनेकबन्धकाः' इतिस्वरूपो द्वितीयो भङ्गो भवति। इत्येवमेकाध्रुवपदस्य द्वौ भङ्गौ भवतः। अतो यस्यां मार्गणायामेकमध्रुवपदं तस्याम-ध्रुवपदसत्कौ द्वौ ध्रुवपदसत्कश्चैक इति त्रयो भङ्गाः सम्भवन्ति ॥५५५।५५६॥

ननु सत्यम्, अत्र परमार्थतो भङ्गविचय एव प्रदर्शित इति ज्ञातम्। एवं भवदुक्तरीत्या ध्रुवपदान्येकं द्वे त्रीणि चत्वारि वा स्युः परं तत्सत्कः 'अनेकबन्धका' इत्येक एव भङ्गो भवति। एकाध्रुवपदस्य 'एकबन्धकः' 'अनेकबन्धकाः' इति द्वौ भङ्गौ सम्भवेते। किन्तु यत्र द्वे त्रीणि चत्वारि वा पदान्यध्रुवाणि स्युस्तत्र कियान् भङ्गविचयो भवतीति कथं ज्ञायेत? इति चेद्, मा त्वरिष्ठाः, अत एव ग्रन्थकार इदानीमेकाद्यध्रुवपदानां भङ्गविचयोपपादनाय करणगाथामाह—

भंगेगऽणेगरूवा दो अधुवपयस्स पुव्वपयभंगा।
पयवुड्ढीए दुगुणा दुजुआ तस्संजुआ कज्जा ॥५५७॥

(प्रे०) 'भंगेगऽणेगरूवा दो अधुवपयस्स' इति, 'अधुवपयस्स' इत्यस्यैकवचनान्तत्वादेकस्याध्रुवपदस्य 'भंगेगऽणेगरूवा' प्राकृतत्वाद् द्विवचनस्य बहुवचनम्; एकानेकरूपौ—एकबन्धकः, अनेकबन्धका इत्येवंरूपौ द्वौ भङ्गौ सम्भवतः। अत्र कथम्? इति पर्यनुयोगस्यानवकाशः;

प्रागेव प्रपञ्चितत्वात् । इदानीं द्वयाद्यध्रुवपदानां भङ्गविचयोपपादनकरणमाह–पुव्वपयभंगा पयवड्ढोए दुगुणा' इति; 'पयवड्ढी' इति पदवृद्धौ–द्वयोः पदयोरध्रुवत्वे सति, त्रयाणां पदानामध्रुवत्वे सति, चतुर्णां पदानामध्रुवत्वे सतीत्येवमेकैकपदवृद्धौ पूर्वपदभङ्गा द्विगुणिताः–द्विगुणाः कर्तव्याः । इदमुक्तं भवति–यावतामध्रुवपदानां भङ्गा ज्ञातुमिष्यन्ते तावत्पदेभ्योऽव्यवहितपूर्वपदभङ्गा द्विगुणाः कर्तव्याः । तद्यथा–यदि द्वयध्रुवपदयोर्भङ्गा ज्ञातुमिष्यन्ते तर्हि द्विपदाभ्यामव्यवहितपूर्वं यदेकं पदं तस्य यौ द्वौ भङ्गौ तौ द्विगुणौ कर्तव्यौ, (२×२=४) ततश्चत्वारः संपन्नाः, ततः किं विधेयम् ? इत्याह–'दुजुआ' इति, स्वाऽव्यवहितपूर्वभङ्गैर्गुणिता इष्टपदभङ्गा द्विभङ्गयुक्ताः कर्तव्याः, अत्र स्वाऽव्यवहितपूर्वपदभङ्गैर्गुणिता इष्टपदभङ्गाश्चत्वारः सन्ति, ततो द्विभङ्गयुक्ताश्चत्वारः षड् भङ्गा भवन्ति । ततः किं कार्यम् ? इत्याह–'तस्संजुआ कज्जा' इति, तैः संयुक्तास्तत्संयुक्ताः, ततस्ते भङ्गास्तैः स्वाऽव्यवहितपूर्वपदभङ्गैः संयुक्ताः कर्तव्याः । तद्यथा–प्रस्तुते निदर्शनतो द्वयध्रुवपदयोर्भङ्गा ज्ञातुमिष्यन्ते । अतोऽत्र पर्यन्तं संपन्नाः षड्भङ्गा द्विपदाऽव्यवहिपूर्वपदस्यैकस्य यौ द्वौ भङ्गौ ताभ्यां युक्ताः कर्तव्याः, एवं कृते च (६+२=८) अष्टौ भङ्गाः प्राप्ताः । इत्येवं द्वयध्रुवपदानामष्टौ भङ्गा भवन्ति ।

अथ प्रस्तुतकरणमाश्रित्य त्रिपदभङ्गाः प्रदर्श्यन्ते–त्रिपदेभ्योऽव्यवहितपूर्वे ये द्वे पदे तयोरष्टभङ्गा अनन्तरमेवोपपादिताः । अतस्तेऽष्टौ भङ्गा द्विगुणाः कर्तव्याः, कृतेषु द्विगुणेषु (८×२=१६) षोडश भङ्गा भवन्ति । ततस्ते षोडशभङ्गा द्वियुक्ताः कर्तव्याः, एवं कृते च (१६+२=१८) अष्टादश भङ्गाः सम्पन्नाः । ततः पुनः स्वाव्यवहितपूर्वपदभङ्गैः संयुक्ताः विधेयाः, अत्र स्वाव्यवहितपूर्वपदभङ्गा अष्टौ, ततोऽष्टसंयुक्ताः अष्टादश षड्विंशतिर्भवन्ति । इत्येवं त्र्यध्रुवपदानां षड्विंशतिर्भङ्गाः सम्पद्यन्ते । इदानीं चतुरध्रुवपदानां भङ्गा निष्पाद्यन्ते-चतुष्पदेभ्योऽव्यवहितपूर्वत्रिपदानां भङ्गाः षड्विंशतिः, अतस्ते षड्विंशतिभङ्गा द्विगुणाः कार्याः, ततः (२६×२=५२) द्विपञ्चाशद्भङ्गाः प्राप्ताः । अथ ते द्वियुक्ताः कर्तव्याः, ततः (५२+२=५४) चतुष्पञ्चाशद् भङ्गाः प्राप्ताः । ततः पुनस्तेऽव्यवहितपूर्वत्रिपदानां षड्विंशतिभङ्गैर्युक्ताः कर्तव्याः, एवं कृते च (५४+२६=८०) अशीतिभङ्गा निष्पन्नाः । इत्येवं चतुरध्रुवपदानामशीतिभङ्गा भवन्ति ।

अथ ग्रन्थकृतैकाद्यध्रुवपदानां भङ्गाः परमार्थतो निगदिता अपि शब्दैरनुल्लिखिताः, अतो व्युत्पन्नमतीनां सम्भाव्यमानभङ्गविचयस्य मङ्क्षु बोधोत्पत्तावपि मन्दमेधसामाशु बोधाऽनुदयात् तेषामनुग्रहार्थमस्माभिरत्रौघत आदेशतश्च सम्भाव्यमानभङ्गविचय उल्लिख्यते । तद्यथा–सप्तकर्मणां त्रीणि पदानि ध्रुवाणि, अवक्तव्याभिधमेकपदमध्रुवम् । ततो ध्रुवपदसत्क एकभङ्गः, अध्रुवपदसत्कौ द्वौ भङ्गाविति ध्रुवाध्रुवपदानां समुदितास्त्रयो भङ्गा भवन्ति । तत्र भङ्गविन्यास एवम्–यदाऽवक्तव्यप्रदेशबन्धकानामत्यन्ताभावस्तदाऽनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, अनेकेऽ-

वस्थितप्रदेशबन्धका इति ध्रुवपदसत्कः प्रथमो भङ्गः । यदैकजीवोऽवक्तव्यप्रदेशबन्धको भवति तदाऽनेकभूयस्कारप्रदेशबन्धकाः, अनेकाल्पतरप्रदेशबन्धकाः, अनेकावस्थितप्रदेशबन्धकाः, एकोऽवक्तव्यप्रदेशबन्धक इत्यध्रुवपदसत्को द्वितीयो भङ्गः । यदाऽनेके जीवा अवक्तव्यप्रदेशबन्धका भवन्ति तदाऽनेके भूयस्कारप्रदेशबन्धकाः, अनेकाल्पतरप्रदेशबन्धकाः अनेकाऽवस्थितप्रदेशबन्धकाः, अनेकेऽवक्तव्यप्रदेशबन्धका इत्यध्रुवपदसत्कस्तृतीयो भङ्गः । आयुषः सर्वाणि पदानि ध्रुवाणि सन्तीति तत्सत्कोऽनेकभूयस्कारप्रदेशबन्धकाः, अनेकाल्पतरप्रदेशबन्धकाः, अनेकावस्थितप्रदेशबन्धकाः, अनेकाऽवक्तव्यप्रदेशबन्धका इत्येक एव भङ्गो भवति ।

अथादेशतो भङ्गविचयोल्लेखावसर इत्यादौ सप्तकर्माण्याश्रित्योल्लिख्यते–तिर्यगोघः, सर्वैकेन्द्रियभेदाः, समस्तनिगोदभेदाः, द्वादशकायसूक्ष्मभेदाः, वनस्पतिकायौघः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, औदारिकमिश्रकाययोगः, कार्मणकाययोगः, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अप्रशस्तलेश्यात्रिकम् , अभव्यः, मिथ्यात्वम् , असंज्ञी अनाहारकश्चेति नवपञ्चाशद्मार्गणासु सम्भाव्यमानसर्वप्रदेशबन्धा ध्रुवा इति ध्रुवपदसत्क एक एव भङ्गो भवति । तत्र कार्मणकाययोगानाहारकयोर्भूयस्कारपदं, शेषास्ववक्तव्यं विना त्रीणि पदानि सम्भवन्तीत्यालक्षितव्यम् । अत्र लोभमार्गणायां मोहनीयस्यौघवत् त्रयो भङ्गा ज्ञेयाः ।

तथा निखिलनरकमार्गणाः, तिर्यक्पञ्चेन्द्रियौघपर्याप्तापर्याप्तभेदभिन्नतिर्यक्पञ्चेन्द्रियतिरश्च्य इति चत्वारस्तिर्यग्गतिभेदाः, समामर्त्यभेदाः इति द्विचत्वारिंशद्गतिभेदाः, कृत्स्नद्वित्रिचतुरिन्द्रियभेदा अपर्याप्तपञ्चेन्द्रियश्चेति दशेन्द्रियभेदाः, पर्याप्तबादरपृथिव्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायोऽपर्याप्तत्रसकायश्चेति षट्कायमार्गणाः, काययोगौघः, औदारिककायः वैक्रियकायश्चेति त्रियोगभेदाः, स्त्रीपुरुषलक्षणद्विवेदभेदौ, विभङ्गज्ञानलक्षणैकज्ञानभेदः, सामायिकदेशविरतिसंयमौ, अचक्षुर्दर्शनं, तेजःपद्मलेश्ये, भव्यः, क्षायोपशमिकसम्यक्त्वमाहारकश्चेति द्वासप्ततिमार्गणासु एकं पदमध्रुवं शेषाणि स्वप्रायोग्याणि ध्रुवाणि । अतस्तासु ध्रुवाध्रुवपदसत्कास्त्रयो भङ्गा उपपद्यन्ते । त्रिभङ्गानां विन्यासस्तु प्रागोघवक्तव्यतायां प्रदर्शितः ।

अत्रेदं बोध्यम्–अत्र निगदितद्विसप्ततिमार्गणान्तः, काययोगौघः औदारिकायः, अचक्षुर्दर्शनं, भव्य आहारकश्चेति पञ्चमार्गणास्ववक्तव्यप्रदेशबन्धोऽध्रुवः शेषत्रिप्रदेशबन्धाश्च ध्रुवाः । शेषासु सप्तषष्टिमार्गणास्ववस्थितप्रदेशबन्धोऽध्रुवो भूयस्काराल्पतरप्रदेशबन्धौ च ध्रुवौ । अवक्तव्यप्रदेशबन्धस्त्वेतासु न सम्भवति । मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्यमार्गणाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसकायौघपर्याप्तत्रसकायौ, पञ्चमनःपञ्चवचनानि, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः, चक्षुरवधिदर्शने, शुक्ललेश्या, सम्यक्त्वौघक्षायिकसम्यक्त्वे संज्ञी चेत्यष्टाविंशति-

मार्गणासु भूयस्काराल्पतरलक्षणद्विपदे ध्रुवे अवक्तव्यावस्थितलक्षणे द्वे पदे चाध्रुवे इति ध्रुवाध्रुवपदानां समुदिता नव भङ्गाः सम्पद्यन्ते ।

अत्र भङ्गविन्यास एवम्—यदैकोऽवक्तव्यप्रदेशबन्धकोऽवस्थितप्रदेशबन्धकस्य चात्यन्ताभावस्तदा "अनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, एकोऽवक्तव्यप्रदेशबन्धकः" इति प्रथमो भङ्गः । यदाऽनेकेऽवक्तव्यप्रदेशबन्धका अवस्थितप्रदेशबन्धकानां चाभावस्तदा "अनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, अनेकेऽवक्तव्यप्रदेशबन्धकाः" इति द्वितीयो भङ्गः । यदैकोऽवस्थितप्रदेशबन्धकोऽवक्तव्यप्रदेशबन्धकानां चाभावस्तदा "अनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, एकोऽवस्थितप्रदेशबन्धकः" इति तृतीयो भङ्गः । यदाऽनेकेऽवस्थितप्रदेशबन्धका अवक्तव्यप्रदेशबन्धकस्य चात्यन्ताभावस्तदा "अनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, अनेकेऽवस्थितप्रदेशबन्धकाः" इति चतुर्थो भङ्गः । यदैकोऽवक्तव्यप्रदेशबन्धक एकोऽवस्थितप्रदेशबन्धकश्च तदा "अनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, एकोऽवक्तव्यप्रदेशबन्धकः, एकोऽवस्थितप्रदेशबन्धकः" इति पञ्चमो भङ्गः । यदाऽनेकेऽवक्तव्यप्रदेशबन्धका एकोऽवस्थितप्रदेशबन्धकश्च तदा "अनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, अनेकेऽवक्तव्यप्रदेशबन्धकाः, एकोऽवस्थितप्रदेशबन्धकः" इति षष्ठो भङ्गः । यदैकोऽवक्तव्यप्रदेशबन्धकोऽनेकेऽवस्थितप्रदेशबन्धकाश्च तदा "अनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, एकोऽवक्तव्यप्रदेशबन्धकः, अनेकेऽवस्थितप्रदेशबन्धकाः" इति सप्तमो भङ्गः । यदाऽनेकेऽवक्तव्यप्रदेशबन्धका अनेकेऽवस्थितप्रदेशबन्धकाश्च तदा "अनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः, अनेकेऽवक्तव्यप्रदेशबन्धकाः, अनेकेऽवस्थितप्रदेशबन्धकाः" इत्यष्टमो भङ्गः । इति द्व्यध्रुवपदसत्का अष्टौ भङ्गाः । यदाऽवक्तव्यप्रदेशबन्धकस्यावस्थितप्रदेशबन्धकस्य चात्यन्ताभावस्तदाऽनेके भूयस्कारप्रदेशबन्धकाः, अनेकेऽल्पतरप्रदेशबन्धकाः इति द्विध्रुवपदसत्क एको भङ्गो भवति । इत्येवं मनुष्यौघाद्यष्टाविंशतिमार्गणासु ध्रुवाध्रुवपदानां समुदिता नव भङ्गा निष्पद्यन्ते ।

अथाऽपर्याप्तमनुष्यः, वैक्रियमिश्रकायः, आहारकद्विकं, छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमाः, मिश्रः सास्वादनसम्यक्त्वं चेति नवमार्गणासु स्वसम्भाव्यमानभूयस्काराल्पतरावस्थितलक्षणानि त्रीण्यपि पदान्यध्रुवाणि । तत्र छेदोपस्थापनीयपरिहारयोर्भङ्गाः स्वयमेव ज्ञातव्याः । शेषसप्तमार्गणास्वध्रुवसत्काः षड्विंशतिभङ्गाः सम्पद्यन्ते । अवेदोपशममार्गणयोश्चत्वार्यपि पदान्यध्रुवाणीति प्राक्प्रदर्शितकरणेनाशीतिभङ्गा उपपद्यन्ते । अत्र षड्विंशतिभङ्गानामशीतिभङ्गानां च विन्यासः स्वयमेवोह्यः, ग्रन्थगौरवभिया सुगमत्वाच्च वयं नोल्लिखामः ॥५५७॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे द्वितीये भूयस्काराधिकारे पञ्चमं
भङ्गविचयद्वारं समाप्तम् ॥

## ॥ षष्ठं भागद्वारम् ॥

तदेवं गतं पञ्चमं भङ्गविचयाभिधं द्वारम् । इदानीं भूयस्कारादिचतुर्विधप्रदेशबन्धकान्तो विवक्षितप्रदेशबन्धकानां सर्वजीवानाश्रित्य विवक्षितसमये कियान् भागो भवतीति प्रतिपादनपरं क्रमागतं षष्ठं भागद्वारं प्रतिपिपादयिषाधिकरणान्तःकरणवान् प्रथमं तावदोघतो भूयस्काराऽल्पतरप्रदेशबन्धकानां भागं चिन्तयति—

अट्ठण्ह बंधगा खलु भूओगारस्स साहियदुभागो ।
अप्पयरस्स दुभागो देसूणो बंधगा णेया ॥५५८॥

(प्रे०) 'अट्ठण्ह' इत्यादि, ज्ञानावरणीयाद्यष्टकर्मणां भूयस्कारबन्धकाः 'साहियदुभागो' इति, द्वितीयो भागो द्विभागः, साधिको द्विभागः साधिकद्विभागः, किञ्चिदधिकार्धभागो भवन्तीत्यर्थः । भूयस्कारादिचतुर्विधप्रदेशबन्धकमध्ये भूयस्कारप्रदेशबन्धका जीवाः किञ्चिदधिकार्धभागो वर्तन्त इति यावत् । कथम् ? इति चेद्, उच्यते, अल्पतरादित्रिप्रदेशबन्धेभ्यो भूयस्कारप्रदेशबन्धस्य कालो बृहत्तरः, अवक्तव्यप्रदेशबन्धकालस्यैकसामयिकत्वाद्, अवस्थितप्रदेशबन्धकालस्योत्कृष्टतोऽपि संख्यातसमयमात्रत्वाद्, एवमल्पतरप्रदेशबन्धकालस्यान्तर्मुहूर्तप्रमाणत्वेऽपि भूयस्कारप्रदेशबन्धापेक्षया न्यूनान्तर्मुहूर्तप्रमाणत्वाद् । तथा सप्तकर्माण्याश्रित्यापर्याप्तावस्थायां भूयस्कारप्रदेशबन्ध एव भवति । तत आयुराश्रित्य भूयस्कारप्रदेशबन्धस्याधिककालत्वात्, सप्तकर्माण्याश्रित्य भूयस्कारप्रदेशबन्धस्याधिककालत्वादपर्याप्तावस्थायां भूयस्कारप्रदेशबन्धस्यैव सत्त्वाच्च भूयस्कारप्रदेशबन्धका जीवाः साधिकद्वितीयभागे वर्तन्ते । नन्वयं भाग उत्कृष्टतो भवति यदुत जघन्यतः ? इति चेद्, उभयथाऽपि, नवरं जघन्यतो चिन्त्यमाने साधिकत्वं किञ्चिन्न्यूनम्, उत्कृष्टतो विचार्यमाणे साधिकत्वं किञ्चिद् बृहत्तरमवसेयम् । एवमग्रेऽपि भागप्ररूपणायां यथासम्भवं न्यूनाधिकत्वं बोध्यम् । 'अप्पयरस्स' इत्यादि, 'अट्ठण्ह' इति पदमत्रापि सम्बध्यते, अष्टकर्मणामल्पतरप्रदेशबन्धकाः 'देशोनद्वितीयभागो=देशोनार्धभागो' ज्ञातव्याः । अल्पतरप्रदेशबन्धकालस्य भूयस्कारप्रदेशबन्धकालापेक्षया न्यूनप्रमाणत्वादवस्थितावक्तव्यप्रदेशबन्धकालापेक्षया बृहत्तरत्वाच्चाल्पतरप्रदेशबन्धकानां यथोक्तभागो घटां याति ।

साम्प्रतमोघतोऽष्टकर्मणामवस्थितावक्तव्यप्रदेशबन्धकानां भागप्ररूपणां चिकीर्षुराह—

भागो असंखियतमो अवट्ठिअस्स इयरे अणंतंसो ।
सत्तण्ह अवत्तव्वस्साउस्स असंखभागोऽत्थि ॥५५९॥

(प्रे०) "भागो असंखियतमो अवट्ठिअस्स" इति, अष्टकर्मणामिति पूर्वगाथातोऽनुवर्तते, अष्टकर्मणामवस्थितप्रदेशबन्धकानाम् "असंख्याततमो भागो" भवति । अत्रेयं भावना—पूर्वमन्तर-

प्ररूपणायां प्रत्येकजीवमाश्रित्यावस्थितप्रदेशबन्धस्योत्कृष्टान्तरं 'श्रेण्यसंख्यातभागः' प्ररूपितम् , ततः सर्वजीवेषु प्रत्येकजीवः सकृदवस्थितप्रदेशबन्धं विधाय श्रेण्यसंख्यातभागप्रमाणकाले व्यतीतेऽवश्यं पुनरवस्थितप्रदेशबन्धं विदधातीति समापतितम् । जीवा अनन्ताः सन्तीति तेषु प्रत्येकजीवस्य श्रेण्यसंख्यातभागकाले व्यतीतेऽवश्यं पुनरवस्थितप्रदेशबन्धस्तदैव सम्भवति यदि प्रत्येकसमयमवस्थितप्रदेशबन्धका असंख्याततमे भागे वर्तन्ते । यद्यवस्थितप्रदेशबन्धकाः प्रतिसमयमनन्ततमो भागो भवेत् तर्हि अवस्थितप्रदेशबन्धस्य तावत्प्रमाणमुत्कृष्टान्तरं घटां नाटेत् ।

**'अणंतंसो सत्तण्ह अवत्तव्वस्स'** इति, सप्तकर्मणामवक्तव्यप्रदेशबन्धकाः 'अनन्ततमे भागे' वर्तन्ते । इयमत्र भावना—सप्तकर्मणामवक्तव्यप्रदेशबन्धका मनुष्याः, श्रेणौ निधनं प्राप्य देवतयोत्पन्ना जीवा वा भवन्ति । ते च संख्याता एव । संख्यातराशिश्चानन्तराशेरनन्ततमो भागः, इति विवक्षितसमये चिन्त्यमानाः सप्तकर्मणामवक्तव्यप्रदेशबन्धकाः सर्वजीवानाश्रित्य "अनन्ततमे भागे" वर्तन्ते ।

**'अवत्तव्वस्स'** इति पदस्योभयत्र योजनाद् **'अवत्तव्वस्साउस्स असंखभागोऽत्थि'** इति, आयुषोऽवक्तव्यप्रदेशबन्धका 'असंख्याततमे भागे' सन्ति । कथम् ? इति चेद् , अवक्तव्यप्रदेशबन्धस्यैकसामयिकत्वाद् । अत्रायं विवेकः—यद्यप्यष्टानामपि कर्मणामवक्तव्यप्रदेशबन्धस्य काल एकसमयः, तथापि सप्तकर्मणामवक्तव्यप्रदेशबन्धकाः सर्वजीवापेक्षयाऽनन्ततमे भागे एव वर्तन्ते, यतस्ते संख्याता एव । आयुषोऽवक्तव्यप्रदेशबन्धकास्तु प्रतिसमयमनन्तजीवैरायुर्बन्धः प्रारभ्यते इति आयुर्बन्धकसर्वजीवानाश्रित्यासंख्याततमे भागे वर्तन्ते ॥५५९॥ तदेवमोघतोऽष्टानामपि कर्मणां चतुर्विधप्रदेशबन्धकानां प्रत्येकं भागप्ररूपणा कृता । सम्प्रति तामेवादेशतश्चिकीर्षुरादौ तावद्यासु मार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकानां सर्वभागस्ता निरूपयति—

**मीसदुजोगेसु तहा कम्माणाहारगेसु सव्वंसो ।**
**भूगारस्स हवेज्जा पयडीणं आउवज्जाणं ॥५६०॥**

(प्रे०) **"मीसदुजोगेसु"** इत्यादि, वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रयोगयोः, कार्मणकायेऽनाहारके चेति चतुर्मार्गणासु आयुर्वर्जानां सप्तप्रकृतीनां भूयस्कारप्रदेशबन्धकानां **'सव्वंसो'** इति, सर्वभागो भवति, सर्वे जीवा भूयस्कारप्रदेशबन्धका एव भवन्तीत्यर्थः । अत्रायं भावः—एतासु मार्गणासु मार्गणायाः प्रथमसमयादारभ्य चरमसमयपर्यन्तं योगस्यासंख्येयगुणवृद्धिसद्भावाद् भूयस्कारप्रदेशबन्ध एव भवतीति प्रागसकृद् निरूपितम्, इति भूयस्कारातिरिक्तप्रदेशबन्धाभावादेतासु मार्गणासु प्रतिसमयं यावन्तो जीवा भवन्ति ते सर्वे भूयस्कारप्रदेशबन्धमेव कुर्वन्तीति साधूक्तं 'मीसदुजोगेसु' इत्यादि ॥५६०॥ इदानीं शेषमार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामन्यतरप्रदेशबन्धकानां च भागं प्ररूपयति—

सेसासु मग्गणासुं भूओगारस्स साहियदुभागो ।
अप्पयरस्स दुभागो देसूणो बंधगा णेया ॥ ५६१ ॥

(प्रे०) 'सेसासु' इत्यादि, उक्तव्यतिरिक्तासु षड्चत्वरषष्टिशतमार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकाः "साधिकद्वितीयभागः–साधिकार्धभागः" भवन्ति । अत्र भावना सामान्यवक्तव्यतायां प्रदर्शितरीत्या विधेया । 'अप्पयरस्स' इत्यादि, 'सेसासु' इति पदमत्रापि सम्बध्यते, वैक्रियमिश्रादिमार्गणाचतुष्केऽन्यतरप्रदेशबन्धाभावात्शेषासु षडधिकषष्टिशतमार्गणासु सप्तकर्मणामन्यतरप्रदेशबन्धकाः 'देशोनद्वितीयभागः=किञ्चिन्न्यूनार्धभागः' भवन्ति । अत्रापि भावनौघवद् विधेया । अत्र शेषमार्गणाबोधस्य सुकरत्वान्नामतो मार्गणा नोल्लिख्यन्ते ॥५६१॥

एतर्हि सप्तकर्मणामवस्थितप्रदेशबन्धकानां भागं गाथाद्विकेन वक्तुकाम आह—

पज्जमणुसमणुसीसुं सव्वत्थाहारगेसु गयवेए ।
मणणाणसंयमेसुं समइअछेअपरिहारसुहमेसुं ॥५६२॥ (गीतिः)
सत्तण्ह बंधगा खलु होअन्ति अवट्ठिअस्स संखंसो ।
सेसासु मग्गणासुं णेया भागो असंखयमो ॥५६३॥

(प्रे०) "पज्जमणुस" इत्यादि, पर्याप्तमनुष्याद्येकादशमार्गणासु 'सत्तण्ह' इत्यादि, सप्तकर्मणामवस्थितप्रदेशबन्धकाः 'संख्याततमभागः' भवन्ति । कथम् ? इति चेद्, तत्तन्मार्गणासु वर्तमानानां जीवानां संख्यातत्वादवस्थितप्रदेशबन्धकालस्याल्पत्वाच्च । 'सेसासु' इत्यादि, पर्याप्तमनुष्यप्रमुखैकादशमार्गणाद्युक्तत्वात् वैक्रियमिश्रादिचतुर्मार्गणास्ववस्थितप्रदेशबन्धस्याभावाच्च शेषासु पञ्चपञ्चाशदधिकशतमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धकाः 'असंख्याततमभागः' भवन्ति ।

अत्रेयं भावना–अत्र कासुचिन्मार्गणासु जीवा असंख्याताः कासुचिच्चानन्ता वर्तन्ते । अथ प्रत्येकजीवः श्रेण्यसंख्यातभागकाले व्यतीतेऽवश्यं पुनरवस्थितप्रदेशबन्धं विदधातीति प्रतिसमयं चिन्त्यमानाः सप्तकर्मणामवस्थितप्रदेशबन्धका जीवाः 'असंख्याततमे भागे' वर्तन्ते । शेषमार्गणा नामत इमाः–पर्याप्तमनुष्यमानुषीसर्वार्थसिद्धैर्विना चतुश्चत्वारिंशद्गतिभेदाः, निखिलेन्द्रियमार्गणाः, कृत्स्नकायभेदाः, पञ्चमनःपञ्चवचनानि, काययोगौदारिकद्विकवैक्रियकाययोगाः, वेदत्रिकं, कषायचतुष्कं, मनःपर्यवं विना षड्ज्ञानमार्गणाः, देशविरत्यसंयमौ, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, समस्तसम्यक्त्वमार्गणाः, संज्ञी, असंज्ञी, आहारकश्च ॥५६२।५६३॥

सम्प्रति सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां भागप्ररूपणां चिकीर्षुरादौ तावद्यासु मार्गणासु तेषां संख्याततमो भागस्ताः प्ररूपयति—

**पज्जणरमणुस्सीसुं अवेअमणणाणसंयमेसुं च ।**
**होअन्ति अवत्तव्वस्साउगवज्जाण संखंसो ॥५६४॥**

(प्रे०) 'पज्जणर' इत्यादि, पर्याप्तमनुष्यादिपञ्चमार्गणासु आयुर्वर्जानां सप्तकर्मणामवक्तव्य-प्रदेशबन्धकाः 'संख्याततमभागाः' भवन्ति, मार्गणासु जीवानां संख्यातमात्रत्वात् ॥५६४॥

इदानीं सम्भाव्यमानावक्तव्यप्रदेशबन्धासु शेषमार्गणासु सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां भागं निरूपयति—

**कायुरलाचक्खूसुं भवियाहारेसु उण अणंतंसो ।**
**सत्तण्हं मोहस्स य लोहे अण्णह असंखंसो ॥५६५॥**

(प्रे०) 'कायुरलाचक्खूसु' इत्यादि, काययोगौघे, औदारिककाये, अचक्षुर्दर्शने, भव्ये आहारके चेति पञ्चमार्गणासु सप्तकर्मणामवक्तव्यप्रदेशबन्धकाः 'अनन्ततमभागाः' भवन्ति । अत्रायं भावः—एतासु मार्गणासु जीवा अनन्ताः, अवक्तव्यप्रदेशबन्धकाश्च संख्याताः, संख्यातराशिश्चानन्त-राशेरनन्ततमो भाग एव भवति । अत एतासु मार्गणासु सप्तकर्मणामवक्तव्यप्रदेशबन्धका मार्गणा-स्थसर्वजीवानाश्रित्यानन्ततमे भागे वर्तन्ते । 'मोहस्स य लोहे' इति, लोभमार्गणायां मोहनीय-कर्मणोऽवक्तव्यप्रदेशबन्धका 'अनन्ततमभागाः' भवन्ति । कुतः ? इति चेद् , लोभस्यावक्तव्यबन्ध-कानां संख्यातत्वान्मार्गणावर्तिजीवानां चानन्त्याद् ।

'अण्णह असंखंसो' इति, सप्तकर्मणामवक्तव्यप्रदेशबन्धः त्रिमनुष्यादिपञ्चत्रिंशद्-मार्गणासु भवति, तदन्तो दशमार्गणासु भागप्ररूपणा कृता । अतोऽन्यासु पञ्चविंशतिमार्गणासु सप्तकर्मणामवक्तव्यप्रदेशबन्धका 'असंख्याततमभागाः' भवन्ति । अत्रेयं भावना—एतासु मार्गणासु सर्वजीवा असंख्याता भवन्ति, सप्तकर्मणामवक्तव्यप्रदेशबन्धकाश्च संख्याता वर्तन्ते । संख्यातराशि-रसंख्यातराशेरसंख्याततमभाग एव भवति । अतः शेषमार्गणासु तत्तन्मार्गणावर्तिसर्वजीवानाश्रित्य सप्तकर्मणामवक्तव्यप्रदेशबन्धका असंख्याततमभागे एव वर्तन्ते । शेषमार्गणा इमाः—मनुष्यौघः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, ओघपर्याप्तभेदभिन्नत्रसौ, पञ्चमनःपञ्चवचनानि, मतिश्रुता-वधिज्ञानानि, चक्षुरवधिदर्शने, शुक्ललेश्या, सम्यक्त्वौपशमिकक्षायिकसम्यक्त्वानि, संज्ञी चेति ॥५६५॥ इत्थं सप्तकर्माण्याश्रित्यादेशतो भूयस्कारादिचतुर्विधप्रदेशबन्धकभागप्ररूपणा कृता । साम्प्रतं तामेवायुरप्याश्रित्य विचिन्तुः प्रथमं तावदेकगाथया आहारकमिश्रयोगमार्गणायां भूयस्कारा-वक्तव्यबन्धकानां, अन्यासु च भूयस्काराल्पतरप्रदेशबन्धकानां भागं चिन्तयति—

**आहारमीसजोगे भूगारस्साउगस्स संखंसा ।**
**इयरस्स संखभागो अण्णह ओघव्व दुपयाणं ॥५६६॥**

(प्रे०) 'आहारमीसजोगे' इत्यादि, आहारकमिश्रमार्गणायामायुषो भूयस्कारप्रदेशबन्धका जीवा मार्गणागतसर्वजीवापेक्षया, संखंसा' इति, जस्विभक्त्यन्तत्वाद् बहुत्वार्थो लभ्यते, 'संख्याता बहुभागाः' भवन्ति। 'इयरस्स संखभागो' इति, 'आहारमीसजोगे' 'आउगस्स' इति द्वे पदे अत्रापि सम्बध्येते, आहारकमिश्रकाययोगे आयुषो भूयस्कारावक्तव्यप्रदेशबन्धयोरेव सद्भावादितरस्य=अवक्तव्यस्य बन्धकाः 'संख्याततमभागः' भवन्ति। अत्रायं भावनापथः—आहारकमिश्रयोगमार्गणायां सर्वे जीवाः संख्याता एव भवन्ति, तथाऽऽयुर्बन्धप्रारम्भप्रथमसमये आयुषोऽवक्तव्यप्रदेशबन्धो भवति, तदनन्तरमायुर्बन्धकालं यावद् भूयस्कारप्रदेशबन्धो भवति, इत्यत्रायुषोऽवक्तव्यप्रदेशबन्धस्यैकसामयिकत्वाद् भूयस्कारप्रदेशबन्धस्य चान्तर्मुहूर्तप्रमाणत्वादवक्तव्यप्रदेशबन्धकाः संख्याततम एक एव भागो भवन्ति, भूयस्कारप्रदेशबन्धकाः संख्याता बहुभागा भवन्ति।

'अण्णह ओव्व दुपयाणं' इति, आहारकमिश्रे प्ररूपितत्वादाहारकमिश्रं विनाऽन्यासु द्वाषष्टिशतमार्गणासु आयुषः, 'दुपयाणं' इति, भूयस्काराल्पतरपदयोः 'भूयस्काराल्पतरप्रदेशबन्धकानामित्यर्थः, भाग इति गम्यते, 'ओघवद्' भवति। तद्यथा—भूयस्कारप्रदेशबन्धकाः 'साधिकद्वितीयभागः' अल्पतरप्रदेशबन्धकाः 'किञ्चिन्न्यूनार्धभागः' भवन्ति। अत्र भावनापथोऽप्योघवदवसातव्यः ॥५६६॥

इदानीमायुषोऽवक्तव्यावस्थितप्रदेशबन्धकानां भागं गाथाद्विकेन प्रतिपाद्य प्रकृतद्वारसमाप्तिं विदधाति—

> दुणराणताइगेसुं आहारम्मि मणपज्जवम्मि तहा।
> संयमसामइएसुं छेए परिहारसुक्कखइएसुं ॥५६७॥ (गीतिः)
> भागो संखेज्जइमोऽवत्तव्वावट्ठिआण विण्णेया।
> सेसासु बंधगा खलु णेया भागो असंखयमो ॥५६८॥

(प्रे०) 'दुणराणताइगेसु' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, आनतप्रमुखसर्वार्थसिद्धपर्यन्तेष्वष्टादशदेवगतिभेदेषु, आहारककाययोगे, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमेषु, शुक्ललेश्यायां क्षायिकसम्यक्त्वे चेत्यष्टाविंशतिमार्गणासु 'भागो संखेज्जइमो' इत्यादि, 'आयुषः' इत्यनुवर्तते, आयुषोऽवक्तव्यप्रदेशबन्धका अवस्थितप्रदेशबन्धकाश्च 'संख्याततमभागः' ज्ञातव्याः। इयमत्र भावना—पर्याप्तमनुष्यादिनवमार्गणासु मार्गणागतजीवा एव संख्याताः, आनतादिसप्तदशदेवगतिभेदेषु, क्षायिकसम्यक्त्वे शुक्ललेश्यायां च मार्गणागतजीवानामसंख्यातत्वेऽप्यायुषो बन्धका जीवाः संख्याता एव वर्तन्ते। अत्र कथम्? इति पर्यनुयोगस्यास्थानं, प्रथमाधिकारे परिमाणद्वारे सप्रमाणं युक्त्या च प्रपञ्चितत्वाद्। विस्मृततत्प्रपञ्चेन तत्रतोऽव-

गन्तव्यम् । प्रस्तुते आयुषो बन्धकानां जीवानां संख्याततत्वादवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च संख्याततमभाग एवोपपद्यते ।

'सेसासु' इत्यादि, शेषासु चतुस्त्रिंशदधिकशतमार्गणासु आयुषोऽवक्तव्यप्रदेशबन्धका अवस्थितप्रदेशबन्धकाश्च 'असंख्याततमभागः' भवन्ति । अत्रावस्थितप्रदेशबन्धकानामसंख्याततमभागे भावना सामान्यवक्तव्यतावद् ज्ञेया । अवक्तव्यप्रदेशबन्धकानामसंख्याततमभागे भावनैवम्–अत्र कासुचित् तिर्यगोघादिमार्गणासु जीवानामनन्तत्वेनायुषो बन्धकानां जीवानामनन्तत्वादवक्तव्यप्रदेशबन्धका जीवा अप्यनन्ता भवन्ति, नवरमायुषो बन्धकेभ्योऽतिस्तोकाः । लघ्वनन्तराशिना बृहदनन्तराशौ भाजिते सति लब्धिरसंख्यातराशिः समागच्छति । एवं कासुचित्पर्याप्ततिर्यक्पञ्चेन्द्रियादिषु जीवानामसंख्याततत्वेनाऽऽयुषो बन्धकानां जीवानामसंख्याततत्वादवक्तव्यप्रदेशबन्धका अपि असंख्याता भवन्ति, नवरमायुर्बन्धकासंख्यातजीवेभ्योऽतिन्यूनाः । अतोऽतिन्यूनासंख्यातराशिनाऽधिकासंख्यातराशौ विभाजिते सत्यसंख्यातराशिः लब्धिः समागच्छति । इति शेषमार्गणासु आयुषोऽवक्तव्यप्रदेशबन्धका जीवा आयुर्बन्धकसर्वजीवानाश्रित्यासंख्याततमे भागे वर्तन्ते ।

शेषाश्चतुस्त्रिंशदधिकशतमार्गणा इमाः–सर्वनरकभेदाः, सर्वतिर्यग्भेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्मप्रमुखाष्टवैमानिकभेदाश्चेति सप्तविंशतिगतिभेदाः, निखिलेन्द्रियमार्गणाः, कृत्स्नकायभेदाः, आहारकद्विकमन्तरा समयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, विना मनःपर्यवं षड्ज्ञानमार्गणाः, देशविरत्यसंयमौ, दर्शनत्रिकं, शुक्ललेश्यामृते पञ्चलेश्याः, भव्याभव्यौ, सम्यक्त्वौघक्षायोपशमिकसास्वादनमिथ्यात्वानि, संज्ञी, असंज्ञी आहारकश्चेति । अत्रेदमालक्षितव्यं धीधनैः–आहारकमिश्रमार्गणायामायुषोऽवस्थितप्रदेशबन्धो न भवति । अवक्तव्यप्रदेशबन्धकभागप्ररूपणा तु पूर्वं कृता ॥५६७।५६८॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने
मूलप्रकृतिप्रदेशबंधे भूयस्काराधिकारे
षष्ठं भागद्वारं समाप्तम् ॥



## ॥ सप्तमं परिमाणद्वारम् ॥
## ॥ अष्टमं क्षेत्रद्वारम् ॥
## ॥ नवमं स्पर्शनाद्वारम् ॥

तदेवं गतं भागद्वारम् । साम्प्रतं क्रमागतानां सप्तमाष्टमनवमानामनुक्रमेण परिमाणक्षेत्रस्पर्शनालक्षणानां त्रिद्वाराणां निरूपणं समानवक्तव्यत्वाद् युगपच्चिकीर्षुरादौ तावदायुरन्तरा सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां परिणामक्षेत्रस्पर्शना ग्रन्थलाघवार्थमतिदेशमुखेन निरूपयन्नाह—

**परिमाणखेत्तफुसणादारेसु तहा भवे अवत्तव्वो ।**
**आउगवज्जाण जहा जेट्ठपएसो भवे छण्हं ॥५६९॥**

(प्रे०) 'परिमाण' इत्यादि, परिमाणद्वारे, क्षेत्रद्वारे, स्पर्शनाद्वारे चेति त्रिद्वारेषु 'आउगवज्जाण' इति, आयुर्वर्जानां सप्तकर्मणाम् 'अवत्तव्वो' इति, अवक्तव्यप्रदेशबन्धकानां परिमाणं क्षेत्रं स्पर्शना चौघत आदेशतश्च तथा भवेयुः यथा 'जेट्ठपएसो भवे छण्हं' इति, मोहनीयायुर्वर्जानां षट्कर्मणामुत्कृष्टप्रदेशबन्धकानामोघत आदेशतश्च परिमाणं क्षेत्रं स्पर्शना च भवेयुः । मोहनीयायुषी विना ज्ञानावरणीयादिषट्कर्मणामुत्कृष्टप्रदेशबन्धकानामोघत आदेशतश्च यावत्प्रमाणानि, परिमाणं क्षेत्रं स्पर्शना चौघत आदेशतश्च भवन्ति यथाक्रमं तावत्प्रमाणानि परिमाणं क्षेत्रं स्पर्शना चौघत आदेशतश्च विनाऽऽयुः सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां भवन्तीत्यर्थः ॥५६९॥ साम्प्रतं सप्तकर्मणां शेषभूयस्कारादिप्रदेशबन्धकानामायुश्चतुर्विधप्रदेशबन्धकानां च परिमाणं क्षेत्रं स्पर्शना चातिदेशमुखेनाह—

**अणुरुपएसव्व पया सेसा होअन्ति आउवज्जाणं ।**
**आउस्स पया सव्वे अणुरुपएसव्व विण्णेया ॥५७०॥**

(प्रे०) 'अणुरुपएसव्व' इत्यादि, आयुर्वर्जानां सप्तकर्मणां शेषाणां भूयस्काराल्पतरावस्थितलक्षणत्रिबन्धविधायकानां जीवानां परिमाणं, क्षेत्रं स्पर्शना चानुक्रमेण सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां परिमाणक्षेत्रस्पर्शनावद् भवन्ति । सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामोघत आदेशतश्च यावत्प्रमाणानि परिमाणं क्षेत्रं स्पर्शना च प्रथमाधिकारे निरूपितान्यनुक्रमेण तावत्प्रमाणानि परिमाणं क्षेत्रं स्पर्शना चौघत आदेशतश्च सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च भवन्तीत्यर्थः ।

'आउस्स' इत्यादि, आयुःकर्मणो भूयस्कारादिचतुर्विधप्रदेशबन्धकानां जीवानां परिमाणं क्षेत्रं स्पर्शना च क्रमशः 'अणुरुपएसव्व' इति, 'आउस्स' इति पदमत्रापि सम्बध्यते, आयुषोऽनुत्कृष्टप्रदेशबन्धकानां परिमाणक्षेत्रस्पर्शनावद् ज्ञातव्यानि । आयुषोऽनुत्कृष्टप्रदेशबन्धकानां यावत्प्र-

भाणानि परिमाणं क्षेत्रं स्पर्शना च प्रथमाधिकारे तत्तद्द्वारे प्रतिपादितान्यनुक्रमेण तावत्परिमाणानि परिमाणं क्षेत्रं स्पर्शना चात्रायुषो भूयस्कारप्रदेशबन्धकादीनामपि ज्ञातव्यानीत्यर्थः ॥५७०॥ इदानीं वाचकानुकूल्यं लक्ष्यीकृत्यातिदेशानुसारेण तत्तत्कर्मणस्तत्तत्प्रदेशबन्धकानां क्रमशः परिमाणं क्षेत्रं स्पर्शना चोल्लिख्यन्ते ।

तत्रादौ परिमाणद्वारं विभाव्यते । तत्राप्यादौ सप्तकर्माण्याश्रित्य परिभाव्यते । तत्रौघत एवम्–अवक्तव्यप्रदेशबन्धका जीवाः "संख्याताः" एव भवन्ति, उपशमश्रेणितो निवर्तमानानां यद्वोपशमश्रेणितः पञ्चत्वं प्राप्य देवगतिप्रथमसमये वर्तमानानां जीवानामेव सप्तकर्मणामवक्तव्यप्रदेशबन्धसद्भावाद् । षट्कर्मणामुत्कृष्टप्रदेशबन्धोऽपि श्रेणिगतजीवानामेव भवतीति षट्कर्मणामुत्कृष्टप्रदेशबन्धकाः अपि संख्याता भवन्ति ।

भूयस्कारप्रदेशबन्धकाः, अल्पतरप्रदेशबन्धका अवस्थितप्रदेशबन्धकाश्च जीवाः प्रत्येकम् 'अनन्ताः' भवन्ति । एतन्निगोदजीवानाश्रित्य घटां याति, बन्धप्रायोग्यजीवबाहुल्यात् । प्रतिसमयमनन्ता जीवा भूयस्कारप्रदेशबन्धम् , अनन्ता अल्पतरप्रदेशबन्धमनन्ता अवस्थितप्रदेशबन्धं च कुर्वन्ति । अत एवाग्रे नानाजीवविषयककालद्वारे भूयस्कारादिप्रदेशबन्धकानां जीवानां काल ओघतः 'सर्वाद्धा' निरूपयिष्यते । अथादेशतः सप्तकर्मणां भूयस्कारादिप्रदेशबन्धकानां परिमाणमुल्लिख्यते ।

तत्रावक्तव्यप्रदेशबन्धकानां परिमाणमेवम्–अपर्याप्तमृते त्रिमनुष्यभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिककाययोगः, अवेदः, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः, दर्शनत्रिकं, शुक्ललेश्या, भव्यः, सम्यक्त्वौघक्षायिकोपशमसम्यक्त्वानि, संज्ञी, आहारकश्चेति पञ्चत्रिंशन्मार्गणासु सप्तकर्मणां लोभकषाये च मोहनीयस्यावक्तव्यप्रदेशबन्धकाः "संख्याताः" भवन्ति । अत्र भावनौघवद् । शेषमार्गणास्ववक्तव्यप्रदेशबन्धस्यासंभवः ।

अथ भूयस्काराल्पतरावस्थितप्रदेशबन्धकानां परिमाणमेवम्–तिर्यगोघः, सर्वैकेन्द्रियभेदाः, समस्तनिगोदभेदाः, वनस्पतिकायौघः, काययोगौघः, औदारिकद्विकं, कार्मणकायः, नपुंसकवेदः, चत्वारः कषायाः, मतिश्रुतलक्षणाज्ञानद्विकम् , असंयमः, अचक्षुर्दर्शनम् , अशुभलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी आहारकानाहारकौ चेत्यष्टात्रिंशन्मार्गणासु 'अनन्ताः' । अत्र भावनौघवद् । पर्याप्तमनुष्यमानुष्यौ, सर्वार्थसिद्धः, आहारकद्विकम् , अवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमाः इति द्वादशमार्गणासु 'संख्याताः' प्रत्येकं मार्गणासु जीवानां संख्यातत्वाद् । सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, सर्वार्थसिद्धमन्तरा निखिलदेवभेदाश्चेति त्रयश्चत्वारिंशद्गतिभेदाः, समस्तद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायौघाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः

अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेति चतुस्त्रिंशत्कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियवैक्रियमिश्रकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट्सम्यक्त्वमार्गणाः संज्ञी चेति विंशत्यधिकशतमार्गणासु 'असंख्याताः' मार्गणास्थानां जीवानामसंख्यातत्वात् । सप्तकर्मणां भूयस्कारप्रदेशबन्धकाः, अल्पतरप्रदेशबन्धकाः, अवस्थितप्रदेशबन्धका भवन्तीति सर्वत्र योजनीयम् । नवरं वैक्रियमिश्राहारकमिश्रकार्मणानाहारकेषु भूयस्कारप्रदेशबन्धकाः इत्येवमेव वक्तव्यम्, तासु भूयस्कारातिरिक्तप्रदेशबन्धस्यासत्त्वात् ।

अथायुराश्रित्य भूयस्कारादिप्रदेशबन्धकानां परिमाणं चिन्त्यते,—ओघतो भूयस्कारादिचतुर्विधप्रदेशबन्धकाः प्रत्येकम् 'अनन्ताः' भवन्ति । अत्र भावना सप्तकर्मणामोघवक्तव्यतावद् विधेया । अथादेशत एवम्—पर्याप्तमनुष्यमानुष्यौ, आनतप्राणतारणाच्युतनवग्रैवेयकपञ्चानुत्तरदेवाः, आहारकद्विकं, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमाः, शुक्ललेश्या क्षायिकसम्यक्त्वं चेति चतुर्विंशतिमार्गणासु 'संख्याताः' । हेतुः सुगमः । तिर्यगोघः, सप्तैकेन्द्रियभेदाः, सप्तसाधारणवनस्पतिकायभेदाः, वनस्पतिकायौघः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, चतुष्कषायाः, मतिश्रुताज्ञानद्विकम्, असंयमः; अचक्षुर्दर्शनम्; अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी, आहारकश्चेति षट्त्रिंशन्मार्गणासु 'अनन्ताः' । अत्र भावना सप्तकर्मणां भूयस्कारादिप्रदेशबन्धकानामोघतः परिमाणचिन्तायां यथा कृता तथा कर्तव्या । निखिलनरकगतिभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्मप्रमुखाष्टवैमानिकदेवभेदाश्चेति षड्विंशतिगतिभेदाः, सर्वविकलपञ्चेन्द्रियभेदाः, वनस्पतिकायौघसप्तनिगोदभेदैर्विना चतुस्त्रिंशत्कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियकाययोगाः, स्त्रीपुरुषवेदौ; मतिश्रुतावधिविभङ्गज्ञानानि; देशविरतिः; चक्षुरवधिदर्शने; तेजःपद्मलेश्ये, सम्यक्त्वौघक्षायोपशमिकसास्वादनसम्यक्त्वानि; संज्ञी चेत्यष्टानवतिमार्गणासु 'असंख्याताः', मार्गणास्थानां सर्वजीवानामसंख्यातत्वात् सर्वजीवानां भूयस्कारादिचतुर्विधप्रदेशबन्धसद्भावाच्च । आयुषो भूयस्कारप्रदेशबन्धकाः, अल्पतरप्रदेशबन्धकाः, अवस्थितप्रदेशबन्धकाः, अवक्तव्यप्रदेशबन्धका इति सर्वत्र योजनीयम् । नवरमाहारकमिश्रेऽल्पतरप्रदेशबन्धकाः अवस्थितप्रदेशबन्धका इति न वक्तव्यम्, तस्मिन्नल्पतरावस्थितप्रदेशबन्धासद्भावात् ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे द्वितीये भूयस्काराधिकारे सप्तमं परिमाणद्वारं समाप्तम् ॥

तदेवमष्टकर्मणां भूयस्कारादिप्रदेशबन्धकानां परिमाणचिन्ता कृता । साम्प्रतमष्टकर्मणां भूयस्कारादिप्रदेशबन्धकानां क्षेत्रं परिभाव्यते । तत्रादौ सप्तकर्माण्याश्रित्य चिन्त्यते ।

तत्रौघत एवम्–अवक्तव्यप्रदेशबन्धकाः "लोकासंख्येयतमे भागे" वर्तन्ते । अत्र भावनैवम्–प्रथमाधिकारे उत्कृष्टप्रदेशबन्धकानामोघतः क्षेत्रचिन्तायां प्रदर्शितेन "कहि णं भंते" इत्यादिपाठेन पञ्चेन्द्रियमात्रस्य लोकासंख्यातभागः क्षेत्रं भवति, अत्र अवक्तव्यप्रदेशबन्धका उपशमश्रेणितो निवर्तमानाः, उपशमश्रेणितो निधनं प्राप्य देवगतिप्रथमसमये वर्तमाना वा जीवा एव भवन्तीति तेषां क्षेत्रं सुतरां लोकासंख्यातभाग एव भवति । भूयस्कारप्रदेशबन्धकाः, अल्पतरप्रदेशबन्धकाः अवस्थितप्रदेशबन्धकाश्च प्रत्येकं 'सर्वलोके वर्तन्ते' सूक्ष्मजीवानां भूयस्कारादिप्रदेशबन्धसद्भावाद् , ' सुहुमा उ सव्वलोए'' इति वचनात् सूक्ष्मजीवानां सर्वलोकव्यापित्वाद् । अथादेशत एवम्–त्रिमनुष्यभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिककाययोगः, अवेदः, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः; दर्शनत्रिकं, शुक्ललेश्या, भव्यः, सम्यक्त्वौघक्षायिकोपशमसम्यक्त्वानि; संज्ञी आहारकश्चेति पञ्चत्रिंशन्मार्गणासु सप्तकर्मणां लोभकषाये च मोहनीयस्यावक्तव्यप्रदेशबन्धकाः लोकासंख्याततमे भागे वर्तन्ते । भावनौघवद् । शेषमार्गणासु अवक्तव्यप्रदेशबन्धस्यासद्भावः ।

अथ भूयस्काराल्पतरावस्थितप्रदेशबन्धकानां क्षेत्रमेवम्–तिर्यगोघः, सप्तैकेन्द्रियभेदाः, सप्तनिगोदमार्गणाः; पृथ्व्यप्तेजोवायुवनस्पतिकायौघाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, बादरपृथ्व्यप्तेजोवायुकायाः, बादरापर्याप्तपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, कार्मणकायः, नपुंसकवेदः, चतुष्कषायाः; मतिश्रुतलक्षणाज्ञानद्विकम् ; असंयमः, अचक्षुर्दर्शनम् , अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी आहारकानाहारकौ चेति चतुःषष्टिमार्गणासु 'निखिललोकः', बादरपर्याप्तवायुकाये 'देशोनलोकः;' निखिलनारकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियाः, सप्तमनुष्यगतिभेदाः, कृत्स्नदेवगतिभेदाः, निखिलद्वित्रिचतुष्पञ्चेन्द्रियभेदाः; बादरपर्याप्तपृथ्व्यप्तेजःकायाः, पर्याप्तप्रत्येकवनस्पतिकायः त्रसत्रिकं चेति सप्तकायभेदाः, पञ्चमनःपञ्चवचनवैक्रियद्विकाहारकद्विकानि, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयममन्तरा षट्संयममार्गणाः; चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट्सम्यक्त्वमार्गणाः; संज्ञी चेति पञ्चोत्तरशतमार्गणासु 'लोकासंख्यातभागः', सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च क्षेत्रं भवतीति यथासम्भवं सर्वत्र योज्यम् । अत्र भावना सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां क्षेत्रप्ररूपणायां प्रदर्शितरीत्या स्वयं परिभावनीया ।

साम्प्रतमायुषो भूयस्कारादिप्रदेशबन्धकानां क्षेत्रमुल्लिख्यते—ओघत आयुषो भूयस्कारादिचतुर्विधप्रदेशबन्धकानां क्षेत्रं "सर्वलोकः" भवति । अत्र भावना सप्तकर्माण्याश्रित्य सर्वलोकोपपादनवद् ।

अथादेशत एवम्—तिर्यगोघः, एकेन्द्रियौघः, सूक्ष्मपर्याप्तसूक्ष्मापर्याप्तसूक्ष्मैकेन्द्रियाः, पृथ्व्यप्तेजोवायुवनस्पतिकायौघाः, निगोदौघः, सूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाश्चेत्येकविंशतिकायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुतलक्षणाज्ञानद्विकम् , असंयमः, अचक्षुर्दर्शनम् , अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी आहारकश्चेति षट्चत्वारिंशद्मार्गणासु 'समस्तविश्वम्', बादरैकेन्द्रियत्रिके बादरवायुकायत्रिके च 'देशोनलोकः,' तिर्यगोघं विना षट्चत्वारिंशद्गतिभेदाः, निखिलद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, बादरपृथ्व्यप्तेजोनिगोदाः, बादरपर्याप्तपृथ्व्यप्तेजोनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजोनिगोदाः, प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेत्यष्टादशकायभेदाः; पञ्चमनःपञ्चवचनानि, वैक्रियकायः आहारकद्विकं चेति त्रयोदश योगभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः, चक्षुरवधिदर्शने, शुभलेश्यात्रिक, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि संज्ञी चेत्येकादशोत्तरशतमार्गणासु "लोकासंख्यातनमभागः" आयुषो भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च क्षेत्रं भवतीति यथायोगं सर्वत्र योजनीयम् । अत्रापि भावनाऽऽयुषोऽनुत्कृष्टप्रदेशबन्धकानां क्षेत्रनिरूपणे निगदितनीत्या स्वयमेव विधेया ।

इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे भूयस्काराधिकारेऽष्टमं
क्षेत्रद्वारं समाप्तम ॥



इत्थं भूयस्कारादिप्रदेशबन्धकानां क्षेत्रं चिन्तितम् । सम्प्रति तेषां स्पर्शना चिन्त्यते । अत्राप्यादौ सप्तकर्माण्याश्रित्य चिन्त्यते ।

तत्रौघत एवम्–अवक्तव्यप्रदेशबन्धकानां "लोकासंख्याततमभागः" स्पर्शना भवति । अत्रेयं भावना–सप्तकर्मणामवक्तव्यप्रदेशबन्धकाः उपशमश्रेणितो निवर्तमाना उपशमश्रेणितो यमं प्राप्य देवगतिप्रथमसमये वर्तमाना वा जीवा भवन्तीत्यसकृत् प्रतिपादितम् । अथोपशमश्रेणितो निवर्तमानानां मनुष्याणां स्वक्षेत्रं लोकासंख्यातभाग एवेति सुप्रतीतं, तथा देवगतिप्रथमसमये वर्तमानानामवक्तव्यप्रदेशबन्धकानां देवानामप्युत्पातक्षेत्रं लोकासंख्यातभाग एव भवति, अतः सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां लोकासंख्यातभाग एव स्पर्शना भवति । भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च स्पर्शना 'सर्वलोकः' भवति । हेतुस्तु सुगमः ।

अथादेशत एवम्–अपर्याप्तमनुष्यं विना त्रिमनुष्यमार्गणाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिककाययोगः, अवेदः, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः, दर्शनत्रिकं, शुक्ललेश्या, भव्यः, सम्यक्त्वौघक्षायिकोपशमसम्यक्त्वानि, संज्ञी आहारकश्चेति पञ्चत्रिंशद्मार्गणासु सप्तकर्मणां लोभकषाये च मोहस्यावक्तव्यप्रदेशबन्धकानां स्पर्शना" लोकासंख्यातभागः" भवति । भावनौघवद् । शेषमार्गणास्ववक्तव्यप्रदेशबन्धस्याभावः ।

भूयस्काराल्पतरावस्थितप्रदेशबन्धकानां स्पर्शनैवम्–द्वितीयादिषष्ठान्तनरकेषु देशविरतौ च यथासंख्यमेका, द्वे, तिस्रः, चतस्रः, पञ्च पञ्च रज्जवः, नरकौघसप्तमनरकयोः, आनतप्रमुखाच्युतान्तामरेषु शुक्ललेश्यायां च षड्रज्जवः, सनत्कुमारादिसहस्रारपर्यन्तेषु विबुधेषु, मतिश्रुतावधिलक्षणज्ञानत्रिके, अवधिदर्शने, पद्मलेश्यायां, सम्यक्त्वौघोपशमक्षायिकक्षायोपशमिकमिश्रेषु चेति षोडशमार्गणासु अष्टौ रज्जवः, देवौघे, भवनपत्यादीशानपर्यन्तविबुधेषु, तेजोलेश्यायां च नवरज्जवः, सास्वादनसम्यक्त्वमार्गणायां द्वादश रज्जवः, वैक्रियकाययोगे त्रयोदशरज्जवः, प्रथमनरकः, प्रथमग्रैवेयकादिसर्वार्थसिद्धपर्यन्ताश्चतुर्दशदेवभेदाः, वैक्रियमिश्रः, आहारकद्विकम्, अवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमाश्चेति पञ्चविंशतिमार्गणासु 'लोकासंख्यातभागः', सर्वतिर्यग्भेदाः, सप्तमनुष्यभेदाः, समस्तेन्द्रियभेदाः, कृत्स्नकायभेदाः, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिकद्विकं कार्मणकायश्चेति चतुर्दशयोगभेदाः, वेदत्रिकं, कषायचतुष्कम्, अज्ञानत्रिकम्, असंयमः, चक्षुरचक्षुर्दर्शने, अशुभलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वं, संज्ञी, असंज्ञी आहारकानाहारकौ चेति सप्तोत्तरशतमार्गणासु "सर्वलोकः", सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च स्पर्शना भवतीति यथासम्भवं सर्वत्र योजनीयम् । अत्र भावना सप्तकर्मानुत्कृष्टप्रदेशबन्धकस्पर्शनाप्ररूपणावद् विधेया ।

साम्प्रतमायुषो भूयस्कारादिप्रदेशबन्धकानां क्षेत्रमुल्लिख्यते–ओघत आयुषो भूयस्कारादिचतुर्विधप्रदेशबन्धकानां क्षेत्रं "सर्वलोकः" भवति । अत्र भावना सप्तकर्माण्याश्रित्य सर्वलोकोपपादनवद् ।

अथादेशत एवम्–तिर्यगोघः, एकेन्द्रियौघः, सूक्ष्मपर्याप्तसूक्ष्मापर्याप्तसूक्ष्मैकेन्द्रियाः, पृथ्व्यप्तेजोवायुवनस्पतिकायौघाः, निगोदौघः, सूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाश्चेत्येकविंशतिकायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुतलक्षणाज्ञानद्विकम् , असंयमः, अचक्षुर्दर्शनम् , अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी आहारकश्चेति षट्चत्वारिंशद्मार्गणासु 'समस्तविश्वम्', बादरैकेन्द्रियत्रिके बादरवायुकायत्रिके च 'देशोनलोकः,' तिर्यगोघं विना षट्चत्वारिंशद्गतिभेदाः, निखिलद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, बादरपृथ्व्यप्तेजोनिगोदाः, बादरपर्याप्तपृथ्व्यप्तेजोनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजोनिगोदाः, प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेत्यष्टादशकायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियकायः आहारकद्विकं चेति त्रयोदश योगभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः, चक्षुरवधिदर्शने, शुभलेश्यात्रिकं, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि संज्ञी चेत्येकादशोत्तरशतमार्गणासु "लोकासंख्याततमभागः" आयुषो भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च क्षेत्रं भवतीति यथायोगं सर्वत्र योजनीयम् । अत्रापि भावनाऽऽयुषोऽनुत्कृष्टप्रदेशबन्धकानां क्षेत्रनिरूपणे निगदितनीत्या स्वयमेव विधेया ।

इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे भूयस्काराधिकारेऽष्टमं
क्षेत्रद्वारं समाप्तम् ॥



इत्थं भूयस्कारादिप्रदेशबन्धकानां क्षेत्रं चिन्तितम् । सम्प्रति तेषां स्पर्शना चिन्त्यते । अत्राऽऽप्यादौ सप्तकर्माण्याश्रित्य चिन्त्यते ।

तत्रौघत एवम्–अवक्तव्यप्रदेशबन्धकानां "लोकासंख्याततमभागः" स्पर्शना भवति । अत्रेयं भावना–सप्तकर्मणामवक्तव्यप्रदेशबन्धकाः उपशमश्रेणितो निवर्तमाना उपशमश्रेणितो यमं प्राप्य देवगतिप्रथमसमये वर्तमाना वा जीवा भवन्तीत्यसकृत् प्रतिपादितम् । अथोपशमश्रेणितो निवर्तमानानां मनुष्याणां स्वक्षेत्रं लोकासंख्यातभाग एवेति सुप्रतीतं, तथा देवगतिप्रथमसमये वर्तमानानामवक्तव्यप्रदेशबन्धकानां देवानामप्युत्पातक्षेत्रं लोकासंख्यातभाग एव भवति, अतः सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां लोकासंख्यातभाग एव स्पर्शना भवति । भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च स्पर्शना 'सर्वलोकः' भवति । हेतुस्तु सुगमः ।

अथादेशत एवम्–अपर्याप्तमनुष्यं विना त्रिमनुष्यमार्गणाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिककाययोगः, अवेदः, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः, दर्शनत्रिकं, शुक्ललेश्या, भव्यः, सम्यक्त्वौघक्षायिकोपशमसम्यक्त्वानि, संज्ञी आहारकश्चेति पञ्चत्रिंशद्मार्गणासु सप्तकर्मणां लोभकषाये च मोहस्यावक्तव्यप्रदेशबन्धकानां स्पर्शना" लोकासंख्यातभागः" भवति । भावनौघवत् । शेषमार्गणास्ववक्तव्यप्रदेशबन्धस्याभावः ।

भूयस्काराल्पतरावस्थितप्रदेशबन्धकानां स्पर्शनैवम्–द्वितीयादिषष्ठान्तनरकेषु देशविरतौ च यथासंख्यमेका, द्वे, तिस्रः, चतस्रः, पञ्च पञ्च रज्जवः, नरकौघसप्तमनरकयोः, आनतप्रमुखाच्युतान्तामरेषु शुक्ललेश्यायां च षड्रज्जवः, सनत्कुमारादिसहस्रारपर्यन्तेषु विबुधेषु, मतिश्रुतावधिलक्षणज्ञानत्रिके, अवधिदर्शने, पद्मलेश्यायां, सम्यक्त्वौघोपशमक्षायिकक्षायोपशमिकमिश्रेषु चेति षोडशमार्गणासु अष्टौ रज्जवः, देवौघे, भवनपत्यादीशानपर्यन्तविबुधेषु, तेजोलेश्यायां च नवरज्जवः, सास्वादनसम्यक्त्वमार्गणायां द्वादश रज्जवः, वैक्रियकाययोगे त्रयोदशरज्जवः, प्रथमनरकः, प्रथमग्रैवेयकादिसर्वार्थसिद्धपर्यन्ताश्चतुर्दशदेवभेदाः, वैक्रियमिश्रः, आहारकद्विकम्, अवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमाश्चेति पञ्चविंशतिमार्गणासु 'लोकासंख्यातभागः', सर्वतिर्यग्भेदाः, सममनुष्यभेदाः, समस्तेन्द्रियभेदाः, कृत्स्नकायभेदाः, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिकद्विकं कार्मणकायश्चेति चतुर्दशयोगभेदाः, वेदत्रिकं, कषायचतुष्कम्, अज्ञानत्रिकम्, असंयमः, चक्षुरचक्षुर्दर्शने, अशुभलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वं, संज्ञी, असंज्ञी आहारकानाहरकौ चेति सप्तोत्तरशतमार्गणासु "सर्वलोकः", सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च स्पर्शना भवतीति यथासम्भवं सर्वत्र योजनीयम् । अत्र भावना सप्तकर्मानुत्कृष्टप्रदेशबन्धकस्पर्शनाप्ररूपणावद् विधेया ।

इदानीमायुषो भूयस्कारादिप्रदेशबन्धकानां स्पर्शनोल्लिख्यते—ओघत आयुषो भूयस्कारादि-चतुर्विधप्रदेशबन्धकानां स्पर्शना 'सर्वलोकः' भवति । भावना सुगमा ।

अथादेशत एवम्—सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, निखिलमनुष्यमार्गणाः, प्रथमग्रैवेयकप्रमुखसर्वार्थसिद्धपर्यन्ताश्चतुर्दशदेवभेदाः, समस्तविकलेन्द्रियभेदाः अपर्याप्तपञ्चेन्द्रिय-श्चेति दशेन्द्रियभेदाः, बादरपृथ्व्यप्तेजःसाधारणवनस्पतिकायाः, पर्याप्तबादरपृथ्व्यप्तेजोनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजोनिगोदाः; प्रत्येकवनस्पतिकायत्रिकमपर्याप्तत्रसश्चेति षोडश कायमार्गणाः, आहारकद्विकं, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमा-श्चेति चतुःषष्टिमार्गणासु, 'लोकासंख्यातभागः', बादरैकेन्द्रियः, पर्याप्तबादरैकेन्द्रियः, अपर्याप्तबादरै-केन्द्रियः, बादरवायुकायः, पर्याप्तबादरवायुकायः, अपर्याप्तबादरवायुकायश्चेति षण्मार्गणासु 'देशोन-लोकः' आनताद्याच्युतान्तचतुर्देवभेदेषु शुक्ललेश्यायां च 'षड्भागाः', देवौघभवनपतिप्रमुखसहस्रार-पर्यन्ता द्वादशदेवभेदाः; पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, वैक्रियकाययोगः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्य-क्त्वौघक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वानि, संज्ञी चेति द्विचत्वारिंशन्मार्गणासु "अष्ट-भागाः", तिर्यगोघः, एकेन्द्रियौघः, त्रयः सूक्ष्मैकेन्द्रियभेदाः, पृथ्व्यप्तेजोवायुवनस्पतिकायौघाः, साधारणवनस्पतिकायौघः, सूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवन-स्पतिकायाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुनिगोदाश्चेत्येकविंशतिकायभेदाः, काययोगौघः, औदा-रिकद्विकं, नपुंसकवेदः, चतुष्कषायाः, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अशुभलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्चेति षट्चत्वारिंशन्मार्गणासु 'सम्पूर्णलोकः', आयुः-कर्मणो भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानामवक्तव्यप्रदेशबन्ध-कानां च प्रत्येकं स्पर्शना भवतीति यथासंभवं सर्वत्र प्रयोक्तव्यम् ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे भूयस्काराधिकारे नवमं स्पर्शनाद्वारं समाप्तम् ॥

卐

अत्रेदमवधेयं मतिधनैः—अत्र परिमाणादित्रिद्वारेषु ग्रन्थविस्तराद्यवलम्ब्य यत्र भावना नोक्ता संक्षेपेण वोक्ता, तथा सम्भाव्यमानाक्षेपपरिहारादि नोक्तं तत्र भावनादेः सम्भाव्यमानाक्षेपपरिहारा-देश्चावबोधाय प्रथमाधिकारगतानि परिमाणादित्रिद्वाराणि सूक्ष्मेक्षिकया विलोकनीयानि ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे भूयस्काराधिकारे सप्तमाष्टमनवमानि परिमाणक्षेत्रस्पर्शनाद्वाराणि समाप्तानि ॥

卐

## ॥ दशमं कालद्वारम् ॥

सम्प्रति क्रमप्राप्तमनेकजीवविषयकं दशमं कालद्वारं प्रस्तोतुकाम आदौ तावदेवमवक्तव्यतां चिकीर्षुराह—

सत्तण्ह बंधगाणमवत्तव्वस्स समयो लहू जेट्ठो ।
संखखणा तिपयाणं आउस्स चउण्ह सव्वद्धा ॥५७१॥

(प्रे०) अत्रादौ तावद् दिग्दर्शनमुच्यते । तत्र सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां चोत्कृष्टकालमाश्रित्योच्यते—

यासु मार्गणासु मार्गणाकालः सर्वाद्धा तासु 'सर्वाद्धा'; शेषमार्गणासु 'मार्गणोत्कृष्टकायस्थितिः' नानाजीवविषयकोत्कृष्टकालो भवति । सप्तकर्मणामवक्तव्यप्रदेशबन्धकानामुत्कृष्टकालः संख्यातसमयाः । अवस्थितप्रदेशबन्धकानामुत्कृष्टकाल एवम्—अवस्थितप्रदेशबन्धप्रायोग्या जीवा यासु मार्गणासु असंख्यलोकाकाशप्रदेशप्रमाणा यद्वाऽनन्तास्तासु सर्वाद्धा, यासु असंख्यलोकाकाशप्रदेशेभ्यो न्यूनास्तासु 'आवलिकाऽसंख्यातभागः', यासु संख्यातास्तासु "संख्यातसमयाः" अवस्थितप्रदेशबन्धकानां नानाजीवविषयकोत्कृष्टकालो भवति ।

अथायुषश्चतुर्विधबन्धकानामुत्कृष्टकालमाश्रित्यैवम्—भूयस्कारादिप्रदेशबन्धप्रायोग्या जीवा यासु मार्गणासु असंख्यलोकाकाशप्रदेशप्रमाणा अनन्ता वा तासु चतुर्णामपि बन्धकानां 'सर्वाद्धा', यासु असंख्यलोकाकाशप्रदेशेभ्यो न्यूनास्तासु भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां च पल्योपमासंख्यातभागः, अवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च "आवलिकाऽसंख्यातभागः" यासु संख्यातास्तासु भूयस्काराल्पतरप्रदेशबन्धकानाम् "अन्तर्मुहूर्तम्," अवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च 'संख्यातसमयाः" । नानाजीवविषयकोत्कृष्टकालो भवतीति सर्वत्र योज्यम् ।

जघन्यकालस्तु अनुक्तसर्वाद्धाकालासु सर्वमार्गणासु सर्वकर्मणां सम्भाव्यमानसर्वपदानामेकसमयो भवति । नवरं वैक्रियमिश्राहारकमिश्रयोः सप्तकर्मणां भूयस्कारप्रदेशबन्धकानां जघन्यकालः 'अन्तर्मुहूर्तं' भवति ।

अथ गाथार्थः प्रस्तूयते—"सत्तण्ह" इत्यादि, आयुर्वर्जानां सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां 'समयो लहू' इति, अत्र 'कालः' इति गम्यते, जघन्यः कालः 'एकसमयः' भवति । अयं भावः—कदाचिदुपशमश्रेणिप्रतिपत्तिकालस्य जघन्यत एकसामयिकत्वाद् द्वितीयादिसमयेषूपशमश्रेण्यारोहकाणामभावादुपशमश्रेणितो निवृत्य सूक्ष्मसम्परायप्रथमसमयमनिवृत्तिबादरप्रथमसमयं च प्राप्तानां, देवगतिप्रथमसमयं प्राप्तानां वा जीवानामभावात्सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां जघन्यकाल एकसमय एव भवति । 'जेट्ठो' इत्यादि, सप्तकर्मणामवक्तव्यप्रदेशबन्धकानामुत्कृष्टकालः 'संख्यातसमयाः' भवति । इयमत्र भावना—निरन्तरमुपशमश्रेणिप्रतिपत्तिः

संख्यातसमयान् यावदेव भवति, तदनन्तरमवश्यं तस्या विरहो भवतीत्यनन्तरोक्तरीत्या संख्यातसमयेषु व्यतीतेषु सप्तकर्मणामवक्तव्यप्रदेशबन्धकानामवश्यमत्यन्ताभावो भवति ।

'तिपयाणं' इति, 'सत्तण्ह बंधगाणं' इति; पूर्वार्धपदे 'सव्वद्धा' इत्यन्तिमपदं चात्र सम्बध्यन्ते; ततोऽयमर्थः—सप्तकर्मणां शेषाणां भूयस्काराल्पतरावस्थितलक्षणानां त्रिपदानां बन्धकानां कालः 'सर्वाद्धा' भवति, शेषत्रिपदबन्धका निरन्तरमाकालं प्राप्यन्त इति यावद् । अत्रेयं भावना—सप्तकर्मणां भूयस्काराल्पतरावस्थितलक्षणानां त्रिपदानां बन्धं निगोदजीवा अपि कुर्वन्ति, तेषां चानन्त्यात् पूर्वोक्तनियमानुसारेण शेषत्रिपदबन्धकानां कालः 'सर्वाद्धा' भवति । 'आउस्स' इत्यादि, आयुषो भूयस्कारादीनां चतुर्णामपि बन्धकानां कालः 'सर्वाद्धा' भवति, भूयस्कारादिपदबन्धकानामानन्त्याद् । तदेवमोघतोऽनेकजीवविषयककालो निरूपितः ॥५७१॥ साम्प्रतं तमेवादेशतो निरूपयिषुरादौ तावत्सप्तकर्मणामवक्तव्यभूयस्काराल्पतरप्रदेशबन्धकानाश्रित्याह—

जत्थाउगवज्जाणमवत्तव्वो तत्थ तस्स ओघव्व ।
भूगाराऽप्पयराणं अगुरुपएसव्व सव्वासु ॥५७२॥

(प्रे०) 'जत्थाउगवज्जाणं' इत्यादि, आयुर्वर्जानां सप्तकर्मणां यासु मार्गणासु अवक्तव्यप्रदेशबन्धो भवेत् तासु मार्गणासु सप्तकर्मावक्तव्यप्रदेशबन्धकानां कालः 'ओघवद्' जघन्यतः 'एकसमयः' उत्कृष्टतः 'संख्यातसमयाः भवति । अत्र भावनाऽप्योघवज्ज्ञातव्या । यत्र सप्तकर्मणामवक्तव्यप्रदेशबन्धो भवति ता मार्गणा इमाः—अपर्याप्तं विना त्रिमनुष्यमार्गणाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिककाययोगः, अवेदः, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः, दर्शनत्रिकं, शुक्ललेश्या, भव्यः, सम्यक्त्वौघक्षायिकौपशमिकसम्यक्त्वानि, संज्ञी आहारकश्चेति । मोहनीयस्यावक्तव्यप्रदेशबन्धो लोभकषायेऽपि भवति ।

'भूगाराप्पयराणं' इत्यादि, सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां च प्रत्येकं कालः सर्वासु मार्गणासु 'अगुरुपएसव्व' इति, सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामनेकजीवविषयककालवद् भवति । तद्यथा—अपर्याप्तमनुष्यमन्तरा षट्चत्वारिंशद्गतिभेदाः, निखिलेन्द्रियभेदाः, समकायभेदाः, वैक्रियमिश्रमाहारकद्विकं च विना पञ्चदशयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, समस्तज्ञानमार्गणाः, संयमौघसामायिकदेशविरत्यसंयमाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, सम्यक्त्वौघवेदकक्षायिकमिथ्यात्वानि, संज्ञी, असंज्ञी आहारकानाहारकौ चेति नवपञ्चाशदधिकशतमार्गणासु 'सर्वाद्धा' । अत्रेयं भावना—एता मार्गणा निरन्तराः, अपि चैकजीवमाश्रित्य जघन्यतः समयेनोत्कृष्टतश्चान्तर्मुहूर्तेन भूयस्काराल्पतरप्रदेशबन्धौ परावर्तेते । अतो जघन्यतः समयान्तरे उत्कृष्टतश्चान्तर्मुहूर्तान्तरेऽवश्यं विपरीतप्रदेशबन्धो भवति । यस्तु मध्येऽवस्थितप्रदेशबन्धः स तु कादाचित्कः स्वल्पसमयश्च । अतो नानाजीवानाश्रित्यैतासु मार्गणासु भूयस्काराल्पतरप्रदे-

बन्धौ सर्वदा प्राप्येते इति भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां च कालः सर्वाद्धा सूपपद्यते । कार्मणकायेऽनाहारके च भूयस्कारप्रदेशबन्धकानामेव कालो वक्तव्यः ।

अथ शेषैकादशमार्गणासूच्यते । तत्रादौ जघन्यत एवम्–वैक्रियमिश्राहारकमिश्रयोः भूयस्कारप्रदेशबन्धकानां जघन्यकालः 'अन्तर्मुहूर्त्त' भवति । अत्रेयं भावना–मार्गणाद्वितीयसमयादारभ्य चरमसमयं यावद्योगवृद्धिर्भवतीति द्वितीयसमयाद् मार्गणाकालं यावद् भूयस्कारप्रदेशबन्धो भवति । अत एवैतन्मार्गणयोरल्पतरप्रदेशबन्धस्याभावः । एतयोर्जघन्यकालोऽन्तर्मुहूर्त्तप्रमाणः । तथाहि–विवक्षितसमये नूतनोत्पन्नानां देवानामाहारकशरीरं प्रारभमाणानां संयतानां चानुक्रमेण वैक्रियमिश्रमार्गणाऽऽहारकमिश्रमार्गणा चान्तर्मुहूर्त्तं यावद् भवति । अथ यदि विवक्षितसमयाद् द्वितीयादिसमयेषु नूतनोत्पन्नानां देवानामाहारकशरीरं प्रारभमाणानां मनुष्याणां चाभावस्तदाऽन्तर्मुहूर्त्तानन्तरं वैक्रियमिश्राहारकमिश्रमार्गणाविच्छेदो भवति । अतस्तयोः सप्तकर्मणां भूयस्कारप्रदेशबन्धजघन्यः कालोऽन्तर्मुहूर्त्तं भवति, न न्यूनः ।

अपर्याप्तनुष्यः, आहारककाययोगः, अवेदः, सूक्ष्मसम्परायसंयमः, उपशमसास्वादनमिश्रमार्गणाश्चेति सप्तमार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां च जघन्यकालः "एकसमयः" । तथाहि–यदा विवक्षितप्रथमसमये केषामपि जीवानां भूयस्कारप्रदेशबन्धो न भवति, द्वितीयसमये सर्वेषां कतिपयानां वा जीवानां भूयस्कारप्रदेशबन्धो भवति, तृतीयसमये पुनः केषामपि जीवानां भूयस्कारप्रदेशबन्धो न भवति तदा भूयस्कारप्रदेशबन्धकानां कालः 'एकसमयः' भवति । एवं भूयस्कारस्थाने 'अल्पतर' इत्युक्त्वाऽल्पतरप्रदेशबन्धकानामपि कालः एकसमयो वक्तव्यः । छेदोपस्थापनीयपरिहारविशुद्धिसंयममार्गणयोः भूयस्काराल्पतरबन्धकानां जघन्यः कालः स्वयं ज्ञातव्यः ।

शेषैकादशमार्गणासूत्कृष्टकाल एवम्–अपर्याप्तमनुष्यः, वैक्रियमिश्रकाययोगः, उपशमसास्वादनमिश्रमार्गणाश्चेति पञ्चमार्गणासु 'पल्योपमाऽसंख्यातभागः,' छेदोपस्थापनीयसंयमे पञ्चाशल्लक्षसागरोपमाः, आहारकद्विके, अपगतवेदे सूक्ष्मसम्पराये च 'अन्तर्मुहूर्त्तम्', परिहारसंयमे "अष्टापञ्चाशद्वर्षन्यूनद्विपूर्वकोटी" सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां चोत्कृष्टः कालो भवतीति सर्वत्र यथासम्भवं योजनीयम् । अत्रेयं भावना–भूयस्काराल्पतरप्रदेशबन्धौ जघन्यतः प्रतिसमयमुत्कृष्टतश्च प्रत्यन्तर्मुहूर्त्तं परावर्तेते, अतो मार्गणाकालं यावत् तत्तन्मार्गणासु अनेके जीवा भूयस्कारप्रदेशबन्धमनेके चाल्पतरप्रदेशबन्धं कुर्वन्ति, तत्तद्मार्गणाकालश्च यथोक्तोत्कृष्टकालप्रमाण एवेति प्रथमाधिकारेऽनेकजीवविषयकालद्वारे सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालनिरूपणे सप्रमाणमुक्तमेव । तदेवं सप्तकर्मणां भूयस्यकारप्रदेशबन्धकानां सप्ततिशतमार्गणासु अल्पतरप्रदेशबन्धकानां च षट्षष्टिशतमार्गणासु अनेकजीवविषयको जघन्योत्कृष्टभेदभिन्नकाल उक्तः । साम्प्रतं सप्तकर्मणामवस्थितप्रदेशबन्धकानां कालं वक्तुमुपक्रमते—

सत्तण्ह जत्थ णियमा अवट्ठिओ अत्थि तत्थ तस्स भवे ।
सव्वद्धा सेसासुं समयो हस्सो मुणेयव्वो ॥५७३॥

(प्रे०) 'सत्तण्ह जत्थ' इत्यादि, यासु मार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धो नियमाद् अवश्यमस्ति तासु मार्गणासु 'तस्स' इति, सप्तकर्मणामवस्थितप्रदेशबन्धस्य=अवस्थितप्रदेशबन्धकानां कालः "सर्वाद्धा" भवति । तद्यथा-तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, वनस्पतिकायौघः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायमार्गणाः, काययोगौघः, औदारिकतन्मिश्रकायौ, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्चेति द्विषष्टिमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धकानां कालः 'सर्वाद्धा' भवति । अत्र सर्वाद्धाकालोपपादनायास्मिन् भूयस्काराधिकारे पञ्चमभङ्गविचयद्वारे 'सव्वद्धा अगुरुपएसो' इत्यादिगाथायामवस्थितप्रदेशबन्धस्य सर्वकालोपपादनाय प्रदर्शिता व्याप्तिः स्मरणीया ।

'सेसासु' इत्यादि, वैक्रियमिश्रादिचतुर्मार्गणास्ववस्थितप्रदेशबन्धस्यासम्भवाद् द्विषष्टिमार्गणासु चोक्तत्वात् शेषासु चतुरधिकशतमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धकानां जघन्यः कालः 'एकसमयः' ज्ञातव्यः । तद्यथा—यदा विवक्षितप्रथमसमये केऽपि जीवा अवस्थितप्रदेशबन्धं न कुर्वन्ति, द्वितीयसमये विदधति, तृतीयसमये पुनर्न कुर्वन्ति तदा सप्तकर्मणामवस्थितप्रदेशबन्धकानां कालस्यैकसामयिकत्वमुपपद्यते ।

शेषाश्चतुरधिकशतमार्गणा नामत इमाः—सर्वनरकभेदाः, तिर्यगोघं विना चत्वारस्तिर्यग्भेदाः, सप्तमर्त्यामर्त्यभेदाः, निखिलविकलपञ्चेन्द्रियमार्गणाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियकायः आहारककायश्चेति द्वादशयोगभेदाः, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयममन्तरा षट्संयममार्गणाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट्सम्यक्त्वमार्गणाः संज्ञी चेति ।

इदानीमुक्तचतुरुत्तरशतमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धकानामुत्कृष्टकालं गाथाद्विकेन चिन्तयति—

उक्कोसो संखेज्जा समया पज्जत्तणरमणुस्सीसुं ।
सव्वत्थसिद्धदेवे आहारम्मि मणणाणे य ॥५७४॥

संयमसामइएसु छेए परिहारसंयमे य भवे ।
सेसासु होइ भागो आवलिआए असंखयमो ॥५७५॥

(प्रे०) 'उक्कोसो' इत्यादि, पर्याप्तमनुष्यादिनवमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धकानामुत्कृष्टः कालः 'संख्यातसमयाः' भवति । अत्रेयं भावना–यस्यां मार्गणायां विवक्षितबन्धप्रायोग्या जीवाः संख्याताः सन्ति, तथा विवक्षितबन्धस्यैकजीवमाश्रित्योत्कृष्टकालोऽपि संख्यातसमयाः, तस्यां मार्गणायां विवक्षितबन्धस्यानेकजीवानाश्रित्योत्कृष्टकालोऽपि संख्यातसमया एव भवति । अत एव पञ्चेन्द्रियौघादिमार्गणासु जीवानामसंख्यातत्वेऽपि सप्तकर्मणामवक्तव्यप्रदेशबन्धप्रायोग्याणां जीवानां संख्यातत्वादेकजीवमाश्रित्यावक्तव्यप्रदेशबन्धस्यैकसामयिकत्वाच्चानेकजीवानाश्रित्य सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टः कालः संख्यातसमया भवति । अत्र प्रदर्शितासु नवमार्गणासु जीवा संख्याताः सन्ति, एकजीवमाश्रित्य सप्तकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टकालोऽपि पञ्चदशसमयप्रमाणत्वाद् मतान्तरेण चैकादशसमयप्रमाणत्वात्संख्यातसमया अस्ति, अतस्तासु अनेकजीवानाश्रित्योत्कृष्टकालोऽपि संख्यातसमया एव भवति ।

'सेसासु' इत्यादि, शेषासु पञ्चनवतिमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टः कालः "आवलिकाऽसंख्यातभागः" भवति । अत्रेयं भावना–यासु मार्गणासु विवक्षितबन्धप्रायोग्या जीवा असंख्यलोकाकाशप्रदेशेभ्यो न्यूना असंख्याताः, तथा विवक्षितबन्धस्योत्कृष्टकाल एकजीवमाश्रित्य संख्यातसमयाः, तासु मार्गणासु विवक्षितप्रदेशबन्धस्यानेकजीवानाश्रित्योत्कृष्टकालः आवलिकाऽसंख्यातभागप्रमाणो भवति । शेषासु पञ्चनवतिमार्गणासु वर्तमाना जीवा असंख्यलोकाकाशप्रदेशेभ्यो न्यूना असंख्याताः सन्ति, अवस्थितप्रदेशबन्धस्यैकजीवमाश्रित्योत्कृष्टकालः संख्यातसमया अस्त्येव । अतस्तासु सप्तकर्मणामवस्थितप्रदेशबन्धकानामुत्कृष्टकालः आवलिकाऽसंख्यातभागो घटामञ्चति । अनन्तरगाथावृत्तिनिरूपितचतुरधिकशतमार्गणान्तोऽत्र गाथाद्विके निरूपिता नव मार्गणा विहायावशिष्टाः पञ्चनवतिमार्गणाः शेषत्वेन बोध्याः ॥५७४।५७५॥ तदेवं सप्तकर्मणां भूयस्कारादिचतुर्विधप्रदेशबन्धकानां नानाजीवानाश्रित्य कालश्चिन्तितः । इदानीं तमायुःकर्माश्रित्य गाथाद्विकेन सातिदेशं चिन्तयति—

सव्वासु जहण्णियरो सव्वपयाणाउगस्स विण्णेयो ।
अगुरुपएसव्व णवरि जत्थऽत्थि गुरू मुहुत्तंतो ॥५७६॥
तत्थ अवत्तव्वावट्ठिआण संखसमया गुरू णेयो ।
जहि पल्लासंखंसो तहि आवलिआअसंखंसो ॥५७७॥

(प्रे०) "सव्वासु" इत्यादि, सर्वासु त्रिषष्टिशतसंख्याकासु मार्गणासु आयुषः सर्वपदानां भूयस्कारादिचतुर्विधप्रदेशबन्धकानां कालः, "विण्णेयो अणुक्कपएसव्व" इति, "आयुषोऽनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयककालवत्" ज्ञातव्यः।

ननु आयुषोऽनुत्कृष्टप्रदेशबन्धप्रायोग्यसंख्यातजीवासु पर्याप्तमनुष्यप्रमुखैकोनत्रिंशत्मार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयकोत्कृष्टकालः 'अन्तर्मुहूर्तं निरूपितः, परं तासु आयुषोऽवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च नानाजीवविषयकोत्कृष्टकालस्तावान् न घटते, किन्तु संख्यातसमया एवोपपद्यते। यतोऽनन्तरगाथायामेव सप्तकर्मणामवस्थितप्रदेशबन्धकानामुत्कृष्टकालचिन्तायामुक्तं यत् "यासु मार्गणासु विवक्षितप्रदेशबन्धप्रायोग्या जीवाः संख्याताः, तथा विवक्षितप्रदेशबन्धस्यैकजीवमाश्रित्योत्कृष्टकालः संख्यातसमयाः तासु मार्गणासु विवक्षितप्रदेशबन्धस्यानेकजीवानाश्रित्योत्कृष्टकालोऽपि संख्यातसमया एव भवति"। अत्र पर्याप्तमनुष्यप्रमुखनवविंशतिमार्गणामध्ये कासुचिज्जीवाः संख्याताः, कासुचिद्मार्गणासु जीवानामसंख्यातत्वेऽप्यायुषो बन्धका जीवास्तु संख्याता एव, अत आयुषोऽनुत्कृष्टप्रदेशबन्धका जीवास्तु सर्वासु मार्गणासु संख्याता एव भवन्ति। तथाऽवक्तव्यावस्थितप्रदेशबन्धयोरुत्कृष्टकालस्तु संख्यातसमया अस्त्येव। एवं नरकौघादिद्विसप्ततिमार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकानामुत्कृष्टकालः "पल्योपमासंख्यातभागः" प्ररूपितः, परं तासु आयुषोऽवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च तावान् कालो न संगच्छते, किन्त्वावलिकासंख्यातभाग एव संगच्छते। यतोऽनन्तरगाथायामेव प्रतिपादितं यद् "यासु मार्गणासु विवक्षितप्रदेशबन्धप्रायोग्या जीवा असंख्यलोकाकाशप्रदेशेभ्यो न्यूनाः, तथा विवक्षितप्रदेशबन्धस्यैकजीवमाश्रित्योत्कृष्टकालः संख्यातसमयाः, तासु मार्गणासु विवक्षितप्रदेशबन्धस्य नानाजीवानाश्रित्योत्कृष्टकालः 'आवलिकाऽसंख्यातभागः' भवति," एतच्च सर्वं नरकौघादिद्वासप्ततिमार्गणासु घटते इति चेद्, सत्यम्, अत एव कृतातिदेशमपोद्यातिव्याप्तिमुद्धर्तुकाम आह–'णवरि' इत्यादि, नवरं यत्र-यासु मार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयक उत्कृष्टकालः "अन्तर्मुहूर्तम्' अस्ति, [द्वितीयगाथावृत्तिः] 'तत्थ' इत्यादि, तासु मार्गणासु आयुषोऽवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च नानाजीवविषयकोत्कृष्टकालः 'संख्यातसमयाः' ज्ञातव्यः।

'जहिं' इत्यादि, तथा यासु मार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयकोत्कृष्टकालः 'पल्योपमासंख्यातभागः' तासु मार्गणासु आयुषोऽवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां चानेकजीवविषयकः उत्कृष्टकालः 'आवलिकाऽसंख्यातभागः' ज्ञातव्यः।

ततश्चेदं समापतितम्–तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सप्तनिगोदभेदाः, वनस्पतिकायौघः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, सूक्ष्म-

पृथिव्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायमार्गणाः, काययोगौघः औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं; मतिश्रुतलक्षणाज्ञानद्विकम्, असंयमः; अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं; भव्याभव्यौ; मिथ्यात्वम्, असंज्ञी आहारकश्चेति द्विषष्टिमार्गणासु आयुषः सम्भाव्यमानानां भूयस्कारादिप्रदेशबन्धकानां नानाजीवविषयकोत्कृष्टकालः 'सर्वाद्धा' भवति।

अत्रेयं भावना—यासु मार्गणासु विवक्षितप्रदेशबन्धप्रायोग्या जीवा असंख्यलोकाकाशप्रदेशप्रमाणा अनन्ता वा तासु मार्गणासु विवक्षितप्रदेशबन्धकानामुत्कृष्टकालः सर्वाद्धा भवति। अत्र प्रदर्शितासु तिर्यगोघादिद्वाषष्टिमार्गणान्तः कासुचिद् मार्गणासु अनन्ताः कासुचिच्चासंख्यलोकाकाशप्रदेशप्रमाणा असंख्याता वा जीवा आयुषो भूयस्कारादिचतुर्विधप्रदेशबन्धकाः सन्तीति तेषां नानाजीवविषयक उत्कृष्टः कालः 'सर्वाद्धा' भवति।

पर्याप्तमनुष्यमानुष्यौ, आनतादारभ्य सर्वार्थसिद्धविमानपर्यन्ता अष्टादशदेवभेदाः, आहारकद्विकं; मनःपर्यवज्ञानं; संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमाः, शुक्ललेश्या क्षायिकसम्यक्त्वं चेति नवविंशतिमार्गणासु भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां च 'अन्तर्मुहूर्त्तम्', अवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च 'संख्यातसमयाः', सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्माद्यष्टवैमानिका इति द्वादशदेवभेदाः, कृत्स्नद्वित्रिचतुष्पञ्चेन्द्रियाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायस्त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियकाययोगः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघक्षायोपशमिकसास्वादनसम्यक्त्वानि, संज्ञी चेति द्विसप्ततिमार्गणासु भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां च "पल्योपमासंख्यातभागः" अवक्तव्यप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां च 'आवलिकासंख्यातभागः'। आयुषः इति नानाजीवविषयकोत्कृष्टकाल इति च सर्वत्र योजनीयम्। तथायुषो सम्भाव्यमानभूयस्कारादित्रिप्रदेशबन्धकानां जघन्यकालस्तु यासु मार्गणासु सर्वाद्धा कालस्ता विहाय शेषैकोत्तरशतमार्गणासु 'एकसमयः' भवति ॥५७६।५७७॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे
भूयस्काराधिकारे दशमं नानाजीवविषयकं
कालद्वारं समाप्तम् ॥

## ॥ एकादशमन्तरद्वारम् ॥

तदेवं नानाजीवविषयकं कालद्वारं प्रपञ्चितम् । सम्प्रति क्रमायातं नानाजीवविषयकमेकादश-मन्तरद्वारं व्याचिख्यासुः प्रथमं तावदोघवक्तव्यतामाह—

समयो सत्तण्ह लहुमवत्तव्वस्संतरं भवे जेट्ठं ।
वासपुहुत्तं तिण्हं आउस्स चउण्ह य भवे णो ॥५७८॥

(प्रे०) 'समयो इत्यादि, आयुर्वर्जानां सप्तकर्मणां 'अवक्तव्यस्य'=अवक्तव्यप्रदेशबन्धकानां जघन्यमन्तरं, नानाजीवविषयकमिति गम्यते, एकजीवविषयकान्तरस्य चतुर्थद्वारे निरूपितत्वात्, 'समयः' भवेत् । कदाचिदेकसमयं कोऽपि जीवोऽवक्तव्यप्रदेशबन्धं न करोतीति यावद् । अत्रेयं-भावना—सप्तकर्मणामवक्तव्यप्रदेशबन्ध उपशमश्रेणितो निपततामुपशमश्रेणितो निधनं प्राप्य देव-गतिप्रथमसमये वर्तमानानां वा जीवानामेव भवति । अतो यावत्कालमुपशमश्रेणिप्रतिपत्तॄणामन्तरं भवति तावत्कालं सप्तकर्मणामवक्तव्यप्रदेशबन्धस्यान्तरं भवति । उपशमश्रेणिप्रतिपत्तॄणां जघन्य-मन्तरमेकसमयं यावदेव भवति । विवक्षितप्रथमसमये एकोऽनेके वा जीवा उपशमश्रेणिप्रतिपत्तिं कुर्युः, द्वितीयसमये कोऽपि जीव उपशमश्रेणिं न प्रतिपद्येत, तृतीयसमये पुनरेकोऽनेके वा जीवा उपशमश्रेणिमारोहेयुरित्युपशमश्रेणिप्रतिपत्तॄणां जघन्यमन्तरमेकसमयो भवति । अतः सप्तकर्मणाम-वक्त० प्रदेशबन्धकानामपि जघन्यमन्तरमेकसमयो भवति ।

"उक्कोसं वासपुहुत्तं" इति, सप्तकर्मणामवक्तव्यप्रदेशबन्धकानां नानाजीवविषयकमुत्कृष्ट-मन्तरं "वर्षपृथक्त्वं" भवति, कथम् इति चेद्, उपशमकानामुत्कृष्टान्तरस्य तावत्प्रमाणत्वाद् । तथा चोक्तं जीवसमासे—

"पल्लाऽसंखियभागं सासणमिस्सासमत्तमणुएसु । वासपुहुत्तं उवसामएसु खवगेसु छम्मासा" ॥५७९॥

'तिण्हं' इति, पूर्वार्द्धस्थं 'सत्तण्हं' इति पदमन्तिमे 'भवे णो' इति पदे चात्र सम्बध्यन्ते, ततोऽयमर्थः—सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानामवस्थितप्रदेशबन्धकानां चेति त्रयाणां नानाजीवविषयकमन्तरं नैव भवति । भूयस्कारादिप्रदेशबन्धप्रायोग्याणां जीवानामनन्तत्वात् सर्वदाऽनेके जीवा भूयस्कारादिप्रदेशबन्धं कुर्वन्तीत्यर्थः । अत एवाऽनन्तरद्वारे सप्तकर्मणां भूयस्कार-प्रदेशबन्धकादीनां नानाजीवविषयककालः 'सर्वाद्धा' प्ररूपितः । 'आउस्स' इत्यादि, आयुषो भूयस्कारप्रदेशबन्धकादीनां चतुर्णामपि नानाजीवविषयकमन्तरं नैव भवति, तेषां नानाजीवविषय-कोत्कृष्टकालस्य सर्वाद्धात्वाद् ॥५७८॥ तदेवमोघतोऽन्तरप्ररूपणा कृता । साम्प्रतं तामादेशतश्चि-कीर्षुरादौ तावदवक्तव्यप्रदेशबन्धकानां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां चान्तरं प्ररूपयिषुराह—

जत्थऽत्थि अवत्तव्वो आउगवज्जाण तत्थ ओघव्व ।
भूगाराप्पयराणं अणुरुपएसव्व सव्वासु ॥५७९॥

(प्रे०) 'जत्थत्थि' इत्यादि, यासु मार्गणासु विहायायुः सप्तकर्मणामवक्तव्यप्रदेशबन्धोऽस्ति तासु मार्गणासु 'ओघव्व' इति, सप्तकर्मणामवक्त०प्रदेशबन्धकानां जघन्यमुत्कृष्टं चान्तरमोघवद् भवति । तद्यथा—जघन्यम् 'एकसमयः,' उत्कृष्टं वर्षपृथक्त्वम् । यासु मार्गणासु सप्तकर्मणामवक्तव्यप्रदेशबन्धोऽस्ति ता मार्गणा इमाः—अपर्याप्तं विना त्रिमनुष्यमार्गणाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिककायः, अवेदः, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघः, दर्शनत्रिकं, शुक्ललेश्या, भव्यः, सम्यक्त्वौघक्षायिकौपशमिकसम्यक्त्वानि, संज्ञी आहारकश्चेति । लोभमार्गणायां मोहनीयस्यैवावक्तव्यप्रदेशबन्धो भवति ।

'भूगाराप्पयराणं' इत्यादि, सर्वासु—भूयस्कारपदमाश्रित्य सप्ततिशतसङ्ख्याकासु, अल्पतरपदमाश्रित्य षट्षष्टिशतसङ्ख्याकासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां च नानाजीवविषयकं जघन्यमुत्कृष्टं चान्तरम् 'अणुरुपएसव्व' इति, सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानामन्तरवद् भवति ।

तद्यथा—अपर्याप्तमनुष्यमन्तरा समस्तगतिभेदाः, समेन्द्रियभेदाः, निखिलकायभेदाः, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिकद्विकं, वैक्रियकायः कार्मणकायश्चेति पञ्चदशयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, निखिलज्ञानमार्गणाभेदाः, संयमौघसामायिकदेशविरत्यसंयमाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, सम्यक्त्वौघक्षायिकक्षायोपशमिकमिथ्यात्वानि, संज्ञी, असंज्ञी आहारकानाहारकौ चेति नवपञ्चाशदधिकशतमार्गणासु 'अन्तराभावः,' नानाजीवविषयककालस्य सर्वाद्धात्वात् । कार्मणानाहारकमार्गणयोर्भूयस्कारप्रदेशबन्धकानाश्रित्यैव वक्तव्यम् ।

शेषैकादशमार्गणाभ्यो नवमार्गणासु जघन्यमन्तरमेकसमयः । कदाचिदेवमपि भवति यदेकं समयं कोऽपि जीव भूयस्कारप्रदेशबन्धं न करोति । एवमल्पतरप्रदेशबन्धेऽपि । छेदोपस्थापनीयपरिहारविशुद्धिमार्गणयोर्भूयस्काराल्पतरयोर्जघन्यान्तरं स्वयं ज्ञातव्यम् । शेषमार्गणासूत्कृष्टान्तरं पुनरेवम्—अपर्याप्तमनुष्यसास्वादनसम्यक्त्वमिश्रमार्गणासु 'पल्योपमासंख्यातभागः,' वैक्रियमिश्रे "द्वादशमुहूर्ताः," अवेदसूक्ष्मसम्परायपयोः 'षण्मासाः,' आहारकद्विके 'वर्षपृथक्त्वं', छेदोपस्थापनीयपरिहारविशुद्धिसंयमयोः 'अष्टादशकोटकोटिसागरोपमाः,' उपशमसम्यक्त्वे सप्तदिनानि, सप्तकर्मणां यथासंभवं भूयस्कारप्रदेशबन्धकानामल्पतरप्रदेशबन्धकानां च नानाजीवविषयकोत्कृष्टान्तरं भवतीति सर्वत्र योजनीयम् । तत्तन्मार्गणानां तावत्प्रमाणमुत्कृष्टान्तरमत्र बीजम् । तत्तन्मार्गणानामुत्कृष्टान्तरं तावत्प्रमाणं कथमिति पर्यनुयोगस्यानवकाशः, सप्तकर्मणामनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयकान्तरप्ररूपणायां यथासम्भवं शास्त्रप्रमाणेन युक्त्या च प्रतिपादितत्वात् ॥५७९॥ तदेवं

सप्तकर्मणां भूयस्काराल्पतरावक्तव्यप्रदेशबन्धकानामन्तरं निरूपितम् । इदानीं सप्तकर्मणामवस्थित-प्रदेशबन्धकानामन्तरं निरूपयति—

जहि णियमा सत्तण्हं अवट्ठिओ तत्थ अंतरं से णो ।
सेसासु लहु समयो जेट्ठं सेढीअसंखंसो ॥५८०॥

(प्रे०) 'जहि' इत्यादि, यासु मार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धो नियमाद्-अवश्यं; सर्वदा भवतीति यावत्, तासु द्वाषष्टिमार्गणासु 'से' इति, सप्तकर्मणामवस्थितप्रदेशबन्धस्य, अवस्थितप्रदेशबन्धकानामिति यावद्, नानाजीवविषयकमन्तरं न भवति ।

यासु मार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धः सर्वदा भवति ता मार्गणा इमाः—तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, वनस्पतिकायौघः, पृथ्व्यप्तेजोवायुकायौघाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, चतुष्कषायाः, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्चेति द्वाषष्टिः । अत्रायं भावः—एतासु मार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धकानां नानाजीवविषयककालस्य सर्वाद्धात्वात्तेषां सर्वदा प्राप्यमाणत्वादत्यन्ताभावलक्षणमन्तरं न प्राप्यते ।

'सेसासु' इत्यादि, द्विषष्टिमार्गणास्वुक्तत्वाद् वैक्रियमिश्रादिचतुर्मार्गणास्ववस्थितप्रदेशबन्धस्याभावात् शेषासु चतुरधिकशतमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धकानां जघन्यमन्तरम् 'एकसमयः' भवति । भावना सुगमा । 'जेट्ठं' इत्यादि, शेषासु चतुरुत्तरशतमार्गणासु सप्तकर्मणामवस्थितप्रदेशबन्धकानां नानाजीवविषयकमुत्कृष्टमन्तरं "श्रेण्यसंख्यातभागः" भवति । इयमत्र भावना—अवस्थितप्रदेशबन्धस्तावदवस्थितयोगादिना भवति, अवस्थितयोगादि च कदाचिच्छ्रेण्यसंख्यातभागकालं यावत्कस्यापि जीवस्य न प्राप्यते । अतः "कारणाभावे कार्याभावात्" श्रेण्यसंख्यातभागं यावत् सप्तकर्मणामवस्थितप्रदेशबन्धक एकोऽपि जीवो न लभ्यते । ततः समीचीनमेवोक्तं "जेट्ठं सेढीअसंखंसो" इति ।

शेषचतुरधिकशतमार्गणा नामत इमाः—निखिलनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, समस्तमर्त्यामर्त्यगतिभेदाः, अखिलद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः त्रसत्रिकं चेत्यष्टौ कायभेदाः; पञ्चमनःपञ्चवचनानि, वैक्रियकाय आहारककायश्चेति द्वादशयोगभेदाः, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयमवृते षट् संयममार्गणाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमन्तरा षट्सम्यक्त्वमार्गणाः संज्ञी चेति ॥ ५८० ॥

तदेवं सप्तकर्माण्याश्रित्य भूयस्कारादिचतुर्विधप्रदेशबन्धकानामन्तरं चिन्तितम् । साम्प्रतं तदायुराश्रित्य चिन्तयितुमना यासु मार्गणास्वन्तराभावस्ता अतिदिशति—

आउस्स बंधगाणं अगुरुपएसस्स जत्थ सव्वद्धा ।
तहि तस्स बंधगाणं सव्वपयाणंतरं णत्थि ॥५८१॥

(प्रे०) 'आउस्स' इत्यादि, आयुषोऽनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयककालो यासु मार्गणासु 'सर्वाद्धा' तासु मार्गणासु 'तस्स' तस्य आयुषः 'सव्वपयाणं' इति, सर्वपदानां=भूयस्कारादिचतुर्विधपदानां बन्धकानां नानाजीवविषयकमन्तरं 'नास्ति' । अत्रेदं हृदयम्—यासु मार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयककालः सर्वाद्धा तासु आयुषो भूयस्कारादिचतुर्विधपदबन्धकानां नानाजीवविषयकः कालः सर्वाद्धा भवति । ततस्तासु भूयस्कारकादिचतुर्विधपदानां बन्धकानां सर्वदा लभ्यमानत्वात्तेषामन्तरं न प्राप्यते ।

यासु मार्गणासु आयुषोऽनुत्कृष्टप्रदेशबन्धकानां नानाजीवविषयकालः सर्वाद्धा ता मार्गणा इमाः—तिर्यगोघः, समस्तैकेन्द्रियभेदाः, समनिगोदभेदाः, वनस्पतिकायौघः, पृथ्व्यप्तेजोवायुकायौघाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुतलक्षणाज्ञानद्विकं, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्चेति ॥५८१॥

सम्प्रति शेषमार्गणासु आयुषो भूयस्कारप्रदेशबन्धकादीनां नानाजीवविषयकमन्तरं प्रतिपाद्य प्रस्तुतद्वारं पारयति—

सेसासु लहु समयो अवट्ठिअस्स परमं असंखंसो ।
सेढीए विण्णेयं अगुरुपएसव्व सेसाणं ॥५८२॥

(प्रे०) 'सेसासु' इत्यादि, द्वाषष्टिमार्गणासत्कत्वादाहारकमिश्रे चावस्थितप्रदेशबन्धाभावात् शेषासु शतमार्गणासु आयुषोऽवस्थितप्रदेशबन्धकानां जघन्यमन्तरम् 'एकसमयः', 'परमं' इत्यादि, उत्कृष्टमन्तरं "श्रेण्यसंख्यातभागः" भवति । अत्र भावना सप्तकर्मणामवस्थितप्रदेशबन्धकानां जघन्योत्कृष्टान्तरोपपादने यथा कृता तथा कर्तव्या ।

शेषशतमार्गणा इमाः—सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, समस्तमर्त्यामर्त्यगतिभेदाः, समविकलपञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः, त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियकाययोग आहारककाययोगश्चेति द्वादशयोगभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, संयमौघसामायिक-

छेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, सम्यक्त्वौघ-क्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वानि, संज्ञी च ।

'अगुरुपएसव्व सेसाणं' इति, 'सेसासु' इति पदमत्रापि सम्बध्यते, शेषासु एकशत-मार्गणासु शेषाणां-भूयस्कारादित्रिपदबन्धकानां जघन्यमुत्कृष्टं चान्तरम् "आयुषोऽनुत्कृष्टप्रदेश-बन्धकानां नानाजीवविषयकजघन्योत्कृष्टान्तरवद्" ज्ञातव्यम् । कुतः ? इति चेद् , आयुर्बन्धा-द्धायामनुत्कृष्टप्रदेशबन्धवदवक्तव्यभूयस्काराल्पतरबन्धानामपि सद्भावाद् ॥५८२॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे भूयस्काराधिकारे नानाजीवविषयक-
मेकादशमन्तरद्वारं समाप्तम् ॥

## ॥ द्वादशं भावद्वारम् ॥

तदेवं नानाजीवविषयकमन्तरं प्ररूपितम् । नन्वौदयिकादिपञ्चभावान्तः केषु भावेषु वर्तमानो जीवो भूयस्कारादिचतुष्पदबन्धं विदधातीति जिज्ञासायामिदानीमेकगाथया द्वादशं भावद्वारं निरूपयति—

**ओदइये खलु भावे अट्ठण्ह भवे चउण्ह वि पयाणं ।**
**बंधो एमेव हवइ सव्वासु सगसगपयाणं ॥५८३॥**

(प्रे०) 'ओदइये' इत्यादि, निगदसिद्धम् । नवरं "सगसगपयाणं" इति, यासु मार्ग-णासु यावन्ति भूयस्कारादिपदानि भवन्ति तेषाम् । किञ्चित्प्रपञ्चार्थिना तु प्रथमाधिकारान्तः-पतितभावद्वारं निरीक्षणीयम् ॥५८३॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे भूयस्काराधिकारे द्वादशं
भावद्वारं समाप्तम् ॥



## ॥ त्रयोदशमल्पबहुत्वद्वारम् ॥

तदेवं भावद्वारं प्रतिपादितम् । सम्प्रति क्रमिकं त्रयोदशमल्पबहुत्वद्वारं प्रारिप्सुः प्रथमं तावत्सप्तकर्माण्याश्रित्यावक्तव्यतामाह—

**सत्तण्ह अवत्तव्वगअवट्ठिअऽप्पयरभूअगाराणं ।**
**कमसोऽत्थि बंधगाऽप्पाऽणंतअसंखगुणअब्भहिया ॥५८४॥**

(प्रे०) "सत्तण्ह" इत्यादि, सप्तकर्मणामवक्तव्यावस्थिताल्पतरभूयस्काराणां बन्धका अनुक्रमेणाल्पाः, अनन्तगुणाः, असंख्यगुणाः, विशेषाधिकाः सन्ति । अत्रायं भावः—ज्ञानावरणीयकर्मणो भूयस्कारप्रदेशबन्धकादिचतुर्विधबन्धकमध्येऽवक्तव्यप्रदेशबन्धकाः सर्वस्तोकाः, अवक्तव्यप्रदेशबन्धकानां शतपृथक्त्वमात्रत्वात् । ततो ज्ञानावरणीयकर्मण एवावस्थितप्रदेशबन्धका अनन्तगुणाः, अवस्थितप्रदेशबन्धकेषु निगोदजीवानामपि समावेशात्, तेषाञ्चानन्त्यात् । ततस्तस्यैवाल्पतरप्रदेशबन्धका जीवा असंख्यगुणाः, अल्पतरप्रदेशबन्धस्यैकजीवविषयककालोऽन्तर्मुहूर्तम्, अवस्थितप्रदेशबन्धस्य कालः पञ्चदशसमया मतान्तरेणैकादशसमया वा, इत्यवस्थितप्रदेशबन्धापेक्षयाऽल्पतरप्रदेशबन्धस्यैकजीवविषयककालस्यासंख्यगुणत्वात्, अवस्थितप्रदेशबन्धस्यैकजीवविषयकमन्तरं 'श्रेण्यसंख्यातभागः', अल्पतरप्रदेशबन्धस्यैकजीवविषयकमन्तरम् 'अन्तर्मुहूर्तमात्रम्', इत्यवस्थितप्रदेशबन्धापेक्षयाल्पतरप्रदेशबन्धस्यैकजीवविषयकान्तरस्य स्वल्पतरत्वाच्च । ततस्तस्य भूयस्कारप्रदेशबन्धका जीवा विशेषाधिकाः, अल्पतरप्रदेशबन्धापेक्षया भूयस्कारप्रदेशबन्धकालस्य विशेषाधिकत्वात् । यद्यपि भूयस्काराल्पतरोभयोरपि एकजीवविषयककालोऽन्तर्मुहूर्तं, तथाप्यल्पतरप्रदेशबन्धान्तर्मुहूर्ताद् भूयस्कारप्रदेशबन्धान्तर्मुहूर्तं किञ्चिद् महद्, अतोऽल्पतरप्रदेशबन्धकेभ्यो भूयस्कारप्रदेशबन्धका विशेषाधिका भवन्ति । एवं दर्शनावरणीयादिषट्कर्मस्वपि प्रत्येककर्माश्रित्य वक्तव्यम् ॥५८४॥ अथायुःकर्माश्रित्य भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वमाह—

**आउस्स खलु अवट्ठिअवत्तव्वऽप्पयरभूअगाराणं ।**
**कमसोऽत्थि बंधगाऽप्पाऽसंखअसंखगुणअब्भहिया ॥५८५॥**

(प्रे०) 'आउस्स' इत्यादि आयुषोऽवस्थितप्रदेशबन्धकाः, अवक्तव्यप्रदेशबन्धकाः, अल्पतरप्रदेशबन्धकाः, भूयस्कारप्रदेशबन्धकाश्च यथासंख्यं स्तोकाः, असंख्यगुणाः, असंख्यगुणाः, विशेषाधिकाश्च भवन्ति । अत्रेयं भावना—यद्यपि अवस्थितप्रदेशबन्धापेक्षयाऽवक्तव्यप्रदेशबन्धस्य कालः स्तोकतरः, तथापि आयुषोऽवस्थितप्रदेशबन्धापेक्षयाऽवक्तव्यप्रदेशबन्धस्यैकजीवविषयकमन्तरमसंख्यातभागमात्रं वर्तते । तथाहि—परिमाणचिन्तायां सूक्ष्मजीवा एव मुख्याः, तेषामधिकत्वात्, सूक्ष्मजीवानाश्रित्यायुषोऽवस्थितप्रदेशबन्धस्यैकजीवविषयकमन्तरं 'श्रेण्यसंख्यातभागः' अवक्तव्य-

प्रदेशबन्धस्य तु भिन्नमुहूर्तमात्रम्, इत्यायुषोऽवक्तव्यप्रदेशबन्धापेक्षयाऽवस्थितप्रदेशबन्धस्यान्तरस्यासंख्यातगुणत्वादायुषोऽवस्थितप्रदेशबन्धका जीवाः सर्वस्तोकाः, तेभ्यस्तस्यावक्तव्यप्रदेशबन्धका जीवा असंख्यगुणाः । तेभ्यस्तस्याल्पतरप्रदेशबन्धका जीवा असंख्यगुणाः, स्थूलदृष्ट्या आयुषोऽवक्तव्याल्पतरप्रदेशबन्धयोरेकजीवविषयकान्तरस्य तौल्येऽपि अवक्तव्यपदबन्धकालापेक्षयाल्पतरप्रदेशबन्धकालस्यासंख्यगुणत्वात् । ततस्तस्य भूयस्कारप्रदेशबन्धका जीवा विशेषाधिकाः, एकजीवविषयकभूयस्कारप्रदेशबन्धकालस्य विशेषाधिकत्वात् ॥५८५॥

तदेवमोघतः चिन्तितमष्टानामपि कर्मणां भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वम् । साम्प्रतं तदेवादेशतः दिकथयिषुरादौ तावत्सप्तकर्माण्याश्रित्य वक्तुं प्रक्रमते । तत्रादौ यासु मार्गणासु अल्पबहुत्वस्याभावस्ता निरूपयति—

मीसदुजोगेसु तहा कम्माणाहारगेसु णो चेव ।
हवए अप्पाबहुगं पयडीणं आउवज्जाणं ॥५८६॥

(प्रे०) 'मीसदुजोगेसु' इत्यादि, वैक्रियमिश्राहारकमिश्ररूपद्विमिश्रयोगयोः, कार्मणकायेऽनाहारके चेति चतुर्मार्गणासु आयुर्वर्जानां सप्तप्रकृतीनां भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वं न भवति । यतोऽल्पबहुत्वमनेकविधपदार्थसापेक्षम्, अत्र तु भूयस्कारप्रदेशबन्धका एव वर्तन्ते, इत्यनेकविधबन्धकजीवानामभावादत्र नाल्पबहुत्वम् ॥५८६॥

सम्प्रति यासु मार्गणासु श्रेणिमद्मात्रस्तासु असंख्यातजीवासु मार्गणासु भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्व गाथाद्विकेन प्रकटयति—

णरदुपणिंदियतसपणमणवयणाणतिगचक्खुओहीसुं ।
सुहलाए सम्मत्ते खइअउवसमेसु सण्णिम्मि ॥५८७॥
ओघुत्तेण कमेणं आउगवज्जाण बंधगा कमसो ।
थोवा असंखियगुणा असंखियगुणा विसेसहिया ॥५८८॥

(प्रे०) 'णर' इत्यादि, मनुष्यौघः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, मतिश्रुतावधिज्ञानानि, चक्षुरवधिदर्शने, शुक्ललेश्या, सम्यक्त्वौघक्षायिकौपशमिकसम्यक्त्वानि, संज्ञी चेति पञ्चविंशतिमार्गणासु 'ओघुत्तेण' इत्यादि, आयुर्वर्जानां सप्तकर्मणामोघोक्तेन प्रथमवक्तव्यप्रदेशबन्धकाः, ततोऽवस्थितप्रदेशबन्धकाः, ततोऽल्पतरप्रदेशबन्धकाः, ततो भूयस्कारप्रदेशबन्धकाः इति क्रमेण 'कमसो थोवा' इत्यादि, यथाक्रमं सर्वस्तोकाः, असंख्यातगुणाः, असंख्यातगुणाः विशेषाधिका भवन्ति । अत्र भावना सप्तकर्मणामोघवक्तव्यतावत् । नवरमयं विशेषः-ओघवक्तव्यतायामवक्तव्यप्रदेशबन्धकेभ्योऽवस्थितप्रदेशबन्धका जीवा अनन्तगुणाः प्रतिपादिताः, संसा-

रगतावस्थितप्रदेशबन्धकजीवानामानन्त्यात्, इह तु असंख्यातगुणा अवगन्तव्याः, मार्गणास्थावस्थितप्रदेशबन्धकानां जीवानामसंख्यातत्वात् ॥५८७।५८८॥ इदानीं यासु मार्गणासु श्रेणिसम्भवस्तासु संख्यातजीवासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वमाह—

पज्जणरमणुस्सीसुं अवेअमणणाणसंयमेसुं च ।
ओघकमाऽप्पा संखगुणा संखगुणा विसेसहिया ॥५८९॥

(प्रे०) 'पज्जणर' इत्यादि, पर्याप्तमनुष्यादिपञ्चमार्गणासु सप्तकर्मणां बन्धकाः 'ओघकमा' इत्यादि, अवक्तव्यप्रदेशबन्धकाः, अवस्थितप्रदेशबन्धकाः, अल्पतरप्रदेशबन्धका भूयस्कारप्रदेशबन्धकाश्चेत्योघोक्तक्रमेण सर्वस्तोकाः, संख्यातगुणाः, संख्यातगुणा विशेषाधिकाश्च भवन्ति । अत्रापि भावना सामान्यवक्तव्यतावद् । नवरं मार्गणास्थजीवानां संख्यातत्वादवक्तव्यप्रदेशबन्धकेभ्योऽवस्थितप्रदेशबन्धका जीवाः संख्यातगुणाः, एवमवस्थितप्रदेशबन्धकेभ्योऽल्पतरप्रदेशबन्धका जीवाः संख्यातगुणा भवन्तीति विशेषः। ।५८९॥

इदानीं यासु मार्गणासु अवक्तव्यप्रदेशबन्धाभावस्तासु संख्यातजीवमार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वमाह—

सव्वत्थाहारेसुं समइअछेअपरिहारसुहमेसुं ।
थोवा संखेज्जगुणाऽब्भहिया कमसो अवट्ठिआईणं ॥५९०॥(गीतिः)

(प्रे०) 'सव्वत्थाहारेसु' इत्यादि, सर्वार्थसिद्धदेवादिपञ्चमार्गणासु सप्तप्रकृतीनां सूक्ष्मसम्पराये च षट्प्रकृतीनाम् 'अवट्ठिआईणं' इति, अवक्तव्यप्रदेशबन्धस्याभावादवस्थितादीनाम्=अवस्थिताल्पतरभूयस्काराणां बन्धका अनुक्रमेण स्तोकाः, संख्यातगुणाः, विशेषाधिका भवन्ति । भावना सुगमत्वात् स्वयं परिभावनीया ॥५९०॥ इदानीं यासु मार्गणासु श्रेणिसद्भावस्तास्वनन्तजीवमार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वं गाथाद्विकेन चिन्तयति—

ओघव्व हुन्ति काये उरलअचक्खुभवियेसु आहारे ।
मोहस्स बंधगा खलु लोहे ओघव्व विण्णेया ॥५९१॥
मोहाउगवज्जाणं अवट्ठिअऽप्पयरभूअगाराणं ।
कमसोऽत्थि बंधगाऽप्पा असंखियगुणा विसेसहिया ॥५९२॥

(प्रे०) 'ओघव्व' इत्यादि, काययोगौघादिपञ्चमार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वम् 'ओघवद्' भवति । तद्यथा—ज्ञानावरणीयस्यावक्तव्यप्रदेशबन्धकाः सर्वस्तोकाः, ततस्तस्यावस्थितप्रदेशबन्धकाः अनन्तगुणाः, ततस्तस्याल्पतरप्रदेशबन्धका असंख्यातगुणाः, ततस्तस्य भूयस्कारप्रदेशबन्धका विशेषाधिका भवन्ति । अत्र भावनाऽपि सामान्यवक्तव्यतावद् विधेया ।

एवं दर्शनावरणीयादिषट्कर्माण्याश्रित्यापि ज्ञातव्यम् । 'मोहस्स' इत्यादि, लोभमार्गणायां मोहनीयस्य भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वम् 'ओघवत्' भवति । एतच्चानन्तरमेव दर्शितम् ।

'मोहाऽणवज्जाणं' इत्यादि, 'लोहे' इति पदमत्रापि सम्बध्यते, लोभकषाये मोहनीयायुषी विना षट्कर्मणामवस्थितप्रदेशबन्धकाः, अल्पतरप्रदेशबन्धका भूयस्कारप्रदेशबन्धकाश्चानुक्रमेण स्तोकाः, असंख्यगुणाः, विशेषाधिका भवन्ति । अत्रायं भावः—लोभमार्गणायां सप्तकर्मान्तर्मोहनीयस्यावक्तव्यप्रदेशबन्धो भवति, शेषषट्कर्मणां च न भवति । अतोऽत्र मोहनीयमाश्रित्य पृथक् प्ररूपितं, शेषषट्कर्मस्ववक्तव्यप्रदेशबन्धस्यासत्त्वात् तं विहायावस्थितप्रदेशबन्धकादीनामल्पबहुत्वं प्रतिपादितम् । अवस्थितप्रदेशबन्धस्यैकजीवविषयककालस्याल्पतरभूयस्कारप्रदेशबन्धकालापेक्षयाऽसंख्यातभागमात्रत्वादवस्थितप्रदेशबन्धका अल्पतरप्रदेशबन्धकेभ्यो भूयस्कारप्रदेशबन्धकेभ्यश्च स्तोका भवन्ति । ततोऽल्पतरप्रदेशबन्धकानामसंख्यगुणत्वमल्पतरप्रदेशबन्धकेभ्यो भूयस्कारप्रदेशबन्धकानां विशेषाधिकत्वं चौघवदुपपादनीयम् ॥५९१।५९२॥ इदानीं शेषसर्वमार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वं प्रतिपादयन्ति—

सेसासु सत्तण्हं अवट्ठिअऽप्पयरभूअगाराणं ।
कमसोऽत्थि बंधगाऽप्पा असंखियगुणा विसेसहिया ॥५९३॥

(प्रे०) 'सेसासु' इत्यादि, शेषासु चतुर्विंशतिशतमार्गणासु सप्तकर्मणामवस्थितपदस्याल्पतरपदस्य भूयस्कारपदस्य च बन्धका अनुक्रमेण स्तोकाः, असंख्यातगुणाः, विशेषाधिकाः भवन्ति । अत्र भावना लोभकषाये षट्कर्मणामवस्थितप्रदेशबन्धकादीनामल्पबहुत्वे यथा कृता तथा कर्तव्या । शेषमार्गणा इमाः—कृत्स्ननरकभेदाः, समस्ततिर्यग्भेदाः, अपर्याप्तमनुष्यः, सर्वार्थसिद्धमन्तरा समामर्त्यभेदाश्चेति त्रिचत्वारिंशद्गतिभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ विना शेषसप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना शेषचत्वारिंशत्कायभेदाः, औदारिकमिश्रवैक्रियकाययोगौ, वेदत्रिकं, लोभमृते कषायत्रिकम्, अज्ञानत्रिकं, देशविरत्यसंयमौ, शुक्ललेश्यां विना लेश्यापञ्चकम्, अभव्यः, क्षायोपशमिकसास्वादनमिश्रमिथ्यात्वानि असंज्ञी चेति । इत्येवं सप्तकर्माण्याश्रित्य प्रतिकर्म भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्व चिन्तितम् ॥५९३॥ साम्प्रतमायुषो भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वं व्याचिख्यासुरादौ तावदाहारकमिश्रं विहाय यासु मार्गणासु आयुर्बन्धप्रायोग्या जीवाः संख्यातास्तासु गाथाद्विकेन प्राह—

दुणराणतपहुडीसु तह आहारमणपज्जवेसु तहा ।
संयमसामइएसु छेए परिहारसुकखइएसु ॥५९४॥(गीतिः)

आउस्स बंधगा खलु ओघुत्तेणं कमेण विण्णेया ।
थोवा संखेज्जगुणा संखेज्जगुणा विसेसहिया ॥५९५॥

(प्रे०) 'गुणराणलपबहुकोसु' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः आनत-प्रभृतिषु सर्वार्थसिद्धपर्यन्तेषु अष्टादशदेवभेदेषु, तथा समुच्चये, आहारककाययोगे, मनःपर्यवज्ञाने, तथा समुच्चये, संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिसंयमेषु, शुक्ललेश्यायां, क्षायिक-सम्यक्त्वे चेत्यष्टाविंशतिमार्गणासु 'आउस्स' इत्यादि; आयुषो भूयस्कारप्रदेशबन्धकादयः 'खलु' वाक्यालङ्कारे, 'ओघुत्तेण कमेण' इति, ओघवक्तव्यतायामुक्तक्रमेण, तद्यथा–प्रथममवस्थित-प्रदेशबन्धकाः, ततोऽवक्तव्यप्रदेशबन्धकाः, ततोऽल्पतरप्रदेशबन्धकाः, ततो भूयस्कारप्रदेशबन्धका अनुक्रमेण स्तोकाः, संख्यातगुणाः, संख्यातगुणा विशेषाधिका ज्ञातव्याः । अत्र भावना सामान्य-वक्तव्यतावद् विधेया । नवरं तत्र येषां बन्धकानामसंख्यातगुणत्वं प्रतिपादितं तेषामत्र संख्यात-गुणत्वं प्रोक्तम् । एतासु मार्गणासु आयुर्बन्धकानां जीवानां संख्यातत्वाद् ॥५९४।५९५॥ इदानीं प्रस्तुताधिकारं पिपारयिषुराहारकमिश्रे शेषमार्गणासु चायुषो भूयस्कारप्रदेशबन्धकादीनामल्पबहुत्वं प्रतिपादयन्नाह—

आहारमीसजोगे अप्पाऽवत्तव्वगस्स ताहिन्तो ।
संखगुणा भूगारस्सोघव्व हवेज्ज सेसासुं ॥५९६॥

(प्रे०) 'आहारमीसजोगे' इत्यादि, आहारकमिश्रकाययोगेऽवक्तव्यप्रदेशबन्धका अल्पाः, 'ताहिन्तो' इत्यादि, तेभ्यो भूयस्कारप्रदेशबन्धकाः संख्यातगुणा भवन्ति । अत्रेयं भावना–आहारकमिश्रयोगे मार्गणाद्वितीयसमयादारभ्य मार्गणाचरमसमयं यावद्योगस्यासंख्यगुणवृद्धेः प्रव-र्तनादवस्थिताल्पतरप्रदेशबन्धाभावः प्राक् सत्पदद्वारे निरूपितः । अतस्तदितरावक्तव्यभूयस्कारपद-बन्धकानामेवाल्पबहुत्वमत्र चिन्तितम् । तत्र भूयस्कारप्रदेशबन्धस्यैकजीवविषयककालोऽन्तर्मुहू-र्तम्, अवक्तव्यप्रदेशबन्धस्य चैकसमयमात्र एव, अतः इदं सुज्ञानं भवति यद् भूयस्कारप्रदेशबन्ध-केभ्योऽवक्तव्यप्रदेशबन्धकाः स्तोकाः । तथा मार्गणागताः सर्वे जीवा अपि संख्याता एवेत्यवक्तव्य-प्रदेशबन्धकेभ्यो भूयस्कारप्रदेशबन्धकाः संख्यातगुणा भवन्ति ।

'ओघव्व हवेज्ज सेसासु' इति, शेषासु चतुस्त्रिंशदधिकशतमार्गणासु आयुषो भूयस्का-रादिप्रदेशबन्धकादीनामल्पबहुत्वम् 'ओघवद्' भवति । तद्यथा–अवस्थितप्रदेशबन्धकाः सर्वस्तोकाः, ततोऽवक्तव्यप्रदेशबन्धका असंख्यातगुणाः, ततोऽल्पतरप्रदेशबन्धका असंख्यातगुणाः, ततो भूयस्कारप्रदेशबन्धका विशेषाधिकाः । अत्र भावनौघवद् ।

शेषचतुस्त्रिंशदधिकशतमार्गणा इमाः–सर्वनरकभेदाः, कृत्स्नतिर्यग्भेदाः, मनुष्यौघापर्याप्त-मनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्मप्रमुखाष्टवैमानिकदेवभेदा इति सप्तविंशतिगतिभेदाः,

निखिलेन्द्रियभेदाः, समकायभेदाः, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिकद्विकं, वैक्रियकायश्चेति चतुर्दशयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, मनःपर्यवज्ञानमन्तरा षड्ज्ञानमार्गणाः, देशविरत्यसंयमौ, दर्शनत्रिकं, शुक्ललेश्यां विना पञ्च लेश्याः, भव्याभव्यौ, सम्यक्त्वौघक्षायोपशमिकसास्वादनसम्यक्त्वमिथ्यात्वानि, संज्ञी, असज्ञी आहारकश्चेति ॥५९६॥



॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे भूयस्काराधिकारे त्रयोदश-
मल्पबहुत्वद्वारं समाप्तम् ॥

— तत्समाप्तौ च —

॥ द्वितीयो भूयस्काराधिकार समाप्त ॥

॥ ॐ अर्हं नमः ॥

## ॥ तृतीयः पदनिक्षेपाधिकारः ॥

तदेवं गतो भूयस्काराभिधो द्वितीयाधिकारः । साम्प्रतं "यथोद्देशं निर्देशः" इति न्यायमवलम्ब्य पदनिक्षेपसंज्ञं तृतीयमधिकारं व्याख्यातुं प्रक्रमते । तत्रादौ प्रकृताधिकारगतद्वारप्रतिपादिकां गाथामाह—

**तइए पयणिक्खेवे अहिगारे तिण्णि हुन्ति दाराइं ।**
**संतपयं सामित्तं अप्पाबहुगं त्ति जहक्कमसो ॥५९७॥**

(प्रे०) 'तइए' इत्यादि, तृतीये पदनिक्षेपाभिधेऽधिकारे त्रीणि द्वाराणि सन्ति । कानि तानीत्याह-'संतपयं' इत्यादि, अनुक्रमेण प्रथमं द्वारं सत्पदं, द्वितीयं स्वामित्वं, तृतीयमल्पबहुत्वमिति । तत्र सत्पदद्वारे जघन्योत्कृष्टभेदभिन्नानां वृद्धिहान्यवस्थानानां सत्ता विभावयिष्यते । इदमुक्तं भवति-प्रत्येकं कर्मणो योगादिकारणकलापमुपजीवमानः प्रदेशबन्धः समुपस्थितेषु प्राग्भूयस्काराधिकारगतसत्पदद्वारे प्रदर्शितेषु योगवृद्धयादिहेतुषु कदाचिद् वर्धते, योगहान्यादिवशात् कदाचिद्धानिं याति, कदाचिच्च तावानेवावतिष्ठते । तत्र प्रदेशबन्धवृद्धिः, कदाचित्स्तोकतमा, कदाचित्स्तोकतरा, कदाचित्स्तोका, कदाचिदधिका, कदाचिदधिकतरा, कदाचिच्चाधिकतमा इत्येवमनेकविधा प्रदेशबन्धवृद्धिः प्रवर्तते । तत्र या स्तोकातिस्तोका प्रदेशबन्धवृद्धिः, अर्थात् केवलिप्रज्ञयाऽपि यदपेक्षयाऽन्या स्तोका प्रदेशबन्धवृद्धिर्न प्रवर्तते, सा प्रदेशबन्धवृद्धिः जघन्या, एवमन्तिमा या प्रदेशबन्धवृद्धिः, यदपेक्षयाऽन्याधिका प्रदेशबन्धवृद्धिर्भवितुं नार्हतीति यावद् , सा प्रदेशबन्धवृद्धिरुत्कृष्टा । एवं वृद्धिशब्दस्थाने हानिशब्दं प्रयुज्य प्रदेशबन्धहानावपि वक्तव्यम् ।

अथ पूर्वसमये यावतां प्रदेशानां बन्धस्तदनन्तरसमयेऽपि तावतामेव प्रदेशानां यो बन्धस्तत् प्रदेशबन्धावस्थानमुच्यते । तदपि वृद्धिहानिवन्नैकभेदं भवति, तस्य पूर्वसमयवृद्धिहानिमूलत्वात् । इदमुक्तं भवति-अवस्थानपूर्वसमयेऽनन्तरप्रदर्शितासु स्तोकतमादिषु वृद्धिषु हानिषु वा स्तोकतमा, अधिकतमेत्यादिरूपा यादृशी वृद्धिर्हानिर्वा स्यात् तादृगेवावस्थानमपि भवति । तत्र जघन्याया वृद्धेर्हानेर्वाऽनन्तरसमये प्रवर्तमानं प्रदेशबन्धावस्थानं जघन्यम्, उत्कृष्टाया वृद्धेर्हानेर्वाऽनन्तरक्षणे जायमानं प्रदेशबन्धावस्थानमुत्कृष्टमुच्यते ।

एतावता प्रपञ्चेन प्रस्तुते किमायातम् ? इदमेव, यदनेकवृद्धिहान्यवस्थानमध्येऽत्र सत्पदाभिधप्रथमद्वारे जघन्योत्कृष्टभेदभिन्नेषु वृद्धिहान्यवस्थानलक्षणत्रिपदेषु ओघत आदेशतश्च प्रत्येककर्मणः कियन्ति पदानि भवन्तीति निरूपयिष्यते । अथ स्वामित्वसंज्ञे द्वितीयद्वारे जघन्यप्रदेशबन्धवृद्धयादेः स्वामी, अर्थात् को जीवो जघन्यप्रदेशबन्धवृद्धयादेर्विधाता भवतीति चिन्तयिष्यते । तृतीयेऽल्पबहुत्वद्वारे जघन्यप्रदेशबन्धवृद्धयादिपदमध्ये कस्मात्कस्मिन् प्रदेशाः स्तोका अधिका वा बध्यन्ते इति प्ररूपयिष्यते ॥५९७॥

तदेवं नामग्राहं द्वाराण्युद्दिष्टानि । सम्प्रति तान्युद्देशानुक्रमेण निर्देष्टुकामः प्रथमं तावदोघत आदेशतश्चानन्तरनिर्दिष्टवृद्ध्यादिपदानां सत्तामाह—

**अट्ठण्हं लहुजेट्ठा वड्ढी हाणी तहा अवट्ठाणं ।**
**ओघव्व जाणियव्वं सप्पाउग्गाण सव्वासुं ॥५९८॥**

(प्रे०) 'अट्ठण्हं' इत्यादि, 'लहुजेट्ठा' इत्यत्र प्राकृतत्वाद् द्विवचनस्य बहुवचनम् , 'लहुजेट्ठा' इति पदं वड्ढी, हाणी, तथा अवट्ठाणं इति त्रिपदेषु प्रत्येकमभिसंबध्यते, ततोऽयमर्थः-जघन्या वृद्धिः, जघन्या हानिः, जघन्यमवस्थानम् , उत्कृष्टा वृद्धिः, उत्कृष्टा हानिः, उत्कृष्टमवस्थानं च सम्भवन्ति । ओघतोऽष्टानामपि कर्मणां जघन्योत्कृष्टभेदभिन्नानि वृद्ध्यादीनि त्रीण्यपि पदानि सम्भवन्तीति यावद् ।

अथोत्तरार्धेनादेशतोऽतिदेशमुखेनाह-"ओघव्व" इत्यादि, सर्वासु=सप्ततिशतमार्गणासु 'सप्पाउग्गाण' इति, स्वप्रायोग्याणां-स्वस्यां यावन्ति कर्माणि बध्यन्ते तेषां जघन्यवृद्ध्यादिपदानि 'ओघवद्' ज्ञातव्यानि । ननु तत्कथं ज्ञायेत ? इति चेद् , एतानि जघन्यवृद्ध्यादिपदानि कदा कथं च प्रवर्तन्ते इति जिज्ञासापिपासां तु स्वामित्वद्वारमपनेष्यतीत्यत्र तदर्थं न प्रयतामहे । सत्यम् , ननु तथापि सुज्ञातभूयस्काराधिकाराणामस्माकमत्रेयं शङ्का भवितुमर्हत्येव, तद्यथा-वैक्रियमिश्राहारकमिश्रकार्मणानाहारका इति चतुर्मार्गणासु भूयस्काराधिकारप्रथमद्वारे भूयस्कारपदमेव सम्भवतीत्युक्तम् । यतो मार्गणाचरममसमयं यावदसंख्यगुणयोगवृद्धिर्भवति । अतो वैक्रियमिश्रादिमार्गणासु योगस्य हानेरवस्थानस्य चाभावः सुतरां सिद्धो भवति, ततश्च प्रस्तुते प्रदेशबन्धस्य हानेरवस्थानस्य चाभावोऽपि सिद्धः । अतो वैक्रियमिश्रादिषु वृद्धिपदमेव सम्भवति, तत्कथमत्र ग्रन्थकृता सर्वासु मार्गणासु ओघवत् सर्वपदानां सत्ता निरूपिता ? इति चेद् , सत्यम् , सुज्ञातभूयस्काराधिकारैस्तादृक्शङ्काशङ्कितैर्भवितव्यमेव । अत एव ग्रन्थकार इदानीं कृतातिदेशमपवर्दितुकाम आह—

**णवरं सगपयडीणं वेउव्वाहारमीसजोगेसुं ।**
**कम्माणाहारेसुं ण अत्थि हाणी अवट्ठाणं ॥५९९॥**

(प्रे०) निगदसिद्धं, भावितार्थत्वात् । नवरं वैक्रियमिश्रकार्मणानाहारकेषु सप्तकर्मणामाहारकमिश्रे चाष्टकर्मणां बन्धो भवतीत्युक्तं 'सगपयडीणं' इति, तत्तन्मार्गणायां यावन्ति कर्माणि बध्यन्ते तावतामित्यर्थः । आहारकमिश्रे आयुर्बन्धसत्त्वादायुर्बन्धकाले योगवृद्धौ सत्यामपि भागहराणामाधिक्यात्सप्तकर्मणां प्रदेशबन्धावस्थानं भविष्यतीति शङ्काया नावकाशः, भूयस्काराधिकारे सत्पदद्वारे वैक्रियमिश्रादिमार्गणासु भूयस्कारातिरिक्तपदाभावप्रतिपादकग्रन्थवृत्ती समाहितत्वात् ।५९९।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे
पदनिक्षेपाधिकारे प्रथमं सत्पदद्वारं समाप्तम् ॥

## ॥ द्वितीयं स्वामित्वद्वारम् ॥

तदेवं गतं सत्पदद्वारम् । सम्प्रति द्वितीयं स्वामित्वद्वारं वक्तुं प्रक्रमते । तत्र प्रथममोघतो मोहनीयायुषी विना षट्कर्मणामुत्कृष्टवृद्धिहान्यवस्थानस्वामिनं निर्वक्तुमिच्छुराचगाथयोत्कृष्टप्रदेशबन्धस्वामिनं निर्वक्ति—

सत्तविहबंधगो खलु तप्पाउग्गलहुजोगठाणाओ ।
होउं सुहुमत्थो गुरुजोगी छण्ह कुणए परमवड्ढिं ॥६००॥(गीतिः)

(प्रे०) षट्कर्मणां परमवृद्धिम्—उत्कृष्टप्रदेशबन्धवृद्धिं विदधातीति परेणान्वयः । कथम्भूतो विदधातीत्याह—'सत्तविहबंधगो' इत्यादि, आयुर्वर्जसप्तप्रकृतीनां बन्धको जीवो यदा तत्प्रायोग्याद्—उत्कृष्टयोगस्थानगमनप्रायोग्याद् जघन्ययोगस्थानात् 'होउं सुहुमत्थो गुरुजोगी' इति, सूक्ष्मसम्परायस्थ उत्कृष्टयोगी च भूत्वा षट्कर्मणामुत्कृष्टां प्रदेशबन्धवृद्धिं विदधाति । अनिवृत्तिबादरसम्परायचरमसमये उत्कृष्टयोगस्थानगमनप्रायोग्यजघन्ययोगं प्राप्तो जीवः सूक्ष्मसम्परायप्रथमसमय उत्कृष्टयोगं प्राप्योत्कृष्टां प्रदेशबन्धवृद्धिं विदधातीत्यर्थः ।

अत्रेदं हृदयम्—तत्तत्कर्मण उत्कृष्टप्रदेशबन्धवृद्धिः सैव भवति यदपेक्षयाऽन्या काऽपि वृद्धिरधिका न भवति । एतादृशीं प्रदेशबन्धवृद्धिं स एव जीवो विदधाति यो विवक्षितसमये उत्कृष्टयोगे वर्तते ऽल्पप्रकृतिबन्धं च विदधाति, तथा उत्कृष्टप्रदेशबन्धवृद्धेः पूर्वानन्तरसमयाल्पप्रदेशबन्धसापेक्षत्वाद् विवक्षितसमयपूर्वानन्तरसमये तत्प्रायोग्यजघन्ययोगवानधिकप्रकृतिबन्धकश्च भवति । इदमुक्तं भवति—द्वौ वणिजौ प्रातःकाले व्यापारार्थं गतौ सायंकाले पुनरागत्य स्वसमीपस्थरूप्यकान् गणयतः, तदोभयोः प्रत्येकं पार्श्वे सहस्ररूप्यकाणि वर्तन्ते । प्रातर्व्यापारार्थं गमनकाले एकस्य सविधे द्विशती द्वितीयस्य च समीपे त्रिशती रूप्यकाणामासीत् । अतोऽत्र केनाधिकरूप्यकाण्यर्जितानि ? यस्य सकाशे द्विशती रूप्यकाणामासीत् तेनाधिकरूप्यकाण्यर्जितानि । एवं प्रस्तुते द्वौ जीवौ सूक्ष्मसम्पराये प्रथमसमये उत्कृष्टयोगव्यापारेणासत्कल्पनया लक्षसङ्ख्याकानि दलिकानि बद्धवन्तौ, तत्पूर्वसमये—अनिवृत्तिबादरसम्परायचरमसमये एकोऽसत्कल्पनया दशसहस्राणि द्वितीयश्च विंशतिसहस्राणि दलिकानि बद्धवान्, तत्र तत्पूर्वसमये यो दशसहस्राणि दलिकानि बद्धवान् तस्याधिकवृद्धिः सम्पद्यते । अतोऽत्रो त्कृष्टप्रदेशबन्धवृद्धौ पूर्वसमयभाव्यल्पतरप्रदेशबन्धोऽप्यपेक्ष्यते । अल्पप्रदेशबन्धश्चाधिकप्रदेशबन्धकारणविपरीतेनाधिकप्रकृतिबन्धेन हीनयोगेन च भवति ।

अतो गाथास्फुटार्थोऽयम्—षट्कर्मणामुत्कृष्टप्रदेशबन्धवृद्धिं विदधातीति परेणान्वयः । इह जीव इति गम्यते, जीवव्यतिरिक्तस्य प्रदेशबन्धाभावात् । अथ कथम्भूतो जीवः षट्कर्मणामुत्कृष्टप्रदेशबन्धवृद्धिं विदधाति ? इत्याह—'गुरुजोगी' इति, उत्कृष्टयोगव्यापारसत्त्वेऽपि बहुप्रकृतीनां बन्धः स्यात्तदा भागहाराणामधिकत्वात् प्रत्येकं कर्मणः स्वविभागे स्तोकदलिकानि परिणमेयुरित्याह—

'सुहुमत्थो' इति, सूक्ष्मसम्पराये षण्णामेव प्रकृतीनां बन्धसम्भवात् । अथानन्तरमेवोक्तं यदुत्कृष्टप्रदेशबन्धवृद्धिः पूर्वानन्तरसमयेऽधिकप्रकृतिबन्धं जघन्ययोगं चावलम्बते, अतः पूर्वसमये षट्प्रकृतिबन्धकानां जीवानां व्यवच्छेदनार्थमाह-'सत्तविहबंधगो' इत्यादि, अव्यवहतिपूर्वसमये इति गम्यते, अत्र तत्प्रायोग्यलघुयोगस्थानादित्यस्योत्कृष्टयोगस्थानगमनयोग्यलघुयोगस्थानादित्यर्थः । तेन मनुष्यादिमार्गणासु भवप्रथमसमयभाविजघन्ययोगस्थानं मनोयोगादिमार्गणासु संज्ञिपर्याप्तादीनां जघन्ययोगस्थानञ्च निराकृतम्, तथास्वाभाव्यात् तेषां जघन्ययोगस्थानस्योत्कृष्टयोगस्थानगमनप्रायोग्याभावात् ॥६००॥ इदानीमोघतो ज्ञानावरणीयादिषट्कर्मणामुत्कृष्टहानिस्वामिनं चिन्तयति—

छव्विहबंधगउक्कडजोगी मरिऊण यो सुरो जाओ ।
सो कुणइ परमहाणिं सजोग्गलहुजोगठाणठिओ ॥६०१॥

(प्रे०) 'छव्विह' इत्यादि, 'षण्णां कर्मणाम्' इत्यनुवर्तते, षड्विधप्रकृतिबन्धक उत्कृष्टयोगवान् यो जीवः पञ्चत्वं प्राप्यामरो भूतः स स्वप्रायोग्यजघन्ययोगस्थानस्थितः, 'भवप्रथमसमये' इति गम्यते, उत्कृष्टहान्यादेरेकसमयमात्रत्वाद्, मोहनीयायुषी विहाय षट्कर्मणां परमहानिम्—उत्कृष्टां प्रदेशबन्धहानिं विदधातीति गाथार्थः ।

अत्रायं भावार्थः—उत्कृष्टप्रदेशबन्धवृद्धिवदुत्कृष्टप्रदेशबन्धहानावपि सति सम्भवे चत्वारि कारणान्यपेक्ष्यन्ते । तद्यथा—उत्कृष्टप्रदेशबन्धहानिसमये जघन्ययोगोऽधिकतरप्रकृतिबन्धश्च, उत्कृष्टप्रदेशबन्धहानिपूर्वानन्तरसमये उत्कृष्टयोगोऽल्पतरप्रकृतिबन्धश्च । अत्र 'छव्विहबंधगउक्कडजोगी' इत्यनेनोत्कृष्टप्रदेशबन्धहानिपूर्वानन्तरसमये उत्कृष्टयोगोऽल्पप्रकृतिबन्धश्च दर्शितः । 'मरिऊण यो सुरो जाओ' इत्यनेनोत्कृष्टप्रदेशबन्धहानिसमयेऽधिकप्रकृतिबन्धो दर्शितः, तदानीं सप्तप्रकृतीनां बन्धसद्भावात् । 'सजोग्गलहुजोगठाणठिओ' इत्यनेनोत्कृष्टप्रदेशबन्धहानिसमये जघन्ययोगः प्रदर्शितः । अत्रेदं बोध्यम्—सर्वजघन्ययोगस्तु सूक्ष्मापर्याप्तानां भवप्रथमसमये भवति, अतः देवानां तस्यासम्भवः, एवमत्र देवगतिप्रथमसमयभाविमर्त्यजघन्ययोगोऽपि न सम्भवति, असंज्ञित आगतानां देवानामेव तस्य सद्भावात्, अत उक्तं 'सजोग्ग' इत्यादि, पूर्वभवान्तिमसमये उत्कृष्टयोगे वर्तमानानां जीवानां देवगतिप्रथमसमये यल्लघुयोगस्थानं सम्भवति तज्जघन्ययोगस्थाने स्थित इत्यर्थः ॥६०१॥

सम्प्रत्योघतो विना मोहायुषी षट्कर्मणामुत्कृष्टावस्थानस्वामिनं प्रतिपादयन्नाह—

छव्विहबंधगउक्कडजोगी सत्तविहबंधगो होउं ।
तदरिहलहुजोगत्थो से काले कुणइ गुरुअवट्ठाणं ॥६०२॥ (गीतिः)

(प्रे०) 'छव्विह' इत्यादि, ज्ञानावरणीयादिषट्कर्मबन्धकः, उत्कृष्टयोगवान् जीवो विनायुः सप्तकर्मणां बन्धको भूत्वा तदर्हे तत्प्रायोग्ये उत्कृष्टावस्थानप्रायोग्ये जघन्ययोगस्थाने स्थितः, 'से काले'

इति, तदनन्तरे काले, यस्मिन् समये सप्तविधकर्मबन्धं कुर्वन् तत्प्रायोग्यलघुयोगस्थानस्थितो भवति तस्मिन्ननन्तरे समयलक्षणे काले इत्यर्थः, षट्कर्मणामुत्कृष्टावस्थानं विदधाति । अत्रायं भावः- षण्णां कर्मणां बन्धः सूक्ष्मसम्पराय एव भवति, सप्तप्रकृतीनां बन्धश्चानिवृत्तिबादरसम्परायादिषु भवति, अतो यो जीव उपशमश्रेणितो निपतन् सूक्ष्मसम्परायगुणस्थानचरमसमय उत्कृष्टयोगं प्राप्यानिवृत्तिबादरसम्परायप्रथमसमये उत्कृष्टावस्थानप्रायोग्यजघन्ययोगस्थाने तिष्ठति सोऽनिवृत्तिबादरसम्परायद्वितीयसमये उत्कृष्टावस्थानं विदधाति । एतादृशो जीवोऽनिवृत्तिबादरसम्परायप्रथमसमये यावन्ति कर्मदलिकानि बध्नाति तद्द्वितीयसमये तावन्त्येव बध्नातीत्यर्थः ।

ननु अत्र सूक्ष्मसम्परायप्रथमसमयभाव्युत्कृष्टवृद्धेरनन्तरसमयेऽवस्थानमनुक्त्वा श्रेणिपातभावित्याऽनिवृत्तिबादरसम्परायप्रथमसमयभाविहानेरनन्तरसमये तत्कथमुक्तम् ? इति चेद्, उच्यते, जीवाः स्वस्थाने यावन्ति योगस्थान्यारोहन्ति तदपेक्षयाऽधिकान्यवरोहन्तीति सूक्ष्मसम्परायप्रथमसमयभाव्युत्कृष्टवृद्धेः श्रेणिपातापेक्षयाऽनिवृत्तिबादरसम्परायप्रथमसमयभाविहानिरधिका, अतस्तदनन्तरसमये प्रकृतावस्थानमुक्तम् ।

ननु तर्हि देवगतिप्रथमसमयभाविहानेरनन्तरसमये उत्कृष्टावस्थानं वक्तव्यम्, यतः पूर्वं 'तइए पयनिक्खेवे' इति द्वारप्रतिपादकश्लोकटीकायां "जघन्याया वृद्धेर्हानेर्वाऽनन्तरक्षणे प्रवर्तमानं प्रदेशबन्धावस्थानं जघन्यम्, उत्कृष्टाया वृद्धेर्हानेर्वाऽनन्तरसमये जायमानं प्रदेशबन्धाऽवस्थानमुत्कृष्टमुच्यते" इत्युक्तम्, षट्कर्मणामुत्कृष्टा प्रदेशबन्धहानिस्तु देवगतिप्रथमसमये एव भवति, देवगतिप्रथमसमयभाव्युत्कृष्टहान्यपेक्षया श्रेणितः पततो जीवस्यानिवृत्तिबादरसम्परायप्रथमसमयभाविहानिरनुत्कृष्टेति चेद्, सत्यम्, देवगतिप्रथमसमयभाविहानेरेवोत्कृष्टत्वेऽपि तदनन्तरसमयेऽवस्थानं न प्राप्यते, देवगतिद्वितीयसमयेऽपर्याप्तत्वादपर्याप्तानां च प्रतिसमयमसंख्यगुणयोगवृद्धिसद्भावात् ।

ननु तर्हि "जघन्याया हानेर्वृद्धेर्वाऽनन्तरसमये" इत्यादिवचनेन सह विसंवादः समापततीति चेद्, न 'जघन्याया हानेर्वृद्धेर्वा' इत्यस्य 'जघन्यावस्थानप्रायोग्यजघन्याया हानेर्वृद्धेर्वा' इत्यर्थत्वाद्, एवम् 'उत्कृष्टाया हानेर्वृद्धेर्वा इत्यस्य उत्कृष्टावस्थानप्रायोग्योत्कृष्टाया हानेर्वृद्धेर्वा' इत्यर्थपरत्वाद् । ।६०२।। तदेवं गाथात्रिकेण मोहनीयायुषी विहाय षट्कर्माण्याश्रित्यौघत उत्कृष्टवृद्धिहान्यवस्थानस्वामिनः चिन्तिताः । सम्प्रति गाथात्रिकेणौघतो मोहनीयमाश्रित्योत्कृष्टवृद्धिहान्यवस्थानस्वामिनश्चिन्तयिषुरादावुत्कृष्टवृद्धिस्वामिनमाह—

तदरिहलहुजोगाओ अडविहबंधाउ हविअ गुरुजोगी ।
सत्तविहं बंधंतो मोहस्स कुणेइ गुरुवड्ढिं ।।६०३।।

(प्रे०) 'तदरिह' इत्यादि, तदर्हात्—तत्प्रायोग्यात्, उत्कृष्टयोगस्थानगमनप्रायोग्यादित्यर्थः, उत्कृष्टयोगस्थानगमनप्रायोग्याद् जघन्ययोगात् तथाऽष्टविधकर्मबन्धादनन्तरसमये उत्कृष्टयोगी

भूत्वा सप्तकर्माणि बध्नन् जीवो मोहनीयकर्मण उत्कृष्टवृद्धिं विदधाति। 'तदरिहलहुजोगाओ अडविहबंधाउ' इत्यनेनोत्कृष्टवृद्धिपूर्वसमये जघन्ययोगोऽधिकप्रकृतिबन्धश्च निवेदितः। 'हविअ पुंजोगी सत्तविहं बंधंतो' इत्यनेनोत्कृष्टवृद्धिसमये पूर्वसमयापेक्षयोत्कृष्टयोगोऽल्पप्रकृतिबन्धश्च प्रकटितः ॥६०३॥

साम्प्रतमोघतो मोहनीयस्योत्कृष्टहानिस्वामिनं निरूपयति—

कुणइ गुरुहाणिमुक्कडजोगी सत्तविधबंधगो मरिउं।
जाओ अपज्जसुहमो सजोग्गलहुजोगठाणठिओ ॥ ६०४॥

(प्रे०) 'कुणइ' इत्यादि, अत्र 'मोहस्स' इति पूर्वगाथातोऽनुवर्तते, मोहनीयस्योत्कृष्टहानिं करोति, कः इत्याह—'उक्कडजोगी' इत्यादि, उत्कृष्टयोगे वर्तमानः सप्तविधकर्मबन्धकश्च जीवः पञ्चत्वं प्राप्यापर्याप्तसूक्ष्मो जातः स्वप्रायोग्यजघन्ययोगस्थाने सर्वोत्कृष्टयोगस्थानात् पञ्चत्वं प्राप्या-पर्याप्तसूक्ष्मत्वेनोत्पन्नानां जीवानां यज्जघन्ययोगस्थानं सम्भवति तत्र स्थितश्च मोहनीयोत्कृष्टहानि विदधाति। न चात्र सूक्ष्मापर्याप्तानां भवप्रथमसमये सर्वजघन्ययोगसद्भावात् जघन्ययोगस्य 'सजोग्ग' इति विशेषणं व्यर्थमिति वाच्यम्, सूक्ष्मभवत एवागतानां सूक्ष्मापर्याप्तानां जीवानां भवप्रथमसमये सर्वजघन्ययोगसद्भावाद्। अत्र तु 'उक्कडजोगी' इति विशेषणवशात् संज्ञिपञ्चेन्द्रिय-भवतः सूक्ष्मापर्याप्तत्वं प्राप्तो जीवो गृहीत इति तस्य सर्वजघन्ययोगासम्भव एव, इति समीचीनमेवोक्तं 'सजोग्गलहुजोगठाणठिओ' इति ॥६०४॥

इदानीमोघतो मोहस्योत्कृष्टावस्थानस्वामिनं प्रतिपादयन्नाह—

सत्तविहबंधगुक्कडजोगी होऊण अट्ठविहबंधो।
तदरिहलहुजोगत्थो से काले कुणइ गुरुअवट्ठाणं ॥६०५॥ (गीतिः)

(प्रे०) 'सत्तविह' इत्यादि, सप्तविधकर्मबन्धक उत्कृष्टयोगे वर्तमानश्च जीवोऽष्टविधबन्धको भूत्वोत्कृष्टावस्थानप्रायोग्यजघन्ययोगस्थाने स्थितः सन् 'से काले' इति, तदनन्तरे काले, उत्कृष्टाव-स्थानप्रायोग्यजघन्ययोगस्थानस्थित्यनन्तरे समयलक्षणे काले इत्यर्थः, आयुर्बन्धद्वितीयसमये इति यावत्, मोहनीयस्योत्कृष्टावस्थानं विदधाति। अत्र हानेरनन्तरसमयेऽवस्थानग्रहणे प्रयोजनं प्रागुक्त-मेव ज्ञेयम्।६०५। साम्प्रतमोघत आयुःकर्मण उत्कृष्टवृद्धिस्वामिनमुत्कृष्टहानिस्वामिनं च निरूपयति—

तप्पाउग्गजहण्णा जोगा संपप्प जोगमुक्कोसं।
आउस्स कुणइ वुड्ढिं उक्कोसं वच्चयेण गुरुहाणिं ॥६०६॥ (गीतिः)

(प्रे०) 'तप्पाउग्गजहण्णा' इत्यादि, तत्प्रायोग्याद्—उत्कृष्टयोगस्थानगमनप्रायोग्याद् जघ-न्ययोगादुत्कृष्टयोगं संप्राप्योत्कृष्टवृद्धिं विदधाति। 'वच्चयेण गुरुहाणिं' इति, व्यत्यासेन उत्कृष्ट-

वृद्धिनिरूपितकारणाद् विपरीतकारणेनायुष उत्कृष्टहानिं विदधाति । उत्कृष्टयोगस्थानात् तत्प्रायोग्य-जघन्ययोगस्थानम्=आयुर्बध्नन् करणपर्याप्तसञ्ज्ञिजीव उत्कृष्टयोगस्थानात् यज्जघन्ययोगस्थानमाग-न्तुं शक्नोति तज्जघन्ययोगस्थानं संप्राप्यायुष उत्कृष्टहानिं करोतीत्यर्थः । आयुर्बन्धकालेऽष्टाना-मपि प्रकृतीनां बध्यमानत्वादत्रोत्कृष्टवृद्धिसमयेऽधिकप्रकृतिबन्धोऽनन्तरपूर्वसमये चाल्पप्रकृतिबन्धो नोक्तः । एवं हानावपि विपरीतेन बोध्यम् ॥६०६॥

सम्प्रति पूर्वार्धेनौघत आयुष उत्कृष्टावस्थानस्वामिनमुत्तरार्धेन चादेशतः सर्वासु मार्गणास्व-तिदेशमुखेनायुष उत्कृष्टवृद्धिहान्यवस्थानस्वामिनं प्रतिपादयति—

गुरुहाणीअ अणंतरसमये कुणए गुरुं अवट्ठाणं ।
सव्वासु मग्गणासुं आउस्सोघव्व विण्णेयं ॥६०७॥

(प्रे०) 'गुरुहाणीअ' इत्यादि, आयुरुत्कृष्टहानेऽनन्तरसमये आयुरुत्कृष्टावस्थानं विदधाति । अत्रापि पूर्वोक्तहेतुना उत्कृष्टवृद्धित उत्कृष्टहानेऽधिकत्वादुत्कृष्टहानेरनन्तरसमये उत्कृष्टावस्थान-मुक्तम् । "सव्वासु मग्गणासु" इत्यादि, सर्वासु त्रिषष्टिशतसंख्याकासु मार्गणासु आयुष उत्कृष्टवृद्धिस्वामी, उत्कृष्टहानिस्वामी उत्कृष्टावस्थानस्वामी चौघवज्ज्ञातव्यः । ओघप्ररूपणा चास्या-मेव गाथायामनन्तरगाथायां च कृतेत्यत्र पुनर्न प्रदर्श्यते । नवरमाहारकमिश्रमार्गणायामायुषो हानि-रवस्थानं च पदं न संभवतीति न विस्मर्तव्यम् ॥६०७॥

तदेवमोघतोऽष्टानामपि कर्मणामादेशतश्चायुष उत्कृष्टवृद्ध्यादिस्वामिचिन्ता कृता । सम्प्रति सप्तकर्मणामादेशत उत्कृष्टवृद्धिस्वामिचिन्तामतिदेशमुखेन चिकीर्षु र्गाथाद्विकमाह—

जे बंधगाऽत्थि सव्वह जेट्ठपएसस्स आउवज्जाणं ।
ते चिअ कुणए वड्ढिं उक्कोसं आउवज्जाणं ॥६०८॥
से खलु पुव्वद्धाए वड्ढिअ तदरिहजहण्णजोगाओ ।
तहि वि सइ संभवे खलु हाउं बहुयरपयडिबंधं ॥६०९॥

(प्रे०) 'जे बंधगा' इत्यादि, सर्वत्र-सर्वमार्गणाविषये ये जीवा आयुर्वर्जसप्तकर्मणामुत्कृष्ट-प्रदेशबन्धका भवन्ति त एवायुर्वर्जसप्तकर्मणामुत्कृष्टवृद्धिं कुर्वन्ति । अर्थाद्यस्यां मार्गणायां यो जीव आयुरन्तरा सप्तकर्मणामुत्कृष्टप्रदेशबन्धं करोति, तस्यां मार्गणायां स एव जीव सप्तकर्मणामुत्कृष्टवृद्धिं विदधाति । [द्वितीयगाथावृत्तिः] ननु सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवा यदा यदा सप्तकर्मणा-मुत्कृष्टप्रदेशबन्धं कुर्वन्ति तदा तदा सप्तकर्मणामुत्कृष्टवृद्धिमपि कुर्वन्ति नवा ? कुर्वन्ति चेद्, वृद्ध्य-नन्तरपूर्वसमयजघन्ययोगादिकारणकूटे व्यभिचारः समागत इत्याशङ्कायामाह—"से खलु" इत्यादि, खलु वाक्यालङ्कारे, ते=सप्तकर्मणामुत्कृष्टप्रदेशबन्धका जीवाः 'पुव्वद्धाए' इति, उत्कृष्टवृद्ध्यनन्तर-

पूर्वसमयस्याल्पबन्धकस्य "तप्पाओग्गजहण्णजोगाओ" इति, तत्प्रायोग्यात्-उत्कृष्टयोगस्थानगमन-प्रायोग्यात् जघन्ययोगस्थानात्, 'वड्ढिऊण' इति, वृद्धिं प्राप्य, उत्कृष्टयोगस्थानं प्राप्येत्यर्थः, सप्त-कर्मणामुत्कृष्टप्रदेशबन्धवृद्धिं कुर्वन्तीति पूर्वगाथातोऽत्र सम्बध्यते ।

अत्रायं भावः—यद्यपि ये जीवाः सप्तकर्मणामुत्कृष्टप्रदेशबन्धं कुर्वन्ति ते एव सप्तकर्मणा-मुत्कृष्टप्रदेशबन्धवृद्धिं कुर्वन्ति, तथापि यदा यदोत्कृष्टप्रदेशबन्धं कुर्वन्ति तदा तदोत्कृष्टप्रदेशबन्ध-वृद्धिं कुर्वन्त्येवेति न नियमः, अपि तु यदा पूर्वानन्तरसमये उत्कृष्टयोगस्थानगमनप्रायोग्य-जघन्ययोगस्थानादुत्कृष्टयोगस्थानं प्राप्योत्कृष्टप्रदेशबन्धं कुर्वन्ति तदैवोत्कृष्टप्रदेशबन्धवृद्धिं कुर्वन्ति, उत्कृष्टप्रदेशबन्धवृद्धौ स्वानन्तरपूर्वसमयस्य जघन्ययोगस्यापेक्ष्यमाणत्वात् । इत्येवमत्रोत्कृष्टप्रदेश-बन्धो व्यापकः, उत्कृष्टप्रदेशबन्धवृद्धिर्व्याप्या, उत्कृष्टप्रदेशबन्धवृद्धेरुत्कृष्टप्रदेशबन्धाऽविनाभावि-त्वात् । अतो यद्यत्कालावच्छेदेनोत्कृष्टप्रदेशबन्धवृद्धिर्भवति तत्तत्कालाऽवच्छेदेनावश्यमुत्कृष्टप्रदेश-बन्धो भवति । यत्कालाऽवच्छेदेनोत्कृष्टप्रदेशबन्धो भवति तत्कालाऽवच्छेदेनोत्कृष्टप्रदेशबन्धवृद्धि-र्नापि भवति । यदा जीवो मध्यमयोगस्थानादुत्कृष्टयोगस्थानं प्राप्योत्कृष्टप्रदेशबन्धं करोति तदो-त्कृष्टप्रदेशबन्धवृद्धिर्नैव भवति ।

नन्त्कृष्टवृद्धिपूर्वसमयेऽधिकप्रकृतिबन्ध उत्कृष्टवृद्धिसमयेऽल्पः प्रकृतिबन्धोऽप्यपेक्ष्यते इत्याह-'तहि वि' इत्यादि, उत्कृष्टप्रदेशबन्धका जीवा उत्कृष्टयोगस्थानगमनप्रायोग्याज्जघन्ययोग-स्थानादुत्कृष्टयोगं प्राप्योत्कृष्टप्रदेशबन्धवृद्धिं कुर्वन्तीत्यनन्तरमेव यदुक्तं तत्रापि 'सइ संभवे' इति, यस्यां मार्गणायां सम्भवस्तस्यां, किमित्याह—हाउं 'बहुयरपयडिबंधं' इति, अधिकतर-प्रकृतिबन्धं विहाय, अल्पतरप्रकृतिबन्धं कृत्वा इत्यर्थः, उत्कृष्टप्रदेशबन्धवृद्धिं विदधातीत्यत्र सम्बध्यते ।

अयं भावः—उत्कृष्टप्रदेशबन्धवृद्धौ यथोत्कृष्टयोगोऽपेक्ष्यते तथैवाल्पप्रकृतिबन्धोऽप्यपेक्ष्यते, स च पूर्वानन्तरसमयाधिकप्रकृतिबन्धसापेक्षः, यदि जीवः पूर्वसमयेऽष्टौ कर्माणि उत्कृष्टप्रदेशबन्ध-वृद्धिसमये सप्त कर्माणि बध्नीयात्, यद्वा पूर्वसमये सप्तोत्कृष्टवृद्धिसमये षट् कर्माणि बध्नीयात्तदोत्कृष्ट-वृद्धिसमयेऽल्पप्रकृतिबन्धः पूर्वसमये चाधिकप्रकृतिबन्धो भवति, परन्तु कासुचिन्मार्गणासु एवं न भवति, उत्कृष्टप्रदेशबन्धवृद्धिविधायको जीवो यावन्ति कर्माणि उत्कृष्टवृद्धिसमये बध्नाति तावन्त्येव तदनन्तरपूर्वसमये बध्नाति । अतः कासुचिन्मार्गणासु अल्पप्रकृतिबन्धस्य कारणत्वनिवारणायोक्तं 'सइ संभवे' इति ।

अथ प्रतिमार्गणमुत्कृष्टप्रदेशबन्धवृद्धिस्वामी प्रदर्श्यते—मनुष्यौघपर्याप्तमनुष्यमानुष्यः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, काययोगौघौदारिक-काययौ, अवेदः, लोभकषायः, मतिश्रुतावधिमनःपर्यवज्ञानानि, संयमौघसूक्ष्मसम्परायौ, दर्शन-

त्रिकम् , शुक्ललेश्या, भव्यः, सम्यक्त्वौघक्षायिकौपशमिकसम्यक्त्वानि, संज्ञी आहारकश्चेति सप्तत्रिंशन्मार्गणासु षट्कर्मणामुत्कृष्टप्रदेशबन्धवृद्धिस्वामी सूक्ष्मसम्परायस्थः क्षपक उपशमको वा भवति । तद्यथा–अनिवृत्तिबादरसम्परायचरमसमये तत्प्रायोग्यजघन्ययोगस्थाने वर्तमानः सप्तप्रकृतिबन्धं कुर्वंश्च जीवः सूक्ष्मसम्परायप्रथमसमये उत्कृष्टयोगं प्राप्य षट्कर्मबन्धं कुर्वन्सन् तेषामुत्कृष्टप्रदेशबन्धवृद्धिं विदधाति । अथ सूक्ष्मसम्परायमार्गणायां तु सूक्ष्मसम्परायद्वितीयादिसमये वक्तव्यं, तथा तत्पूर्वसमयेऽपि षण्णां प्रकृतीनां बन्धो वक्तव्यः । अथ सूक्ष्मसम्परायं विहायैतास्वेव षट्त्रिंशन्मार्गणासु पूर्वसमयेऽष्टौ कर्माणि बध्नन् तत्प्रायोग्यजघन्ययोगस्थाने वर्तमानो जीवः सप्तकर्माणि बध्नन्नुत्कृष्टयोगे च वर्तमानः सन् मोहनीयस्योत्कृष्टप्रदेशबन्धवृद्धिं करोति । किन्त्ववेदोपशममार्गणयोः सप्तकर्माणि बध्नन्नित्यादि वक्तव्यम् , तयोरायुर्बन्धाभावात् ।

अथ शेषमार्गणासु सप्तप्रकृतीराश्रित्य चिन्त्यते–अपर्याप्तपञ्चेन्द्रियतिर्यङ्, अपर्याप्तपञ्चेन्द्रियः, अपर्याप्तत्रसः, कार्मणकायोऽनाहारकश्चेति पञ्चमार्गणासु सप्तप्रकृतिबन्धकः संज्ञी, शेषतिर्यग्गतिभेदाः, स्त्रीपुरुषनपुंसकवेदाः, क्रोधमानमायालक्षणकषायत्रिकं, मतिश्रुताज्ञाने, विभङ्गज्ञानम् , असंयमः, अशुभलेश्यात्रिकम् , अभव्यो मिथ्यात्वं चेत्येकाधिविंशतिमार्गणासु सप्तप्रकृतिबन्धकः पर्याप्तसंज्ञी, एकेन्द्रियौघः, पृथ्व्यप्तेजोवायुवनस्पतिकायनिगोदौघा इति सप्तमार्गणासु सप्तप्रकृतिबन्धकपर्याप्तबादरः, औदारिकमिश्रे मार्गणाचरमसमयावच्छिन्नसंज्ञी, वैक्रियमिश्रे मार्गणाचरमसमयाऽवच्छिन्नो देवो नारको वा, आहारकमिश्रे मार्गणाचरमसमयावच्छिन्नः संयतः, असंज्ञिमार्गणायां सप्तप्रकृतिबन्धकपर्याप्तपञ्चेन्द्रियः ,नरकदेवगतिसर्वभेदाः, सूक्ष्मबादरैकेन्द्रियौ, द्वित्रिचतुरिन्द्रियौघाः, सूक्ष्मपृथ्व्यप्तेजोवायुनिगोदकायाः, बादरपृथ्व्यप्तेजोवायुनिगोदाः, प्रत्येकवनस्पतिकायः, आहारकवैक्रियकायौ, तेजःपद्मलेश्ये, वेदकसास्वादनसम्यक्त्वे चेति षष्टिमार्गणासु सप्तप्रकृतिबन्धकपर्याप्तः, अपर्याप्तमनुष्यः, पर्याप्तसूक्ष्मबादरैकेन्द्रियौ अपर्याप्तसूक्ष्मबादरैकेन्द्रियौ पर्याप्तद्वित्रिचतुरिन्द्रियाः, अपर्याप्तद्वित्रिचतुरिन्द्रियाः, सूक्ष्मपर्याप्तपृथ्व्यप्तेजोवायुनिगोदाः, सूक्ष्मापर्याप्तपृथ्व्यप्तेजोवायुनिगोदाः, बादरपर्याप्तपृथ्व्यप्तेजोवायुनिगोदाः, बादरापर्याप्तपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, पर्याप्तापर्याप्तप्रत्येकवनस्पतिकायौ, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतयो मिश्रश्चेत्यष्टात्रिंशन्मार्गणासु सप्तप्रकृतिबन्धकः, सप्तकर्मणामुत्कृष्टप्रदेशबन्धवृद्धिं विदधातीति सर्वत्र सम्बध्यते ।

"तत्प्रायोग्यजघन्योगस्थानादुत्कृष्टयोगं प्राप्तस्तथोत्कृष्टवृद्धिपूर्वसमयेऽधिकप्रकृतिबन्धकः" इति सर्वत्र योजनीयम् । नवरं कार्मणवैक्रियमिश्रौदारिकमिश्रयोगमिश्रानाहारकमार्गणासु सप्तकर्मणामवेदोपशमसम्यक्त्वयोश्च मोहनीयस्योत्कृष्टप्रदेशबन्धवृद्धौ तत्पूर्वसमयेऽधिकप्रकृतिबन्धक इति न वक्तव्यम् , असम्भवात् । एतासु मार्गणासु तत्तत्कर्मण उत्कृष्टवृद्धिसमये यावन्ति कर्माणि बध्यन्ते

यावन्त्येव तत्पूर्वसमये बध्यन्ते इति तत्पूर्वसमयेऽधिकप्रकृतिबन्धस्याऽसम्भवः। सूक्ष्मसम्पराये उत्कृष्टप्रदेशबन्धवृद्धिसमये तत्पूर्वसमये च षट् कर्माणि बध्यन्ते, शेषासु सप्त।

न चौदारिकमिश्रेऽष्टौ कर्माणि बध्यन्ते इति तत्रोत्कृष्टवृद्धिपूर्वसमयेऽधिकप्रकृतिबन्धो वक्तव्य इति वाच्यम्, औदारिकमिश्रे लब्ध्यपर्याप्तानामेवाष्टौ कर्माणि बध्यन्ते, तेषां चोत्कृष्टयोगस्याऽसम्भवः। अत एव तत्रोत्कृष्टप्रदेशबन्धस्वामित्वेन योऽनन्तरे समये शरीरपर्याप्तिं ग्रहीष्यति स गृहीतः। ततः संज्ञिकरणापर्याप्तो यो जीवः शरीरपर्याप्तिग्रहणादुपान्त्यसमये तत्प्रायोग्यजघन्ययोगस्थाने वर्तते, तदनन्तरे समये चोत्कृष्टयोगे वर्तते स औदारिकमिश्रमार्गणायामुत्कृष्टप्रदेशबन्धवृद्धिं विदधाति। नदेवं प्रतिमार्गणं सप्तकर्मणामुत्कृष्टप्रदेशबन्धवृद्धिस्वामिप्ररूपणा कृता। ॥६०८।६०९॥ सम्प्रति प्रतिमार्गणं तेषामुत्कृष्टप्रदेशबन्धहानिस्वामिप्ररूपणां चिकीर्षुरादौ तावत्सर्वमार्गणासंभाव्यमानमुत्कृष्टप्रदेशबन्धहानिस्वामिविशेषणं ज्ञापयन्नाह—

उक्कोसजोगठाणा तज्जोगजहण्णजोगठाणठिओ।
सव्वह कुणए हाणिं उक्कोसं आउवज्जाणं ॥६१०॥

(प्रे०) "उक्कोसजोगठाणा" इत्यादि, सर्वत्र—सर्वमार्गणासु मार्गणाप्रायोग्योत्कृष्टयोगस्थानात् तत्प्रायोग्यजघन्ययोगस्थाने स्थितः, अर्थात् मार्गणाप्रायोग्योत्कृष्टयोगस्थानात् यज्जघन्ययोगस्थानं प्राप्यते तज्जघन्ययोगस्थाने स्थितो जीव आयुरन्तरा सप्तकर्मणामुत्कृष्टां प्रदेशबन्धहानिं करोति। इदं विशेषणमग्रे सर्वत्र तत्तन्मार्गणायां तत्स्वामिनि योजनीयम् ॥६१०॥

अथ सर्वनरकादिचतुश्चत्वारिंशन्मार्गणासु सप्तकर्मणामुत्कृष्टहानिस्वामिनं निरूपयति—

सव्वणिरयदेवेसुं वेउव्वाहारगेसु सामइए।
छेअपरिहारदेसेसु सत्तविहबंधगाऽट्ठविहबंधी ॥६११॥ (गीतिः)

(प्रे०) 'सव्व' इत्यादि, सर्वनरकगतिभेदेषु, सर्वदेवगतिभेदेषु, वैक्रियाहारककाययोः, सामायिके, छेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिषु यः सप्तविधबन्धकादष्टविधबन्धको जातः सः, अर्थात् पूर्वसमये सप्तकर्माणि बद्ध्वाऽष्टकर्माणि बध्नन् सन् सप्तकर्मणामुत्कृष्टप्रदेशबन्धहानिं विदधाति। स्वपूर्वसमये 'सर्वोत्कृष्टयोगस्थानात् तत्प्रायोग्यजघन्ययोगस्थानं प्राप्तः' इति पूर्वोक्तं विशेषणमपि वक्तव्यमत्र। ततोऽयमर्थः—पूर्वसमये सप्तकर्माणि बद्ध्वा सर्वोत्कृष्टयोगं च प्राप्य वर्तमानसमयेऽष्टकर्माणि बध्नन् तत्प्रायोग्यजघन्ययोगस्थाने स्थितश्च सप्तकर्मणामुत्कृष्टहानिं विदधाति। ॥६११॥ सम्प्रति सूक्ष्मसम्परायमिश्रयोर्मनुष्यौघे च सप्तकर्मणामुत्कृष्टहानिस्वामिनं प्राह—

कोवि सुहममीसेसुं णरे छविहबंधगाउ सत्तविहो।
कण्हं मोहस्स दुइअभवपढमखणे अपज्जत्तो ॥६१२॥

(प्रे०) 'को वि' इत्यादि, सूक्ष्मसम्पराये षट्कर्मणां सम्यक्त्वमार्गणान्तर्गतमिश्रे च सप्तकर्मणामुत्कृष्टहानिस्वामी मार्गणावर्ती कोऽपि जीवो भवति । एतयोर्मार्गणयोन्यूनाधिकप्रकृतिबन्धासद्भावात् पूर्वसमयेऽल्पप्रकृतिबन्धो न प्राप्यते, एवं मिश्रे मरणाभावात् सूक्ष्मसम्पराये च मृत्युमत्त्वेऽपि मार्गणाविनाशाद् द्वितीयभवप्रथमसमयेऽप्युत्कृष्टहानिर्न लभ्यते । अतो यः कोऽपि जीव उत्कृष्टयोगात् स्वप्रायोग्यजघन्ययोगं प्राप्नोति स मार्गणायां बध्यमानानां कर्मणामुत्कृष्टहानिं विदधाति । 'णरे' इत्यादि, मनुष्यौघमार्गणायां षट्प्रकृतिबन्धकात् सप्तप्रकृतिबन्धको जातः, अर्थात् पूर्वसमये षट्कर्माणि बद्ध्वा वर्तमानसमये सप्तकर्माणि बध्नन् जीवः षट्कर्मणामुत्कृष्टहानिस्वामी भवति । अत्रायं भावः—श्रेणितो निपतन्, सूक्ष्मसम्पराये चरमसमये षट्कर्मणां बन्धक उत्कृष्टयोगवांश्च, अनिवृत्तिबादरसम्परायप्रथमसमये सप्तकर्मणां बन्धकस्तत्प्रायोग्यजघन्ययोगस्थाने स्थितश्च जीवः षट्कर्मणामुत्कृष्टां हानिं विदधाति । 'मोहस्स' इत्यादि, प्रथमभवान्तिमसमये उत्कृष्टयोगं प्राप्तः, पश्चात्तं प्राप्य लब्ध्यपर्याप्तमनुष्यत्वेनोत्पन्नः, तत्र भवप्रथमसमये वर्तमानस्तत्प्रायोग्यजघन्ययोगस्थानस्थितश्च जीवो मोहनीयस्योत्कृष्टहानिं विदधाति, अर्थाद्यो मनुष्यः स्वप्रथमभवान्तिमसमये उत्कृष्टयोगं प्राप्य लब्ध्यपर्याप्तो मनुष्यो भवति, तत्र च तत्प्रायोग्यजघन्ययोगस्थानं प्राप्नोति स मोहनीयस्योत्कृष्टहानिस्वामी भवति ॥६१२॥ इदानीं शेषत्रिमनुष्यभेदेषु सप्तकर्मणामुत्कृष्टप्रदेशबन्धहानिस्वामिनं दर्शयति—

छण्ह णरव्व णरदुगे सविअभवपढमसमयम्मि मोहस्स ।
सत्तण्ह अपज्जणरे सबीअभवपढमसमयठिओ ॥६१३॥

(प्रे०) 'छण्ह' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणे मनुष्यद्विके षण्णां कर्मणामुत्कृष्टहानिस्वामी नरवत्—अनन्तरगाथाप्रदर्शितमनुष्यौघमार्गणावद्, ज्ञातव्य इति शेषः । भावनापि तथैव विधेया । 'सविअ' इत्यादि, मोहनीयस्योत्कृष्टहानिस्वामी स्वस्यां-मार्गणायां यो द्वितीयो भवस्तस्य प्रथमसमये वर्तमानो जीवो भवति । अयं भावः—पर्याप्तमनुष्यः प्रथमभवे चरमसमये उत्कृष्टं योगं प्राप्य मृत्वा पुनरपि पर्याप्तमनुष्यो भवति । तत्र प्रथमसमये तत्प्रायोग्यजघन्ययोगं प्राप्य मोहनीयस्योत्कृष्टहानिं विदधाति । एवं मानुषीमार्गणायामपि ज्ञेयम् ।

'सत्तण्ह' इत्यादि, अपर्याप्तमनुष्ये सप्तकर्मणामुत्कृष्टहानिस्वामी स्वद्वितीयभवप्रथमसमयस्थः जीवो भवति । भावनाऽनन्तरगाथाप्रदर्शितरीत्या विधेया । अत्रेदं बोध्यम्—यद्यपि मनुष्यौघे पर्याप्तमनुष्यमानुष्योश्च मोहनीयस्योत्कृष्टहानिस्वामी स्वद्वितीयभवप्रथमसमयस्थो जीवो भवति, तथापि मनुष्यौघे लब्ध्यपर्याप्तः पर्याप्तमनुष्यमानुष्योश्च करणापर्याप्तो जीवो भवतीति पृथगुक्तम् । एवमपर्याप्तमनुष्यमार्गणायां समानामपि कर्मणामुत्कृष्टहानिस्वामी स्वद्वितीयभवप्रथमसमयस्थो जीवो भवतीति पृथगुक्तम् ॥६१३॥ सम्प्रति पञ्चेन्द्रियौघादिमार्गणासु सप्तकर्मणामुत्कृष्टहानिस्वामिनं गाथाद्विकेन चिन्तयति—

दुपणिंदितसे काये लोहतिणाणणयणेयरोहीसुं ।
सुक्कभवियसम्मेसुं खइअउवसमेसु आहारे ॥६१४॥
ओघव्व छण्ह कुणए मोहस्स विअभवपढमसमयत्थो ।
सो कुणइ बंधगो यो हस्सपएसस्स सत्तण्हं ॥६१५॥

(प्रे०) 'दुपणिंदि' इत्यादि, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियलक्षणद्विपञ्चेन्द्रिययोः, त्रसौघ-पर्याप्तत्रसलक्षणद्वित्रसयोः, काययोगौघे, लोभे मतिश्रुतावधिलक्षणत्रिज्ञानेषु, चक्षुर्दर्शने, इतरस्मिन्नचक्षुर्दर्शने, अवधिदर्शने, तथा शुक्लेश्यायां, भव्ये, सम्यक्त्वौघक्षायिकौपशमिकेषु आहारके चेत्यष्टादशमार्गणासु मोहायुषी विना षट्कर्मणामुत्कृष्टहानिस्वामी 'ओघवत्' भवति । तद्यथा-उत्कृष्टप्रदेशबन्धहान्यनन्तरपूर्वसमये उत्कृष्टयोगवान् षट्प्रकृतिबन्धकश्च यो जीवः पश्चत्वं प्राप्य देवगतिप्रथमसमये तत्प्रायोग्यजघन्ययोगस्थानस्थितो भवति स षण्णां कर्मणामुत्कृष्टहानिं विदधाति ।

'मोहस्स' इत्यादि, मोहनीयकर्मण उत्कृष्टहानिस्वामी स्वद्वितीयभवप्रथमसमयस्थः स करोति, यत्तदोर्नित्याभिसम्बन्धत्वात् स क इत्याह-'बंधगो यो' इत्यादि, यः सप्तकर्मणां जघन्यप्रदेशबन्धको भवति । सप्तकर्मणां जघन्यप्रदेशबन्धकः, स्वद्वितीयभवप्रथमसमयस्थः सर्वोत्कृष्टयोगस्थानात् तत्प्रायोग्यजघन्ययोगस्थाने स्थितश्च जीवो मोहनीयस्योत्कृष्टहानिं विदधातीत्यर्थः ।

अथ कस्यां मार्गणायां को जीवः सप्तकर्मणां जघन्यप्रदेशबन्धक इति आद्याधिकारस्वामित्वद्वारे निरूपितमपि विस्मरणशीलानां स्मृत्यर्थं प्रदर्श्यतेऽत्र-पञ्चेन्द्रियौघे लब्ध्यपर्याप्ताऽसंज्ञी, पर्याप्तपञ्चेन्द्रिये करणापर्याप्ताऽसंज्ञी, त्रसौघे लब्ध्यपर्याप्तद्वीन्द्रियः, पर्याप्तत्रसे करणापर्याप्तद्वीन्द्रियः, काययोगौघलोभाचक्षुर्दर्शनभव्याहारकेषु लब्ध्यपर्याप्तसूक्ष्मनिगोदः, मतिश्रुतावधिज्ञानावधिदर्शनसम्यक्त्वौघक्षायिकेषु कोऽपि करणापर्याप्तसंज्ञी जीवः, चक्षुर्दर्शने चतुरिन्द्रियः, शुक्लेश्यायां मर्त्योऽमर्त्यो वा, औपशमिकसम्यक्त्वे विबुधः, संज्ञिनि लब्ध्यपर्याप्तः सप्तकर्मणां जघन्यप्रदेशबन्धको भवति ॥६१४।६१५॥

सम्प्रति पञ्चमनोयोगादिषु सप्तकर्मणामुत्कृष्टहानिस्वामिनं चिन्तयति---

पणमणवयजोगेसुं उरले मणणाणसंयमेसुं च ।
छण्ह मणुसव्व णेयो मोहस्स हवेज्ज णिरयव्व ॥६१६॥

(प्रे०) 'पणमण' इत्यादि, पञ्चमनःपञ्चवचनयोगेषु, औदारिककाये, मनःपर्यवज्ञाने संयमे च षट्कर्मणामुत्कृष्टहानिस्वामी मनुष्यवत् ज्ञेयः, मनुष्यौघमार्गणायां यः प्रदर्शितः सोऽत्रापि ज्ञातव्य इत्यर्थः । तद्यथा-उपशमश्रेणितो निपतन् , सूक्ष्मसम्परायचरमसमये उत्कृष्टयोगे वर्तमानोऽनिवृत्तिबादरसम्परायप्रथमसमये च तत्प्रायोग्यजघन्ययोगस्थाने स्थितः षट्कर्मणामुत्कृष्टां हानिं विदधाति ।

'मोहस्स' इत्यादि, मोहनीयस्योत्कृष्टहानिस्वामी नरकवद् भवति । तद्यथा—पूर्वसमये सप्तकर्माणि बध्नन्नुत्कृष्टयोगे च वर्तमानः, तथा वर्तमानसमयेऽष्टकर्माणि बध्नन् तत्प्रायोग्यजघन्ययोगस्थाने स्थितश्च जीवो मोहस्योत्कृष्टहानिं विदधाति । मृत्यौ सति मार्गणाविनाशाद् भवप्रथमसमये उत्कृष्टहानिर्न लभ्यते ॥६१६॥

साम्प्रतमौदारिकमिश्रे सप्तकर्मोत्कृष्टहानिस्वामिनं चिन्तयति—

सत्तण्ह उरलमीसे अपज्जसण्णी तदरिहगुरुजोगी ।
मरिअ गओ तदरिहलहुजोगिअपज्जसुहमणिगोए ॥६१७॥

(प्रे०) 'सत्तण्ह' इत्यादि, औदारिकमिश्रे तत्प्रायोग्योत्कृष्टयोगी, लब्ध्यपर्याप्तसंज्ञी, मृत्वा लब्ध्यपर्याप्तसूक्ष्मनिगोदत्वेनोत्पद्य भवप्रथमसमये तत्प्रायोग्यजघन्ययोगं प्राप्तः सन् सप्तकर्मणामुत्कृष्टहानिं विदधाति । नन्वत्रौदारिकमिश्रे पृथग् न वक्तव्यम्, अपि तु शेषमार्गणास्वन्तर्भावं कृत्वा ताभिः सहैव वक्तव्यम्; यतः शेषमार्गणासूत्कृष्टयोगस्थानात् तत्प्रायोग्यजघन्ययोगं प्राप्तो जघन्यप्रदेशबन्धकश्च जीवो भवप्रथमसमये वर्तमानः सन् सप्तकर्मणामुत्कृष्टहानिं विदधाति । औदारिकमिश्रेऽपि सूक्ष्मनिगोदापर्याप्तस्य जघन्यप्रदेशबन्धकत्वादुत्कृष्टयोगस्थानात् तत्प्रायोग्यजघन्ययोगं प्राप्तो जघन्यप्रदेशबन्धकश्च जीवो भवप्रथमसमये वर्तमानः सन् सप्तकर्मणामुत्कृष्टहानिं विदधातीति वक्तुं शक्यते इति चेद्, सत्यम्, उपर्युक्तरीत्या वक्तुं शक्येऽपि उत्कृष्टहान्यधिकाराद्यगाथायाम् 'उत्कृष्टयोगस्थानात्' इति यदुक्तं तस्य मार्गणाप्रायोग्योत्कृष्टयोगस्थानादित्यर्थः, औदारिकमिश्रे च मार्गणाप्रायोग्यमुत्कृष्टयोगस्थानं न प्राप्यते । मार्गणाप्रायोग्यमुत्कृष्टयोगस्थानं करणापर्याप्तजीवानां सम्भवति, तेषां चौदारिकमिश्रे मृत्युर्न भवति । औदारिकमिश्रे लब्ध्यपर्याप्तानामेव मृत्युर्भवति, तेषाञ्च मार्गणाप्रायोग्योत्कृष्टयोगस्थानं न भवति । अतोऽत्र पूर्वभवे मार्गणाप्रायोग्योत्कृष्टयोगी जीवो न ग्राह्यः, अपि तु स्वप्रायोग्योत्कृष्टयोगी लब्ध्यपर्याप्तो ग्राह्यः । यदि औदारिकमिश्रे शेषमार्गणाभिः सहोच्येत तर्हि तु मार्गणाप्रायोग्योत्कृष्टयोगी जीव एव ग्राह्यो भवेत् । अत औदारिकमिश्रे पृथगुक्तम् ॥६१७॥

इदानीमवेदे संज्ञिनि च प्रकृतस्वामिनं चिन्तयन्नाह—

अवगयवेए छण्हं णरव्व मोहस्स सत्तविहबंधी ।
सण्णिम्मि छण्ह ओघव्व णरव्व कुणेइ मोहस्स ॥६१८॥

(प्रे०) 'अवगयवेए' इत्यादि, अपगतवेदमार्गणायां षण्णां कर्मणामुत्कृष्टहानिस्वामी मनुष्यवत्, मनुष्यौघमार्गणायां यथा प्ररूपितस्तथा ज्ञातव्य इत्यर्थः । 'मोहस्स' इत्यादि, मोहनीयस्योत्कृष्टहानिस्वामी सप्तविधकर्मबन्धको भवति । स च ''सर्वोत्कृष्टयोगस्थानात् तत्प्रायोग्यजघन्य-

योगस्थाने स्थितः" इति पूर्वोक्तविशेषणविशिष्टो ज्ञातव्यः । अत्रेदमवगन्तव्यम्—अपगतवेदे आयुषोऽबध्यमानत्वात् तथा षट्प्रकृतीनां बन्धे मोहनीयबन्धाभावात् स्वपूर्वसमयेऽल्पप्रकृतिबन्धो न प्राप्यते । 'सण्णिम्मि' इत्यादि, संज्ञिमार्गणायां षट्कर्मणामुत्कृष्टहानिस्वामी 'ओघवद्' ज्ञातव्यः । तत्स्वरूपं तु छव्विहबंधगउक्कडजोगी' इति गाथातोऽवसातव्यम् । विस्तरभयान्नात्र प्रदर्श्यते । 'णरव्व' इत्यादि, मोहनीयस्योत्कृष्टहानिं मनुष्यवत्=मनुष्यौघमार्गणावत् करोति । तद्यथा—प्रथमभवान्तिमसमये उत्कृष्टयोगं प्राप्तः, पञ्चत्वं प्राप्य लब्ध्यपर्याप्तो जातः, द्वितीयभवप्रथमसमयस्थः, तत्प्रायोग्यजघन्ययोगस्थाने स्थितः सन् मोहनीयस्योत्कृष्टप्रदेशबन्धहानिं विदधाति ॥६१८॥

सम्प्रति विभङ्गज्ञाने सप्तकर्मणामुत्कृष्टहानिस्वामिनं मतान्तरनिर्देशपूर्वकमाह—

विब्भंगे सत्तण्हं कुणेइ बीअभवपढमसमयत्थो ।
देवो वा णिरयो वा अहवा णिरयव्व विण्णेयो ॥६१९॥

(प्रे०)'विब्भंगे' इत्यादि, विभङ्गज्ञानमार्गणायां सप्तकर्मणामुत्कृष्टहानिं द्वितीयभवप्रथमसमयस्थो 'देवो नारको वा' विदधाति । उत्कृष्टयोगात् तत्प्रायोग्यजघन्ययोगस्थाने स्थितः इति विशेषणे योजितेऽयमर्थः—विभङ्गज्ञानी कश्चिन्मनुष्यस्तिर्यङ् वा स्वभवान्तिमसमये उत्कृष्टयोगं प्राप्तो निधनं प्राप्य विभङ्गज्ञानसहितं दिवि नरके वोत्पद्यते । तत्र च प्रथमसमय एव तत्प्रायोग्यजघन्ययोगस्थानं प्राप्य सप्तकर्मणामुत्कृष्टहानिं विदधाति । अथ मतान्तरमाह—'अहवा' इत्यादि, अथवा सप्तकर्मोत्कृष्टहानिस्वामी नरकवद् ज्ञातव्यः । अत्रायं भावः—अन्येषां मते पूर्वभवविभङ्गज्ञानेन सहान्यभवे उत्पादाऽभावात् द्वितीयभवप्रथमसमये विभङ्गज्ञानस्याऽभावेन द्वितीयभवमाश्रित्य प्रकृतहानेरसम्भवः । अतो नरकमार्गणावत् तद्भवमाश्रित्योपपद्यते । तद्यथा—पूर्वसमये सप्तकर्माणि बध्नन्नुत्कृष्टयोगवांश्च, तथा वर्तमानसमयेऽष्टकर्माणि बध्नन् तत्प्रायोग्यजघन्ययोगस्थाने स्थितश्च सप्तकर्मोत्कृष्टहानिं विदधाति ॥६१९॥ अथ शेषासु मार्गणासु सप्तकर्मणामुत्कृष्टहानिस्वामिनं प्रतिपादयति—

सेसासु सत्तण्हं स कुणइ बीअभवपढमसमयत्थो ।
यो अत्थि बंधगो खलु हस्सपएसस्स सत्तण्हं ॥६२०॥

(प्रे०) 'सेसासु' इत्यादि, वैक्रियमिश्राहारकमिश्रकार्मणकायानाहारकेषु हानेरभावात् शेषासु एकाशीतिमार्गणासु द्वितीयभवप्रथमसमयस्थो यो जीवः सप्तकर्मणां जघन्यप्रदेशबन्धं विधातुमर्हति, न तु विदधाति, स सप्तकर्मणामुत्कृष्टहानिं विदधाति । "पूर्वसमयतत्प्रायोग्यसर्वोत्कृष्टयोगस्थानात् तत्प्रायोग्यजघन्ययोगस्थानस्थितः" इत्यपि ज्ञेयम् । शेषमार्गणा नामत इमाः—सर्वतिर्यग्मतिभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ विना सप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना चत्वारिंशत्कायभेदाः, वेदत्रिकम्, विना लोभं कषायत्रिकं, मतिश्रुताज्ञाने, असंयमः, शुक्लामन्तरा लेश्यापञ्चकम्, अभव्यः, क्षायोपशमिकसास्वादनमिथ्यात्वानि असंज्ञी चेति ।

अत्रेयम्भावना—सर्वपर्याप्तमार्गणासु पूर्वभवे तत्प्रायोग्योत्कृष्टयोगस्थानं प्राप्य मृत्वा तस्यामेव मार्गणायां पर्याप्तत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगस्थाने स्थितः सन्नुत्कृष्टहानिं विदधाति । यथा पर्याप्तपृथ्वीकायमार्गणायां पूर्वभवे तत्प्रायोग्योत्कृष्टयोगस्थानं प्राप्य मृत्वा पृथ्वीकाये एव पर्याप्तत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्तः सन्नुत्कृष्टहानिं विदधाति । नवरं पर्याप्तपञ्चेन्द्रियतिर्यङ्मार्गणायामेवम्—पूर्वभवे पर्याप्तसंज्ञी जीवस्तत्प्रायोग्योत्कृष्टयोगं प्राप्य मृत्वा तस्यामेव मार्गणायां पर्याप्तासंज्ञित्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं करोति ।

सर्वापर्याप्तमार्गणासु पूर्वभवे तत्प्रायोग्योत्कृष्टयोगस्थानं प्राप्य निधनं प्राप्य तस्यामेव मार्गणायामपर्याप्तत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगस्थाने स्थितः सन्नुत्कृष्टां हानिं विदधाति । तद्यथा—अपर्याप्तपृथ्वीकायमार्गणायां पूर्वभवेऽपर्याप्तपृथ्वीकायस्तत्प्रायोग्योत्कृष्टयोगस्थानं प्राप्य मृत्वा पृथ्वीकाये एव लब्ध्यपर्याप्तत्वेनोत्पद्य स्वप्रायोग्योजघन्ययोगस्थाने स्थितः सन्नुत्कृष्टहानिं विदधाति । नवरमपर्याप्ततिर्यक्पञ्चेन्द्रियपञ्चेन्द्रियत्रसेष्वेवम्—पूर्वभवेऽपर्याप्तसंज्ञी जीवस्तत्प्रायोग्योत्कृष्टयोगं प्राप्य मृत्वा तस्यामेव मार्गणायां तिर्यक्पञ्चेन्द्रियपञ्चेन्द्रिययोरपर्याप्तासंज्ञित्वेन त्रसे चापर्याप्तद्वीन्द्रियत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं विदधाति । तिर्यगोघे पूर्वभवे संज्ञी जीव उत्कृष्टयोगं प्राप्यानन्तरभवप्रथमसमये सूक्ष्मापर्याप्तत्वेनोत्पद्य तत्प्रायोग्यजघन्ययोगे स्थितः सन्नुत्कृष्टहानिं विदधाति ।

तिर्यक्पञ्चेन्द्रियौघे भावनैवम्—पूर्वभवे पर्याप्तसंज्ञी जीवस्तत्प्रायोग्योत्कृष्टयोगं प्राप्तः सन् मृत्वा तस्यामेव मार्गणायां तिर्यक्पञ्चेन्द्रियाऽसंज्ञित्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं विदधाति ।

तिरश्चीस्त्रीपुरुषवेदेष्वेवम्—पूर्वभवे संज्ञी जीवस्तत्प्रायोग्योत्कृष्टयोगं प्राप्तः सन् मृतिं प्राप्य तस्यामेव मार्गणायामसंज्ञित्वेनोत्पद्य भवप्रथमसमये जघन्ययोगं प्राप्तः सन्नुत्कृष्टां हानिं विदधाति ।

एकेन्द्रियवनस्पतिकायौघयोरेवम्—पूर्वभवे बादरजीव उत्कृष्टयोगं प्राप्तः सन् पञ्चत्वं प्राप्य तस्यामेव मार्गणायामपर्याप्तसूक्ष्मनिगोदत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं विदधाति ।

पृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायौघेष्वेवम्—पूर्वभवे बादरपर्याप्तस्तत्प्रायोग्योत्कृष्टं योगं प्राप्य मृत्वा तस्यामेव मार्गणायामपर्याप्तसूक्ष्मत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्तः सन्नुत्कृष्टहानिं विदधाति ।

सूक्ष्मबादरैकेन्द्रिययोः, द्वित्रिचतुरिन्द्रियेषु सूक्ष्मबादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकाय-प्रत्येकवनस्पतिकायेषु च भावनैवम्—पूर्वभवे पर्याप्तो जीवस्तत्प्रायोग्योत्कृष्टयोगं प्राप्तः सन् पञ्चत्वं

प्राप्य तस्यामेव मार्गणायां लब्ध्यपर्याप्तत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं विदधाति ।

तथा नपुंसकवेदः, विना लोभं कषायत्रिकं, मतिश्रुताज्ञाने, असंयमः, अशुभलेश्यात्रिकम्, अभव्यो मिथ्यात्वं चेति द्वादशमार्गणासु भावनैवम्—प्रथमभवे मनुष्यः पर्याप्तसंज्ञितिर्यङ् वा तत्प्रायोग्योत्कृष्टयोगस्थानं लब्ध्वा पञ्चत्वं प्राप्य सूक्ष्मापर्याप्तनिगोदत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगस्थानं प्राप्योत्कृष्टहानिं विदधाति ।

तेजःपद्मलेश्ययोरेवम्—पूर्वभवे पर्याप्तो मनुष्यो देवो वा तत्प्रायोग्योत्कृष्टयोगस्थानं प्राप्तः सन् निधनं प्राप्य देवो मनुष्यत्वेन मनुष्यश्च देवत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं विदधाति ।

क्षायोपशमिकसम्यक्त्वे भावनैवम्—पूर्वभवे चतुर्गतीनामन्यतमगतौ स्थितः पर्याप्तो जीवस्तत्प्रायोग्योत्कृष्टयोगस्थानं लब्धः सन् पञ्चत्वं प्राप्यान्यतमगतावुत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं विदधाति ।

सास्वादनसम्यक्त्वे भावनैवम्—पूर्वभवे चतुर्गतीनामन्यतमगतौ स्थितः पर्याप्तो जीवस्तत्प्रायोग्योत्कृष्टयोगस्थानं लब्ध्वा मृत्युं प्राप्य विना नरकमन्यतमगतौ पर्याप्तत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं विदधाति । असंज्ञिमार्गणायामेवं भावना—पूर्वभवे पञ्चेन्द्रियः पर्याप्तस्तत्प्रायोग्योत्कृष्टयोगं प्राप्तः सन् पञ्चत्वं लब्ध्वा सूक्ष्मापर्याप्तनिगोदत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्योत्कृष्टहानिं विदधाति ॥६२०॥

तदेवं सप्तकर्मणामुत्कृष्टहानिस्वामी प्ररूपितः । साम्प्रतं सप्तकर्मणामुत्कृष्टावस्थानस्वामित्वनिरूपणं चिकीर्षुर्गाथाद्विकमाह—

सव्वह जेसिं कुणए एकम्मि च्चिअ भवम्मि गुरुहाणिं ।
ताण तदनन्तरखणे कुणए जेट्ठं अवट्ठाणं॥६२१॥ (उद्गीतिः)
इयराण तब्भवत्थो तज्जोगं जं कुणइ गुरुहाणिं ।
ताअ अणंतरसमये कुणए जेट्ठं अवट्ठाणं ॥६२२॥

(प्रे०) 'सव्वह' इत्यादि, सर्वत्र—सर्वासु मार्गणासु येषां कर्मणामुत्कृष्टहानिमेकस्मिन्नेव भवे विदधाति, तेषां कर्मणां तदनन्तरक्षणे=उत्कृष्टहान्यनन्तरसमये उत्कृष्टावस्थानं विदधाति । 'इयराण' इत्यादि, इतरेषां—येषां कर्मणामुत्कृष्टहानिमेकस्मिन्नेव भवे न विदधाति, अपि तु मार्गणाद्वितीयभवप्रथमसमये विदधाति तेषां कर्मणां, किम् ? इत्याह—'तब्भवत्थो' इत्यादि, तस्मिन्नेव भवे स्थितः—मार्गणाप्रारम्भाद् यः प्रथमभवस्तस्मिन् भवे स्थितस्तयोर्म्यां—प्रथमभवे स्थितो जीवो

यावतीं हानिं विधातुं शक्नोति तावतीं यामुत्कृष्टहानिं विदधाति, तस्या अनन्तरसमये उत्कृष्टावस्थानं विदधाति।

अत्रेदं हृदयम्-मार्गणासूत्कृष्टहानिर्द्विधा भवति। तद्यथा--एका एकभवसापेक्षा, द्वितीया भवद्वयसापेक्षा। तत्र नरकादिमार्गणानां द्वितीयभवेऽनवस्थानात् तासु यस्मिन् भवे उत्कृष्टयोगं प्राप्यते, तस्मिन्नेव भवे तदनन्तरसमये तत्प्रायोग्यजघन्ययोगस्थानलाभात् या हानिर्भवति सैकभवसापेक्षा। अथापर्याप्तमनुष्यादिमार्गणानां द्वितीयभवेऽवस्थानात् तासु विवक्षितभवचरमसमये उत्कृष्टयोगं प्राप्यते, द्वितीयभवप्रथमसमये च तत्प्रायोग्यजघन्ययोगस्थानलाभादुत्कृष्टहानिर्भवति, सा हानिर्भवद्वयसापेक्षा। इत्येवमेकभवसापेक्षा हानिरेकस्मिन्नेव=यस्मिन्नुत्कृष्टयोगः प्राप्यते तस्मिन्नेव भवे भवति। भवद्वयसापेक्षा हानिर्द्वितीयभवप्रथमसमये भवति। तत्र कासुचिन्मार्गणासु सप्तानामपि कर्मणामुत्कृष्टहानिर्मार्गणाद्वितीयभवप्रथमसमये भवति। कासुचिन्मार्गणासु सप्तानामपि कर्मणामुत्कृष्टहानिरेकस्मिन्नेव भवे भवति। कासुचिच्च षट्कर्मणामुत्कृष्टहानिरेकस्मिन्नेव भवे; मोहनीयस्य तु द्वितीयभवप्रथमसमये भवति। अथ येषां कर्मणामुत्कृष्टहानिरेकस्मिन्नेव भवे भवति तेषां कर्मणामुत्कृष्टावस्थानमुत्कृष्टहानेरनन्तरसमये भवति। येषां कर्मणामुत्कृष्टहानिर्द्वितीयभवप्रथमसमये भवति तेषां कर्मणामुत्कृष्टावस्थानमुत्कृष्टहानेरनन्तरसमये न भवति, द्वितीयादिसमयेषु योगस्यासंख्यगुणतो वर्धमानत्वात्। अतस्तेषां कर्मणामुत्कृष्टावस्थानं तस्मिन्नेव भवे तत्प्रायोग्योत्कृष्टहानेरनन्तरसमये भवति।

अथ कियतां कर्मणामुत्कृष्टहानिर्द्वितीयभवप्रथमसमये कियतां चैकस्मिन्नेव भवे भवतीति प्रतिमार्गणं प्रदर्श्यते--सर्वनरकगतिभेदाः, सर्वदेवगतिभेदाः, पञ्चमनःपञ्चवचनानि, औदारिकवैक्रियाहारककाययोगाः, अवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायदेशविरतयो मिश्रश्चेति षष्टिमार्गणासु सप्तानामपि कर्मणां तस्मिन्नेव भवे, मनुष्यौघपर्याप्तमनुष्यमानुषीषु षट्कर्मणां तस्मिन्नेव भवे, मोहनीयस्य च द्वितीयभवप्रथमसमये, औदारिकमिश्रे सप्तकर्मणां द्वितीयभवप्रथमसमये, विभङ्गज्ञाने सप्तानामपि कर्मणां स्वमते द्वितीयभवप्रथमसमये, परमते तस्मिन्नेव भवे, सर्वतिर्यग्गतिभेदाः, अपर्याप्तमनुष्यः, सर्वेन्द्रियभेदाः, सर्वकायभेदाः, काययोगौघः, वेदत्रिकं, कषायचतुष्कं, मतिश्रुतावधिज्ञानानि, मतिश्रुताज्ञाने, असंयमः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, मिश्रं विना षट्सम्यक्त्वभेदाः, संज्ञी, असंज्ञी आहारकश्चेत्येकाधिकसप्ततमार्गणासु सप्तानामपि कर्मणां द्वितीयभवप्रथमसमये उत्कृष्टहानिं विदधातीति सर्वत्र योजनीयम्। वैक्रियमिश्राहारकमिश्रकार्मणानाहारकेषु हानेरभाव इति ज्ञेयम्॥६२१।६२२॥तदेवमष्टकर्मणामुत्कृष्टानां वृद्धिहान्यवस्थानानां स्वामिनः प्ररूपिताः। साम्प्रतं गाथात्रिकेण जघन्यानां वृद्धिहान्यवस्थानानां स्वामिनः, प्रतिपिपादयिषुरादिश्लोके ओघतोऽष्टकर्मणां जघन्यवृद्धिस्वामिनमाह--

अट्ठण्हं अण्णयरो कुणइ असंखंसजोगवड्ढिठिओ।
लहुवड्ढिमहोठाणा अणंतरुवरिल्लठाणठिओ ॥६२३॥

(प्रे०) 'अट्ठण्हं' इत्यादि, अष्टकर्मणां जघन्यां प्रदेशबन्धवृद्धिमन्यतरः-कोऽपि जीवः करोति। कथम्भूतोऽन्यतरो जीवः? इत्याह-'अहोठाणा' इत्यादि, अधस्तनयोगस्थानादनन्तरो य उपरितनो योगस्थानस्तत्र स्थितः, पुनः कथम्भूतः? इत्याह-'असंखंस' इत्यादि, असंख्यातभागयोगवृद्धौ स्थितः, असंख्याततमभागा योगवृद्धिर्यस्मिन् योगस्थाने तत्र स्थित इत्यर्थः। अधस्तनयोगस्थानादसंख्याततमभागयोगवृद्धिरूपेऽनन्तरे उपरितनयोगस्थाने स्थितः कोऽपि जीवोऽष्टकर्मणां जघन्यवृद्धिं विदधातीति सम्पूर्णगाथार्थः।

अत्रेदमाकूतम्-अल्पयोगादधिकप्रकृतिबन्धाच्चानुक्रमेणाधिकयोगस्याल्पप्रकृतिबन्धस्य च प्राप्तौ वृद्धिर्भवति। परमत्र जघन्यवृद्धेः प्रस्तुतत्वाद्यदपेक्षयाऽन्याल्पा वृद्धिर्न भवति सैव ग्राह्या भवति। अतोऽत्राधिकयोगाऽल्पतरप्रकृतिबन्धोभयोर्मध्ये येनाऽल्पतरा वृद्धिः स्यात् तेनैव सा ग्राह्या भवति। तत्राल्पप्रकृतिबन्धेन जायमाना प्रदेशबन्धवृद्धिः संख्याततमभागेन भवति। अधिकयोगेन जायमाना प्रदेशबन्धवृद्धिश्चतुर्विधा भवति, योगवृद्धेश्चतुर्विधत्वात्। तद्यथा-असंख्यातगुणा, संख्यातगुणा, संख्यातभागाऽसंख्यातभागा च। तत्राऽसंख्यातभागात्मिकाऽन्तिमा वृद्धिर्जघन्यतमा, इयमसंख्यातभागात्मिका वृद्धिरल्पप्रकृतिबन्धेन जायमानायाः संख्यातभागात्मिकाया वृद्धितोऽपि जघन्यतरा। अतोऽधिकयोगेन जायमानेयमसंख्यातभागात्मिका प्रदेशबन्धवृद्धिरेव सर्वजघन्या, अतोऽन्यसंख्यातभागादिवृद्धिव्यवच्छेदनार्थमाह-'असंखंसजोगवड्ढिठिओ' इति। अथ जीवो यस्मिन् योगस्थाने स्थितस्तस्मादनन्तरमुपरितनं योगस्थानं विहायान्योपरितनयोगस्थानेषु गच्छेत् तदाऽसंख्यातभागयोगवृद्धिरूपयोगस्थाने गतोऽपि जघन्या वृद्धिर्न भवेत्, अतः सान्तरोपरितनयोगस्थानस्थितिव्यवच्छेदनार्थमाह-"अहोठाणा अणंतरुवरिल्लठाणठिओ" इति। असंख्यातभागयोगवृद्धिरूपानन्तरोपरितनयोगस्थानस्थितः कोऽपि जीवोऽष्टानामपि कर्मणां जघन्यवृद्धिं विदधातीत्युक्तम्-'अट्ठण्हं अण्णयरो कुणइ' इति ॥६२३॥ साम्प्रतमोघताऽष्टकर्मणां जघन्यहान्यवस्थानस्वामिनं चिन्तयति-

लहुहाणिमुवरिठाणा कुणइ खलु अणंतराहठाणगओ।
दोण्ह वि अणंतरखणे कुणए हस्सं अवट्ठाणं ॥६२४॥

(प्रे०) 'लहुहाणि' इत्यादि, 'अट्ठण्हं' इत्यनुवर्तते, उपरितनयोगस्थानादनन्तराधस्तनयोगस्थानं गतो जीवोऽष्टकर्मणां जघन्यप्रदेशबन्धहानिं विदधाति। "अणंतराहठाणगओ" इत्यत्र अनन्तराधःस्थानशब्दयोः कर्मधारयसमासे कृतेऽनन्तराधःस्थानशब्दस्य गतशब्देन सह "श्रितादिभिः" (सिद्धहेम० ३।१।६२) इत्यनेन द्वितीयातत्पुरुषसमासः। 'दोण्ह वि' इत्यादि, अष्टकर्मणां जघन्यवृद्धि-

जघन्यहानिश्चेत्युभययोरप्यनन्तरे समयेऽष्टकर्मणां जघन्यमवस्थानं करोति । जीवो जघन्यवृद्धिसमये जघन्यहानिसमये च यस्मिन् योगस्थाने तिष्ठति तदनन्तरसमयेऽपि तस्मिन्नेव योगस्थाने तिष्ठति, अतो जघन्यवृद्धिहान्युभययोरनन्तरसमये जघन्यावस्थानं प्राप्यते ॥६२४॥

तदेवमोघतोऽष्टकर्मणां जघन्यवृद्धिहान्यवस्थानानां स्वामिनः प्ररूपिताः । इदानीमेकश्लोके-नैवादेशतोऽष्टानामपि कर्मणां जघन्यवृद्धिहान्यवस्थानानां स्वामिनः प्रतिपाद्य प्रकृतद्वारं समापयति–

कम्माणाहारेसुं लहुवड्ढिमपज्जसुहुमगणिगोओ ।
बीअखणत्थो मीसदुजोगेसुं तिण्ह अण्णहोघव्व ॥६२५॥(गीतिः)

(प्रे०) "कम्माणाहारेसु" इत्यादि, 'अट्ठण्हं' इति पदस्यात्रानुवर्तमानत्वेऽपि कार्मण-काययानाहारकयोरायुषोऽबध्यमानत्वात् सप्तकर्मणां जघन्यवृद्धिम् 'अपर्याप्तसूक्ष्मनिगोदः' करोति । अपर्याप्तबादरनिगोदाद्यपेक्षया अपर्याप्तसूक्ष्मनिगोदस्य न्यूनतरयोगात् । अत्र मार्गणाद्वितीयादिसम-येषु प्रतिसमयमसंख्यगुणयोगवृद्धिसत्त्वादोघप्ररूपणायां प्रदर्शिताऽसंख्यातभागात्मिका सर्वजघन्य-वृद्धिर्न संभवति, अतोऽसंख्यगुणात्मिकैव वृद्धिर्ग्राह्या भवति, तत्र तृतीयसमयभाव्यसंख्यगुण-वृद्धितो द्वितीयसमयभाव्यसंख्यगुणा वृद्धिः जघन्या, अतस्तृतीयसमयभाव्यसंख्यगुणवृद्धिव्यव-च्छेदनार्थमाह–'बीअखणत्थो' इति, मार्गणाद्वितीयसमयस्थः, कार्मणकायानाहारकयोः सप्त-कर्मणां जघन्यवृद्धिस्वामी स्वभवद्वितीयसमयस्थोऽपर्याप्तसूक्ष्मनिगोदो भवतीत्यर्थः ।

'मीसदुजोगेसु" इत्यादि, 'लहुवड्ढिं बीअखणत्थो' इति 'काकाक्षिगोलकन्यायेन' अत्रापि सम्बध्यते, वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रयोगयोरनुक्रमेण सप्ताष्टकर्मणां जघन्यां वृद्धिं 'मार्ग-णाद्वितीयसमयस्थः' कोऽपि जीवः करोति । वैक्रियमिश्रे मार्गणाद्वितीयसमयस्था देवनारका आहा-रकमिश्रे च संयमिनः सम्भवन्ति । अत्रापि मार्गणातृतीयादिसमयेष्वसंख्यगुणवृद्धेः प्रवर्तमानत्वात् तृतीयादिसमयस्थानां जीवानां व्यवच्छेदनार्थमुक्तं 'बीअखणत्थो' इति ।

इदानीं शेषसर्वमार्गणासु जघन्यवृद्धिहान्यवस्थानस्वामिनमतिदिशन्नाह–'तिण्ह अण्ण-होघव्व' इति, वैक्रियमिश्रादिचतुर्मार्गणासु जघन्यवृद्धिः प्ररूपिता, जघन्यहान्यवस्थानयोश्चाभावः, अतः शेषासु सप्तकर्माण्याश्रित्य षट्षष्ट्यधिकशते आयुराश्रित्य द्वाषष्ट्यधिकशते मार्गणासु जघन्य-वृद्धिहान्यवस्थानरूपाणां त्रयाणामपि पदानां स्वामी 'ओघवद्' भवति । तद्यथा–अधस्तनयोगस्था-नादसंख्यातभागयोगस्थानवृद्धिरूपेऽनन्तरे उपरितनयोगस्थाने स्थितः कोऽपि जीवोऽष्टकर्मणां जघन्यवृद्धिं विदधाति । उपरितनयोगस्थानादनन्तरमधोयोगस्थानं गतो जीवोऽष्टकर्मणां जघन्य-हानिं विदधाति । जघन्यवृद्धिजघन्यहान्यन्यतरानन्तरसमये कोऽपि जीवोऽष्टकर्मणां जघन्यावस्थानं करोति । अत्र भावनाऽनन्तरगाथाद्विके ओघवक्तव्यतायां यथा कृता तथा विधेया । अत्रेदमवधे-यम्–ओघे तथाऽऽदेशे जघन्यवृद्धिहान्यवस्थानस्वामी अधिकप्रकृतिबन्धक इत्यपि ज्ञेयम्, भागहारा-णामाधिक्याद् जघन्यवृद्धिहान्यवस्थानानि तस्यैव भवन्ति ॥६२५॥

## ॥ तृतीयमल्पबहुत्वद्वारम् ॥

तदेवं द्वितीयं स्वामित्वद्वारं चिन्तितम् । सम्प्रति क्रमायातं तृतीयमल्पबहुत्वद्वारं निरूपयितु-मनाः सूत्रकृत् सुरादौ तावत्सप्तकर्माण्याश्रित्योत्कृष्टवृद्धिहान्यवस्थानानामल्पबहुत्वमाह—

सत्तण्ह गुरू वड्ढी थोवा तत्तो गुरुं अवट्ठाणं ।
अब्भहियं ताहिन्तो परमा हाणी विसेसहिया ॥६२६॥

(प्रे०) 'सत्तण्ह' इत्यादि, सप्तकर्मणामुत्कृष्टवृद्धिः सर्वस्तोका, उत्कृष्टतः वृद्धानि कर्मदलिकानि सर्वस्तोकानीत्यर्थः । ततस्तेषामुत्कृष्टावस्थानं विशेषाधिकम्, उत्कृष्टतोऽवस्थितानि कर्मदलिकानि विशेषाधिकानीत्यर्थः । ततस्तेषामुत्कृष्टहानिर्विशेषाधिका, उत्कृष्टतो हीनानि कर्मदलिकानि विशेषाधिकानीति यावत् । इयमत्र भावना—उत्कृष्टप्रदेशबन्धवृद्धावल्पप्रकृतिबन्धोऽधिकयोगश्च कारणम् । तत्राधिकयोगो मुख्यं कारणम् । अल्पप्रकृतिबन्धेन तु संख्यातभागमात्राणि कर्मदलिकानि वर्धन्ते । एवं वैपरीत्येन हानौ । अतोऽत्राल्पबहुत्वं बाहुल्येन योगमाश्रित्य विभावनीयम् । जीव एकस्मिन् समये यावन्ति योगस्थानान्युपरि गच्छति तेभ्योऽधो विशेषाधिकानि योगस्थानानि गच्छति । इदं सर्वेषामनुभवसिद्धमेव यद् वृक्षाद्यारोहणस्य स्कन्धशाखाद्यारोहणक्रमेणैव सम्भवेऽपि अधोऽवतारस्तु युगपदपि संपद्यते । ततो विवक्षितकालेन यावदुपरि गच्छति ततोऽधोऽधिकं गच्छतीति समापतितम् । एवं जीवोऽपि एकसमयेन यावन्ति योगस्थानान्यारोहति तेभ्यो विशेषाधिकयोगस्थानान्यवतरति । अत उत्कृष्टवृद्धौ यावन्ति दलिकानि वर्धन्ते तदपेक्षयोत्कृष्टहानौ विशेषाधिकानि हीयन्ते । अथ यदि तत्तत्कर्मण उत्कृष्टहानिर्भवद्वयसापेक्षा भवति, अर्थात् संभाव्यमानोत्कृष्टहानेरनन्तरसमयेऽभूत्वोत्कृष्टावस्थानप्रायोग्योत्कृष्टहानेरनन्तरसमये उत्कृष्टावस्थानं भवति तदोत्कृष्टावस्थानप्रायोग्योत्कृष्टावस्थानत उत्कृष्टहानिर्विशेषाधिका भवति, अवस्थितप्रदेशेभ्यो हीनप्रदेशानां विशेषाधिकत्वात् । यथा प्रस्तुताल्पबहुत्वे सप्तकर्मणामुत्कृष्टावस्थानम् । षट्कर्मणामुत्कृष्टहानिर्भवप्रथमसमये सुरो विदधाति, उत्कृष्टावस्थानं तु अनिवृत्तिबादरसम्परायद्वितीयसमये भवति । मोहनीयस्योत्कृष्टहानिर्भवप्रथमसमये लब्ध्यपर्याप्तसूक्ष्मो विदधाति, उत्कृष्टावस्थानं तु आयुर्बन्धद्वितीयसमये भवति । यदि चोत्कृष्टहानिरेकभवसापेक्षा भवति, अर्थात् तत्तत्कर्मणो योत्कृष्टहानिस्तदनन्तरसमये उत्कृष्टावस्थानं भवति तदोत्कृष्टावस्थानहानी परस्परं तुल्ये भवतः, हानावबस्थाने च प्रदेशानां तुल्यत्वात् । यथाऽऽयुःकर्मण उत्कृष्टावस्थानम् । अत एवायुःकर्मण उत्कृष्टहानिरुत्कृष्टावस्थानं च परस्परं तुल्ये इति निरूपयिष्यति । उत्कृष्टवृद्धिस्तु औदारिकमिश्रमन्तरा सर्वत्रैव सर्वस्तोका भविष्यतीत्यालक्षितव्यम् ।

अत्रासत्कल्पनैवम्–तत्रादौ भवद्वयसापेक्षहानिमाश्रित्योच्यते–उत्कृष्टवृद्धिप्रायोग्यजघन्ययोगस्थाने स्थितो जीवो द्विसहस्रकर्मदलिकानि बध्नाति । तदनन्तरसमये उत्कृष्टयोगस्थानं प्राप्योत्कृष्टप्रदेशबन्धवृद्धिं विदधाति, तत्र च त्रिसहस्रकर्मदलिकानि बध्नाति । अग्रिमभवचरमसमयोत्कृष्टयोगात् पञ्चत्वं प्राप्य, तत्र प्रथमसमये तत्प्रायोग्यजघन्ययोगस्थानं प्राप्योत्कृष्टहानिं विदधाति, तत्र च द्विशतन्यूनद्विसहस्रकर्मदलिकानि बध्नाति । अथोत्कृष्टयोगस्थानादुत्कृष्टावस्थानप्रायोग्यहानिं विधाय, तदनन्तरे समये उत्कृष्टावस्थानं विदधाति, तत्र चैकशतन्यूनद्विसहस्रकर्मदलिकानि बध्नाति । इत्येवमत्र सहस्रदलिकानि वृद्धानि, एकशताधिकसहस्रदलिकान्यवस्थितानि, द्विशताधिकसहस्रदलिकानि हीनानि । सहस्रदलिकेभ्य एकशताधिकसहस्रदलिकानि विशेषाधिकानि । एकशताधिकसहस्रदलिकेभ्यो द्विशताधिकसहस्रदलिकानि विशेषाधिकानि । अथैकभवसापेक्षहानिमाश्रित्यैवम्–अत्र वृद्धौ पूर्वोक्तवदेवावगन्तव्यम् । वृद्ध्यनन्तरसमये उत्कृष्टहानिं विदधाति, तत्र चैकशतन्यूनद्विसहस्रदलिकानि बध्नाति । उत्कृष्टहान्यनन्तरसमये उत्कृष्टावस्थानं विदधाति, तत्र चैकशतन्यूनद्विसहस्रदलिकानि बध्नाति । इत्येवमत्र सहस्रदलिकानि वृद्धानि, एकशताधिकसहस्रदलिकानि हीनान्यवस्थितानि च । वृद्धसहस्रदलिकेभ्यो हीनान्यवस्थितानि चैकशतसहस्रदलिकानि विशेषाधिकानि, परस्परं च तुल्यानि । इत्येवमोघतो मार्गणासु च यथायोगं विभावनीयम् । अत्रेदमवधेयम्–अत्रासत्कल्पनयोत्कृष्टवृद्धौ एकसहस्रदलिकानि वृद्धानीति दर्शितं, परमार्थरीत्या त्वसंख्यातगुणकर्मदलिकानि वर्धन्ते । अथ प्रदर्शितासत्कल्पनानुसारेण यन्त्रकं प्रदर्श्यते—

॥ भवद्वयसापेक्षहानिमाश्रित्योत्कृष्टवृद्धिहान्यवस्थानप्रदर्शकं यन्त्रकम् ॥

उत्कृष्टवृद्धिः

तत्तद्योगस्थाने बध्यमानदलिकसंख्या ३००० २९०० २८०० २७०० २६०० २५०० २४०० २३०० २२०० २१०० २००० १९०० १८०० १७०० १६०० १५०० १४००

योगस्थानानि

सर्वोत्कृष्टयोगस्थानम्

सर्वजघन्ययोगस्थानम्

उत्कृष्टावस्थानम्

उत्कृष्टहानिः

॥ एकभवसापेक्षहानिमाश्रित्योत्कृष्टवृद्धिहान्यवस्थानप्रदर्शकं यन्त्रकम् ॥

उत्कृष्टवृद्धिः

तत्तद्योगस्थाने बध्यमानदलिकसंख्या ३००० २९०० २८०० २७०० २६०० २५०० २४०० २३०० २२०० २१०० २००० १९०० १८०० १७०० १६०० १५०० १४००

योगस्थानानि

सर्वोत्कृष्टयोगस्थानम्

सर्वजघन्ययोगस्थानम्

उत्कृष्टहानिः

उत्कृष्टावस्थानम्

इत्थमत्रायं निष्कर्षः—यदोत्कृष्टहानिरुत्कृष्टावस्थानं च परस्परं तुल्ये भवतः तदोत्कृष्टवृद्धिः सर्वस्तोका । तत उत्कृष्टहानिरुत्कृष्टावस्थानं च विशेषाधिके परस्परं च तुल्ये । अथ यदोत्कृष्टावस्थानत उत्कृष्टहानिर्विशेषाधिका भवति तदोत्कृष्टवृद्धिः सर्वस्तोका, तत उत्कृष्टावस्थानं विशेषाधिकम् ,तत उत्कृष्टहानिर्विशेषाधिका ॥६२६॥ साम्प्रतमोघत आयुःकर्मण उत्कृष्टवृद्धिहान्यवस्थानानामल्पबहुत्वं प्ररूपयति—

आउस्स गुरू वड्ढी सव्वत्थोवा हवेज्ज ताहिन्तो ।
गुरुहाणिअवट्ठाणं अहियं च परोप्परं तुल्लं ॥६२७॥

(प्रे०) 'आउस्स' इत्यादि, आयुःकर्मण उत्कृष्टवृद्धिः सर्वस्तोका । ततस्तस्योत्कृष्टहानिरवस्थानं च विशेषाधिके, परस्परं तुल्ये च, आयुरुत्कृष्टहान्यनन्तरसमये उत्कृष्टावस्थानस्य सत्त्वात् । अत्र भावनाऽनन्तरदर्शितरीत्या स्वयमेव विधेया ॥ ६२७ ॥ तदेवमोघप्ररूपणा कृता । साम्प्रतमादेशतो वक्तुमिच्छुरायुष्यल्पवक्तव्यत्वात् 'सूचिकटाहन्यायेन' प्रथममायुष उत्कृष्टवृद्धिहान्यवस्थानानामल्पबहुत्वमाह—

णो चिअ अप्पाबहुगं हवेज्ज आहारमीसजोगम्मि ।
आउस्स मग्गणासु सेसासु होइ ओघव्व ॥६२८॥

(प्रे०) 'णो चिअ' इत्यादि, आहारकमिश्रे आयुषोऽल्पबहुत्वं नैव भवति, हान्यवस्थानानामभावात् । 'मग्गणासु' इत्यादि, शेषासु द्वाषष्टिशतमार्गणासु आयुषोऽल्पबहुत्वमोघवज्ज्ञातव्यम् । तच्चानन्तरगाथायामेव दर्शितमित्यत्र नोल्लिख्यते । अत्र भावना—"सत्तण्ह गुरू वड्ढी" इत्यादिप्रथमगाथायां दर्शितरीत्या स्वयमेव विधेया ॥ ६२८ ॥

साम्प्रतमादेशतः सप्तकर्मणामुत्कृष्टवृद्धिहान्यवस्थानानामल्पबहुत्वं वक्तुं प्रचिक्रंसुरादौ तावद् यासु मार्गणासूत्कृष्टहान्यवस्थाने तुल्ये तासु त्रिमनुष्यमार्गणासु च गाथात्रिकेणाह—

सव्वणिरयदेवेसुं पणमणवयणेसु उरलविउवेसुं ।
आहारावेएसु मणपज्जवसंयमेसुं च ॥६२९॥
सामाइअछेएसुं परिहारे देससुहममीसेसुं ।
आउगवज्जाण भवे सव्वत्थोवा गुरू वड्ढी ॥६३०॥
तो हाणिअवट्ठाणं जेट्ठं अहियं परोप्परं तुल्लं ।
णिरयव्व तिमणुसेसुं छण्हं ओघव्व मोहस्स ॥६३१॥

(प्रे०) 'सव्वणिरय' इत्यादि, नरकदेवगतिसर्वभेदेषु, पञ्चमनःपञ्चवचनेषु, औदारिक-वैक्रियाहारककाययोगेषु, अवेदे, मनःपर्यवज्ञाने, संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धि-देशविरतिसूक्ष्मसम्परायेषु, मिश्रे चेति षष्टिमार्गणासु आयुर्वर्जानां सप्तकर्मणामुत्कृष्टवृद्धिः सर्वस्तोका। ततस्तेषामुत्कृष्टहान्यवस्थाने विशेषाधिके, परस्परं च तुल्ये। एतासु मार्गणासूत्कृष्टहानेरनन्तरसमये उत्कृष्टावस्थानं भवतीति पूर्वोक्तरीत्योत्कृष्टहानेरुत्कृष्टावस्थानस्य च परस्परं तुल्यत्वम्। अथ त्रिमनुष्यमार्गणास्वाह—'णिरयव्व' इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्यमार्गणासु मोहनीयायुषी विना षट्कर्मणामुत्कृष्टवृद्धिहान्यवस्थानानामल्पबहुत्वं नरकवद्—नरकमार्गणायां यथा प्रदर्शितं तथा ज्ञातव्यम्। तच्चानन्तरमेवोक्तम्। 'ओघव्व मोहस्स' इति, त्रिमनुष्यमार्गणासु मोहनीयस्य प्रकृताल्पबहुत्वमोघवक्तव्यतावद् ज्ञातव्यम्। तद्यथा—सर्वस्तोका उत्कृष्टवृद्धिः, तत उत्कृष्टावस्थानं विशेषाधिकं, तत उत्कृष्टहानिर्विशेषाधिका। अत्रायं भावः—त्रिमनुष्यमार्गणासु षट्कर्मणामुत्कृष्टहानिस्तस्मिन्नेव भवे भवति, मोहनीयस्य तु द्वितीयभवप्रथमसमये भवतीति षट्-कर्मणां मोहनीयस्य चाल्पबहुत्वं भिन्नम् ॥६२९।६३०।६३१॥ साम्प्रतमौदारिकमिश्रे सप्तकर्मणा-मुत्कृष्टवृद्धिहान्यवस्थानानामल्पबहुत्वमाह—

ओरालमीसजोगे हवेज्ज थोवं गुरुं अवट्ठाणं।

तोऽब्भहिया गुरुहाणी तो गुरुवड्ढी असंखगुणा ॥६३२॥

(प्रे०)'ओरालमीसजोगे' इत्यादि, औदारिकमिश्रे सप्तकर्मणामुत्कृष्टावस्थानं सर्वस्तोकम्। ततस्तेषामुत्कृष्टहानिर्विशेषाधिका। ततस्तेषामुत्कृष्टवृद्धिरसंख्यातगुणा भवति। अत्रेयं भावना—औदारिकमिश्रे प्रथमभवे तत्प्रायोग्योत्कृष्टहानेरनन्तरसमये लब्ध्यपर्याप्तसंज्ञी उत्कृष्टावस्थानं विद-धाति। उत्कृष्टहानिस्तु द्वितीयभवप्रथमसमयस्थोऽपर्याप्तसूक्ष्मजीवो विदधाति। द्वितीयभवप्रथम-समये या हानिः सा सर्वोत्कृष्टहानिः। एकभवभाव्युत्कृष्टावस्थानप्रायोग्योत्कृष्टहानिस्तु न तथा, अपि तु विशेषहीना। अत उत्कृष्टावस्थानमपि उत्कृष्टहानितो विशेषहीनम्। ततश्चोत्कृष्टावस्था-नत उत्कृष्टा हानिर्विशेषाधिकेति समापतितम्। अथोत्कृष्टवृद्धिं मार्गणाचरमसमये करणापर्याप्तसंज्ञी विदधाति, लब्ध्यपर्याप्तसंज्ञी स्वप्रायोग्योत्कृष्टयोगं प्राप्तः सन् मृत्वा सूक्ष्मापर्याप्तनिगोदत्वेनोत्पद्य भवप्रथमसमये स्वप्रायोग्यजघन्ययोगं प्राप्तः सन्नुत्कृष्टां हानिं विदधाति। लब्ध्यपर्याप्तापेक्षया करणा-पर्याप्तस्य योगोऽसंख्येयगुणोऽधिक इत्यत्र सप्तकर्मणामुत्कृष्टहानित उत्कृष्टवृद्धिरसंख्यगुणा भवति।

अत्रासत्कल्पनैवम्,—असत्कल्पनायां दृश्यतोऽसंख्यासंख्या बोध्या। औदारिकमिश्र-मार्गणायां प्रथमभवे तत्प्रायोग्योत्कृष्टहान्यनन्तरसमये उत्कृष्टतः सप्तसहस्राणि कर्मदलिकान्यवस्थि-तानि। द्वितीयभवप्रथमसमये सर्वोत्कृष्टहीनयोगे लब्धे दशसहस्रकर्मदलिकानि हीनानि। करणापर्या-प्तानां मार्गणाचरमसमये दशलक्षदलिकानि वृद्धानि। अत्र सप्तसहस्रदलिकेभ्यो दशसहस्रदलिकानि

विशेषाधिकानि, दशसहस्रदलिकेभ्यो द्विसहस्रदलिकान्यसंख्येयगुणानि ॥६३२॥ सम्प्रति विभङ्गज्ञाने सप्तकर्मणामुत्कृष्टवृद्धिहान्यवस्थानानामल्पबहुत्वं चिन्तयन्नाह—

सत्तण्ह विभंगेऽप्पा गुरुवड्ढी तो गुरुं अवट्ठाणं ।
अहियं तो गुरुहाणी अहिया णिरयव्व बिंति परे ॥६३३॥

(प्रे०) 'सत्तण्ह' इत्यादि, विभङ्गज्ञाने सप्तकर्मणामुत्कृष्टवृद्धिः सर्वस्तोका । ततस्तेषामुत्कृष्टावस्थानं विशेषाधिकम् । ततस्तेषामुत्कृष्टहानिर्विशेषाधिका । अत्रोत्कृष्टावस्थानतो हानेर्विशेषाधिक्ये "तत्प्रायोग्योत्कृष्टहानेरनन्तरसमये उत्कृष्टावस्थानं भवति" इति बीजम् । अथ येषां मतेऽपर्याप्तावस्थायां विभङ्गज्ञानाभावेन तस्मिन्नेव भवे यावन्त्युत्कृष्टहानिर्भवति तावद्धानिं विधाय, तदनन्तरसमये उत्कृष्टावस्थानं विदधाति तेषां मते उत्कृष्टहानेरनन्तरसमये उत्कृष्टावस्थानस्य सत्त्वादुत्कृष्टहान्यवस्थानयोः परस्परं तौल्यं भवतीति तन्मतं ज्ञापयति—"णिरयव्व बिंति परे" इति । नरकमार्गणायां स्वमतेऽपि उत्कृष्टहान्यवस्थानयोः परस्परं साम्यं भवतीति लाघवादतिदिष्टम् ।

अत्रायं विशेषः—यद्यपि स्वपरोभयमते उत्कृष्टावस्थितानि दलिकानि समानानि भवन्ति, तथापि हीनदलिकानि न्यूनाधिकानि भवन्ति । हीनदलिकन्यूनाधिक्यमाश्रित्यैव प्रस्तुताल्पबहुत्वं द्वैविध्यमाश्रयति । तद्यथा—परमते उत्कृष्टयोगात् तत्प्रायोग्यजघन्ययोगं प्राप्तः सप्तविधबन्धादष्टविधबन्धं कुर्वंश्च जीवः सप्तकर्मणामुत्कृष्टहानिं विदधाति । तदनन्तरसमये उत्कृष्टावस्थानं विदधाति । अथ तस्मिन्नेव समये स्वमतेऽपि उत्कृष्टावस्थानं विदधाति, स्वमते उत्कृष्टहानेर्द्वितीयभवप्रथमसमये सत्त्वेऽप्युत्कृष्टावस्थानस्य तस्मिन्नेव भवे तत्प्रायोग्यजघन्ययोगप्राप्तेरनन्तरसमये सत्त्वात् । अतः परमते यावन्ति दलिकानि हीनानि तावन्त्येवावस्थितानि, स्वमतेऽपि तावन्त्येवावस्थितानि । परं स्वमते उत्कृष्टहानिर्द्वितीयभवप्रथमसमये भवतीति प्रथमभवभावितत्प्रायोग्यजघन्ययोगतो भवप्रथमसमयभाविजघन्ययोगस्य विशेषहीनत्वात् परमतेन यावन्ति कर्मदलिकानि हीनानि तेभ्यः स्वमते विशेषाधिकदलिकानि हीनानि । असत्कल्पनया परमते हीनान्यवस्थितानि च स्वमते चावस्थितानि दलिकानि सप्तसहस्राणि ॥६३३॥ इदानीं वैक्रियमिश्रादिमार्गणास्वल्पबहुत्वाभावं प्रतिपाद्य शेषमार्गणास्वल्पबहुत्वमाह—

मीसदुजोगेसु तहा कम्माणाहारगेसु णो चेव ।
हवए अप्पाबहुगं णेयं ओघव्व सेसासुं ॥६३४॥

(प्रे०) 'मीसदुजोगेसु' इत्यादि, वैक्रियमिश्राहारकमिश्रकार्मणानाहारकेषु अल्पबहुत्वं न भवति, तासु हानेरवस्थानस्य चासद्भावात्, अल्पबहुत्वस्य द्व्यादिपदार्थसापेक्षत्वात् । 'णेयं' इत्यादि, शेषासु एकाधिकशतमार्गणासु सप्तकर्मणामुत्कृष्टवृद्ध्यादीनामल्पबहुत्वमोघवद् ज्ञातव्यम् ।

ओघवत् शेषमार्गणास्वपि उत्कृष्टावस्थानं तत्प्रायोग्योत्कृष्टहानेरनन्तरसमये भवतीत्युभयत्राल्प-बहुत्वस्य समानत्वाल्लाघवार्थमतिदिष्टम् । शेषमार्गणा नामत इमाः—सर्वतिर्यग्गतिभेदाः, अपर्याप्त-मनुष्यः, सर्वेन्द्रियभेदाः, सर्वकायभेदाः, काययोगौघः, वेदत्रिकं, कषायचतुष्कं, मतिश्रुतावधि-ज्ञानानि, मतिश्रुताज्ञाने, असंयमः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, मिश्रं विना षट्सम्यक्त्व-भेदाः, संज्ञी, असंज्ञी आहारकश्च ॥६३४॥ तदेवमष्टकर्मणामुत्कृष्टवृद्धिहान्यवस्थानानामल्पबहुत्वं चिन्तितम् । साम्प्रतमष्टकर्मणां जघन्यवृद्ध्यादीनामल्पबहुत्वमेकेनैव श्लोकेन निरूप्य प्रस्तुतद्वारं पारयति—

अट्ठण्ह हस्सतिपया तुल्ला एमेव सव्वहिं णवरं ।
मीसदुजोगेसु तहा कम्माणाहारगेसुं णो ॥६३५॥

(प्रे०) गाथाशब्दार्थः सुगमः । अष्टानामपि कर्मणां जघन्यवृद्धिहान्यवस्थानानां तुल्यत्वे भावनेयम्—उपरितनेऽनन्तरेऽसंख्यातभागाधिकयोगस्थाने गत्वा वृद्धिं विदधाति । अधस्तनेऽनन्तरेऽसंख्यातभागहीनयोगस्थाने गत्वा हानिं विदधाति । अतोऽसंख्यातभागा वृद्धिः, हानिरप्य-संख्यातभागैव । एवमसंख्यातभागात्मकवृद्धिहान्यन्यतरानन्तरसमयेऽवस्थानं भवतीत्यवस्थानमप्य-संख्यातभागात्मकमेव भवति । इत्येवमष्टानामपि कर्मणां जघन्यवृद्धिहान्यवस्थानानि तुल्यानि भवन्ति । एवं वैक्रियमिश्रादिचतुर्मार्गणा विहाय सर्वमार्गणास्वपि ज्ञेयम् ॥६३५॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-प्रदेशबन्धे तृतीये पदनिक्षेपाधिकारे तृतीय-मल्पबहुत्वद्वारं समाप्तम् ॥

—तत्समाप्तौ च—

॥ तृतीय पदनिक्षेपाधिकारः समाप्त. ॥



॥ ॐ अर्हं नमः ॥

# ॥ वृद्धिबन्धाधिकारः ॥

तदेवं तृतीयः पदनिक्षेपनामाधिकारः प्रतिपादितः । सम्प्रति चतुर्थं वृद्धिबन्धाभिधमधिकारं निरूपयितुमुपक्रमते । तत्रादौ गाथाद्विकेन द्वाराणि प्रतिपादयन्नाह—

तुरिअम्मि वड्ढिबंधे अहिगारम्मि हविरे दुआराइं ।
तेरस संतपयं तह सामी कालंतराइं च ॥६३६॥
भंगविचयो य भागो परिमाणं खेत्तफोसणाउ तहा ।
कालो अंतर भावा अप्पाबहुगं जहाकमसो ॥६३७॥

(प्रे०) निगदसिद्धम् । भूयस्काराधिकारे यानि द्वाराणि निरूपितानि तान्येवात्र यथाक्रमं निरूपयिष्यन्ते ॥६३६।६३७॥



## ॥ प्रथमं सत्पदद्वारम् ॥

साम्प्रतमाद्यं सत्पदद्वारं निरूपयितुकाम आदौ तावदत्राधिकारेऽनन्तरोक्तद्वाराणि यानि पदान्यधिकृत्य चिन्तयिष्यन्ते तेषामोघतः सत्तामाह—

अट्ठण्ह अत्थि बंधा संखअसंखगुणभागभेएहिं ।
चउवड्ढी चउहाणी अवट्ठिओ तह अवत्तव्वो ॥६३८॥

(प्रे०) 'अट्ठण्ह' इत्यादि, अष्टकर्मणां बन्धा भवन्ति, के इत्याह–' 'संखअसंख' इत्यादि, गुणशब्दस्य संख्यासंख्यशब्दाभ्यां परतो योजनाद् संख्यगुणासंख्यगुणरूपद्विभेदौ, एवं भागशब्दस्य संख्यासंख्यशब्दाभ्यां परतो योजनात् संख्यभागासंख्यभागरूपद्विभेदौ, इत्येवं चतुर्भेदैः चतस्रो वृद्धयश्चतस्रो हानयश्च, वृद्धिहानिशब्दयोः स्त्रीलिङ्गत्वात् संख्यातगुणाऽसंख्यातगुणा, संख्यातभागाऽसंख्यातभागेति चतस्रो वृद्धयश्चतस्रो हानयश्च; तथाऽवस्थानमवक्तव्यश्चेति दश बन्धा भवन्ति । वृद्धिबन्धाऽभिधेऽस्मिन्नधिकारेऽनन्तरगाथाद्विकोक्तत्रयोदशद्वाराणि संख्यातगुणवृद्ध्यादिदशपदान्याश्रित्य विभावयिष्यन्ते । अतः सत्पदद्वारे "अट्ठण्ह" इत्यादिना तेषामोघतः सत्ता निरूपिता । ओघतोऽष्टानामपि कर्मणां दशापि पदानि भवन्तीत्यर्थः ।

अत्रायं स्फुटार्थः-प्रदेशबन्धस्य वृद्धिर्हानिश्च योगानुसारेण भवति, योगस्य वृद्धिर्हानिश्च असंख्यातगुणा, संख्यातगुणा, संख्यातभागा, असंख्यातभागेति चतुर्विधा भवति, ततश्च प्रदेशबन्धस्य वृद्धिर्हानिश्च चतुर्विधा भवति। जीवो विवक्षितयोगस्थानाद् यदाऽसंख्यातगुणवृद्धे योगस्थाने

गच्छति तदाऽसंख्यातगुणा, यदा संख्यातगुणवृद्धे योगस्थाने गच्छति तदा संख्यातगुणा, यदा संख्यातभागवृद्धे योगस्थाने गच्छति तदा संख्यातभागा, यदाऽसंख्यातभागवृद्धे योगस्थाने गच्छति तदाऽसंख्यातभागा प्रदेशबन्धवृद्धिर्भवति । एवं योगस्य मान्द्याद् विवक्षितयोगस्थानाद् यदाऽसंख्यातगुणहीने योगस्थाने गच्छति तदाऽसंख्यगुणा प्रदेशबन्धहानिर्भवतीत्याद्यपि वक्तव्यम् । अथ यदाऽल्पप्रकृतिबन्धो भवति तदाऽपि संख्यातभागा वृद्धिर्भवति, स्वविभागे पूर्वसमयापेक्षयाऽधिकागतानां दलिकानां संख्यातभागमात्रत्वाद् । एवं वैपरीत्येन हानावपि वक्तव्यम् । अतः संख्यातभागा वृद्धिर्हानिश्चानुक्रमेणाल्पप्रकृतिबन्धेनाऽधिकप्रकृतिबन्धेनाऽपि भवति । परं सप्तकर्मणामेव संख्यातभागा वृद्धिरधिकयोगेनेवाल्पप्रकृतिबन्धेनाऽपि भवति, न त्वायुषः । आयुषः संख्यातभागा वृद्धिस्तु अधिकयोगेनैव भवति, आयुर्बन्धसद्भावेऽल्पप्रकृतिबन्धाभावाद् । एवं वैपरीत्येन हानावपि सर्वं बोध्यम् । शेषास्तिस्रो वृद्धिहानयस्त्वष्टानामपि कर्मणां तावद्योगवृद्धिहानिभ्यामेव भवन्ति, प्रकृतिबन्धेन जायमानाया वृद्धेर्हानेश्चानन्तरोक्तहेतुना संख्यातभागमात्रत्वाद् । अवस्थितावक्तव्यबन्धस्वरूपं तु भूयस्काराधिकारे तृतीयगाथायां सप्रपञ्चं प्रदर्शितमित्यत्र तदर्थं नोत्सहामहे । विस्मृततत्स्वरूपेण तत्रतोऽवगन्तव्यम् ॥६३८॥

साम्प्रतं सप्तकर्माण्याश्रित्यादेशतो वक्तुकामो यासु मार्गणासु पदानां सत्त्वौघवत् तास्वाह–

ओघव्व पया सव्वे आउगवज्जाण अत्थि तिणरेसुं ।
दुपणिंदितसेसुं तह पणमणवयकायउरलेसुं ॥६३९॥
चउणाणावेएसुं संयमतिदरिसणसुक्कभवियेसुं ।
सम्मत्तउवसमेसुं खइए सण्णिम्मि आहारे ॥६४०॥

(प्रे०) 'ओघव्व' इत्यादि, आयुर्वर्जानां सप्तकर्मणां सर्वाणि पदानि 'ओघवद्' भवन्ति । कासु मार्गणासु इत्याह–'तिणरेसु' इत्यादि, विनाऽपर्याप्तमनुष्यं त्रिमनुष्यभेदेषु; अपर्याप्तपञ्चेन्द्रियमन्तरा द्विपञ्चेन्द्रिययोः, अपर्याप्तत्रसमृते द्वित्रसयोः, पञ्चमनःपञ्चवचनकाययोगौघौदारिककायेषु, मत्यादिचतुर्ज्ञानेषु, अवेदे, संयमौघे, दर्शनत्रिके, शुक्लेश्यायाम्, भव्ये, सम्यक्त्वौघोपशमक्षायिकेषु संज्ञिनि आहारके चेति पञ्चत्रिंशन्मार्गणासु । एतासु मार्गणासु पर्याप्तसंज्ञिपञ्चेन्द्रियाणां प्रवेशात् तेषां च चतुर्विधवृद्धिहानिहेतूनामसंख्यगुणयोगवृद्ध्यादीनां सुलभत्वाच्चतुर्विधाऽपि वृद्धिर्हानिश्च भवति । एवमवस्थितहेतुयोगावस्थानस्य सद्भावादवस्थितप्रदेशबन्धोऽपि भवति ।

अथाऽवक्तव्यप्रदेशबन्ध एवम्–सूक्ष्मसम्पराये मोहस्योपशान्तमोहे च सप्तानामपि कर्मणामबन्धः । ततः सूक्ष्मसम्परायप्रथमसमयात् षट्कर्मणामनिवृत्तिबादरसम्परायप्रथमसमयाच्च मोहनीयस्य पुनर्बन्धं प्रारभते इति सूक्ष्मसम्परायप्रथमसमये षट्कर्मणामनिवृत्तिबादरसम्परायप्रथमसमये मोहनीयस्याऽवक्तव्यप्रदेशबन्धो भवति । अत्रायं विशेषः—पञ्चेन्द्रियौघादिकतिपयमार्गणासूपशान्त-

मोहाभिधानं प्राप्य देवगतिप्रथमसमये सप्तकर्मबन्धमारभमाणस्य जीवस्य सप्तानामपि कर्मणां युग- पदवक्तव्यप्रदेशबन्धो भवति ॥६३९।६४०॥

सम्प्रति यासु मार्गणास्वेकस्या वृद्धेरेव सत्ता तासु शेषमार्गणासु च सप्तकर्माण्याश्रित्य सत्प- दद्वारं निरूपयन्नाह—

**मीसदुजोगेसु तहा कम्माणाहारगेसु इगवड्ढी ।**
**अत्थि चउवड्ढिहाणी अवट्ठिओ अत्थि सेसासु ॥६४१॥**

(प्रे०) 'मीसदुजोगेसु' इत्यादि, वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रयोगयोः, कार्मण- काये़ऽनाहारके चेति मार्गणाचतुष्के सप्तकर्मणाम्, 'इगवड्ढी' इति, असंख्यगुणरूपैकवृद्धिरेव भवति। अत्रैवकाराऽभावेऽपि 'सर्वं वाक्यं सावधारणम्' इति न्यायेनैवकारार्थलाभे शेषनवपदसत्ताभावो लब्धः। अत्रेयं भावना—एतासु मार्गणासु वर्तमानानां जीवानामपर्याप्तत्वेन मार्गणाकालं यावत् प्रतिसमयमसंख्यगुणयोगवृद्धिसद्भावादसंख्यगुणा प्रदेशबन्धवृद्धिर्भवति । अतः शेषत्रिविधवृद्धि- श्चतुर्विधहानिरवस्थानञ्च न भवन्ति। एवं बन्धप्रारम्भाभावादवक्तव्यप्रदेशबन्धोऽपि न लभ्यते।

ननु औदारिकमिश्रे सर्वापर्याप्तमार्गणासु च मार्गणाप्रथमसमयात् प्रतिसमयमसंख्यगुणा योगवृद्धिर्भवतीति तास्वपि असंख्यगुणरूपैकवृद्ध्यैव भवितव्यमिति चेद्, न, लब्ध्यपर्याप्तानां जीवानां स्वायुर्द्वित्रिभागात् परतः सर्वविधवृद्धिः, सर्वविधहानिरवस्थानं च भवन्ति। औदारिकमिश्रे लब्ध्य- पर्याप्ता अपि भवन्ति। सर्वापर्याप्तमार्गणासु तु लब्ध्यपर्याप्ता एव जीवा भवन्ति। अत औदारिक- मिश्रादिमार्गणासु विनाऽवक्तव्यं नवाऽपि पदानि सम्भवन्तीति दिग्। आहारकमिश्रे आयुर्बन्ध- प्रथमसमये भागहराणामधिकत्वात् सप्तकर्मणामल्पतरप्रदेशबन्धोऽपि कथं न भवतीति शङ्का भूय- स्काराधिकारे सत्पदद्वारे समाहितेति तद्विषये नात्रोल्लिख्यते।

'चउवड्ढिहाणी' इत्यादि, शेषासु एकत्रिंशदधिकशतमार्गणासु सप्तकर्मणां चतुर्विधवृद्धि- श्चतुर्विधहानिरवस्थानं चेति नव पदानि सम्भवन्ति। एतासु मार्गणासूपशमश्रेणेरभावेन सप्तकर्मणां पुनर्बन्धाभावादवक्तव्यप्रदेशबन्धो न भवति। शेषासंख्यगुणवृद्ध्यादिनवपदानि तु तेषामसंख्य- गुणयोगवृद्धिप्रमुखकारणानां सुलभत्वात् प्रवर्तन्त एव । शेषमार्गणा नामत इमाः—सर्वनरकभेदाः, समस्ततिर्यग्गतिभेदाः; अपर्याप्तमनुष्यः, समस्तामर्त्यभेदाश्चेति चतुश्चत्वारिंशद्गतिभेदाः, अखिलै- केन्द्रियविकलेन्द्रियभेदाः, अपर्याप्तपञ्चेन्द्रियश्चेति सप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना चत्वा- रिंशत्कायभेदाः, औदारिकमिश्रः, वैक्रिय आहारकश्चेति त्रयो योगभेदाः, वेदत्रिकं, कषायचतुष्कं; मत्याद्यज्ञानत्रिकं, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायदेशविरतिसंयमासंयमाः, शुक्लामन्तरा पञ्चलेश्याः, अभव्यः, क्षायोपशमिकसास्वादनमिश्रमिथ्यात्वानि असंज्ञी च। अत्रेदं ज्ञेयम्—उपशान्तमोहात्पश्चत्वं प्राप्तस्य जीवस्य देवगतिप्रथमसमये उपशान्तमोहे विच्छिन्नबन्धानां

सप्तकर्मणां बन्धप्रारम्भो भवतीति देवौघादिमार्गणासु अवक्तव्यप्रदेशबन्धः कथं न भवतीति शङ्कायाः समाधानं भूयस्काराधिकारे सत्पदद्वारे कृतमित्यत्र नोच्यते ॥६४१॥

इदानीं लोभे मोहनीयमाश्रित्यापवादं तथाऽऽयुष सर्वमार्गणासु सम्भाव्यमानानि पदानि प्रतिपाद्य प्रकृतद्वारसमाप्तिं चिकीर्षुराह—

लोहेऽत्थि अवत्तव्वो मोहस्साहारमीसजोगम्मि ।
इगवड्ढिअवत्तव्वा आउस्सोघव्व सेसासुं ॥६४२॥

(प्रे०) 'लोहेऽत्थि' इत्यादि, लोभमार्गणायां मोहनीयावक्तव्यप्रदेशबन्धो भवति, अवक्तव्यप्रदेशबन्धोऽपि भवतीत्यर्थः, शेषनवपदसत्ताया अनन्तरगाथायां प्ररूपितत्वात् । अत्रेयं भावना—उपशमश्रेणिमारोहन् जीवः सूक्ष्मसम्पराये लोभमार्गणायां वर्तमानो मोहनीयबन्धं व्यवच्छिनत्ति, ततः सूक्ष्मसम्पराये एव मृतिं प्राप्य लोभमार्गणायामेव वर्तमानो देवगतिप्रथमसमये मोहनीयबन्धमुपक्रमते इति लोभे मोहनीयस्यावक्तव्यप्रदेशबन्धोऽपि प्रवर्तते ।

'आहारमीसजोगम्मि' इत्यादि, 'आउस्स' इति पदमत्रानुषज्यते. आहारकमिश्रयोगे आयुषोऽसंख्यगुणरूपैकवृद्धिरवक्तव्यं च भवति । मार्गणाचरमसमयं यावदसंख्यगुणयोगवृद्धिसद्भावात् संख्यातगुणवृद्ध्यादित्रिवृद्ध्यश्चतस्रो हानयोऽवस्थानञ्च न प्रवर्तन्ते । "आउस्सोघव्व सेसासु" इति, शेषासु द्वाषष्ट्यधिकशतमार्गणासु आयुषोऽसंख्यगुणवृद्ध्यादिपदानि ओघवद् दशाऽपि भवन्ति, शेषमार्गणासु आयुर्बन्धकालेऽसंख्यगुणयोगवृद्ध्यादिकारणानां सुलभत्वात् । शेषमार्गणाः सुगमाः ॥६४२॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे वृद्धिबन्धाधिकारे प्रथमं
सत्पदद्वारं समाप्तम् ॥



## ॥ स्वामित्वादीनि एकादश द्वाराणि ॥

तदेवं प्रथमं सत्पदद्वारं प्ररूपितम् । सम्प्रति लाघवार्थं स्वामित्वप्रमुखैकादशद्वारेष्वतिदिशति । तत्रादौ तावदष्टकर्मणामवस्थितावक्तव्यपदेऽतिदिशन्नाह—

**सामित्ताईसु तहा अट्ठण्ह अवट्ठिओ अवत्तव्वो ।**
**विण्णेयो जहविहिअं भूओगाराहिगारम्मि ॥६४३॥**

(प्रे०) 'सामित्ताईसु' इत्यादि, विनाऽल्पबहुत्वं स्वामित्वाद्येकादशद्वारेष्वष्टकर्मणामवक्तव्योऽवस्थितश्च तथा ज्ञातव्यो यथा भूयस्काराधिकारे विहितः । भूयस्काराधिकारे स्वामित्वादिद्वारेषु यद्यत्कर्मणोऽवस्थितोऽवक्तव्यश्च यथा प्ररूपितस्तथैवानुक्रमेणास्मिन्नधिकारे स्वामित्वादिद्वारेषु तत्तत्कर्मणो ज्ञातव्य इत्यर्थः । भूयस्काराधिकारीयस्वामित्वादिद्वारेषु अवस्थितावक्तव्यप्रदेशबन्धौ यासु मार्गणासु यथोक्तौ प्रकृतवृद्धिबन्धाधिकारीयस्वामित्वादिद्वारेष्वपि तास्वेव मार्गणासु तथैव भवतः, इति भूयस्काराधिकारस्थस्वामित्वादिद्वारीयावस्थितावक्तव्यप्ररूपणातो वृद्धिबन्धाधिकारगतस्वामित्वादिद्वारावस्थितावक्तव्यप्ररूपणायां न किञ्चिदपि वैशिष्ट्यम् । भूयस्कारवृद्धिबन्धाधिकारयोरल्पबहुत्वप्ररूपणा तु भिन्नैव । भूयस्काराधिकारे भूयस्कारादिचतुष्पदान्याश्रित्याल्पबहुत्वं परिभावितम्, अत्र तु असंख्यगुणवृद्धिप्रमुखदशपदान्यवलम्ब्य विभावयिष्यते ।

अत्र कश्चिदाह—नन्वस्मिन्नधिकारे सत्पदादिद्वारेषु अवस्थितावक्तव्यप्ररूपणाऽनुक्रमेण भूयस्काराधिकारीयसत्पदादिद्वारप्ररूपणायाः समानैव, अतोऽस्मिन्नधिकारे तयोः निरूपणं पिष्टपेषणमवलम्बते इति न कर्तव्यमिति चेद्, न, पूर्वमवस्थितावक्तव्यप्ररूपणा भूयस्काराल्पतराभ्यां सह कृता, इदानीं तु चतुर्विधवृद्धिचतुर्विधहानिपदैः सह क्रियते, अपि च तयोरल्पबहुत्वद्वारगतप्ररूपणा भूयस्काराधिकारीयाल्पबहुत्वद्वारप्ररूपणातो भिन्ना । ननु भवदुक्तयुक्त्याऽत्रावस्थितावक्तव्यप्ररूपणा कर्तव्या, परं सा सत्पदादिद्वादशद्वारेषु अनुक्रमेण भूयस्काराधिकारसत्पदादिद्वादशद्वाराणां प्ररूपणया सह साम्यं भजतीति ग्रन्थकृताऽत्र द्वादशद्वारेष्वनतिदिश्य कथं सत्पदद्वारं विहायैकादशद्वारेष्वेवातिदिष्टम् ? इति चेद्, सत्यम्, ग्रन्थकारप्रवृत्तेः विचित्रत्वान्न कश्चिद् दोषः ॥६४३॥

इदानीमष्टकर्मणां चतुर्विधां वृद्धिं हानिं चातिदिशन्नाह—

**भूओगाराप्पयरव्व कमाऽसंखगुणवड्ढिहाणीओ ।**
**णेया अवट्ठिअव्व उ सेसाउ तिवड्ढिहाणीओ ॥६४४॥**

(प्रे०) 'भूओगाराप्पयरव्व' इत्यादि, 'अष्टकर्मणा'-मिति 'स्वामित्वादिद्वारेषु' इति चानुवर्तते, स्वामित्वादिद्वारेषु अष्टकर्मणामसंख्यगुणा वृद्धिर्हानिश्चानुक्रमेण भूयस्कारवदल्पतरवच्च ज्ञातव्या । यथा भूयस्काराल्पतरौ बहुशः प्रवर्तेते, तथैवासंख्यगुणवृद्धिहान्यपि बहुशः प्रवर्तेते इत्यसंख्यगुणवृद्धेर्भूयस्कारेण समं साम्यम्, असंख्यगुणहानेश्चाल्पतरेण सह साम्यम्, अतोऽसंख्य-

गुणवृद्धिहानी यथासंख्यं भूयस्काराल्पतरवद् भवतः । 'अवट्ठिअव्व' इत्यादि, शेषास्तिस्रो वृद्धयस्तिस्रो हानयश्चावस्थितवद् ज्ञातव्याः । यथाऽवस्थितः कदाचित् प्रवर्तते तथैव शेषास्तिस्रो वृद्धयस्तिस्रो हानयश्च कदाचित् प्रवर्तन्ते इति शेषाणां त्रिवृद्धीनां त्रिहानीनां च साम्यम् । अतः शेषास्तिस्रो वृद्धयस्तिस्रो हानयश्चावस्थितवद् भवन्ति ॥६४४॥

सम्प्रति कालद्वारे शेषत्रिवृद्धिहानीनामुत्कृष्टकालातिदेशमोघत आदेशतश्चापवदति—

णवरोहाएसेहिं अट्ठण्ह भवे तिवड्ढिहाणीणं ।
तइए काले जेट्ठो आवलिआए असंखंसो ॥६४५॥

(प्रे०) 'णवरोहाएसेहिं' इत्यादि, नवरं तृतीये कालद्वारेऽष्टकर्मणामसंख्यगुणरूपवृद्धिहानिभ्यां विना शेषाणां संख्यगुणरूपादीनां त्रिवृद्धीनां त्रिहानीनां चोत्कृष्टः, 'कालः' इति गम्यते, ओघत आदेशतश्च 'आवलिकाऽसंख्याततमभागो' भवति ।

अत्रेदं हृदयम्—अत्रानन्तरगाथायां स्वामित्वादिद्वारेषु संख्यातगुणरूपादिकानां त्रिवृद्धीनां त्रिहानीनां च प्ररूपणाऽनुक्रमेण भूयस्काराधिकारीयस्वामित्वादिद्वारगतावस्थानप्ररूपणावद् भवतीत्यतिदिष्टम् । अतोऽत्र तासां जघन्य उत्कृष्टश्च कालोऽपि ओघत आदेशतश्च भूयस्काराधिकारीयकालद्वारेऽवस्थानस्य जघन्यत उत्कृष्टतश्च यावान् कालः प्ररूपितस्तावाननुक्रमेण भवति । अथ भूयस्काराधिकारगतकालद्वारे उत्कृष्टावस्थानकालः पञ्चदशैकादश वा समया भवति, अत्र शेषत्रिवृद्धिहानीनामुत्कृष्टावस्थानकालस्तु "आवलिकाऽसंख्यातभागः" भवति, तत्र योगवृद्धिहानीनामुत्कृष्टत आवलिकाऽसंख्यातभागकालं यावत्प्रवर्तमानत्वात् । एतच्चास्माभिः स्थानद्वारगतयोगप्ररूपणायां भूयस्काराधिकारीयकालद्वारे च निरूपितमेव । अतोऽत्र शेषत्रिवृद्धिहानीनामुत्कृष्टकालमपोदितवान् । जघन्यकालस्तु शेषत्रिवृद्धिहानीनामवस्थानस्य चैकसमयरूपः समान एवेति तं नापोदितवानिति ध्येयम् ॥६४५॥

साम्प्रतमन्तरद्वारेऽसंख्यभागवृद्धिहान्युत्कृष्टान्तरमोघत आदेशतश्च मतान्तरेण दर्शयन्नाह—

तुरिअंतरदारे गुरुमहव असंखंसवड्ढिहाणीणं ।
सत्तण्ह मुहुत्तंतो अगुरुपएसव्व आउस्स ॥६४६॥

(प्रे०) 'तुरिअंतरदारे गुरुमहव' इत्यादि, अथवा-मतान्तरेणासंख्यातभागवृद्धयसंख्यातभागहान्योरुत्कृष्टमन्तरं सप्तकर्माण्याश्रित्य 'अन्तर्मुहूर्तं' तथाऽऽयुराश्रित्य 'अनुत्कृष्टप्रदेशवत्'—आयुषोऽनुत्कृष्टप्रदेशबन्धस्य यावदन्तरं तावद् भवति । अत्रायं भावः—'भूओगाराप्पयरव्व' (६४४) इत्यादिगाथायां त्रिविधवृद्धिहान्यन्तरं भूयस्काराधिकारीयावस्थानान्तरवद् भवतीत्यतिदिष्टम् । भूयस्काराधिकारीयावस्थानस्योत्कृष्टान्तरमोघतः श्रेण्यसंख्यातभागः, आदेशतश्च कासुचिद् मार्गणासु श्रेण्यसंख्यातभागः, कासुचिच्च स्वस्वदेशोनकायस्थितिः भवति । अतोऽत्र 'भूओगाराप्पयरव्व' (गा.६४४)

इत्यादिगाथोक्तातिदेशेनाष्टकर्मणामसंख्यातभागवृद्धिहान्योरुत्कृष्टमन्तरमोघतः 'श्रेण्यसंख्यातभागः', तथाऽऽदेशतः कासुचिन्मार्गणासु 'श्रेण्यसंख्यातभागः,' कासुचिच्च 'स्वस्वदेशोनकायस्थितिः' भवति। परं मतान्तरेण सप्तकर्मणामसंख्यातभागवृद्ध्यसंख्यातभागहान्योरुत्कृष्टान्तरमन्तर्मुहूर्तं भवति, तथाऽऽयुषोऽसंख्यातभागवृद्धिहान्योस्तदन्तरमायुषोऽनुत्कृष्टप्रदेशबन्धस्य एकजीवविषयकमन्तरं यावद् दर्शितं तावद् भवतीत्यत्र 'तुरिअंतरदारे गुरुमहव' इत्यादिना मतान्तरेणापवादः प्रदर्शितः। मतान्तरेण सप्तकर्माण्याश्रित्य भावनैवम्–असंख्यातभागवृद्धेः कारणभूताया योगवृद्धेरन्तरस्योत्कृष्टतोऽन्तर्मुहूर्तप्रमाणत्वाद् विवक्षितसमये निवृत्ताऽसंख्यातभागयोगवृद्धिर्व्यतीतेऽन्तर्मुहूर्ते पुनरवश्यं प्रवर्तते। एवं योगहानिमाश्रित्यापि वक्तव्यम्। अतो मतान्तरेणासंख्यातभागवृद्धिहान्यन्तरम् 'अन्तर्मुहूर्तमात्रमेव' भवति।

मतान्तरेणायुराश्रित्य भावनैवम्–सप्तकर्मणां बन्धो ध्रुवः, परमायुषो बन्धोऽध्रुवः। अत आयुषोऽसंख्यातभागवृद्धिहान्यन्तरमायुर्बन्धान्तरमाश्रित्योपपद्यते। आयुर्बन्धान्तरं च भिन्नभिन्नमार्गणासु अनेकविधं प्राप्यते इत्यत्र तदनुत्कृष्टान्तरवद् भवतीत्युक्तम् ॥६४६॥

इदानीमनेकजीवविषयककालद्वारविषयकमपवादं प्रचिकटयिषुराह—

**दसमे कालदुआरे जहि संखखणा अवट्ठिअस्स गुरू।**
**आवलिआसंखंसो तहि अट्ठण्हं तिवड्ढिहाणीणं ॥६४७॥(गीतिः)**

(प्रे०) 'दशमे' इत्यादि, दशमेऽनेकजीवविषयककालद्वारे यत्र–यासु मार्गणासु अष्टानां कर्मणामवस्थितस्योत्कृष्टः, 'कालः' इति गम्यते, संख्यातसमयास्तत्र–तासु मार्गणासु अष्टानामपि कर्मणामसंख्यगुणवृद्धिं विना त्रिवृद्धीनामसंख्यगुणहानिमन्तरा त्रिहानीनां चानेकजीवविषयकोत्कृष्टकालः "आवलिकासंख्यातभागो" भवति। यासु मार्गणास्वनेकजीवविषयावस्थितोत्कृष्टकालः संख्यातसमयास्ता मार्गणा इमाः–पर्याप्तमनुष्यमानुष्यौ, सर्वार्थसिद्धः, आहारककायः, अवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमा इति दशमार्गणासु विनाऽऽयुः सप्तकर्मणाम्, तथा सूक्ष्मसम्पराये षट्कर्मणाम्, पर्याप्तमनुष्यमानुष्यौ, आनतप्रमुखसर्वार्थसिद्धपर्यन्ता अष्टादशदेवभेदाः, आहारककाययोगः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमाः, शुक्ललेश्या क्षायिकसम्यक्त्वं चेत्यष्टाविंशतिमार्गणासु आयुषोऽनेकजीवविषयकोत्कृष्टकालः संख्यातसमया भवति।

अत्रेयं भावना–पर्याप्तमनुष्यादिदशमार्गणासु सप्तकर्मणां तथा सूक्ष्मसम्पराये षट्कर्मणां, पर्याप्तमनुष्याद्यष्टाविंशतिमार्गणासु चायुषस्त्रिवृद्धीनां त्रिहानीनाञ्चैकजीवविषयकोत्कृष्टकालः आवलिकाऽसंख्यातभागो भवतीत्यनेकजीवविषयकोत्कृष्टकालः सुतरामावलिकासंख्यातभागः स्यात्। अत्रेदं ध्येयम्–पूर्वोक्तेन "णेया अवट्ठिमव्व उ सेसाउ तिवड्ढिहाणीओ" इत्यतिदेशेन पञ्चेन्द्रियतिर्यगोघादित्रिनवतिमार्गणासु सप्तकर्मणां त्रिवृद्धीनां त्रिहानीनां चोत्कृष्टकाल आवलिकाऽसंख्यातभागो भव-

तीति समुदितासु चतुरधिकशतमार्गणासु त्रिवृद्धीनां त्रिहानीनाञ्चोत्कृष्टकाल आवलिकाऽसंख्यात-भागो भवति । एवं नरकौघादिद्वासप्ततिमार्गणास्वायुषस्त्रिवृद्धित्रिहानीनामुत्कृष्टकाल आवलिका-ऽसंख्यातभागो भवतीति समुदितासु शतमार्गणास्वायुषस्त्रिवृद्धित्रिहानीनामुत्कृष्टकाल आवलिकाऽ-संख्यातभागो भवति ॥ ६४७ ॥

इदानीमादेशतः सप्तकर्मणामायुषश्चासंख्यातभागवृद्ध्यसंख्यातभागहान्योरनेकजीवविषयकमु-त्कृष्टमन्तरं मतान्तरेणापवदन् गाथाद्विकमाह—

अहवांतरमत्थि गुरुं जासु असंखंसवड्ढिहाणीणं ।
सत्तण्हेगारसमे अंतरदारे मुहुत्तंतो ॥६४८॥
संतरवज्जासु भवे तासुं सत्तण्ह संतरासु तहा ।
जत्थाउस्सऽत्थि तहिं अगुरुपएसव्व विण्णेयं ॥६४९॥

(प्रे०) 'अहवांतरमत्थि' इत्यादि, अथवा-मतान्तरेण एकादशेऽनेकजीवविषयकेऽन्तर-द्वारे यासु मार्गणासु सप्तकर्मणामसंख्यातभागवृद्ध्यसंख्यातभागहान्योरुत्कृष्टमन्तरमस्ति, यत्तदोर्नि-त्याभिसंबन्धादाह–'संतरवज्जासु भवे तासु' इति, या अपर्याप्तमनुष्यादिमार्गणाः सान्तरास्ता वर्जयित्वा तासु मार्गणासु सप्तकर्मणामसंख्यातभागवृद्ध्यसंख्यातभागहान्योरुत्कृष्टमन्तरं, 'मुहुत्तंतो' इति, अन्तर्मुहूर्तं भवति ।

अथ सान्तरमार्गणासु सप्तकर्मणां तथा संभाव्यमानतदन्तरासु मार्गणासु आयुषोऽसंख्यातभाग-वृद्धिहान्योरनेकजीवविषयमुत्कृष्टमन्तरमनेकजीवविषयकानुत्कृष्टप्रदेशबन्धोत्कृष्टान्तरवद् भवतीति तत्प्र-तिपादयन्नाह–'सत्तण्ह संतरासु' इत्यादि, सान्तरासु अपर्याप्तमनुष्यादिमार्गणासु सप्तकर्मणामसं-ख्यातभागवृद्धिहान्योरनेकजीवविषयकमुत्कृष्टमन्तरं तथाऽऽयुषो यासु मार्गणासु असंख्यातभागवृद्धि-हान्योरनेकजीवविषयकानुत्कृष्टमन्तरं संभवति तासु सर्वासु मार्गणासु तदन्तरमनेकजीवविषयकानुत्कृष्ट-प्रदेशबन्धोत्कृष्टान्तरवद् विज्ञेयम्, मतान्तरेऽसंख्यगुणवृद्ध्यादिवदसंख्यातभागवृद्धिहान्योरपि अने-कशः प्रवृत्तिस्वीकाराद् ।

ननु यदि मतान्तरेणासंख्यगुणवृद्ध्यादिवदसंख्यातभागवृद्धिहानी अनेकशः प्रवर्तेते तर्हि यासु असंख्यलोकाकाशप्रदेशेभ्यो न्यूना जीवास्तासु निरन्तरासु पर्याप्तमनुष्यादिमार्गणासु असंख्य-गुणवृद्ध्यादीनामन्तरं नास्ति, असंख्यभागवृद्धिहान्योस्त्वन्तरं वर्तते इति कथमिदं वैषम्यम् ? इति चेद्, उच्यते, असंख्यगुणवृद्ध्यादीनामेकजीवविषयकोत्कृष्टबन्धकालोऽन्तर्मुहूर्तम्, असंख्यभाग-वृद्धिहान्योस्तवृत्बन्धकाल आवलिकासंख्यातभागः, इति असंख्यगुणवृद्ध्यादीनां बन्धकालस्याधिकत्वा-दन्तराभावः, असंख्यभागवृद्धिहान्योर्बन्धकालस्य न्यूनत्वादन्तरं भवति ॥६४८।६४९॥

## ॥ द्वितीयं स्वामित्वद्वारम् ॥

तदेवं स्वामित्वप्रमुखैकादशद्वारेषु सापवादमतिदिष्टम् । अत इदानीमस्माभिः सापवादातिदेशमवलम्ब्यौघत आदेशतश्च स्वामित्वादिद्वारप्ररूपणा क्रमश उल्लिख्यते । तत्रादौ स्वामित्वद्वारं प्ररूप्यते । तत्राप्यादावोघतश्चिन्त्यते । अष्टानामपि कर्मणां वृद्धिचतुष्कहानिचतुष्कस्वामित्वमेवम्—असंख्यगुणयोगवृद्धिप्रमुखतत्तत्पदकारणं प्राप्तश्चतुर्दशजीवभेदेष्वन्यतमो जीवोऽष्टकर्मणां चतुर्विधवृद्धिं चतुर्विधहानिं च विधातुमर्हति । आदेशतोऽष्टकर्मणां वृद्धिचतुष्कहानिचतुष्कस्वामित्वमेवम्—सर्वासु मार्गणासु अष्टकर्मणां तत्तन्मार्गणायां सम्भाव्यमानानामसंख्यगुणवृद्धिप्रमुखपदानां स्वामी ओघवद् मार्गणावर्त्यन्यतमो जीवो भवति । तच्चानन्तरमेवोक्तम् ।

अत्रेदं बोध्यम्—अस्माभिरत्रावस्थितावक्तव्यपदे विहायासंख्यगुणवृद्धिप्रमुखाष्टपदानामेव निरूपणं विधास्यते । अवस्थितावक्तव्यपदनिरूपणं तु सर्वद्वारेषु भूयस्काराधिकारीयतत्तद्द्वारगतावस्थानावक्तव्यनिरूपणवदेवेत्यत्र न विधास्यते । सर्वद्वारेषु भावना भूयस्काराधिकारीयतत्तद्द्वारे प्रदर्शितेनाऽध्वना स्वयमेव विधेया, ग्रन्थविस्तरभयादत्रास्माभिर्नोच्यते । परमिदं न विस्मर्तव्यम्—अपवादं विहायासंख्यगुणवृद्धौ भूयस्कारवद्, असंख्यगुणहानावल्पतरवद् शेषत्रिवृद्धित्रिहानिष्ववस्थितवद् विभावयितव्यम् । तत्तद्द्वारेषु यो विशेषः स यथास्थानं व्यक्तीभविष्यति ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे चतुर्थे वृद्धिबन्धाधिकारे द्वितीयं
स्वामित्वद्वारं समाप्तम् ॥

## ॥ तृतीयं कालद्वारम् ॥

अथादावोघतः कालश्चिन्त्यते । अष्टकर्मणामसंख्यगुणवृद्ध्याद्यष्टपदानां जघन्यकालः 'एकसमयः' भवति । अथोत्कृष्टकाल एवम्—अष्टकर्मणामसंख्यगुणा वृद्धिर्हानिश्च 'अन्तर्मुहूर्तं' यावद् भवति, स्वस्वकारणभूताया असंख्यगुणाया योगस्य वृद्धेर्हानेश्चान्तर्मुहूर्तं यावत् सद्भावाद् । अष्टकर्मणां शेषास्तिस्रो वृद्धयो हानयश्च 'आवलिकाऽसंख्यातभागं' यावद् भवन्ति । अत्र हेतुस्तु कालद्वारविषयकापवादगाथायां प्रदर्शित एव । अथादेशतः सर्वमार्गणा आश्रित्यैवम्—यस्यां मार्गणायां यावन्ति कर्माणि बध्यन्ते यावन्ति च तत्तत्कर्मणोऽसंख्यगुणवृद्धिप्रमुखपदानि सम्भवन्ति, तस्यां मार्गणायां तावतां कर्मणां तावतां पदानां जघन्य उत्कृष्टश्च कालः "ओघवद्" भवति । नवरमत्रायमपवादः—वैक्रियमिश्राहारकमिश्रकाययोगयोः सप्तकर्मणामसंख्यगुणवृद्धेर्जघन्यकालः 'अन्तर्मुहूर्तं' ज्ञातव्यः । कार्मणकायानाहारकयोः सप्तकर्मणामसंख्यगुणवृद्धेरुत्कृष्टकालः "द्वौ समयौ" ज्ञातव्यः ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे वृद्धिबन्धाधिकारे तृतीयं कालद्वारं समाप्तम् ॥

## ॥ चतुर्थमन्तरद्वारम् ॥

अथान्तरं प्रदर्श्यते । तत्र प्रथमं तावदोघतश्चिन्त्यते । अष्टकर्मणामसंख्यगुणवृद्धिप्रमुखाष्टपदानां जघन्यमन्तरम् "एकसमयः" भवति । अत्रास्माभिरवस्थितावक्तव्यौ विनाऽष्टपदानामेव निरूपणं साम्प्रदायिकातिदेशानुसारेणारब्धमिति न विस्मर्तव्यम् । अथोत्कृष्टान्तरमेवम्–अष्टकर्मणां संख्यातगुणवृद्धिहानिसंख्यातभागवृद्धिहानीनामेकमतेनासंख्यातभागवृद्ध्यसंख्यातभागहान्योरपि श्रेण्यसंख्यातभागः, असंख्यगुणवृद्धिहान्योस्तथाऽन्यमतेनासंख्यभागवृद्धिहान्योरप्यन्तर्मुहूर्तम् ।

अथादेशतोऽन्तरं प्रतिपाद्यते । तत्रादौ सप्तकर्माण्याश्रित्योच्यते–वैक्रियमिश्राहारकमिश्रयोः, कार्मणकायेऽनाहारके चेति चतुर्मार्गणास्वसंख्यगुणवृद्धेरन्तराभावः, मार्गणाप्रथमसमयाच्चरमसमयं यावदसंख्यगुणवृद्धेरेव प्रवर्तमानत्वाद् । शेषासु षट्षष्ट्यधिकशतमार्गणास्वसंख्यगुणवृद्धिहान्योरन्तरं तथाऽसंख्यभागवृद्धिहान्योस्त्वेकमतेन तद् जघन्यमेकसमयः उत्कृष्टमन्तर्मुहूर्तम् । अथ संख्यातगुणवृद्धिहानिसंख्यातभागवृद्धिहानीनामन्यमतेनासंख्यातभागवृद्ध्यसंख्यातभागहान्योरपि अन्तरमेवम्–वैक्रियमिश्रादिचतुर्मार्गणा विहाय सर्वमार्गणासु जघन्यमन्तरम् 'एकसमयः' । उत्कृष्टमन्तरमेवम्–तिर्यगोघः, एकेन्द्रियौघः, पृथिव्यप्तेजोवायुवनस्पतिकायलक्षणपञ्चकायौघभेदाः, निगोदौघः, सूक्ष्मैकेन्द्रियः, सूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, काययोगौघः, नपुंसकवेदः, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, भव्याभव्यौ, मिथ्यात्वमसंज्ञी चेति चतुर्विंशतिमार्गणासु 'श्रेण्यसंख्यातभागः', पञ्चमनःपञ्चवचनवैक्रियाहारककाययोगाः, अवेदः, कषायचतुष्कं, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयमं विना षट्संयममार्गणाः, अवधिदर्शनं, मिथ्यात्वमन्तरा षट्सम्यक्त्वमार्गणाश्चेति पञ्चत्रिंशन्मार्गणासु 'त्रिसमयन्यूना स्वस्वोत्कृष्टकायस्थितिः,' तिर्यगोघं विना सर्वगतिभेदाः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियौ विना सप्तदशेन्द्रियभेदाः, बादरपृथिव्यप्तेजोवायुनिगोदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, अपर्याप्तबादरपृथिव्यप्तेजोवायुनिगोदाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेत्येकत्रिंशत्कायमार्गणाभेदाः, औदारिकद्विकं, स्त्रीपुरुषवेदौ, चक्षुर्दर्शनम्, लेश्याषट्कं, संज्ञी आहारकश्चेति सप्ताधिकशतमार्गणासु 'अन्तर्मुहूर्तन्यूना स्वोत्कृष्टकायस्थितिः' उत्कृष्टान्तरं भवति ।

अथायुराश्रित्यादेशतोऽन्तरप्ररूपणैवम्–आहारकमिश्रमार्गणायामन्तराभावात् तां विना द्विषष्टिशतमार्गणासु असंख्यगुणवृद्धिप्रमुखाष्टपदानां जघन्यमन्तरम् "एकसमयः" । अथोत्कृष्टमन्तरमेवम्–समस्तनरकभेदाः, सर्वदेवगतिभेदाः, निखिललेश्याभेदाश्चेति चतुश्चत्वारिंशन्मार्गणासु 'देशोनषण्मासाः,' औदारिके पृथ्वीकायस्थितेर्देशोनतृतीयभागः, मनःपर्यवज्ञानम्, संयमः, सामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतय इति षण्मार्गणासु 'देशोनपूर्वकोटित्रिभागः,' विभङ्गज्ञाने

"देशोनस्वोत्कृष्टकायस्थितिः देशोनषण्मासा वा," पञ्चमनःपञ्चवचनानि, औदारिकमिश्रकायः, वैक्रियाहारककायौ, कषायचतुष्कं सास्वादनं चेत्यष्टादशमार्गणासु 'अन्तर्मुहूर्त्तम्', असंख्यगुणवृद्धि-प्रमुखाष्टपदानामुत्कृष्टान्तरं भवति ।

अथ शेषमार्गणासु संख्यातगुणभागवृद्धिहानीनां तथैकमतेनासंख्यातभागवृद्धिहान्योरपि अन्तरमेवम्--तिर्यगोघः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियौ, पृथ्व्यप्तेजोवायुवनस्पतिकायौघाः, निगोदौघः, सूक्ष्मपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायाः, काययोगौघः, नपुंसकवेदः, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, भव्याभव्यौ, मिथ्यात्वमसंज्ञी चेति चतुर्विंशतिमार्गणासु 'श्रेण्यसंख्यातभागः', तिर्यक्पञ्चेन्द्रियौघपर्याप्ततिर्यक्पञ्चेन्द्रियापर्याप्ततिर्यक्पञ्चेन्द्रियतिरश्च्यः, चत्वारो मनुष्यभेदा-श्चेत्यष्टौ गतिभेदाः, एकेन्द्रियौघसूक्ष्मैकेन्द्रियौ विना सप्तदशेन्द्रियभेदाः, बादरपृथ्व्यप्तेजोवायुनि-गोदाः, पर्याप्तबादरपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुसाधारण-वनस्पतिकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुनिगोदाः--प्रत्ये-कवनस्पतिकायत्रिकं त्रसत्रिकं चेत्येकत्रिंशत्कायभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिज्ञानानि, चक्षुर-वधिदर्शने, सम्यक्त्वौघक्षायोपशमिकक्षायिकसम्यक्त्वानि, संज्ञी आहारकश्चेत्यष्टषष्टिमार्गणासु 'देशो-नस्वोत्कृष्टकायस्थितिः' आयुषः संख्यातगुणवृद्धिहानिसंख्यातभागवृद्धिहानीनां तथैकमतेनाऽसंख्या-तभागवृद्धिहान्योरप्युत्कृष्टान्तरं भवति ।

अथ शेषमार्गणासु असंख्यातगुणवृद्धिहान्योरन्यमतेनासंख्यातभागवृद्धिहान्योश्चान्तरमेवम्--सर्वतिर्यग्गतिभेदाः, सर्वमनुष्यगतिभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ विना सप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना चत्वारिंशत्कायभेदाः इति षड्त्तरषष्टिमार्गणासु "साधिकस्वोत्कृष्टभव-स्थितिः", काययोगौघे "देशोनत्रिभागाधिकोत्कृष्टपृथिवीभवस्थितिः," स्त्रीवेदे "साधिकपञ्च-पञ्चाशत्पल्योपमाः," असंज्ञिनि "साधिकपूर्वकोटिः," पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्या-प्तत्रसौ, पुरुषनपुंसकवेदौ, मतिश्रुतावधिज्ञानानि, मतिश्रुताज्ञाने, असंयमः, दर्शनत्रिकं, भव्या-भव्यौ, सम्यक्त्वौघक्षायिकक्षायोपशमिकमिथ्यात्वानि, संज्ञी आहारकश्चेति त्रयोविंशतिमार्गणासु "किञ्चिन्न्यूनप्रथमभवत्रिभागाधिकत्रयस्त्रिंशत्सागरोपमाः," । असंख्यातगुणासंख्यातभागवृद्धिहा-नीनां तथैकमतेनाऽसंख्यातभागवृद्धिहान्योरप्युत्कृष्टान्तरं भवतीति सर्वत्र योज्यम् । अत्र संख्यात-गुणसंख्यातभागवृद्धिहान्यन्तरभावनाऽवस्थितवद्, असंख्यातगुणवृद्धयन्तरभावना भूयस्कारवदसंख्य-गुणहान्यन्तरभावना चाल्पतरवद् विधेया । तथाऽसंख्यातभागवृद्धिहान्यन्तरभावना मूलगाथानिर्दि-ष्टमतद्वयमाश्रित्य विधेया ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते मूलप्रकृति-
प्रदेशबन्धे वृद्धिबन्धाधिकारे
चतुर्थमन्तरद्वारं समाप्तम् ॥

## ॥ पञ्चमं भङ्गविचयद्वारम् ॥

अथ भङ्गविचयोल्लेखावसरः । तत्र आदौ तावदोघतः प्रतिपाद्यते । अष्टानामपि कर्मणामसंख्यगुणवृद्धिप्रमुखान्यष्टावपि पदान्यवश्यं भवन्ति । अथादेशत उच्यते । तत्र सप्तकर्माण्याश्रित्यैवम्—अपर्याप्तमनुष्यः, आहारककाययोगः, अवेदः, छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमाः, उपशममिश्रसास्वादनानि चेति नवमार्गणासु असंख्यगुणवृद्धिहानी भजनीये, वैक्रियमिश्राहारकमिश्रयोरसंख्यगुणवृद्धिर्भजनीया । कार्मणकायानाहारकयोरसंख्यगुणवृद्धिरवश्यं भवति । शेषासु सप्तपञ्चाशदधिकशतमार्गणासु असंख्यगुणवृद्धिहानी सर्वदा भवतः ।

अथ सप्तकर्माण्याश्रित्य शेषत्रिवृद्धिहानिभङ्गविचय एवम्—तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, द्वादशकायसूक्ष्मभेदाः, पृथ्व्यप्तेजोवायुवनस्पतिकायौघाः, बादरपृथिव्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथिव्यप्तेजोवायुकायाः प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्चेति द्वाषष्टिमार्गणासु शेषत्रिवृद्धिहानयोऽवश्यं प्रवर्तन्ते । तिर्यगोघं विना षट्चत्वारिंशद्गतिभेदाः, निखिलविकलपञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः, त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियकायः आहारककायश्चेति द्वादशयोगभेदाः, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिमनःपर्यवज्ञानानि, विभङ्गज्ञानम्, असंयममन्तरा षट्संयममार्गणाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट्सम्यक्त्वमार्गणाः, संज्ञी चेति चतुरुत्तरशतमार्गणासु शेषत्रिवृद्धिहानयो भजनीया भवन्ति । वैक्रियमिश्रादिचतुर्मार्गणासु शेषत्रिवृद्धिहानयो न सम्भवन्तीति ध्येयम् । अथायुराश्रित्योच्यते । उपर्युक्ततिर्यगोघादिद्वाषष्टिमार्गणासु चतस्रोऽपि वृद्धयो हानयश्चावश्यं भवन्ति । अवेदसूक्ष्मसम्परायोपशममिश्रैर्विनोपर्युक्तशतमार्गणासु चतस्रोऽपि वृद्धिहानयो भजनीया ज्ञातव्याः । आहारकमिश्रेऽसंख्यातगुणवृद्धिर्भजनीया ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे चतुर्थे वृद्धिबन्धाधिकारे पञ्चमं भङ्गविचयद्वारं समाप्तम् ॥



## ॥ षष्ठं भागद्वारम् ॥

सम्प्रति भागद्वारप्रदर्शनावसरः । तत्रादौ तावदोघतश्चिन्त्यते । अष्टकर्मणां प्रदेशबन्धस्यासंख्यगुणवृद्धिविधायका जीवाः "साधिकद्वितीयभागः" असंख्यगुणहानिविधायका "देशोनार्धभागः," शेषत्रिवृद्धित्रिहानिविधायकाः "असंख्यातभागः" भवन्ति । अथादेशतो निरूप्यते । तत्रादौ सप्तकर्माण्याश्रित्यैवम्—वैक्रियमिश्राहारकमिश्रकार्मणकायानाहारकेषु असंख्यगुणवृद्धिविधायकाः 'सर्वभागाः,' शेषासु असंख्यगुणवृद्धिविधायकाः "साधिकद्वितीयभागः," असंख्यगुणहानिविधायका "देशोनार्धभागः" भवन्ति । अथ सप्तकर्माण्याश्रित्य शेषत्रिवृद्धिहानीनां भाग एवम्—पर्याप्तमनुष्यमानुष्यौ, सर्वार्थसिद्धः, आहारककायः, अवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमाश्चेत्येकादशमार्गणासु 'संख्याततमभागः', शेषासु पञ्चपञ्चाशदुत्तरशतमार्गणासु "असंख्याततमभागः" शेषत्रिवृद्धित्रिहानिविधायका जीवा भवन्ति ।

अथायुराश्रित्यादेशतः प्ररूप्यते । तत्रासंख्यगुणवृद्धिहानिविधायकानां भाग एवम्—आहारकमिश्रयोगेऽसंख्यगुणवृद्धिविधायकाः 'संख्याता बहुभागाः,' शेषासु द्वाषष्टिशतमार्गणासु असंख्यगुणवृद्धिविधायकाः "साधिकद्विभागः," असंख्यगुणहानिविधायकाः देशोनार्धभागः" भवन्ति । अथ शेषत्रिवृद्धिहानिविधायकानां भाग एवम्—पर्याप्तमनुष्यमानुष्यौ, आनतप्रमुखसर्वार्थसिद्धपर्यन्ता अष्टादशदेवभेदाः, आहारककायः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमाः, शुक्ललेश्या क्षायिकसम्यक्त्वं चेत्यष्टाविंशतिमार्गणासु "संख्यातभागः," सर्वनरकभेदाः; सर्वतिर्यग्भेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्मप्रमुखाष्टवैमानिकभेदाश्चेति सप्तविंशतिगतिभेदाः, निखिलेन्द्रियमार्गणाः, कृत्स्नकायभेदाः, आहारकद्विकमृते सर्वयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, मनःपर्यवज्ञानमन्तरा षड् ज्ञानमार्गणाः, देशविरत्यसंयमौ, दर्शनत्रिकं, शुक्ललेश्यां विहाय पञ्चलेश्याः, भव्याभव्यौ, सम्यक्त्वौघक्षायोपशमिकसास्वादनमिथ्यात्वानि, संज्ञी, असंज्ञी आहारकश्चेति चतुस्त्रिंशदधिकशतमार्गणासु "असंख्याततमभागः" आयुषः शेषत्रिवृद्धिहानिविधायका जीवा भवन्ति ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे चतुर्थे वृद्धिबन्धाधिकारे षष्ठं भाग-
द्वारं समाप्तम् ॥



## ॥ सप्तमं परिमाणद्वारम् ॥

इदानीं परिमाणप्ररूपणा क्रियते । तत्रादौ तावदोघतः प्रतिपाद्यते । अष्टकर्मणामसंख्यगुणवृद्ध्याद्यष्टपदविधायका जीवाः प्रत्येकम् 'अनन्ताः' भवन्ति । अथादेशतः प्ररूप्यते । तत्र सप्तकर्माण्याश्रित्यैवम्—तिर्यगोघः, समस्तैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, वनस्पतिकायौघः, काययोगौघः, औदारिकद्विकं, कार्मणकायः, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अशुभलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकानाहारकौ चेत्यष्टात्रिंशन्मार्गणासु 'अनन्ताः,' पर्याप्तमनुष्यमानुष्यौ, सर्वार्थसिद्धः, आहारकद्विकम्, अवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमाश्चेति द्वादशमार्गणासु 'संख्याताः,' सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, सर्वार्थसिद्धं विना निखिलदेवभेदाश्चेति त्रयश्चत्वारिंशद्गतिभेदाः, अखिलविकलपञ्चेन्द्रियभेदाः, निखिलपृथिव्यप्तेजोवायुकायभेदाः, प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेति चतुस्त्रिंशत्कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियवैक्रियमिश्रकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, विना मिथ्यात्वं षट्सम्यक्त्वमार्गणाः, संज्ञी चेति विंशत्युत्तरशतमार्गणासु 'असंख्याताः' वृद्धिचतुष्कहानिचतुष्कविधायका जीवाः प्रत्येकं भवन्ति । नवरं वैक्रियमिश्रादिचतुर्मार्गणासु असंख्यगुणवृद्धिविधायकानामेव जीवानां परिमाणं बोध्यम् ।

अथायुराश्रित्यादेशतः परिमाणं निगद्यते—पर्याप्तमनुष्यमानुष्यौ, आनतप्राणतारणाच्युतनवग्रैवेयकपञ्चानुत्तरदेवाः, आहारकद्विकं, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमाः, शुक्ललेश्या क्षायिकसम्यक्त्वं चेति नवविंशतिमार्गणासु संख्याताः, तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, वनस्पतिकायौघः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, चतुष्कषायाः, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी, आहारकश्चेति षट्त्रिंशन्मार्गणासु "अनन्ताः," सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्मप्रमुखाष्टवैमानिकदेवभेदाश्चेति षड्विंशतिगतिभेदाः, निखिलविकलपञ्चेन्द्रियभेदाः, वनस्पतिकायौघसप्तनिगोदभेदैर्विना चतुस्त्रिंशत्कायभेदाः, पञ्चमनःपञ्चवचनवैक्रियकाययोगाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघक्षायोपशमिकसास्वादनसम्यक्त्वानि संज्ञी चेत्यष्टानवतिमार्गणासु 'असंख्याताः' आयुषो वृद्धिचतुष्कहानिचतुष्कविधायका जीवाः प्रत्येकं भवन्ति । नवरमाहारकमिश्रेऽसंख्यगुणवृद्धिविधायकानामेव परिमाणं ज्ञेयम् ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे
चतुर्थे वृद्धिबन्धाधिकारे सप्तमं
परिमाणद्वारं समाप्तम् ॥

## ॥ अष्टमं क्षेत्रद्वारम् ॥

साम्प्रतं क्षेत्रद्वारं निरूप्यते । तत्रादौ तावदोघतः परिभाव्यते । अष्टकर्मणामसंख्यगुणवृद्धिप्रभृत्यष्टपदविधायका जीवाः प्रत्येकं "सर्वलोके" वर्तन्ते । अथादेशत उच्यते । तत्र सप्तकर्माण्याश्रित्यैवम्—तिर्यगोघः, सर्वैकेन्द्रियभेदाः, सप्तनिगोदभेदाः, पृथिव्यप्तेजोवायुवनस्पतिकायौघाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुकायाः, बादरपृथिव्यप्तेजोवायुकायाः, बादरापर्याप्तपृथिव्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, कार्मणकायः, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञानद्विकम् , असंयमः, अचक्षुर्दर्शनम् , अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी आहारकानाहारकौ चेति चतुःषष्टिमार्गणासु 'समस्तलोकः', बादरपर्याप्तवायुकाये देशोनलोकः, निखिलनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियाः, सर्वमनुष्यभेदाः, सर्वदेवभेदाः सर्वद्वित्रिचतुष्पञ्चेन्द्रियभेदाः, बादरपर्याप्तपृथिव्यप्तेजःकायाः, पर्याप्तप्रत्येकवनस्पतिकायः त्रसत्रिकं चेति सप्तकायभेदाः, पञ्चमन पञ्चवचनवैक्रियद्विकाहारकद्विकानि, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयममन्तरा षट्संयममार्गणाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट्सम्यक्त्वमार्गणाः संज्ञी चेति पञ्चोत्तरशतमार्गणासु 'लोकासंख्यातभागः,' क्षेत्रं सप्तकर्मणां यथा सम्भवं वृद्धिचतुष्कहानिचतुष्कविधायकानां प्रत्येकं जीवानां भवति ।

अथायुराश्रित्यैवम्—तिर्यगोघः, एकेन्द्रियौघः, सूक्ष्मैकेन्द्रियत्रिकं, पृथिव्यप्तेजोवायुवनस्पतिकायौघाः, निगोदौघः, सूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायाश्चेत्येकविंशतिकायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम् , अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी आहारकश्चेति षट्चत्वारिंशन्मार्गणासु सम्पूर्णलोकः, बादरैकेन्द्रियत्रिके बादरवायुकायत्रिके च 'देशोनलोकः,' तिर्यगोघं विना षट्चत्वारिंशद्गतिभेदाः, निखिलविकलपञ्चेन्द्रियभेदाः, बादरपृथिव्यप्तेजःसाधारणवनस्पतिकायाः, बादरपर्याप्तपृथ्व्यप्तेजोनिगोदाः, अपर्याप्तबादरपृथिव्यप्तेजोनिगोदाः, प्रत्येकवनस्पतिकायत्रिकं त्रसत्रिकं चेत्यष्टादश कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियकाय आहारकद्विकं चेति त्रयोदश योगभेदाः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, संयमौघसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाः, चक्षुरवधिदर्शने, शुभलेश्यात्रिकं, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनानि संज्ञी चेत्येकादशोत्तरशतमार्गणासु "लोकासंख्यातभागः" क्षेत्रमायुषो यथासम्भवं वृद्धिचतुष्कहानिचतुष्कविधायकानां प्रत्येकं जीवानां भवति ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे चतुर्थे वृद्धिबन्धाधिकारेऽष्टमं क्षेत्रद्वारं समाप्तम् ॥

## ॥ अथ नवमं स्पर्शनाद्वारम् ॥

अधुना स्पर्शना प्रदर्श्यते । तत्र प्रथमं तावदोघतो विभाव्यते । अष्टकर्मणामसंख्यगुणवृद्धि-अवक्तव्यपदविधायकानां प्रत्येकं जीवानां "सर्वलोकः" स्पर्शना भवति । अथादेशतः प्रतिपाद्यते । तत्र सप्तकर्माण्याश्रित्यैवम्—द्वितीयादिषण्नरकेषु देशविरतौ चालुकमेण "एका, द्वे, तिस्रः, चतस्रः, पञ्च,पञ्च रज्जवः," नरकौघसप्तमनरकयोः, आनतप्रमुखाच्युतान्तामरभेदेषु, शुक्ललेश्यायां च "षड् रज्जवः," सनत्कुमारादिसहस्रारपर्यन्तविबुधेषु, मतिश्रुतावधिज्ञानेषु, अवधिदर्शने, पद्मलेश्यायां, सम्यक्त्वौघक्षायिकक्षायोपशमिकौपशमिकसम्यक्त्वेषु मिश्रे चेति षोडशमार्गणासु अष्टौ रज्जवः, देवौघे, भवनपत्यादीशानपर्यन्तविबुधेषु तेजोलेश्यायां च "नवरज्जवः," वैक्रियकाययोगे 'त्रयोदशरज्जवः' सास्वादनमार्गणायां द्वादश रज्जवः," प्रथमनरकः, नवग्रैवेयकपञ्चानुत्तरदेवभेदाः, वैक्रियमिश्रः, आहारकद्विकम् , अवेदः, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायसंयमाश्चेति पञ्चविंशतिमार्गणासु "लोकासंख्यातभागः," सर्वतिर्यग्भेदाः, समग्रमनुष्यभेदाः, समस्तेन्द्रियभेदाः, कृत्स्नकायभेदाः, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिकद्विकं कार्मणकायश्चेति चतुर्दशयोगभेदाः, वेदत्रिकं, कषायचतुष्कम् , अज्ञानत्रिकम् , असंयमः, चक्षुरचक्षुर्दर्शने, अशुभलेश्यात्रिकं, भव्याभव्यौ. मिथ्यात्वम् , संज्ञ्यसंज्ञिनौ आहारकानाहारकौ चेति सप्तोत्तरशतमार्गणासु 'सर्वलोकः' । सप्तकर्मणां वृद्धिचतुष्कहानिचतुष्कविधायकानां प्रत्येकं जीवानां स्पर्शना भवतीति यथासम्भवं सर्वत्र योजनीयम् ।

अथायुराश्रित्य स्पर्शनैवम्—सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, निखिलमनुष्यमार्गणाः, नवग्रैवेयकपञ्चानुत्तरदेवभेदाः, सर्वविकलेन्द्रियभेदाः, अपर्याप्तपञ्चेन्द्रियः, बादरपृथिव्यप्तेजोनिगोदाः, पर्याप्तबादरपृथिव्यप्तेजोनिगोदाः, अपर्याप्तबादरपृथ्व्यप्तेजःसाधारणवनस्पतिकायाः, प्रत्येकवनस्पतिकायत्रिकमपर्याप्तत्रसश्चेति षोडश कायमार्गणाः, आहारकद्विकं, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिदेशविरतिसंयमाश्चेति त्रिषष्टिमार्गणासु "लोकासंख्यातभागः," नवरमाहारकमिश्रेऽसंख्यगुणवृद्धिविधायकानामेव यथोक्तस्पर्शना भवति । बादरैकेन्द्रियत्रिके बादरवायुकायत्रिके च देशोनलोकः, आनताद्यच्युतान्तचतुर्देवभेदेषु शुक्ललेश्यायां च 'षड्भागाः,' देवौघभवनपतिप्रमुखसहस्रारपर्यन्ता द्वादश देवभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, वैक्रियकाययोगः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघक्षायिकक्षायोपशमिकसास्वादनसम्यक्त्वानि, संज्ञी चेति द्विचत्वारिंशन्मार्गणासु "अष्टभागाः," तिर्यगोघः, एकेन्द्रियौघः, सूक्ष्मैकेन्द्रियत्रिकं, पृथिव्यप्तेजोवायुवनस्पतिकायौघाः, साधारणवनस्पतिकायौघः, सूक्ष्मपृथ्व्यप्तेजोवायुसाधारणवनस्पतिकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोदाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायाश्चेत्येकविंशतिकायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषाय-

चतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अशुभलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्चेति षट्चत्वारिंशन्मार्गणासु "विषमविषम्," आयुःकर्मणो वृद्धिचतुष्कहानिचतुष्कविधायकानां प्रत्येकं जीवानां स्पर्शना भवतीति सर्वत्र योजनीयम्।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे
चतुर्थे वृद्धिबन्धाधिकारे नवमं स्पर्शनाद्वारं समाप्तम् ॥



## ॥ दशमं कालद्वारम् ॥

अथानेकजीवविषयकं दशमं कालद्वारं निरूप्यते। तत्रादौ तावदोघतः प्ररूप्यते। अष्टकर्मणां वृद्धिचतुष्कहानिचतुष्कविधायकानां कालः 'सर्वाद्धा' ज्ञातव्यः। अथादेशत उच्यते। तत्र सप्तकर्माण्याश्रित्यासंख्यगुणवृद्धयसंख्यगुणहानिविधायकानां काल एवम्-अपर्याप्तमनुष्यं विना षट्चत्वारिंशद्गतिभेदाः, निखिलेन्द्रियभेदाः, समकायभेदाः, वैक्रियमिश्रमाहारकद्विकं च विना पञ्चदशयोगभेदाः, वेदत्रिकं, कषायचतुष्कं, समस्तज्ञानमार्गणाः. संयमौघसामायिकदेशविरत्यसंयमाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, सम्यक्त्वौघवेदकक्षायिकमिथ्यात्वानि, संज्ञी, असंज्ञी आहारकानाहारकौ चेति नवपञ्चाशदधिकशतमार्गणासु "सर्वाद्धा"। अथ शेषमार्गणासु जघन्यकाल एवम्-वैक्रियमिश्राहारकमिश्रयोः असंख्यगुणवृद्धिविधायकानाम् "अन्तर्मुहूर्तम्", अपर्याप्तमनुष्यः, आहारककाययोगः, अवेदः, सूक्ष्मसम्परायसंयमः, उपशमसास्वादनसम्यक्त्वे मिश्रश्चेति सप्तमार्गणासु असंख्यगुणवृद्धयसंख्यगुणहानिविधायकानां "एकसमयः" जघन्यकालो भवति। छेदोपस्थापनीयपरिहारविशुद्धिमार्गणयोः जघन्यकालो अनुत्कृष्टप्रदेशबन्धवद् ज्ञेयः। अथ शेषैकादशमार्गणासूत्कृष्टकाल एवम्-अपर्याप्तमनुष्यः, वैक्रियमिश्रकाय उपशमसास्वादनसम्यक्त्वे मिश्रश्चेति पञ्चमार्गणासु "पल्योपमासंख्यातभागः," छेदोपस्थापनीयसंयमे पञ्चाशल्लक्षकोटिसागरोपमाः, आहारकद्विके, अपगतवेदे सूक्ष्मसम्पराये च 'अन्तर्मुहूर्तम्," परिहारसंयमे "अष्टपञ्चाशद्वर्षन्यूनद्विपूर्वकोटी"। असंख्यातगुणवृद्धयसंख्यगुणहानिविधायकानामुत्कृष्टकालो भवतीति सर्वत्र योज्यम्।

अथ सप्तकर्माण्याश्रित्य शेषत्रिवृद्धित्रिहानिविधायकानां काल एवम्-तिर्यगोघः, सर्वैकेन्द्रियभेदाः, पृथ्व्यप्तेजोवायुवनस्पतिकायौघाः, सर्वनिगोदभेदाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, बादरपृथ्व्यप्तेजोवायुकायाः अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघाऽपर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायमार्गणाः; काययोगौघः, औदारिककायः, औदारिकमिश्रकाययोगः, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी अनाहारकश्चेति द्विषष्टिमार्गणासु 'सर्वाद्धा'। वैक्रियमिश्रादिचतुर्मार्गणासु शेषत्रिवृद्धिहानीनामसम्भ-

वात् द्विषष्टिमार्गणासु चोक्तत्वात् शेषासु चतुरधिकशतमार्गणासु सप्तकर्मणां शेषत्रिवृद्धिहानीनां जघन्य उत्कृष्टश्च कालोऽनुक्रमेणैकसमयः आवलिकासंख्यातभागश्च भवति। शेषाः चतुरधिकशतमार्गणा इमाः—तिर्यगोघमन्तरा षट्चत्वारिंशद्गतिभेदाः, निखिलद्वित्रिचतुष्कपञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायत्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियाहारककायौ, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयममन्तरा षट्संयमभेदाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमृते षट्सम्यक्त्वमार्गणाः, संज्ञी चेति।

अथायुराश्रित्य प्रतिपाद्यते। तिर्यगोघः, सर्वैकेन्द्रियभेदाः, पृथिव्यप्तेजोवायुवनस्पतिकायौघाः, सप्तनिगोदाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथिव्यप्तेजोवायुकायाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायमार्गणाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, चतुष्कषायाः, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्चेति द्विषष्टिमार्गणासु आयुषो वृद्धिचतुष्कहानिचतुष्कविधायकानां कालः सर्वाद्धा।

अथ शेषमार्गणासूत्कृष्टकाल एवम्—पर्याप्तमनुष्यमानुष्यौ, आनतप्रमुखसर्वार्थसिद्धपर्यन्ता अष्टादशदेवभेदाः, आहारकद्विकं, मनःपर्यवज्ञानं, संयमौघसामायिकछेदोपस्थानीयपरिहारविशुद्धिसंयमाः, शुक्ललेश्या क्षायिकसम्यक्त्वं चेति नवविंशतिमार्गणासु सम्भाव्यमानासंख्यगुणवृद्धिहानिविधायकानाम् 'अन्तर्मुहूर्तम्,' आहारकमिश्रं विनैतास्वष्टाविंशतिमार्गणासु शेषत्रिवृद्धिहानिविधायकानां "आवलिकासंख्यातभागः," सर्वनरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, मनुष्यौघापर्याप्तमनुष्यौ, देवौघभवनपतिव्यन्तरज्योतिष्कसौधर्मप्रमुखाष्टवैमानिकाश्चेति षड्विंशतिगतिभेदाः, निखिलविकलपञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथिव्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायत्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियकाययोगः, स्त्रीपुरुषवेदौ, मतिश्रुतावधिविभङ्गज्ञानानि, देशविरतिः, चक्षुरवधिदर्शने, तेजःपद्मलेश्ये, सम्यक्त्वौघक्षायोपशमिकसास्वादनसम्यक्त्वानि संज्ञी चेति द्विसप्ततिमार्गणासु असंख्यगुणवृद्धिहानिविधायकानां प्रत्येकं 'पल्योपमासंख्यातभागः शेषत्रिवृद्धिहानिविधायकानां प्रत्येकम् 'आवलिकासंख्यातभागः'। आयुष उत्कृष्टकालः' इति सर्वत्र योजनीयम्। अनन्तरोक्तासु शेषासु एकोत्तरशतमार्गणासु आयुषः सम्भाव्यमानवृद्धिचतुष्कहानिचतुष्कविधायकानां जघन्यकालः एकसमयः भवति।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे
चतुर्थे वृद्धिबन्धाधिकारे (अनेकजीवविषयकम्) दशमं
कालद्वारं समाप्तम्॥

## ॥ एकादशमन्तरद्वारम् ॥

अथानेकजीवविषयकमेकादशमन्तरद्वारं प्ररूप्यते । ओघतोऽष्टकर्मणां वृद्धिचतुष्कहानिचतुष्कयोरन्तराभावः । अथादेशतः प्रतिपाद्यते । तत्र सप्तकर्मणामसंख्यगुणवृद्धिहानिविधायकानामन्तरमेवम्–अपर्याप्तमनुष्यं विहाय निखिलगतिभेदाः, सकलेन्द्रियभेदाः, निखिलकायभेदाः, पञ्चमनःपञ्चवचनानि, काययोगौघः, औदारिकद्विकं, वैक्रियकायः, कार्मणकायश्चेति पञ्चदशयोगभेदाः, वेदत्रिकं, चतुष्कषायाः, अखिलज्ञानमार्गणाभेदाः, संयमौघसामायिकदेशविरत्यसंयमाः, दर्शनत्रिकं, लेश्याषट्कं, भव्याभव्यौ, सम्यक्त्वौघक्षायिकक्षायोपशमिकमिथ्यात्वानि, संज्ञी, असंज्ञी, आहारकानाहारकौ चेति नवपञ्चाशदधिकशतमार्गणासु 'अन्तराभावः' । अत्र कार्मणानाहारकयोरसंख्यगुणवृद्धिविधायकानामेवान्तराभावो वक्तव्यः । शेषासु एकादशमार्गणासु यथासम्भवं सप्तकर्मणामसंख्यगुणवृद्धिहानिविधायकानां प्रत्येकं जघन्यमन्तरम् "एकसमयः" ज्ञातव्यम् । नवरं परिहारविशुद्धिच्छेदोपस्थापनीयमार्गणयोर्जघन्यमन्तरमनुत्कृष्टप्रदेशबन्धान्तरवद् ज्ञेयम् । अपर्याप्तमनुष्यसास्वादनमिश्रमार्गणासु पल्योपमासंख्यातभागः, वैक्रियमिश्रे द्वादशमुहूर्ताः, अवेदसूक्ष्मसम्पराययोः 'षण्मासाः,' आहारकद्विके वर्षपृथक्त्वं, छेदोपस्थापनीयपरिहारविशुद्धिसंयमयोः "अष्टादशकोटाकोटिसागरोपमाः," उपशमसम्यक्त्वे सप्तदिनानि । सप्तकर्मणां यथासंभवमसंख्यगुणवृद्धिविधायकानामसंख्यगुणहानिविधायकानाञ्चोत्कृष्टान्तरं भवतीति सर्वत्र योज्यम् ।

अथ सप्तकर्मणां शेषत्रिवृद्धित्रिहानिविधायकानामन्तरमेवम्–तिर्यगोघः, समेकेन्द्रियभेदाः, पृथ्व्यप्तेजोवायुवनस्पतिकायौघाः, समस्तनिगोदभेदाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथिव्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः,–कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम्, अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम्, असंज्ञी आहारकश्चेति द्वाषष्टिमार्गणासु 'अन्तराभावः' । द्विषष्टिमार्गणाद्युक्तत्वाद् वैक्रियमिश्रादिचतुर्मार्गणासु च त्रिवृद्धिहानीनामसम्भवात् शेषासु चतुरधिकशतमार्गणासु जघन्यम् 'एकसमयः', तथा तास्वेव मार्गणासु संख्यातगुणभागवृद्धिहानिविधायकानां तथैकमतेनासंख्यातभागवृद्धिहानिविधायकानाञ्चोत्कृष्टमन्तरं 'श्रेण्यसंख्यातभागः' भवति । शेषाश्चतुरुत्तरशतमार्गणा नामत इमाः–कृत्स्ननरकभेदाः, चत्वारस्तिर्यक्पञ्चेन्द्रियभेदाः, समस्तमर्त्यामर्त्यभेदाः, निखिलविकलपञ्चेन्द्रियभेदाः, पर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, पर्याप्तप्रत्येकवनस्पतिकायः त्रसत्रिकं चेत्यष्टौ कायभेदाः, पञ्चमनःपञ्चवचनानि, वैक्रियाहारककाययोगौ, स्त्रीपुरुषवेदावेदाः, मतिश्रुतावधिविभङ्गमनःपर्यवज्ञानानि, असंयममृते षट्संयममार्गणाः, चक्षुरवधिदर्शने, प्रशस्तलेश्यात्रिकं, मिथ्यात्वमन्तरा षट्सम्यक्त्वमार्गणाः संज्ञी चेति ।

अथ एतासु चतुरधिकशतमार्गणासु अन्यमतेनासंख्यातभागवृद्धिहान्योरुत्कृष्टमन्तरमेवम्-सान्तरासु मिश्रद्विकवर्जासु नवमार्गणासु अनन्तरोक्तासंख्यातगुणवृद्धिहानिवत् , शेषासु पञ्चनवतिमार्गणासु अन्तर्मुहूर्तं ज्ञेयम् ।

अथादेशत आयुराश्रित्य निरूप्यते । तद्यथा-तिर्यगोघः, निखिलैकेन्द्रियभेदाः, सर्वनिगोदभेदाः, पृथिव्यप्तेजोवायुवनस्पतिकायौघाः, सूक्ष्मपृथ्व्यप्तेजोवायुकायाः, पर्याप्तसूक्ष्मपृथिव्यप्तेजोवायुकायाः अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुकायाः, बादरपृथ्व्यप्तेजोवायुकायाः, अपर्याप्तबादरपृथ्व्यप्तेजोवायुकायाः, प्रत्येकवनस्पतिकायौघापर्याप्तप्रत्येकवनस्पतिकायौ चेति चतुस्त्रिंशत्कायभेदाः, काययोगौघः, औदारिकद्विकं, नपुंसकवेदः, कषायचतुष्कं, मतिश्रुताज्ञाने, असंयमः, अचक्षुर्दर्शनम् , अप्रशस्तलेश्यात्रिकं, भव्याभव्यौ, मिथ्यात्वम् , असंज्ञी आहारकश्चेति द्वाषष्टिमार्गणासु आयुषो वृद्धिचतुष्कहानिचतुष्कविधायकानामन्तराभावः । आहारकमिश्रे शेषत्रिवृद्धिहानीनामभावात् शेषासु शतमार्गणासु शेषत्रिवृद्धिहानीनां जघन्यम् 'एकसमयः'तथा संख्यातगुणभागवृद्धिहानिविधायकानां तथैकमतेनासंख्यातभागवृद्धिहानिविधायकानां चोत्कृष्टं 'श्रेण्यसंख्यातभागः' अन्तरं भवति । शेषासु एकाधिकशतमार्गणासु असंख्यगुणवृद्ध्यसंख्यगुणहानिविधायकानां जघन्यमन्तरम्' एकसमयः' ज्ञातव्यम् ।

अथ शेषासु एकाधिकशतमार्गणासु असंख्यगुणवृद्ध्यसंख्यगुणहानिविधायकानां तथाऽऽहारकवर्जासु तास्वेव शतमार्गणासु अन्येन मतेनासंख्यभागवृद्धिहानिविधायकानां चोत्कृष्टान्तरमेवम्-पञ्चेन्द्रियतिर्यगोघ-द्वीन्द्रियौघ-त्रीन्द्रियौघ-चतुरिन्द्रियौघ-पञ्चेन्द्रियौघ-त्रसकायौघरूपेषु षट्सु मार्गणाभेदेषु तथैतेषामेव पञ्चेन्द्रियतिर्यगादीनां षट्स्वपर्याप्तभेदेष्विति द्वादशमार्गणाभेदेषु प्रत्येकं प्रस्तुतमन्तरमन्तर्मुहूर्तम् । नवाशीतौ मार्गणासु तु प्रत्येकं तत् तज्ज्ञानुसकाशात् ज्ञेयम् , उत्कृष्टान्तरस्य सामान्यत उत्पत्तिच्यवनान्तराधीनत्वात् तस्य च दुःषमानुभावेन सम्यगपरिज्ञानात् ।

॥ इति प्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे चतुर्थे वृद्धिबन्धाधिकारे एकादशमन्तरद्वारं समाप्तम् ॥

## ॥ द्वादशं भावद्वारम् ॥

भूयस्काराधिकारगतभावद्वारे भूयस्कारादीनि चत्वार्यपि पदानि औदयिकभावेन भवन्तीति प्रतिपादितम् । अतोऽत्रापि दशापि पदानि औदयिकभावेन भवन्ति ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे चतुर्थे वृद्धिबन्धाधिकारे द्वादशं भावद्वारं समाप्तम् ॥

## ॥ अथ त्रयोदशमल्पबहुत्वद्वारम् ॥

तदेवं स्वामित्वादिभावपर्यन्तानि एकादशद्वाराणि अतिदिष्टानि । सम्प्रति क्रमायातमल्प-बहुत्वद्वारं वक्तुं प्रक्रमते । तत्रादौ तावद् गाथापञ्चकेनौघप्ररूपणां चिकीर्षुराह—

सत्तण्ह बंधगा खलु अत्थि अवत्तव्वगस्स सव्वप्पा ।
ताहिन्तोऽणंतगुणा अवट्ठिअस्स य मुणेयव्वा ॥६५०॥
ताउ असंखेज्जगुणा कमसो संखंसगुणिअहाणीणं ।
तत्तो कमा हवन्ते असंखभागगुणहाणीणं ॥६५१॥

(प्रे०) 'सत्तण्ह' इत्यादि, सप्तकर्मणामवक्तव्यप्रदेशबन्धविधायकाः सर्वस्तोकाः । ततस्तेषा-मवस्थितप्रदेशबन्धविधायका अनन्तगुणाः । ततस्तेषां संख्यातभागहानिविधायका असंख्येयगुणाः । ततस्तेषां संख्यातगुणहानिविधायका असंख्यातगुणाः ।

'तत्तो' इत्यादि, पूर्वार्धस्थं "असंखेज्जगुणा" इति पदमत्रानुषज्यते, ततस्तेषामसंख्यात-भागहानिविधायका असंख्यातगुणाः । ततस्तेषामसंख्यातगुणहानिविधायका असंख्यातगुणाः ।

अत्रेयं भावना—सप्तकर्मणामवक्तव्यबन्धविधायकाः संख्यातमात्रा एवेति तेऽन्यसर्व-बन्धकेभ्यः स्तोकाः । अवस्थितप्रदेशबन्धं निगोदजीवा अपि कुर्वन्ति, ते चानन्ता इति सप्तकर्मणा-मवक्तव्यप्रदेशबन्धविधायकेभ्यः सप्तकर्मणामवस्थितविधायका अनन्तगुणा भवन्ति । अवस्थितप्रदेश-बन्धस्यैकजीवविषयककालः पञ्चदशसमयाः संख्यातभागहानेश्चावलिकासंख्यातभाग इति अवस्थित-प्रदेशबन्धकालात् संख्यातभागहानिकालस्याऽसंख्यातगुणत्वात् सप्तकर्मणामवस्थितविधायकेभ्यः सप्तकर्मणां संख्यातभागहानिविधायका जीवा असंख्यातगुणाः । संख्यातभागहानितः संख्यातगुण-हानेः कालोऽसंख्यातगुण इति सप्तकर्मणां संख्यातभागहानिविधायकेभ्यः सप्तकर्मणां संख्यातगुण-हानिविधायका असंख्यातगुणा भवन्ति ।

न च 'तिवड्ढिहाणीण तइए काले जेट्ठो आवलिआए असंखंसो" । इति तृतीये कालद्वारे तिसृणा-मपि वृद्धीनां तिसृणामपि हानीनाञ्च कालः आवलिकासंख्यातभागरूपः समानः प्ररूपित इति कथं संख्यातभागहानितः संख्यातगुणहानेः कालोऽसंख्यातगुण उच्यत इत्याशङ्कनीयम्, आव-लिकासंख्यातभागस्यासंख्यभेदभिन्नत्वात् । असंख्यातभागहानितः संख्यातगुणहानेरन्तरमसंख्यात-गुणमिति सप्तकर्मणां संख्यातगुणहानिविधायकेभ्योऽसंख्यातभागहानिविधायका असंख्यातगुणा भवन्ति । *अत्रेदं बोध्यम्—यद्यप्यसंख्यातभागहानिकालतः संख्यातगुणहानिकालोऽसंख्यातगुणस्त-थापि संख्यातगुणहानेरन्तरं श्रेण्यसंख्यातभागः असंख्यातभागहानेरन्तरं च अन्तर्मुहूर्तम्,* इत्यसंख्यातभागहानितः संख्यातगुणहानेरन्तरमतिमहदसंख्यगुणम् । अतः संख्यातगुणहानिः कदाचित् प्रवर्तते, असंख्यातभागहानिस्तु पुनः पुनरनेकशः प्रवर्तते । अतः संख्यातगुणहानिविधाय-

केभ्योऽसंख्यातभागहानिविधायका एवासंख्यगुणा भवन्ति । असंख्यातभागहानिकालतोऽसंख्यातगुणहानिकालोऽसंख्यातगुण इति सप्तकर्मणामसंख्यातभागहानिविधायकेभ्यः सप्तकर्मणामसंख्यगुणहानिविधायका असंख्यगुणा भवन्ति । येषां मतेऽसंख्यातभागहानिवृद्धिबन्धकानामन्तरं श्रेण्यसंख्यातभागस्तेषां मतेऽसंख्यातभागहानिवृद्धिविधायकानामल्पबहुत्वं यथाऽऽगमं स्वयं चिन्तनीयम् । ॥६५०।६५१॥

अथौघत आयुषोऽसंख्यगुणवृद्धिविधायकादीनामल्पबहुत्वमाह—

आउस्स बंधगा खलु णायव्वाऽवट्ठिअस्स सव्वप्पा ।
एत्तो असंखियगुणा हवेज्ज संखंसहाणीए ॥६५२॥
तो संखियगुणहाणिअवत्तव्वअसंखगुणिअहाणीणं ।
कमसो हवेज्ज णेयं मयं असंखंमहाणीए ॥६५२॥

(प्रे०) 'आउस्स' इत्यादि, आयुषोऽवस्थितबन्धकाः सर्वस्तोकाः । ततस्तस्य संख्यातभागहानिविधायका असंख्यगुणाः । 'तो संखियगुणहाणि' इत्यादि, पूर्वगाथास्थं 'असंखियगुणा' इति पदमत्रापि सम्बध्यते; ततस्तस्य संख्यातगुणहानिविधायका असंख्यातगुणाः । ततस्तस्यावक्तव्यबन्धविधायका असंख्यातगुणाः । ततस्तस्यासंख्यातगुणहानिविधायका असंख्यातगुणाः ।

अत्रेयं भावना—संख्यातभागहान्यादिकालापेक्षयाऽवस्थितबन्धकालस्य स्तोकत्वादवस्थितप्रदेशबन्धकाः सर्वस्तोकाः । अवस्थितबन्धकालापेक्षया संख्यातभागहानिकालस्यासंख्यगुणत्वादवस्थितप्रदेशबन्धविधायकेभ्यः संख्यातभागहानिविधायका असंख्यगुणा भवन्ति । संख्यातभागहानिकालतः संख्यातगुणहानिकालस्यासंख्यातगुणत्वात् संख्यातभागहानिविधायकेभ्यः संख्यातगुणहानिविधायका असंख्यगुणा भवन्ति । संख्यातगुणहानिकालतोऽवक्तव्यकालस्यातिस्तोकत्वेऽप्यवक्तव्यान्तरतः संख्यातगुणहान्यन्तरस्यासंख्यगुणत्वादायुःसंख्यातगुणहानिविधायकेभ्य आयुषोऽवक्तव्यविधायका असंख्यगुणा भवन्ति । अवक्तव्यबन्धापेक्षयाऽसंख्यगुणहानेरेकजीवविषयककालस्यासंख्यगुणत्वादवक्तव्यबन्धकेभ्योऽसंख्यगुणहानिविधायका असंख्यगुणा भवन्ति । 'णेयं सयं असंखंसहाणीए' इति, आयुषोऽसंख्यातभागहानिविधायकानामल्पबहुत्वं स्वयं ज्ञेयम् । कथम् ? इति चेद्, उच्यते, असंख्यातभागवृद्धिहान्योरुत्कृष्टान्तरविषये मतान्तरसद्भावात् तद्बन्धकानां विशेषपरिमाणस्य ज्ञातुमशक्यत्वादल्पबहुत्वमपि सम्यग् न परिज्ञायते इत्यत्रोक्तं 'णेयं सयं असंखंसहाणीए' इति ॥६५२।६५३॥

गाथाद्विकेन सप्तकर्मणां गाथाद्विकेन चायुषोऽवक्तव्यबन्धविधायकादीनामल्पबहुत्वमुक्तं, परमुभयत्रापि वृद्धिचतुष्कमाश्रित्याल्पबहुत्वं नोक्तम्, अत इदानीं तदाह—

अट्ठण्ह वि हाणिसमा वड्ढीणं बंधगा मुणेयव्वा ।
णवरं विसेसअहिया अत्थि असंखगुणवड्ढीए ॥६५४॥

(प्रे०) 'अट्ठण्ह वि' इत्यादि, अष्टानामपि कर्मणां "हाणिसमा वड्ढीणं बंधगा" इति, असंख्याउभागादिवृद्धिबन्धका अनुक्रमेणासंख्यातभागादिहानिबन्धकतुल्या ज्ञातव्याः । 'णवरं' इत्यादि, नवरमसंख्यगुणवृद्धिबन्धका विशेषाधिका भवन्ति । असंख्यगुणहानिबन्धकेभ्य इति गम्यते । अयं भावः—असंख्यातभागवृद्धिबन्धका असंख्यातभागहानिबन्धकानां, संख्यातभागवृद्धिबन्धकाः संख्यातभागहानिबन्धकानां, संख्यातगुणवृद्धिबन्धकाः संख्यातगुणहानिबन्धकानां तुल्या भवन्ति, तत्तद्वृद्धिहानीनां कालस्यावलिकासंख्यातभागत्वेन साम्यात् । असंख्यगुणवृद्धिबन्धका असंख्यातगुणहानिबन्धकेभ्यो विशेषाधिका भवन्ति, असंख्यातगुणहानितोऽसंख्यगुणवृद्धेरेकजीवविषयककालस्य विशेषाधिकत्वात् ।

इत्थमत्रेदं समापतितम्—ज्ञानावरणीयकर्मणोऽवक्तव्यबन्धकाः सर्वस्तोकाः । ततस्तस्यावस्थितबन्धका अनन्तगुणाः । ततस्तस्य संख्यातभागहानिविधायकाः संख्यातभागवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्य संख्यातगुणहानिविधायकाः संख्यातगुणवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्यासंख्यातभागहानिविधायका असंख्यातभागवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्यासंख्यातगुणहानिविधायका असंख्यातगुणाः, ततस्तस्यासंख्यातगुणवृद्धिविधायकाः विशेषाधिकाः । एवमायुरन्तरा दर्शनावरणीयादिषट्कर्मस्वपि वक्तव्यम् ।

अथायुषि एवम्—आयुषोऽवस्थितबन्धकाः सर्वस्तोकाः, ततस्तस्य संख्यातभागहानिविधायकाः संख्यातभागवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्य संख्यातगुणहानिविधायकाः संख्यातगुणवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्यावक्तव्यबन्धका असंख्यातगुणाः । ततस्तस्यासंख्यातगुणहानिविधायका असंख्यातगुणाः । ततस्तस्यासंख्यातगुणवृद्धिविधायका विशेषाधिकाः । असंख्यातभागहान्यसंख्यातभागवृद्धिविधायकानामल्पबहुत्वं स्वयं विज्ञेयम् ॥६५४॥

तदेवमोघप्ररूपणा कृता । साम्प्रतमादेशतः सप्तकर्माण्याश्रित्याल्पबहुत्वं वक्तुकामो यासु मार्गणास्वल्पबहुत्वाभावस्ता आह—

मीसदुजोगेसु तहा कम्माणाहारगेसु णो चेव ।
हवए अप्पाबहुगं पयडीणं आउवज्जाणं ॥६५५॥

(प्रे०) वैक्रियमिश्राहारकमिश्रयोः कार्मणानाहारकयोश्चायुर्वर्जानां सप्तकर्मणामल्पबहुत्वं नैव भवति, असंख्यगुणवृद्धिरूपैकपदस्यैव सत्त्वात् ॥६५५॥

सम्प्रति यासु श्रेणिसद्भावस्तासु असंख्यातजीवासु मार्गणासु प्रकृताल्पबहुत्वं गाथाद्विकेन निर्दिशति—

णरदुपणिंदियतसपणमणवयणाणतिगचक्खुओहीसुं ।
सुइलाए सम्मत्ते खइअउवसमेसु सण्णिम्मि ॥६५६॥
होअन्ति बंधगा खलु अप्पाऽवत्तव्वगस्स ताहिन्तो ।
हुन्ति असंखेज्जगुणा अवट्ठिअस्स पुरमोघव्व ॥६५७॥

(प्रे०) 'णरदुपणिंदिय' इत्यादि, 'आउवज्जाणं पयडीणं' इत्यनुवर्तते, मनुष्यौघः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ, त्रसौघपर्याप्तत्रसौ, पञ्चमनःपञ्चवचनानि, मतिश्रुतावधिलक्षणज्ञानत्रिकं, चक्षुरवधिदर्शने; शुक्लेश्या, सम्यक्त्वौघक्षायिकोपशमसम्यक्त्वेषु संज्ञिनि चेति पञ्चविंशतिमार्गणासु सप्तकर्मणामवक्तव्यबन्धकाः सर्वस्तोकाः । अत्र हेतुः ओघप्ररूपणायामुक्त एव ज्ञातव्यः । ततः सप्तकर्मणामवस्थितबन्धका असंख्यातगुणाः, मार्गणागतजीवानामसंख्यातत्वात् । ओघप्ररूपणायां तु निगोदजीवानाश्रित्यावक्तव्यबन्धकेभ्योऽवस्थितबन्धकानामनन्तगुणत्वमुपपद्यते, अत्र तु निगोदजीवानामभावादसंख्यगुणत्वमेवोपपद्यते ।

'पुरमोघव्व' इति, इतोऽग्रेऽल्पबहुत्वमोघवद् वक्तव्यम् । तद्यथा—ततस्तेषां संख्यातभागहानिविधायकाः संख्यातभागवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तेषां संख्यातगुणहानिविधायकाः संख्यातगुणवृद्धिविधायकाश्चासंख्यगुणाः, परस्परं च तुल्याः । ततस्तेषामसंख्यातभागहानिविधायका असंख्यातभागवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तेषामसंख्यातगुणहानिविधायका असंख्यातगुणाः । ततस्तेषामसंख्यातगुणवृद्धिविधायका विशेषाधिकाः । अत्र भावना सामान्यवक्तव्यतावदवगन्तव्या ॥६५६।६५७॥

इदानीं यासु श्रेणिसद्भावस्तासु संख्यातजीवासु मार्गणासु सप्तकर्मणामवक्तव्यबन्धकादीनामल्पबहुत्वमाह—

पज्जणरमणुस्सीसुं अवेअमणणाणसंयमेसुं च ।
ओघव्व परमसंखिय ऽणंतगुणाऽत्थि तहि संखगुणा ॥६५८॥

(प्रे०) 'पज्जणर' इत्यादि, पर्याप्तमनुष्यादिपञ्चमार्गणासु 'ओघव्व' इति, सप्तकर्मणामवक्तव्यबन्धकादीनामल्पबहुत्वमोघवद् भवति, 'परम' इत्यादि, किन्तु यत्र बन्धका असंख्यगुणा अनन्तगुणा वा प्रोक्तास्तत्र संख्यातगुणा ज्ञातव्याः । तद्यथा—ज्ञानावरणीयकर्मणोऽवक्तव्यबन्धकाः सर्वस्तोकाः । ततस्तस्यावस्थितबन्धकाः संख्यातगुणाः । ततस्तस्य संख्यातभागहानिविधायकाः संख्यातभागवृद्धिविधायकाश्च संख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्य संख्यातगुणहानिविधा-

यकाः संख्यातगुणवृद्धिविधायकाश्च संख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्यासंख्यातभाग-हानिविधायकाः असंख्यातभागवृद्धिविधायकाश्च संख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्यासंख्यातगुणहानिविधायकाः संख्यातगुणाः । ततस्तस्यासंख्यातगुणवृद्धिविधायका विशेषाधिकाः । एवं दर्शनावरणीयादिषट्कर्मण्यामित्यापि वक्तव्यम् । अत्रेयं भावना—अत्रावस्थितबन्धादीनामेकजीवविषयककालस्यानन्तरपूर्वपदकालतोऽसंख्यातगुणत्वेऽपि मार्गणागतजीवानां संख्यातत्वादवस्थितादिबन्धकाः स्वानन्तरपूर्वपदबन्धकापेक्षया संख्यातगुणा एव भवन्ति । शेषभावना पूर्ववद् ॥६५८॥

सम्प्रति यास्ववक्तव्यबन्धाभावस्तासु संख्यातजीवासु मार्गणासु प्रकृताल्पबहुत्वमाह—

सव्वत्थाहारेसुं समइअछेअपरिहारसुहमेसुं ।
थोवा अवट्ठिअस्स उ एत्ताहे पज्जमणुसव्व ॥६५९॥

(प्रे०) 'सव्वत्थाहारेसु' इत्यादि, सर्वार्थसिद्धदेवादिपञ्चमार्गणासु सप्तकर्मणां सूक्ष्मसम्पराये च षट्कर्मणामवस्थितबन्धकाः सर्वस्तोका भवन्ति । "एत्ताहे पज्जमणुसव्व" इति, इतः सर्वमल्पबहुत्वं पर्याप्तमनुष्यमार्गणावत् संख्यातगुणकारेण वक्तव्यम् । अत्रायं भावः—एतासु मार्गणास्ववक्तव्यबन्धाभावात् तं विहाय शेषनवपदानामेवाल्पबहुत्वं वक्तव्यम् । अतो नवपदेषु ओघोक्तक्रमेणावस्थितबन्धस्यैव प्रथमः क्रमः । अतोऽवस्थितबन्धकाः सर्वस्तोका भवन्ति । ततः संख्यातभागहानिविधायकाः संख्यातभागवृद्धिविधायकाश्च संख्यातगुणाः, परस्परं च तुल्याः, मार्गणागतजीवानां संख्यातत्वाद् । एवं संख्यातगुणहानिविधायकादीनामल्पबहुत्वमपि पर्याप्तमनुष्यमार्गणावद् वक्तव्यम् ॥६५९॥

सम्प्रति यासु श्रेणिसद्भावस्तासु अनन्तजीवासु मार्गणासु सप्तकर्मणामवक्तव्यबन्धकादीनामल्पबहुत्वं निर्वक्ति—

ओघव्व हुन्ति काये उरलाचक्खुभवियेसु आहारे ।
मोहस्स बंधगा खलु लोहे ओघव्व विण्णेया ॥६६०॥
मोहाउगवज्जाणं अवट्ठिअस्स खलु बंधगा णेया ।
सव्वत्थोवा एत्तो सेसाणोघव्व विण्णेया ॥६६१॥

(प्रे०) 'ओघव्व' इत्यादि, काययोगौघः, औदारिककायः, अचक्षुर्दर्शनं, भव्य आहारकश्चेति पञ्चमार्गणासु सप्तकर्मणामवक्तव्यबन्धकादीनामल्पबहुत्वमोघवदवगन्तव्यम् । तद्यथा—ज्ञानावरणीयकर्मणोऽवक्तव्यबन्धकाः सर्वस्तोकाः । ततस्तस्यावस्थितबन्धका अनन्तगुणाः । ततस्तस्य संख्यातभागहानिविधायकाः संख्यातभागवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्य संख्यातगुणहानिविधायकाः संख्यातगुणवृद्धिविधायकाश्चासंख्यातगुणाः परस्परं च तुल्याः ।

ततस्तस्यासंख्यातभागहानिविधायकाः असंख्यातभागवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः। ततस्तस्यासंख्यातगुणहानिविधायकाः असंख्यातगुणाः। ततस्तस्यासंख्यातगुणवृद्धिविधायकाः विशेषाधिकाः। एवं दर्शनावरणीयादिष्वपि वक्तव्यम्। अत्र भावनौघवद् विधेया।

इदानीं लोभमार्गणायामाह-'मोहस्स' इत्यादि-लोभमार्गणायां मोहनीयस्य, 'अवक्तव्यादीनाम्' इति गम्यते, बन्धकानामल्पबहुत्वमोघवज्ज्ञातव्यम्। एतच्चानन्तरमेव प्रदर्शितम्। 'मोहाऽऽउगवज्जाणं' इत्यादि, मोहनीयायुर्वर्जानां षट्कर्मणामवस्थितबन्धकाः सर्वस्तोकाः। "सेसाणोघव्व विण्णेया" इति, शेषाणां संख्यातभागहान्यादीनां बन्धका ओघवद् ज्ञातव्याः। अत्रेयम्भावना-लोभमार्गणायां मोहनीयस्यावक्तव्यबन्धो भवति, शेषषट्कर्मणां न भवति; अतो मोहनीये शेषषट्कर्मसु च पृथग् निर्दिष्टम्। मोहनीये सर्वपदानां सत्त्वादोघवदतिदिष्टम्। शेषषट्कर्मसु अवक्तव्यबन्धाभावादवस्थितबन्धकानां स्तोकत्वं समापतति। शेषाणां संख्यातभागहानिविधायकादीनामोघोक्तक्रमेणौघोक्तहेतुभिरसंख्यातगुणत्वादिकत्वं समापतति ॥६६०।६६१॥

इदानीं शेषमर्वमार्गणासु श्रेणिविरहेण सप्तकर्मणामवक्तव्यबन्धाभावादवस्थितादिनवपदबन्धकानामल्पबहुत्वमाह—

सेसासु बंधगाऽवट्ठिअस्स सत्तण्ह आउवज्जाणं।
सव्वत्थोवा एत्तो सेसाणोघव्व विण्णेया ॥६६२॥

(प्रे०) 'सेसासु' इत्यादि, शेषासु चतुर्विंशतिमार्गणासु सप्तकर्मणामवस्थितबन्धकाः सर्वस्तोका भवन्ति। 'एत्तो' इत्यादि, ततः संख्यातभागहानिविधायकादीनामल्पबहुत्वमोघवदवगन्तव्यम्। अत्र भावनाऽनन्तरगाथायां लोभमार्गणायां षट्कर्माण्याश्रित्य यथा कृता तथा विधेया। शेषमार्गणा नामत इमाः-सर्वनरकभेदाः, समतिर्यग्गतिभेदाः, अपर्याप्तमनुष्यः, सर्वार्थसिद्धमन्तरा सर्वदेवभेदाश्चेति त्रिचत्वारिंशद्गतिभेदाः, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियौ विना शेषसप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना चत्वारिंशत्कायभेदाः, औदारिकमिश्रवैक्रियकाययोगौ, वेदत्रिकं, लोभमन्तरा त्रिकषायाः, अज्ञानत्रिकं, देशविरत्यसंयमौ, शुक्ललेश्यामृते पञ्चलेश्याः, अभव्यः, क्षायोपशमिकसास्वादनमिश्रमिथ्यात्वानि असंज्ञी चेति। इत्येवं सप्तकर्मणामवक्तव्यबन्धकादीनामल्पबहुत्वं प्रतिपादितम् ॥६६२॥

साम्प्रतमायुषोऽवक्तव्यबन्धकादीनामल्पबहुत्वं प्रतिपादयन्नाह—

आउस्सोघव्व णवरि संखेज्जगुणाउ बंधगाऽब्भहिया।
जेसिं हवेज्ज तेसिं संखेज्जगुणा मुणेयव्वा ॥६६३॥
दुणराणतपहुडीसुं आहारम्मि मणपज्जवम्मि तहा।
संयमसामइएसुं छेए परिहारसुक्कसहएसुं ॥६६४॥ (गीतिः)

(प्रे०) 'आउस्स' इत्यादि, सर्वासु मार्गणासु आयुषोऽल्पबहुत्वमोघवद् ज्ञेयम् । तद्यथा–आयुषोऽवस्थितबन्धकाः सर्वस्तोकाः । ततस्तस्य संख्यातभागहानिविधायकाः संख्यातभागवृद्धिविधायकाश्चासंख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्य संख्यातगुणहानिविधायकाः संख्यातगुणवृद्धिविधायकाश्च संख्यातगुणाः, परस्परं च तुल्याः । ततस्तस्यावक्तव्यबन्धका असंख्यातगुणाः । ततस्तस्यासंख्यातगुणहानिविधायका असंख्यातगुणाः । ततस्तस्यासंख्यातगुणवृद्धिविधायका विशेषाधिकाः । अत्र भावना सामान्यवक्तव्यतायां प्रदर्शितरीत्या विधेया । असंख्यातभागहान्यसंख्यातभागवृद्धिविधायकानामल्पबहुत्वं स्वयं विज्ञेयम् ।

अथात्रापवदति–'णवरि' इत्यादि, नवरमोघवक्तव्यतायां येषां संख्यातभागहान्यादिपदानां बन्धकाः संख्यातगुणतोऽधिकाः प्रोक्तास्तेषां बन्धकाः संख्यातगुणा ज्ञातव्याः । सामान्यवक्तव्यतायामवस्थितबन्धकाः सर्वस्तोकाः, असंख्यातगुणवृद्धिविधायका विशेषाधिकाः, शेषाः सर्वेऽसंख्यातगुणा उक्ताः । इत्यवस्थितबन्धकानसंख्यातगुणवृद्धिविधायकांश्च विहाय शेषाः सर्वे संख्यातगुणतोऽधिकाः प्रोक्ताः । अत ओघोक्तक्रमेण प्रथमपदबन्धकानन्तिमपदबन्धकांश्च विहाय मध्याः सर्वे बन्धकाः संख्यातगुणा ज्ञातव्याः । अवस्थितबन्धका असंख्यातगुणवृद्धिविधायकाश्चौघवदेवानुक्रमेण सर्वस्तोका विशेषाधिकाश्च भवन्ति ।

इत्थमत्रेदमायातम्–आयुषोऽवस्थितबन्धकाः सर्वस्तोकाः । ततस्तस्य संख्यातभागहानिविधायकाः संख्यातभागवृद्धिविधायकाश्च संख्यातगुणाः परस्परं च तुल्याः । ततस्तस्य संख्यातगुणहानिविधायकाः संख्यातगुणवृद्धिविधायकाश्च संख्यातगुणाः परस्परं च तुल्याः । ततस्तस्यावक्तव्यबन्धकाः संख्यातगुणाः । ततस्तस्यासंख्यातगुणहानिविधायकाः संख्यातगुणाः । ततस्तस्यासंख्यातगुणवृद्धिबन्धका विशेषाधिकाः । असंख्यातभागहान्यसंख्यातभागवृद्धिविधायकानामल्पबहुत्वं स्वयं विज्ञेयम् ।

ननु 'णवरि' इत्यादिना कासु मार्गणासु अपोदितम् ? इत्याह–'दुणराणत' इत्यादि, पर्याप्तमनुष्यमानुषीलक्षणद्विमनुष्ययोः, आनतप्रभृतिसर्वार्थसिद्धपर्यन्तेषु अष्टादशदेवभेदेषु, आहारककाययोगे, मनःपर्यवज्ञाने, संयमौघसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसंयमेषु, शुक्ललेश्यायां क्षायिकसम्यक्त्वे चेत्यष्टाविंशतिमार्गणासु । अत्रापवादे मार्गणागतायुर्बन्धकजीवानां संख्यातत्वं बीजम् ॥६६३।६६४॥

इदानीमाहारकमिश्रे प्रक्रान्तान्पबहुत्वं विचिन्त्य प्रस्तुतद्वारसमाप्तिं चिकीर्षुराह—

आहारमीसजोगे अप्पाऽवत्तव्वगस्स आउस्स ।
तत्तो संखेज्जगुणा अत्थि असंखगुणवड्ढीए ॥६६५॥

(प्रे०) 'आहारमीसजोगे' इत्यादि, आहारकमिश्रमार्गणायामायुषोऽवक्तव्यबन्धकाः स्तोकाः । ततस्तस्यासंख्यातगुणवृद्धिबन्धकाः संख्यातगुणाः सन्ति । अत्रेयं भावना–सत्पदद्वारे आहारकमिश्रे आयुषोऽवक्तव्यासंख्यगुणवृद्धिरूपद्विपदयोरेव सत्ता प्ररूपिता । अवक्तव्यबन्धस्यैक-जीवविषयककाल एकसमयः, असंख्यगुणवृद्धेरेकजीवविषयक उत्कृष्टकालोऽन्तर्मुहूर्तम् । अत आयुषोऽवक्तव्यबन्धका असंख्यगुणवृद्धिबन्धकेभ्यः स्तोका भवन्ति । मार्गणागताः सर्वेऽपि जीवाः संख्याता एवेति अवक्तव्यबन्धकेभ्योऽसंख्यगुणवृद्धिबन्धकाः संख्यातगुणा भवन्ति ॥६६५॥

तदेवं त्रयोदशमल्पबहुत्वद्वारमवसितं, तदवसाने च चतुर्थं वृद्धिबन्धाभिधाधिकारं संपूर्णं, संपूर्णे च तस्मिन् समाप्तोऽयं मूलप्रकृतिप्रदेशबन्धाभिधो ग्रन्थः ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेश-
बन्धे चतुर्थे वृद्धिबन्धाधिकारे त्रयोदश-
मल्पबहुत्वद्वारं समाप्तम् ॥

॥ इति श्रीबन्धविधाने
मूलप्रकृतिप्रदेशबन्धे
चतुर्थो वृद्धिबन्धाधिकारः ।

। इति मूलप्रकृतिप्रदेशबन्धः ।

॥ श्रीरस्तु ॥



# 卐 टीकाकारप्रशस्तिः 卐

प्रशस्तिरत्र विज्ञेया *मूलग्रन्थे यथा यतः ।
सोदर्यबन्धुरो मे स विनेयो मूलग्रन्थकृत् ॥१॥

गाथाः कर्तुं समर्थोऽपि प्रेमसूर्यादिशासनात् ।
तत्कृतिकामनां त्यक्त्वा विवृतिं कृतवानहम् ॥२॥

शक्तोऽपि गुर्वीटीकाकारः शिष्यश्च मूलगाथाकृत् ।
नैवं पूर्वं भूतं प्रायोऽभूदत्र तु तथैव ॥३॥

अत्राश्चर्यं कार्यं न लब्धसिद्धान्तसारमुनिवर्यैः ।
गुर्वाज्ञा हि श्रेयोमूलमिति जिनागमरहस्यम् ॥४॥ (युग्मम्)

नन्देन्दुनभोनयनप्रमितेऽब्दे विक्रमस्य भूनेतुः ।
मार्गसहःसितपक्षे कल्याणतिथौ तृतीयायाम् ॥५॥

मरुदेशपिंडवाडापुर्यां विवरणमिदं मयाऽऽरब्धम् ।
साधिकसंवत्सरमितकालेन गुरुप्रसादतः पूर्णम् ॥६॥ (गीतिः) (युग्मम्)

संशोधितं विवरणं पूज्यश्रीप्रेमसूरिभिः प्राज्ञैः ।
तच्छिष्यैः श्रीजम्बूसूरिवरैश्चागमप्रज्ञैः ॥७॥

अन्यैः पदार्थसंग्रहकारप्रमुखैश्च सूक्ष्मया दृष्ट्या ।
एवं मयाऽपि दृष्टं तथाऽपि वृत्तौ यदि क्षतयः ॥८॥

दृष्टिपथमवतरेयुः क्षन्तव्यास्ताः क्षमाकान्तैः ।
मतिमन्दतादिना यन्मिथ्योक्तं भवतु तन्मिथ्या ॥९॥ (त्रिभिर्विशेषकम्)

संसारोदधिरम्यरूपसिकताप्रच्छन्नदेशे तटे,-
तृष्णां तोषयितुं भ्रमन्ति हरिणा लोकाः समस्ता इमे ।
तान् स्वस्थान् कुरुते सुरेन्द्रनगरायस्याधिमध्यालयः,
सोऽव्यात् सर्वजनानपूर्वमहिमा श्रीपार्श्वपूज्यो विभुः ॥१०॥

सेयं मूलप्रकृतिप्रदेशबन्धीयवृत्तिररचि वरा ।
सन्मुद्रणकार्येऽमृतसंख्यामितधनापेक्षा ॥११॥

ज्ञानार्थं खलु संचितोऽत्र नगरे द्रव्यस्य राशिर्महान्–
तद्द्रव्यव्ययनेन शास्त्ररचनामुद्रापणं पारितं ।
प्राकाश्यं खलु नायितस्तदनु सद्ग्रन्थोऽप्यनुत्साहतः ।
मांगल्यं भजतात् सुरेन्द्रनगरीजैनीयसंघः ततः ॥१२॥

**अयमत्र सुरेन्द्रनगरजैनसंघोत्पत्तिवृत्तान्तः–**

अस्य नगरस्य मूलमभिधानं 'वढवाणकैम्प' इत्यासीत् । किन्तु पश्चात् तत् सुरेन्द्रनगर-नाम्ना प्रसिद्धमगात् । गच्छति काले कतिपयश्रावकास्तत्रागत्य न्यवसन् । तेषां मनसि समु-त्पन्नधर्मभावनाप्राबल्यात् 'किमपि धार्मिकं स्थानं निर्मातव्यमिति' समीहा समुदयं लब्धवती । इमां समीहां साकारीकर्तुं "वसु'गुण'निधि'विधुमिते विक्रमवत्सरे ते सज्जना भूरिविस्तारं भूभागं क्रीत-वन्तः । तत्र च जिनालयखातविधौ क्रियमाणे सद्भाग्यवशात् तद्भूभागत ऊर्ध्वगामिन्यः शीतल-मधुरवारिधारा निर्गच्छन्त्यस्तदानींतनानां जनानां दृग्गोचरतामायाताः । एवंविधोर्ध्वजलधारास्त-त्स्थाने भविष्यत्समृद्धनगरावस्थां भव्यजिनप्रासादनिर्माणशक्यतां च सूचयन्तीति वृद्धलोकोक्ति-संवादः ।

'रस'वेद'नन्द'पृथ्वीसंमिते वैक्रमवत्सरे सद्भाग्यतस्त्रिरङ्गमण्डपो जिनप्रासादो निरमी यत । तस्मिंश्च प्रासादे गिरनारतीर्थात् समानीता श्रीवासुपूज्यस्वामिप्रतिमा मूलनायक-त्वेन प्रतिष्ठापिता, जलनिधितटस्थितप्रभासपाटणस्थानात् समानीता श्रीसुविधिनाथभगवन्मूर्ति-र्मूलनायकप्रतिमाया दक्षिणपार्श्वे शत्रुञ्जयतीर्थादानीता श्रीशान्तिनाथभगवन्मूर्तिर्वामपार्श्वे प्रतिष्ठापिता । समग्रस्यास्य प्रतिष्ठापनकर्मणो विधिः शास्त्रोक्तप्रणाल्या निर्व्यूढः । तदानीं कृतपदो महोत्सवोऽपि सर्वाङ्गीणतया भूरि भूरि भव्यतां बिभ्राणोऽलौकिकीं दैवीकृपां साक्षात्कार-यन्निव संमिलितभव्यजनानानन्दपाथोनिधावमज्जन्मज्जनोन्मज्जनसुखमन्वभावयदित्यलं पल्लवितेन ।

एतन्मूर्तित्रयप्रतिष्ठापनजन्यापूर्वपुण्यप्रभावादेतन्नगरस्य तन्निवासिजनतायाश्चोत्तरोत्तरं सार्वत्रि-कोऽभ्युदयो भवति भूयस्तरामितश्च भविष्यतीति निश्चप्रचम् । अन्येषां च धार्मिकपाठशालो-पाश्रयायाम्लभवनज्ञानशालादीनामपि नगरेऽस्मिन्नभूत्निर्मितिः श्रीजिनप्रासादस्य नैकट्ये । संप्रति सप्तशतसंख्याकानि धार्मिकश्रावककुटुम्बानि तत्र निवसन्ति । अन्यच्च दिव्यसङ्गीतध्वनयो दिव्यनाट्यारम्भजनितशब्दा रात्रिनीरवतायां श्रवणगोचरतामायान्तीति नैशनिरीक्षणनियुक्ता आर-क्षका वृद्धसाधुसाध्व्यश्चात्र विषये साक्ष्यमादधति ।

'गुण'गगन'नभो'हस्ताङ्किते च विक्रमाब्दे नगरेऽस्मिन् जिनप्रासाद परितो देवकुलिका-निर्माणसङ्कल्पो लब्धजन्माऽभूत् । अत एव तत्र परितः परिवेष्टितं दुर्गं निपात्य त्रयोविंशतिसंख्या-कानां देवकुलिकानां सन्निवेशोऽकारि । 'रसा'ऽऽकाश'गगन'करमिते च विक्रमवर्षेऽतिशुभतरलग्ना-

कानां जिनप्रतिबिम्बानामञ्जनशलाकार्थं देवकुलिकासु रङ्गमण्डपभित्तिमध्यवर्तिगवाक्षेषु प्रतिष्ठाप-नाय साञ्जनशलाकासमारोहप्रतिष्ठामहोत्सवः सञ्जातः । त्रयोविंशतिसंख्यामितदेवकुलिकापरिवेष्टितोऽयं महान् जिनप्रासादो देवविमानायते सुरेन्द्रनगरं च धर्मनगरायत इति सद्भाग्यस्य चरमेयत्तानिदर्शनवदाभाति ।

पञ्चदशाधिकद्विसहस्रतमे वर्षे कृतपदे चातुर्मास्ये 'खवगसेढिबंधविहाणादि' कर्मसाहित्यग्रन्थनिचयस्यास्य लेखनारम्भोऽत्रैव सञ्जात इति लोकोत्तरधन्यतामाग्भूमिरियं प्राप्नोतु पारिमित्यातीतं माङ्गल्यमुत्तरोत्तरमित्याशास्यते ।

एतद् विवरणं कृत्वा मया यत्पुण्यमर्जितम् ।<br>स्तात् तेन निखिलो लोकः प्रदेशानामबन्धकः ॥१३॥

। तदेवं श्रीबन्धविधानमूलप्रकृतिप्रदेशबन्धटीकायां प्रशस्तिः समाप्ता ।

॥ तदेवं श्रीबन्धविधाने मूलप्रकृतिप्रदेशबन्धप्रेमप्रभाटीका समाप्ता ॥

तत्समाप्तौ च

## समाप्तः

प्रवचनकौशल्याधार सुविहिताग्रणी गच्छाधिपति-परमशासनप्रभावकसिद्धान्तमहोदधि-कर्मशास्त्रनिष्णाता-ऽऽचार्यदेवश्रीमद्विजयप्रेमसूरीश्वरपादानां पवित्रनिश्रायां तदन्तेवासिवृन्दविनिर्मिते मुनिश्री-जयघोषविजय-धर्मानन्दविजय-वीरशेखरविजयसंगृहीतपदार्थके मुनिश्रीवीरशेखर-विजयविरचितमूलगाथाके प्रेमप्रभाटीकाविभूषिते

बन्धविधाने

प्रेमप्रभाटीकासमलङ्कृतः

मूलप्रकृति-

प्रदेशबन्धः

# 卐 शुद्धिपत्रकम् 卐

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ३ | १७ | कर्मणां | कर्मणाम् |
| ६ | ३१ | द्रेन्दुभिनाद | दुं न्दुभिनाद |
| ७ | ५ | प्रादिबहुव्रीहि० | प्रादितत्पुरुष० |
| ८ | ११ | श्रुतज्ञाम् | श्रुतज्ञानम् |
| ८ | २९ | इति | चेति |
| १७ | १२ | स्वात्मदेशै- | स्वात्मप्रदेशै- |
| १८ | ६ | साइयमणाइयं | साईयमणाइयं |
| १९ | १० | साइयमणाइयं | साईयमणाइयं |
| २१ | २ | त्रिंशत्सागरोपमाणि | त्रयस्त्रिंशत्सागरो-पमाणि |
| २१ | १९ | पर्पटादिकदशनं | पर्पटादिकमशनं |
| २३ | ७ | उद्धतम | उद्धृतम् |
| २७ | ४ | विससो | विसेसो |
| २८ | १४ | भाणया | भणिया |
| २८ | १८ | जेसिं पएसाण | जाण पएसाण |
| ३० | ३० | भित्ताइं | भित्ताणि |
| ३३ | २३ | दमुपन्यस्तम | पदमुपन्यस्तम् |
| ३५ | २७ | सययान् | समयान् |
| ३६ | २ | करणेण अपज्जत्त-गस्स | करणेण अ पज्ज-त्तगस्स |
| ४० | २७ | भवप्रथसमये | भवप्रथमसमये |
| ४२ | ४ | परणामयोगश्चेति | परिणामयोगश्चेति |
| ४३ | २१ | गुणान्येव | गुणवृद्धान्येव |
| ५० | २२ | करणपर्याप्तस्य | करणापर्याप्तस्य |
| ५३ | १३ | सम्प्रतिः | सम्प्रति |
| ५४ | १३ | ॥६१॥ | ॥६१॥ (गीतिः) |
| ५५ | १२ | बंदिइयस्स | बिंदियस्स |
| ५५ | ३० | योगस्स | योगस्य |
| ५६ | ३ | करणपर्याप्त० | करणापर्याप्त० |
| ५९ | २२ | पर्याप्तयस्य | पर्याप्तस्य |
| ६१ | ११ | अविभागे | अविभागो |
| ६१ | १२ | वग्गणा० | वग्गण० |
| ६१ | १२ | ठाणा समय० | ठाणसमय० |
| ६१ | २२ | ॥६६॥ | ॥६६॥ (गीतिः) |
| ६२ | १४ | वर्णणा | वर्गणा |
| ६६ | ११ | द्वितीयगुण० | द्वितीयद्विगुण० |
| ६९ | १५ | चतुथ दिवर्गणा० | चतुर्थादिवर्गणा० |
| ७० | २० | वगणागतात्म० | वर्गणागतात्म० |
| ७५ | २६ | अतरं | अंतरं |
| ७६ | १८ | प्रमणा० | प्रमाण० |
| ७९ | १९ | गुणनफल | गुणनफलं |
| ८४ | ५ | न्योन्यभ्यासराशिः | न्योन्याभ्यासराशिः |
| ८४ | १५ | मन्योन्यराशि- | मन्योन्याभ्यास-राशि- |
| ८४ | १५ | एकं | एका |
| ८५ | २५ | क्षेत्रस्येत्यथः | क्षेत्रस्येत्यर्थः |
| ८७ | २४ | स्थापनवम् | स्थापनैवम् |
| ९२ | १२ | उ | तु |
| ९२ | २७ | चत्वारः | चतस्रः |
| ९४ | ३० | संकलनसकलनं | संकलनसंकलन |
| ९८ | ११ | +(१+२+३+४+५+६+७+८) | × |
| ११६ | ० | जोगगठाणेसुं | जोगठाणेसुं |
| ११७ | ८ | भागह माह | भागहारमाह |
| ११८ | १२ | स्थागतजीवानां | स्थानगतजीवानां |
| ११८ | २६ | (२५६ | (२५६/८) |
| १११ | २० | वर्गमूल | वर्गमूलं |
| १२० | १३ | ऽसंख्येगुणं | ऽसंख्यगुणं |
| १२० | ३४ | क्षेपो | स प्रक्षेपो |
| १२३ | ५ | तइम णि | तइमहाणि |
| १२३ | २७ | यादवष्ट | यावदष्ट |
| १२१ | २८ | गच्चाऽत्थि | गच्चा गच्चाऽत्थि |
| १३० | १६ | पर | परं |
| १३१ | ६ | इत्येव | इत्येवं |
| १४२ | ७ | प्रकारेणामल्पबहुत्वं | प्रकारेणाल्पबहुत्वं |
| १४२ | २२ | १२/६ | १२८/६ |

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १४३ | ८ | उवरिमेसुं | उवरिमेसु |
| १४३ | १ | सव्वेसु | सव्वेसुं |
| १४८ | ७ | " | ई |
| १५१ | १८ | १२०० | ११२० |
| १५१ | १६ | १७०० | ११२० |
| १५५ | १९ | समानमापि | समानामपि |
| १५५ | २२ | बन्धनर्हयो० | बन्धानर्हयो० |
| १५७ | ४ | यो | जो |
| १५८ | २२ | यो | जो |
| १५९ | १३ | प्रन्ध | बन्ध |
| १६० | १४ | अथान्तरोक्त० | अथानन्तरोक्त० |
| १६० | १७ | नयण० | णयण० |
| १६० | २२ | चक्षुदर्शन० | चक्षुर्दर्शन० |
| १६१ | २ | प्रदश० | प्रदेश० |
| १६२ | ५ | यो | जो |
| १६२ | १४ | संखम० | मसंख० |
| १६२ | १८ | यो | जो |
| १६२ | २१ | मिश्राकाय० | मिश्रकाय० |
| १६५ | २६ | यो | जो |
| १६९ | ११ | ते आयुर्वर्ज्याः, | तान्यायुर्वर्जानि, |
| १७० | १६ | विडव्वे | विउव्वे |
| १७० | २० | निष्ठापन्न० | निष्ठापन० |
| १७० | २४ | निष्ठापन्न० | निष्ठापन० |
| १७२ | १० | नारकाणमेव | नारका णामेव |
| १७२ | १२ | पर्याप्तया० | पर्याप्ता० |
| १७२ | १५ | पर्याप्त० | पर्याप्ता० |
| १७२ | ३० | विसेषण | विशेषणं |
| १७२ | ३१ | दीयते | दीयेते |
| १७४ | १७ | असज्ञी | असंज्ञी |
| १७८ | २ | माणासु | मार्गणासु |
| १७८ | १३ | मयुषो | मायुषो |
| १७८ | २२ | पणिदियेसुं | पणिदियेसु |
| १७९ | २९ | आहारद्विके | आहारकद्विके |
| १९३ | २८ | नामुत्कृष्ट० | नामनुत्कृष्ट० |
| १९६ | २५ | ऽणाइपुवा | ऽणाइयवा |
| १९६ | २४ | क्संद्वि० | कद्वि० |
| २०३ | ४ | लोकाश० | लोकाकाश० |
| २०३ | १३ | स्योरन्तरालः | योरन्तरालः |
| २०४ | २१ | पसस्स | पएसस्स |
| २०४ | १३ | करणापर्याप्तानां | करणपर्याप्तानां |
| २०४ | २६ | कायोगोघे | काययोगोघे |
| २१० | १३ | तथया | तद्यथा |
| २११ | २ | प्रकृत्युक्तं | प्रकृत्युद्वृतं |
| २१६ | २५ | पूर्व | पूर्वं |
| २१७ | ८ | उत्कृष्टप्रदेशबन्ध० | अनुत्कृष्टप्रदेशबन्ध० |
| २१९ | २१ | चत्वारिंशदधिशकत० | चत्वारिंशदधिकशत० |
| २२० | ८ | पूर्वाधेनाह | पूर्वार्धेनाह |
| २२० | १४ | चरमसमये | प्रथमसमये |
| २२० | २४ | मार्गणा | मार्गणाः |
| २२२ | ३० | अनुत्कृष्ट० | उत्कृष्ट० |
| २२३ | ८ | मन्तर | मन्तरं |
| २२४ | १० | मिश्रयोग | मिश्रयोगे |
| २२६ | २ | वर्षसस्राणि | वर्षसहस्राणि |
| २२६ | २ | द्वीन्यियो० | द्वीन्द्रियौ |
| २२६ | ३ | द्वीन्द्रियौ | द्वीन्द्रिययो० |
| २२६ | ४ | पर्याप्तनुष्य० | पर्याप्तमनुष्य० |
| २२६ | २२ | बाहरसमा | बारहसमा |
| २३५ | १५ | रशिति० | रशीति० |
| २२७ | ६ | अवट्ठिइए | अवठिईए |
| २३६ | ३ | च | तु |
| २४० | १ | समम | समये |
| २४२ | २२ | कृतस्न० | कृत्स्न० |
| २४३ | ११ | नाममह | नाममाई |
| २४३ | २० | प्रदेबन्ध | प्रदेशबन्ध |
| २४५ | ४ | सेढअसंखियभागो | सेढिअसंखियभा |
| २४५ | ७ | पणकायणीगोएसु | पणकायणिगोए |
| २४५ | २३ | २०४ | ३०४ |
| २४६ | ५ | मन्तर | मन्तरं |
| २५० | १ | स्त्रीमार्गणाना० | स्त्रीमार्गणायाम |

